सद्भावासद्भावयोः कारणं, नान्यार्थत्वमनन्यार्थत्वं वा। तथाह्यन्यार्थमपि प्रस्थितः पथि पतितं तृणपर्णाद्यस्तीत्येव प्रतिपद्यते। अत्राह—विषम उपन्यासः। तत्र हि तृणपर्णादिविषयं प्रत्यक्षं प्रवृत्तमस्ति, येन तदस्तित्वं प्रतिपद्यते। अत्र पुनर्विध्युद्देशैकवाक्यभावेन स्तुत्यर्थेऽर्थवादे न पार्थगर्थ्येन वृत्तान्तविषया प्रवृत्तिः शक्याऽध्यवसातुम्। नहि महावाक्येऽर्थप्रत्यायकेऽवान्तरवाक्यस्य पृथक्प्रत्यायकत्वमस्ति; यथा 'न सुरां पिबेत्' इति नञ्वति वाक्ये पदत्रयसंबन्धात्सुरापानप्रतिषेध एवैकोऽर्थोऽवगम्यते, न पुनः सुरां पिबेदिति पदद्वयसंबन्धात्सुरापानविधिरपीति। अत्रोच्यते—विषम उपन्यासः। युक्तं यत्सुरापानप्रतिषेधे पदान्वयस्यैकत्वादवान्तरवाक्यार्थस्याग्रहणम्। विध्युद्देशार्थवादयोस्त्वर्थवादस्थानि पदानि पृथगन्वयवृत्तान्तविषयं प्रतिपद्यानन्तरं कैमर्थ्यवशेन कामं विधेः स्तावकत्वं प्रतिपद्यन्ते। यथा हि—'वायव्यं श्वेतमालभेत भूतिकामः' इत्यत्र विध्युद्देशवर्तिनां वायव्यादिपदानां विधिना सम्बन्धः, नैवं 'वायुर्वै क्षेपिष्ठा देवता वायुमेव स्वेन भागधेयेनोपधावति स एवैनं भूतिं गमयति' इत्येषामर्थवादगतानां पदानाम्। न हि भवति वायुर्वा आलभेतेति क्षेपिष्ठा देवता वा आलभेतेत्यादि। वायुस्वभावसंकीर्तनेन त्ववान्तरमन्वयं प्रतिपद्यैवंविशिष्टदैवत्यमिदं कर्मेति विधिं स्तुवन्ति। *तद्यत्र सोऽवान्तरवाक्यार्थः प्रमाणान्तरगोचरो भवति, तत्र तदनुवादेनार्थवादः प्रवर्तते।

---

कारण है, अन्यार्थकत्व अथवा अनन्यार्थकत्व कारण नहीं है। जैसे कि किसी अन्य प्रयोजनके लिए प्रस्थान किया हुआ पुरुष मार्गमें पड़े तृण पत्ते आदिके अस्तित्वको प्रतिपन्न होता है। इसपर कहते हैं—यह दृष्टान्त विषम है। वहाँ तो तृण पर्णादि विषयक प्रत्यक्ष प्रवृत्त है, जिससे उनके अस्तित्वको प्रतिपन्न होता है। परन्तु यहाँ तो विधि वाक्यके साथ एकवाक्यता प्राप्त करनेसे स्तुति अर्थक अर्थवादमें स्वतन्त्ररूपसे भूतार्थ विषयक प्रवृत्तिका निश्चय नहीं किया जा सकता। अर्थ बोधक महावाक्योंमें अवान्तर वाक्यको पृथक् अर्थबोधकत्व नहीं है। जैसे 'न सुरां पिबेत्' ( सुरा न पिए ) इस नकार वाले वाक्यमें तीन पदोंके सम्बन्धसे सुरापानका प्रतिषेधरूप एक ही अर्थ अवगत होता है, न कि 'सुरां पिबेत्' इन दो पदोंके सम्बन्धसे पुनः सुरापान विधि भी। इस विषयमें कहते हैं—यह दृष्टान्त विषम है। सुरापानके प्रतिषेधमें पदान्वय एक होनेके कारण [ सुरां पिबेत् ] इस अवान्तर वाक्यार्थका ग्रहण करना युक्त नहीं है। परन्तु विधिवाक्य और अर्थवादमेंसे अर्थवादस्थ पद भूतार्थ विषयक पृथक् अन्वित होकर अनन्तर कैमर्थ्यसे [ इस अर्थवादका क्या प्रयोजन है, किसलिए है ? ] यथेष्ट विधिवाक्यके स्तावक होते हैं। जैसे 'वायव्यं श्वेतमा०' ( ऐश्वर्य चाहनेवाला वायव्य श्वेत पशुका आलमन करे ) इसमें विधिवाक्यगत वायु आदि पदोंका विधिके साथ सम्बन्ध है, वैसे 'वायुर्वै क्षेपिष्ठा देवता०' ( निश्चित वायु शीघ्रगामी देवता है। जो यजमान हविको वायुके लिए देता है अर्थात् वायुके लिए हविका भाग करता है वह उसको ऐश्वर्य देता है ) इन अर्थवाद वाक्यगत पदोंका विधिके साथ सम्बन्ध नहीं है। 'वायुर्वा आलभेत' अथवा 'क्षेपिष्ठा देवता वा आलभेत' इत्यादि वाक्योंका विधिके साथ सम्बन्ध नहीं होता। किन्तु वायु स्वभावके कथनद्वारा अवान्तर अन्वय प्राप्तकर इसप्रकार विशिष्ट देवता सम्बन्धी यह कर्म है, इसप्रकार विधिको स्तुति करते हैं। यहाँ जो अवान्तर वाक्यार्थ प्रमाणान्तरका विषय होता है, वहाँ उसके अनुवादसे अर्थवाद प्रवृत्त होता है।

### सत्यानन्दी-दीपिका

मादित्य शब्दका प्रयोग होता है। इस विषयको आगे 'अभिमानिव्यपदेशस्तु०' ( ब्र० सू० २।१।५ ) इस सूत्रमें स्पष्ट करेंगे।

*'विरोधे गुणवादः स्यादनुवादोऽवधारिते। भूतार्थवादस्तद्धानादर्थवादस्त्रिधा मतः॥' (प्रत्यक्षादिसे विरोध होनेपर गुणवाद और प्रत्यक्षादि प्रमाणसे अर्थ अवगत होनेपर अनुवाद और जहाँ

यत्र प्रमाणान्तरविरुद्धस्तत्र गुणवादेन। यत्र तु तदुभयं नास्ति तत्र किं प्रमाणान्तराभावाद्गुणवादः स्यात्, आहोस्वित्प्रमाणान्तराविरोधाद्विद्यमानवाद इति प्रतीतिशरणैर्विद्यमानवाद आश्रयणीयो न गुणवादः। एतेन मन्त्रो व्याख्यातः। अपि च विधिभिरेवेन्द्रादिदैवत्यानि हवींषि चोदयद्भिरपेक्षितमिन्द्रादीनां स्वरूपम्। न हि स्वरूपरहिता इन्द्रादयश्चेतस्यारोपयितुं शक्यन्ते। न च चेतस्यनारूढायै तस्यै तस्यै देवतायै हविः प्रदातुं शक्यते। श्रावयति च—'तस्यै देवतायै हविर्गृहीतं स्यात्तां ध्यायेद्वषट्करिष्यन्' ( ऐ० ब्रा० ३।८।१ ) इति। नच शब्दमात्रमर्थस्वरूपं संभवति; शब्दार्थयोर्भेदात्। तत्र यादृशं मन्त्रार्थवादयोरिन्द्रादीनां स्वरूपमवगतं न तत्तादृशं शब्दप्रमाणकेन प्रत्याख्यातुं युक्तम्। इतिहासपुराणमपि व्याख्यातेन मार्गेण संभवन्मन्त्रार्थवादमूलत्वात्प्रभवति देवताविग्रहादि साधयितुम्। प्रत्यक्षादिमूल-

---

जहाँ प्रमाणान्तरसे विरोध है वहाँ गुणवादसे। जहाँ ये दोनों नहीं हैं वहाँ प्रमाणान्तरके अभावसे गुणवाद हो अथवा प्रमाणान्तरके अविरोधसे विद्यमान अर्थवाद हो ऐसा सन्देह उपस्थित होनेपर प्रतीतिशरण पुरुषोंसे विद्यमान अर्थवाद ] भूतार्थवाद ] आश्रयणीय है, गुणवाद नहीं। इसप्रकार मन्त्रोंमें भी समझना चाहिए अर्थात् मन्त्र भी प्रमाणान्तरके संवाद और विसंवादके अभावसे स्वार्थमें प्रमाणभूत हैं। और इन्द्रादि देवता सम्बन्धी हविष्य देनेकी प्रेरणा करनेवाली विधियाँ भी इन्द्रादिके स्वरूपकी अपेक्षा रखती हैं। वस्तुतः स्वरूप रहित इन्द्रादि देवताओंका चित्तमें आरोप–ध्यान नहीं किया जा सकता। चित्तमें अनारूढ उस उस देवताके लिए हविष्य देनेके लिए समर्थ नहीं हो सकता। 'यस्यै देवतायै०' ( जिस देवताके लिए हविका ग्रहण किया हुआ हो उस देवताका 'वषट्' इस शब्दका उच्चारण कर पहले ध्यान करे ) ऐसा श्रुति कहती है। और केवल शब्द अर्थस्वरूप नहीं हो सकता, क्योंकि शब्द और अर्थमें भेद है। उन मन्त्र और अर्थवादमें इन्द्रादिका जैसा स्वरूप अवगत होता है वैसा स्वरूप शब्दप्रमाणकों द्वारा प्रत्याख्यान करना युक्त नहीं है। इतिहास और पुराण भी मन्त्र और अर्थवाद मूलक होनेके कारण प्रमाण होकर उक्त रीतिसे देवतादिके विग्रह आदि सिद्ध करनेमें

## सत्यानन्दी-दीपिका

पर दोनों ही नहीं वहाँ भूतार्थवाद, इसप्रकार अर्थवाद तीन प्रकारका है ) जिस वाक्यका अर्थ प्रत्यक्षादि प्रमाणोंसे विरुद्ध हो वहाँ विरोध परिहारार्थ गौणीवृत्ति मानकर समाधान किया जाता है। यथा 'आदित्यो यूपः' इस स्थलमें प्रत्यक्ष आदि प्रमाणोंसे यूप और आदित्य दोनोंका भेद प्रतीत होता है, इससे दोनोंमें अभेद विरुद्ध है। यूपमें आदित्यका जो तेजसित्व गुण है, उस गुणसे यह अर्थवाद प्रवृत्त होता है, तो यहाँ 'आदित्यो यूपः' का 'आदित्यसदृशो यूपः' यह अर्थ है। 'वायुर्वै क्षेपिष्ठा देवता' इत्यादि स्थलोंमें प्रत्यक्ष प्रमाणसे वायुका शीघ्रगामित्व प्रसिद्ध है, उसका अनुवाद कर यह अर्थवाद प्रवृत्त होता है, अतः इस अर्थवादका नाम अनुवाद है। 'वज्रहस्तः पुरन्दरः' ( जिसके हाथमें वज्र है वह इन्द्र है ) श्रुति आदि प्रमाणसे ज्ञात होता है और प्रत्यक्षादि प्रमाणसे अज्ञात है, अतः यह अर्थ भूतार्थवाद कहलाता है। वाक्यके दो तात्पर्य होते हैं—अवान्तर तात्पर्य और महातात्पर्य। गुणवाद और अनुवाद दोनोंका अवान्तर तात्पर्य विषयभूत अर्थमें प्रामाण्य नहीं होता केवल महातात्पर्य विषयभूतमें ही प्रामाण्य है। भूतार्थवादका दोनोंमें प्रामाण्य रहता है। प्रमालक्षणमें अनधिगतत्व और अबाधितत्व दो विशेषण दिए गए हैं। गुणवादमें अबाधितत्व नहीं है, अनुवादमें अनधिगतत्व नहीं है, इसलिए गुणवाद और अनुवाद दोनोंका अवान्तर तात्पर्य विषयमें प्रामाण्य नहीं है। भूतार्थवादका दोनोंमें प्रामाण्य रहता है, क्योंकि शब्दका तात्पर्य विषयीभूत अर्थमें प्रामाण्य होता है। शब्दसे जो अर्थ प्रतीत हो उसमें नहीं। शब्दका आकार तो नहीं होता, तब उसका ध्यान भी कैसे होगा ? इसलिए विधि आदिकी सिद्धिके लिए देवताका विग्रह मानना युक्त है।

मपि संभवति। भवति ह्यस्माकमप्रत्यक्षमपि चिरन्तनानां प्रत्यक्षम्। तथा च व्यासादयो देवादिभिः प्रत्यक्षं व्यवहरन्तीति स्मर्यते। यस्तु ब्रूयादिदानींतनानामिव पूर्वेषामपि नास्ति देवादिभिर्व्यवहर्तुं सामर्थ्यमिति, स जगद्वैचित्र्यं प्रतिषेधेत्। इदानीमिव च नान्यदापि सार्वभौमः क्षत्रियोऽस्तीति ब्रूयात्। ततश्च राजसूयादिचोदनापरुन्ध्यात्। इदानीमिव च कालान्तरेऽप्यव्यवस्थितप्रायान्वर्णाश्रमधर्मान्प्रतिजानीत। ततश्च व्यवस्थाविधायि शास्त्रमनर्थकं स्यात्। तस्माद्धर्मोत्कर्षवशाच्चिरन्तना देवादिभिः प्रत्यक्षं व्यवजह्रुरिति श्लिष्यते। अपि च स्मरन्ति—'स्वाध्यायादिष्टदेवतासंप्रयोगः' (यो० सू० २।४४) इत्यादि। योगोऽप्यणिमाद्यैश्वर्यप्राप्तिफलः स्मर्यमाणो न शक्यते साहसमात्रेण प्रत्याख्यातुम्। श्रुतिश्च योगमाहात्म्यं प्रख्यापयति—'पृथ्व्यप्तेजोऽनिलखे समुत्थिते पञ्चात्मके योगगुणे प्रवृत्ते। न तस्य रोगो न जरा न मृत्युः प्राप्तस्य योगाग्निमयं शरीरम्' (श्वे० २।१२) इति। ऋषीणामपि मन्त्रब्राह्मणदर्शिनां सामर्थ्यं नास्मदीयेन सामर्थ्येनोपमातुं युक्तम्। तस्मात्समूलमितिहासपुराणम्। * लोकप्रसिद्धिरपि न सति संभवे निरालम्बनाऽध्यवसातुं युक्ता। तस्मादुपपन्नो मन्त्रादिभ्यो देवादीनां विग्रहवत्त्वाद्यवगमः। ततश्चार्थित्वादिसंभवादुपपन्नो देवादीनामपि ब्रह्मविद्यायामधिकारः। क्रममुक्तिदर्शनान्यप्येवमेवोपपद्यन्ते ॥ ३३ ॥

---

समर्थ होते हैं। और देवताके शरीर आदिमें प्रत्यक्ष आदि मूलत्व भी संभव है। हम लोगोंको अप्रत्यक्ष भी चिरन्तनों-प्राचीनोंको प्रत्यक्ष है। जैसे व्यास आदि देवताओंके साथ प्रत्यक्ष व्यवहार करते हैं, ऐसी स्मृति है। जो ऐसा कहे कि आजकलके समान प्राचीन लोगोंकी भी देवादिके साथ व्यवहार करनेकी सामर्थ्य नहीं थी, वह जगत्की विचित्रताका प्रतिषेध करता है और इदानींके समान अन्य समयमें भी सार्वभौम क्षत्रिय नहीं थे ऐसा कहे, तो राजसूय आदि विधियाँ बाधित हो जायँगी। किञ्च आजकलके समान अन्य समयमें भी वर्णाश्रम धर्म अव्यवस्थितप्राय थे ऐसी प्रतिज्ञा करे तो ऐसी स्थितिमें व्यवस्था विधायक शास्त्र अनर्थक हो जायगा, इससे सिद्ध होता है कि धर्मके उत्कर्षके कारण प्राचीन लोग देवादिके साथ प्रत्यक्ष व्यवहार करते थे यह युक्त है। 'स्वाध्यायादिष्ट०' ( स्वाध्यायसे-मन्त्र जपसे इष्ट देवताका सान्निध्य और उसके साथ संभाषण होता है ) इत्यादि स्मृति भी है। अणिमा आदि ऐश्वर्य प्राप्ति फलवाले और स्मृति सिद्ध योगका भी साहसमात्रसे निषेध नहीं किया जा सकता। 'पृथ्व्यप्तेजो०' ( पृथिवी, जल, तेज, वायु, आकाश इन पाँच भूतोंके अपने वशमें होनेसे और अणिमा आदि सिद्धियोंकी प्राप्ति होनेसे अभिव्यक्त तेजोमय देहको प्राप्त हुए योगीको रोग, जरा और मृत्यु नहीं होती ) इत्यादि श्रुति भी योगकी महिमाका वर्णन करती है। मन्त्र तथा ब्राह्मणरूप वेदके द्रष्टा ऋषियोंकी सामर्थ्यकी अपनी सामर्थ्यसे तुलना करना युक्त नहीं है। इससे इतिहास, पुराण समूलप्रमाणभूत हैं। लोक प्रसिद्धि भी श्रुति, स्मृति आदि आलम्बनके होनेपर निराधार निश्चित करना युक्त नहीं है। इसलिए मन्त्रादिसे देवादिमें विग्रहवत्त्व आदि प्रतीति युक्त है। उनमें अर्थित्व आदिके सम्भव होनेके कारण देवता आदिका भी ब्रह्मविद्यामें अधिकार उपपन्न है। इसप्रकार क्रममुक्ति प्रतिपादक शास्त्र भी उपपन्न होते हैं ॥ ३३ ॥

## सत्यानन्दी-दीपिका

* कलाकारों द्वारा निर्मित देवादि विग्रह, भीतिचित्र आदि श्रुति, स्मृति, इतिहास, पुराण, लोक अनुभव आदिके विद्यमान होनेसे निराधार नहीं कहे जा सकते।

विग्रहो हविषां भोग ऐश्वर्यं च प्रसन्नता। फलदातृत्वमित्येतत्पञ्चकं विग्रहादिकम् ॥

( शरीरधारी होना, हविष्यका ग्रहण, ऐश्वर्य, हविष्य आदिसे प्रसन्नता, प्रसन्न होकर यजमानको फल देना इसप्रकार पाँच विग्रह होते हैं )।

'विग्रहो हविः स्वीकारः तद्भोजनं तृप्तिः। प्रसादश्चेत्येतच्चेतनस्योचितं पञ्चकम् ॥'

( ९ अपशूद्राधिकरणम् सू० ३४-३८ )

## शुगस्य तदनादरश्रवणात्तदाद्रवणात्सूच्यते हि ॥३४॥

पदच्छेद—शुक्, अस्य, तदनादरश्रवणात्, तदाद्रवणात्, सूच्यते, हि ।

सूत्रार्थ—( अस्य ) जानश्रुतिको ( तदनादरश्रवणात् ) हंससे अपना अनादर श्रवण करनेसे ( शुक् ) शोक उत्पन्न हुआ, वह ( सूच्यते हि ) शूद्र से सूचित किया गया है, ( तदाद्रवणात् ) शोकसे ही रैक्वके पास गमन किया, इससे शूद्र कहा गया है ।

* यथा मनुष्याधिकारनियममपोह्य देवादीनामपि विद्यास्वधिकार उक्तस्तथैव द्विजात्यधिकारनियमापवादेन शूद्रस्याप्यधिकारः स्यादित्येतामाशङ्कां निवर्तयितुमिदमधिकरणमारभ्यते। तत्र शूद्रस्याप्यधिकारः स्यादिति तावत्प्राप्तम्; अर्थित्वसामर्थ्ययोः संभवात्, 'तस्माच्छूद्रो यज्ञेऽनवक्लृप्तः' (तै० सं० ७।१।१।६) इतिवत् 'शूद्रो विद्यायामनवक्लृप्तः' इति च निषेधाश्रवणात्। यच्च कर्मस्वनधिकारकारणं शूद्रस्यानग्नित्वम्, न तद्विद्यास्वाधिकारस्यापवादकं लिङ्गम्। न ह्याहवनीयादिरहितेन विद्या वेदितुं न शक्यते। भवति च लिङ्गं शूद्राधिकारस्योपोद्बलकम्। संवर्गविद्यायां हि जानश्रुतिं पौत्रायणं शुश्रूषुं शूद्रशब्देन परामृशति—'अह हारे त्वा शूद्र तवैव सह गोभिरस्तु' (छा० ४।२।३) इति। विदुरप्रभृतयश्च शूद्रयोनिप्रभवा अपि

---

केवल मनुष्यका ही ब्रह्मविद्या में अधिकार है, इस नियमका निषेधकर जैसे देवतादिका भी ब्रह्मविद्यामें अधिकार कहा गया है, वैसे ही द्विजातिमात्र ( ब्राह्मण, क्षत्रिय और वैश्य ) का विद्यामें अधिकार है, इस नियमका अपवादकर कहीं शूद्रका भी विद्यामें अधिकार हो, तो इस आशङ्काकी निवृत्तिके लिए इस अधिकरणका आरम्भ किया जाता है । पूर्वपक्षी—ब्रह्मविद्यामें शूद्रका भी अधिकार हो ऐसा प्राप्त होता है, क्योंकि अर्थित्व और सामर्थ्य उसमें भी सम्भव हैं । किञ्च 'तस्माच्छूद्रो०' (अग्नि रहित होने से शूद्र यज्ञमें असमर्थ है ) इसके समान, 'शूद्रो विद्यायां०' ( शूद्र विद्यामें असमर्थ है ) इस प्रकार निषेधका श्रवण नहीं अर्थात् निषेधक श्रुति नहीं है । कर्मों में अनधिकारका कारण जो अग्निरहितत्व है वह ब्रह्मविद्यामें अधिकारका अपवादक लिङ्ग नहीं है। आहवनीय आदि अग्नियोंसे रहित पुरुषसे विद्या संपादन नहीं की जा सकती, यह बात नहीं है । शूद्रके अधिकारका समर्थक श्रौत लिङ्ग-श्रुति है । संवर्गविद्यामें श्रवण करनेकी इच्छा रखनेवाले पौत्रायण जानश्रुतिका रैक्वने 'अह हारे त्वा० ( हे शूद्र ! गौओं सहित यह हार युक्त रथ तेरे ही पास रहे ) इस प्रकार शूद्र शब्दसे परामर्श किया है । ऐसी

### सत्यानन्दी-दीपिका

( विग्रह, हविष्यका स्वीकार, उसको भोगना, तृप्ति, प्रसन्न होकर यजमानको फल देना ये पाँच चेतनके लिए ही उचित हैं शब्दात्मक जड़ देवताके लिए नहीं ) इत्यादिसे यह सिद्ध होता है कि देवताका विग्रह होता है, इससे उनका ब्रह्मविद्यामें अधिकार भी सिद्ध होता है । इससे क्रम मुक्ति प्रतिपादक शास्त्र भी संगत होते हैं । अहंग्रह उपासना आदि से ब्रह्मलोकमें जाकर दिव्य शरीरको पाकर दिव्य भोगोंका अनुभव करता है । संस्कारबलसे वहाँ ब्रह्माद्वारा ज्ञान प्राप्तकर आत्मसाक्षात्कार होनेसे मुक्त हो जाता है, इसप्रकार उसकी क्रममुक्ति होती है। इसलिए देवादिको शरीरधारी मानकर ब्रह्मविद्यामें अधिकार मानना श्रुति संगत है ॥ ३३ ॥

* 'तद्यो यो देवानाम्' इस श्रुतिमें देवशब्दसे जैसे ब्रह्मविद्यामें केवल मनुष्यके अधिकारको हटाकर देवादिका भी अधिकार कहा गया है, वैसे श्रुतिमें शूद्र शब्दसे द्विज जातिके अधिकार नियमको हटाकर शूद्रका भी अधिकार है । इसप्रकार दृष्टान्तसंगतिसे इस अधिकरणका आरम्भ है । देवतादिका जो ब्रह्मविद्यामें अधिकार निश्चित किया है, उसीसे ब्रह्मविद्यामें शूद्रका भी अधिकार है कि नहीं ?

विशिष्टविज्ञानसंपन्नाः स्मर्यन्ते। तस्मादधिक्रियते शूद्रो विद्यास्विति। *एवं प्राप्ते ब्रूमः—न शूद्रस्याधिकारः; वेदाध्ययनाभावात्। अधीतवेदो हि विदितवेदार्थो वेदार्थेष्वधिक्रियते। न च शूद्रस्य वेदाध्ययनमस्ति; उपनयनपूर्वकत्वाद्वेदाध्ययनस्य। उपनयनस्य च वर्णत्रयविषयत्वात्। यत्त्वर्थित्वं न तदसति सामर्थ्येऽधिकारकारणं भवति। सामर्थ्यमपि न लौकिकं केवलमधिकारकारणं भवति; शास्त्रीयेऽर्थे शास्त्रीयस्य सामर्थ्यस्यापेक्षितत्वात्, शास्त्रीयस्य च सामर्थ्यस्याध्ययननिराकरणेन निराकृतत्वात्। यच्चेदं 'शूद्रो यज्ञेऽनवक्लृप्तः' इति तन्न्यायपूर्वकत्वाद्विद्यायामप्यनवक्लृप्तत्वं द्योतयति; न्यायस्य साधारणत्वात्। यत्पुनः संवर्गविद्यायां शूद्रशब्दश्रवणं लिङ्गं मन्यसे, न तल्लिङ्गम्, न्यायाभावात्। न्यायोक्ते हि लिङ्गदर्शनं द्योतकं भवति। न चात्र न्यायोऽस्ति। कामं चायं शूद्रशब्दः संवर्गविद्यायामेवैकस्यां शूद्रमधिकुर्यात् तद्विषयत्वात्, न सर्वासु विद्यासु। अर्थवादस्थत्वात्तु न क्वचिदप्ययं शूद्रमधिकर्तुमुत्सहते।

---

स्मृति भी है कि विदुर आदि शूद्र योनिमें उत्पन्न हुए भी विज्ञान सम्पन्न थे। इसलिए शूद्र विद्याओंका अधिकारी है। सिद्धान्ती—ऐसा प्राप्त होनेपर हम कहते हैं वेदाध्ययनके न होने कारण शूद्रका विद्यामें अधिकार नहीं है। अधीत वेद और विदित वेदार्थ पुरुषका ही वेदार्थ विचारमें अधिकार है। शूद्रके लिए तो वेदाध्ययन ही नहीं है, क्योंकि वेदाध्ययन तो उपनयनपूर्वक किया जाता है। और उपनयन वर्णत्रय ( ब्राह्मण, क्षत्रिय और वैश्य ) विषयक होता है। जो अर्थित्व है, वह सामर्थ्यके न होनेपर अधिकारका कारण नहीं हो सकता। केवल लौकिक सामर्थ्य भी अधिकारका कारण नहीं है, क्योंकि शास्त्रीय अर्थमें शास्त्रीय सामर्थ्यकी अपेक्षा होती है, और अध्ययनके निराकरणसे शास्त्रीय सामर्थ्यका भी निराकरण हुआ समझना चाहिए। किञ्च 'शूद्रो यज्ञेऽनवक्लृप्तः' यह जो कहा गया है वह न्यायपूर्वक होनेसे विद्यामें भी असामर्थ्यको सूचित करता है, क्योंकि न्याय दोनोंमें समान है। और संवर्गविद्यामें शूद्रशब्द श्रवणको तुम लिङ्ग मानते हो वस्तुतः वह लिङ्ग नहीं है। क्योंकि वेदार्थ ज्ञानात्मकसामर्थ्य रूप अनुकूल न्याय नहीं है। लिङ्गदर्शन तो न्याय संगत विषयका ही सूचक होता है, परन्तु यहाँ तो उक्त न्याय नहीं है। भले ही यह शूद्रशब्द केवल एक संवर्गविद्यामें शूद्रको अधिकार दे, क्योंकि यह शूद्र शब्द संवर्गविद्यामें पठित है, सब विद्याओंमें उसका अधिकार नहीं है। और शूद्रशब्द अर्थवाद वाक्योंमें पठित होनेके कारण किसी भी विद्यामें

## सत्यानन्दी-दीपिका

इस प्रश्नका निर्णय करते हैं। पूर्वपक्षी—शूद्रका ब्रह्मविद्यामें अधिकार है। इसमें एक उदाहरण कहते हैं—राजा जानश्रुतिने ६०० गायें और रथ आदि गुरु रैक्वको देकर यह प्रार्थना की कि मुझे संवर्गविद्याका उपदेश कीजिए। तब कन्याके साथ विवाह करनेकी इच्छा रखनेवाले विधुर रैक्वने उससे कहा 'अह हारे त्वा शूद्र तवैव सह गोभिरस्तु' इस प्रकार जानश्रुतिके प्रति रैक्वने शूद्र शब्दका प्रयोग किया है। तदनन्तर राजाने बहुत धनादिके साथ अपनी कन्याको अर्पण किया। उससे प्रसन्न होकर रैक्वने राजाको संवर्गविद्याका उपदेश किया। इससे सिद्ध होता है कि अर्थित्व और सामर्थ्यसे युक्त शूद्रका भी विद्यामें अधिकार है। जैसे अग्नि रहित होनेसे कर्मोंमें शूद्रके अधिकारका निषेध है, वैसे ब्रह्मविद्यामें अधिकारका निषेध नहीं। अतः ब्रह्मविद्यामें शूद्रका अधिकार मानना चाहिए। पूर्वपक्षमें द्विज के समान शूद्रकी भी श्रौत ब्रह्मविद्यामें प्रवृत्ति है, सिद्धान्तमें नहीं है।

* उपनयन संस्कारके अनन्तर 'स्वाध्यायोऽध्येतव्यः' इस अध्ययनविधिके अनुसार आचार्यसे जिसने अपातत वेदार्थ जान लिया है। उसका वेदार्थ विचारमें अधिकार है अन्यका नहीं। अध्ययनविधिसे अधीत वेदार्थ ज्ञानरूप सामर्थ्य शूद्रमें नहीं है, क्योंकि उसके लिए उपनयनका विधान ही नहीं है। इससे उनका वेदाध्ययनमें अधिकार न होनेसे ब्रह्मविद्यामें भी अधिकार नहीं है।

शक्यते चायं शूद्रशब्दोऽधिकृतविषयो योजयितुम् ।* कथमित्युच्यते? 'कम्वर एनमेतत्सन्तं सयुग्वानमिव रैक्कमात्थ' (छा० ४।१।३) इत्यस्माद्धंसवाक्यादात्मनोऽनादरं श्रुतवतो जानश्रुतेः पौत्रायणस्य शुगुत्पेदे, तामृषी रैक्कः शूद्रशब्देनानेन सूचयांबभूवात्मनः परोक्षज्ञताख्यापनायेति गम्यते; जातिशूद्रस्यानधिकारात्। कथं पुनः शूद्रशब्देन शुगुत्पन्ना सूच्यत इति? उच्यते— तदाद्रवणात्। शुचमभिदुद्राव, शुचा वाऽभिदुद्रुवे, शुचा वा रैक्कमभिदुद्रावेति शूद्रः अवयवार्थसंभवाद्रूढ्यर्थस्य चासंभवात्। दृश्यते चायमर्थोऽस्यामाख्यायिकायाम् ॥३४॥

## क्षत्रियत्वगतेश्चोत्तरत्र चैत्ररथेन लिङ्गात् ॥ ३५ ॥

पदच्छेद—क्षत्रियत्वगतेः, च, उत्तरत्र, चैत्ररथेन, लिङ्गात् ।

सूत्रार्थ—( क्षत्रियत्वगतेश्च ) क्षत्रियत्व ज्ञान होनेसे जानश्रुति मुख्य शूद्र नहीं है, क्योंकि (उत्तरत्र) संवर्गविद्याके वाक्यशेषमें (चैत्ररथेन) प्रसिद्ध क्षत्रिय चैत्ररथ अभिप्रतारीके साथ ( लिङ्गात् ) समभिव्याहाररूप लिङ्गसे जानश्रुति क्षत्रिय ज्ञात होता है, इससे विद्यामें शूद्रका अधिकार नहीं है ।

इतश्च न जातिशूद्रो जानश्रुतिः । यत्कारणं प्रकरणनिरूपणेन क्षत्रियत्वमस्योत्तरत्र चैत्ररथेनाभिप्रतारिणा क्षत्रियेण समभिव्याहाराल्लिङ्गाद्गम्यते। उत्तरत्र हि संवर्गविद्यावाक्यशेषे चैत्ररथिरभिप्रतारी क्षत्रियः संकीर्त्यते—'अथ ह शौनकं च कापेयमभिप्रतारिणं च काक्षसेनिं

---

शूद्रको अधिकार नहीं दिला सकता । और यह शूद्र शब्द अधिकृत विषयक ( द्विजाति ) पुरुषके लिए भी प्रयुक्त किया जा सकता है । किस प्रकार? कहते हैं—'कम्वर एनमे०' (अरे ! तू किस महत्त्वसे युक्त रहनेवाले इस राजाके प्रति इस तरह सम्मानित वचन कह रहा है ? क्या तू उसे गाड़ीवाले रैक्वके समान बतलाता है ? ) इस हंस वाक्यसे अपने अनादरको सुननेवाले पौत्रायण जानश्रुतिको शोक उत्पन्न हुआ । यह प्रतीत होता है कि रैक्व ऋषिने अपनी परोक्षज्ञताको जतलानेके लिए इस शूद्रशब्दसे उस शोकको सूचित किया । क्योंकि यहाँ जातिगत शूद्रका अधिकार नहीं है । तो राजाको उत्पन्न हुआ शोक ही यहां शूद्रशब्दसे कैसे सूचित किया गया है ? कहते हैं—उसके आद्रवणसे, वह शोककी ओर अग्रसर हुआ अर्थात् शोकसे व्याप्त हुआ अथवा शोकसे रैक्वके पास गया, इसलिए उसे शूद्र कहा गया, क्योंकि यहाँपर अवयव ( यौगिक ) अर्थका सम्भव है रूढि अर्थका सम्भव नहीं है । इस आख्यायिकामें यही अर्थ देखा जाता है ॥ ३४ ॥

और इस हेतुसे भी जानश्रुति जातिसे शूद्र नहीं है, क्योंकि प्रकरणके निरूपणसे आगे चैत्ररथ अभिप्रतारी ही क्षत्रियके साथ समभिव्यवहाररूप लिङ्गसे ज्ञात होता है । उत्तरत्र-संवर्गविद्याके वाक्य-

### सत्यानन्दी-दीपिका

* ( छान्दो० ४।१ )—एक समय राजा जानश्रुति ग्रीष्म ऋतुमें रात्रिके समय महलकी छत पर सोया हुआ था । उसके अन्नदानादि अनेक गुणोंसे सन्तुष्ट हुए ऋषि गण उसके कल्याणके लिए हंसका रूप धारणकर पंक्तिरूपसे उसके ऊपर उड़ते हुए आये । उनमेंसे पिछले हंसने आगेवाले हंससे कहा 'हो होऽयि भलाक्ष भलाक्ष जानश्रुतेः पौत्रायणस्य समं दिवा ज्योतिराततं तन्मा प्रसाङ्क्षीस्तत्त्वा मा प्रधाक्षीरिति ।' ( ओ ओ भलाक्ष ! ओ भलाक्ष !! देख पौत्रायण जानश्रुतिका तेज द्युलोकके समान फैला हुआ है । तू उसका स्पर्श न कर । वह तुझे भस्म न कर डाले ) तब उस पिछले हंसको आगेके हंसने उत्तर दिया—अरे ! यह बिचारा विद्याहीन है । इसके लिए तुम उन वचनोंका प्रयोग कर रहे हो जिनका कि गाड़ीके साथ रहनेवाले रैक्वके लिए किया जाता है अर्थात् रैक्वका तेज दुर्लङ्घ्य है । इस आत्मज्ञान रहित जानश्रुतिका तेज वैसा नहीं है । इन वचनोंसे खिन्न होकर गाड़ीरूप चिह्नसे युक्त रैक्वके पास जाकर राजा ब्रह्मज्ञानको प्राप्त करे ऐसा हंसोंका अभिप्राय था । उन हंसोंसे अनादर वाक्य सुनकर राजाको शोक उत्पन्न हुआ था ॥ ३४ ॥

[सूदेन] परिविष्यमाणौ ब्रह्मचारी बिभिक्षे' (छा० ४।३।५) इति । चैत्ररथित्वं चाभिप्रतारिणः कापेययोगादवगन्तव्यम् । कापेययोगो हि चित्ररथस्यावगतः 'एतेन वै चित्ररथं कापेया अयाजयन्' ( ताण्ड्यब्रा० २०।१२।५ ) इति । समानान्वयानां च प्रायेण समानान्वया याजका भवन्ति । 'तस्माच्चैत्ररथिर्नामैकः क्षत्रपतिरजायत' इति च क्षत्रपतित्वावगमात्क्षत्रियत्वमस्यावगन्तव्यम् । तेन क्षत्रियेणाभिप्रतारिणा सह समानायां संवर्गविद्यायां संकीर्तनं जानश्रुतेरपि क्षत्रियत्वं सूचयति । समानानामेव हि प्रायेण समभिव्याहारा भवन्ति । क्षत्तृप्रेषणाद्यैश्वर्ययोगाच्च जानश्रुतेः क्षत्रियत्वावगतिः । अतो न शूद्रस्याधिकारः ॥ ३५ ॥

## संस्कारपरामर्शात्तदभावाभिलापाच्च ॥ ३६ ॥

पदच्छेद—संस्कारपरामर्शात्, तदभावाभिलापात्, च ।

सूत्रार्थ—( संस्कारपरामर्शात् ) ब्रह्मविद्यामें उपनयन आदि संस्कारोंका परामर्श है ( च ) और ( तदभावाभिलापात् ) शूद्रके लिए उपनयन आदि संस्कारोंके अभावका कथन है, इससे ब्रह्मविद्यामें शूद्रका अधिकार नहीं है ।

* इतश्च न शूद्रस्याधिकारः, यद्विद्याप्रदेशेषूपनयनादयः संस्काराः परामृश्यन्ते—'तं होपनिन्ये' (श० ब्रा० ११।५।३।१३) । 'अधीहि भगव इति होपससाद' (छा० ७।१।१) 'ब्रह्मपरा ब्रह्मनिष्ठाः परं ब्रह्मान्वेषमाणा एष ह वै तत्सर्वं वक्ष्यतीति ते ह समित्पाणयो भगवन्तं पिप्पलादमुपसन्नाः' (प्र० १।१) इति च । 'तान्हानुपनीयैव' (छा० ५।११।७) इत्यपि प्रदर्शितैवोपनयनप्राप्ति-

---

शेषमें चैत्ररथि अभिप्रतारी क्षत्रियका 'अथ ह शौनकं०' (एक बार कपिगोत्रज शौनक और कक्षसेनके पुत्र अभिप्रतारीसे, जब कि उन्हें भोजन परोसा जा रहा था, एक ब्रह्मचारीने भिक्षा माँगी ) इस प्रकार कथन है । अभिप्रतारीमें चैत्ररथित्व कापेयके सम्बन्धसे समझना चाहिए । 'एतेन वै चित्ररथं०' ( इस द्विरात्रेष्टिसे कापेयोंने चित्ररथको यज्ञ कराया ) इससे चित्ररथका कापेयके साथ सम्बन्ध अवगत होता है । प्रायः समान वंशवाले समान वंशवालोंके याजक होते हैं अर्थात् राजवंशियोंके प्रायः पुरोहितवंश्य याजक होते हैं । 'तस्माच्चैत्ररथिर्नामैकः०' (उससे चित्ररथसे चैत्ररथि नामका एक क्षत्रपति उत्पन्न हुआ) इस प्रकार क्षत्रपतित्वकी अवगतिसे उस चैत्ररथमें क्षत्रियत्व समझना चाहिए । उस क्षत्रिय अभिप्रतारीके साथ एक संवर्गविद्यामें संकीर्तन जानश्रुतिको भी क्षत्रियत्व सूचित करता है । समानोंके ही प्रायः समभिव्याहार होते हैं । सारथि प्रेषण ( भेजना ) आदि ऐश्वर्यके योगसे जानश्रुतिमें क्षत्रियत्व अवगत होता है । इसलिए श्रौतविद्यामें शूद्रका अधिकार नहीं है ॥ ३५ ॥

और इससे भी शूद्रका ब्रह्मविद्यामें अधिकार नहीं है, क्योंकि 'तं होपनिन्ये०' ( उसका उपनयन किया ) 'अधीहि भगव०' ( हे भगवन् ! मुझे उपदेश कीजिए, ऐसा कहते हुए नारद सनत्कुमारके पास गए ) 'ब्रह्मपरा ब्रह्मनिष्ठाः०' ( ये अपरब्रह्मकी उपासना करनेवाले और तदनुकूल अनुष्ठानमें तत्पर भारद्वाज आदि छः ऋषिगण परब्रह्मके जिज्ञासु होकर भगवान् पिप्पलादके पास, यह सोचकर कि ये हमें उसके विषयमें सब कुछ बतला देंगे, हाथमें समिधा लेकर गये ) इस प्रकार विद्याके प्रकरणोंमें उपनयन आदि संस्कारोंका परामर्श है । 'तान्हानु०' (उनका उपनयन किए बिना

### सत्यानन्दी-दीपिका

* शङ्का—राजा अश्वपतिने प्राचीनशाल आदि छः ऋषिजनोंको उपनयन संस्कार किए बिना ही विद्याका उपदेश किया है, इससे सिद्ध होता है कि उपनयन रहितका भी विद्यामें अधिकार है, तो संस्कार रहित शूद्रका भी विद्यामें अधिकार होना चाहिए ? समाधान—वस्तुतः उपनयन दो प्रकारका होता है, एक वेदाध्ययनके लिए विधि पूर्वक यज्ञोपवीत आदिका धारणरूप, दूसरा ब्रह्मविद्याकी प्राप्ति-

भवति। शूद्रस्य संस्काराभावोऽभिलप्यते, 'शूद्रश्चतुर्थो वर्ण एकजातिः' (मनु० १०।४) इत्येकजातित्वस्मरणात्। 'न शूद्रे पातकं किंचिन्न च संस्कारमर्हति' (मनु० १०।१२।६) इत्यादिभिश्च॥३६॥

## तदभावनिर्धारणे च प्रवृत्तेः ॥३७॥

पदच्छेद—तदभावनिर्धारणे, च, प्रवृत्तेः।

सूत्रार्थ—( तदभावनिर्धारणे ) सत्यकाममें सत्यकथनसे शूद्रत्वाभाव निर्धारित करने पर ( प्रवृत्तेः ) गौतम सत्यकामके लिए उपदेश आदि करने में प्रवृत्त हुए। इससे ( च ) भी विद्यामें शूद्रका अनधिकार है।

इतश्च न शूद्रस्याधिकारः। यत्सत्यवचनेन शूद्रत्वाभावे निर्धारिते जाबालं गौतम उपनेतुमनुशासितुं च प्रववृते; 'नैतदब्राह्मणो विवक्तुमर्हति समिधं सोम्याहरोप त्वा नेष्ये न सत्यादगाः' (छा० ४।४।५) इति श्रुतिलिङ्गात् ॥३७॥

## श्रवणाध्ययनार्थप्रतिषेधात्स्मृतेश्च ॥३८॥

पदच्छेद—श्रवणाध्ययनार्थप्रतिषेधात्, स्मृतेः, च।

सूत्रार्थ—( स्मृतेः ) 'अथास्य वेदमुपशृण्वतः' इत्यादि स्मृतिसे (श्रवणाध्ययनार्थप्रतिषेधात्) शूद्रके लिये वेदके श्रवण, अध्ययन, अर्थज्ञान एवं अनुष्ठानका प्रतिषेध किया गया है, इससे ( च ) भी शूद्रका विद्यामें अधिकार नहीं है।

---

ही राजाने उस विद्याका उपदेश किया ) इसमें भी उपनयनकी प्राप्ति दिखलाई गई है। परन्तु 'शूद्रश्चतुर्थो वर्ण०' ( शूद्र चतुर्थ वर्ण एवं उपनयन रहित है ) इसप्रकार स्मृतिमें वह एक जाति कहा गया है। 'न शूद्रे पातकं०' ( शूद्रको अभक्ष्य लशुनादि भक्षण से कुछ पाप नहीं है और वह उपनयन आदि संस्कार के योग्य नहीं है ) इत्यादि स्मृतिसे भी शूद्रमें संस्कारोंके अभावका कथन है ॥३६॥

और इस हेतुसे भी शूद्रका विद्यामें अधिकार नहीं है, क्योंकि सत्य बोलनेसे शूद्रत्व अभावका निर्धारण होनेपर गौतम सत्यकामका उपनयन करने और उसे विद्याका उपदेश करनेके लिए प्रवृत्त हुए 'नैतदब्राह्मणो०' ( उससे गौतमने कहा—ऐसा स्पष्ट भाषण कोई ब्राह्मणेतर नहीं कर सकता, अतः हे सोम्य! तू समिधा ले आ, मैं तुम्हारा उपनयन करूंगा, क्योंकि तुमने सत्यका त्याग नहीं किया ) यह श्रुतिलिङ्ग है ॥ ३७ ॥

### सत्यानन्दी-दीपिका

के लिए उपसदनरूप। उपसदन भी दो प्रकारका होता है—एक तो विद्यार्थीका आचार्यके पास सादर गमन और दूसरा आचार्य द्वारा उसे शिष्यरूपसे स्वीकार करना तथा बहुत कालतक अपने सान्निध्यमें रखकर अपनी सेवादिकी अनुमति देना आदि। वेद वेदाङ्गोंमें पारंगत ऋषिजनोंमें वेदाध्ययनसे पूर्व ही यज्ञोपवीत संस्कार सिद्ध है, इसलिए 'तान्हानुपनीयैव' इस श्रुतिसे उपनयनका निषेध करना अयुक्त है। उपनयन किए हुएके लिए पुनः उपनयन प्राप्त ही नहीं है। और दूसरा विद्यार्थीका आचार्यके पास सादर गमनरूप उपसदन वह उन ऋषियोंमें भी सिद्ध है। तो फिर 'तान्हानुपनीयैव' इस श्रुति से किए गए उपनयन निषेधका क्या तात्पर्य है? इसका तात्पर्य यह है कि आचार्य द्वारा शिष्यभावसे स्वीकार कर अपने सान्निध्यमें रखकर सेवा आदिके अनुमतिरूप उपनयनका निषेध है, क्योंकि उत्तमवर्णवाले विद्यार्थीके प्रति निम्नवर्णवाले गुरुको सेवा लिए विना विद्या देनी चाहिए इस अभिप्रायसे श्रुतिमें ऐसा कहा गया है। अतः उपनयन आदि संस्कार रहित होनेसे शूद्रका विद्यामें अधिकार नहीं है ॥ ३६ ॥

इतश्च न शूद्रस्याधिकारः यदस्य स्मृतेः श्रवणाध्ययनार्थप्रतिषेधो भवति। वेदश्रवणप्रतिषेधो वेदाध्ययनप्रतिषेधस्तदर्थज्ञानानुष्ठानयोश्च प्रतिषेधः शूद्रस्य स्मर्यते। श्रवणप्रतिषेधस्तावत् 'अथास्य वेदमुपशृण्वतस्त्रपुजतुभ्यां श्रोत्रप्रतिपूरणम्' इति। 'पद्यु ह वा एतच्छ्मशानं यच्छूद्रस्तस्माच्छूद्रसमीपे नाध्येतव्यम्' इति च। अत एवाध्ययनप्रतिषेधः। यस्य हि समीपेऽपि नाध्येतव्यं भवति, स कथमश्रुतमधीयीत ? भवति च वेदोच्चारणे जिह्वाच्छेदो धारणे शरीरभेद इति। अत एव चार्थादर्थज्ञानानुष्ठानयोः प्रतिषेधो भवति—'न शूद्राय मतिं दद्यात्' इति, 'द्विजातीनामध्ययनमिज्या दानम्' इति च। येषां पुनः पूर्वकृतसंस्कारवशाद्विदुरधर्मव्याधप्रभृतीनां ज्ञानोत्पत्तिस्तेषां न शक्यते फलप्राप्तिः प्रतिषेद्धुं; ज्ञानस्यैकान्तिकफलत्वात्। 'श्रावयेच्चतुरो वर्णान्' इति चेतिहासपुराणाधिगमे चातुर्वर्ण्यस्याधिकारस्मरणात्। वेदपूर्वकस्तु नास्त्यधिकारः शूद्राणामिति स्थितम् ॥३८॥

( १० कम्पनाधिकरणम् सू० ३९ )

## कम्पनात् ॥३९॥

सूत्रार्थ—'यदिदं किञ्च' ( यह सारा जगत् प्राणसे उत्पन्न हुआ चेष्टा करता है ) इस कम्पनसे प्रतीयमान प्राण परमात्मा ही है।

*अवसितः प्रासङ्गिकोऽधिकारविचारः। प्रकृतामेवेदानीं वाक्यार्थविचारणां प्रवर्तयिष्यामः। 'यदिदं किंच जगत्सर्वं प्राण एजति निःसृतम्। महद्भयं वज्रमुद्यतं य एतद्विदुरमृतास्ते

इससे भी शूद्रका विद्यामें अधिकार नहीं है, क्योंकि स्मृतिमें उसके लिए श्रवण, अध्ययन और अर्थज्ञानका प्रतिषेध है। स्मृतिमें शूद्रके लिये वेदके श्रवण, वेदके अध्ययन और वेदार्थज्ञान एवं अनुष्ठानका निषेध है। 'अथास्य' ( समीपसे वेदोंका श्रवण करनेवाले शूद्रके दोनों कान रांगा और लाखसे भर दे ) और 'पद्यु ह वा०' ( शूद्र निस्सन्देह पादयुक्त ( जंगम ) श्मशान है, इसलिए शूद्रके समीप वेदका अध्ययन नहीं करना चाहिए ) इसप्रकार वेदके श्रवणका प्रतिषेध है। श्रवणके निषेधसे अध्ययनका निषेध भी सिद्ध होता है क्योंकि जिसके समीपमें भी अध्ययन करना युक्त नहीं है वह अश्रुत वेदका अध्ययन कैसे करेगा ? वेदके उच्चारण करनेपर शूद्रकी जिह्वाके उच्छेद और धारण करनेपर शरीरके भेदनका विधान है। वेदाध्ययनके अभाव होनेसे शूद्रके लिए अर्थ ज्ञान और अनुष्ठानका निषेध अर्थसे सिद्ध होता है। 'न शूद्राय मतिं दद्यात्' ( ब्राह्मणको चाहिये कि शूद्रको वेदार्थज्ञान न दे ) और 'द्विजातीनाम०' ( द्विजाति-ब्राह्मण, क्षत्रिय, वैश्यके लिये ही अध्ययन, यज्ञ तथा दानका विधान है )। परन्तु विदुर धर्मव्याध आदि जिनको पूर्वकर्मके संस्कारोंसे ज्ञान उत्पन्न हुआ है, उनके लिये फलप्राप्तिका प्रतिषेध नहीं किया जा सकता, क्योंकि ज्ञान अव्यभिचरित फल वाला होता है। 'श्रावयेच्चतुरो वर्णान्' ( चारों वर्णोंको सुनावे ) इसप्रकार यह स्मृति इतिहास-पुराणके ज्ञान करनेमें चारों वर्णोंका अधिकार बतलाती है। इससे सिद्ध हुआ कि वेदाध्ययन पूर्वक ज्ञान प्राप्त करनेका शूद्रको अधिकार नहीं है ॥ ३८ ॥

प्रासङ्गिक अधिकार विषयक विचार समाप्त हुआ। अब आगे प्रकृत वाक्यार्थ विचारको ही करेंगे। 'यदिदं किञ्च जगत्सर्वं०' ( यह जो कुछ सारा जगत् है प्राण-ब्रह्ममें, उदित होकर, उसीसे चेष्टा कर रहा है। वह ब्रह्म महान् भयरूप और हाथमें उठाए हुये वज्रके समान है। जो इसे जानते

### सत्यानन्दी-दीपिका

* 'शब्दादेव प्रमितः' इत्यादि तृतीय पादके सप्तम प्रमिताधिकरणमें 'अंगुष्ठमात्रः पुरुषः' इस श्रुतिका विचार करते हुए 'हृद्यपेक्षया तु मनुष्याधिकारत्वात्' इस सूत्रसे शास्त्रमें मनुष्यका अधिकार

भवन्ति' ( का० २।६।२ ) इति। एतद्वाक्यं 'एजृ कम्पने' इति धात्वर्थानुगमाल्लक्षितम्। अस्मिन्वाक्ये सर्वमिदं जगत्प्राणाश्रयं स्पन्दते, महच्च किंचिद्भयकारणं वज्रशब्दितमुद्यतम्, तद्विज्ञानाच्चामृतत्वप्राप्तिरिति श्रूयते। तत्र कोऽसौ प्राणः, किं तद्भयानकं वज्रमित्यप्रतिपत्ते-र्विचारे क्रियमाणे प्राप्तं तावत्प्रसिद्धेः पञ्चवृत्तिर्वायुः प्राण इति। प्रसिद्धेरेव चाशनिर्वज्रं स्यात्। वायोश्चेदं माहात्म्यं संकीर्त्यते। कथम्? सर्वमिदं जगत्पञ्चवृत्तौ वायौ प्राणशब्दिते प्रतिष्ठायैजति। वायुनिमित्तमेव च महद्भयानकं वज्रमुद्यम्यते। वायौ हि पर्जन्यभावेन विवर्तमाने विद्युत्स्तनयित्नुवृष्ट्यशनयो विवर्तन्त इत्याचक्षते। वायुविज्ञानादेव चेदममृत-त्वम्। तथा हि श्रुत्यन्तरम्—'वायुरेव व्यष्टिर्वायुः समष्टिरप पुनर्मृत्युं जयति य एवं वेद' इति। तस्मा-द्वायुरयमिह प्रतिपत्तव्य इति। एवं प्राप्ते ब्रूमः—ब्रह्मैवेदमिह प्रतिपत्तव्यम्। कुतः? पूर्वोत्तरा-लोचनात्। पूर्वोत्तरयोर्हि ग्रन्थभागयोर्ब्रह्मैव निर्दिश्यमानमुपलभामहे। इहैव कथमकस्मा-दन्तराले वायुं निर्दिश्यमानं प्रतिपद्येमहि? पूर्वत्र तावत् 'तदेव शुक्रं तद्ब्रह्म तदेवामृतमुच्यते। तस्मिँल्लोकाः श्रिता सर्वे तदु नात्येति कश्चन' ( का० २।६।१ ) इति ब्रह्म निर्दिष्टम्, तदेवेहापि,

---

हैं वे अमर हो जाते हैं ) 'एजृ कम्पने' ( एजृ धातुका अर्थ कम्पन है ) यह वाक्य इस धातु अर्थके अनुगमसे लक्षित है। इस वाक्यमें यह सम्पूर्ण जगत् प्राणके आश्रित चेष्टा करता है, वह उद्यत वज्रके समान भयानक कोई महान् है। उसके ज्ञानसे अमृतत्वकी प्राप्ति होती है, ऐसी श्रुति है। उसमें यह प्राण कौन है? और वह भयानक वज्र क्या है? इसके निश्चय न होनेके कारण विचार करने पर लोक प्रसिद्धिसे ऐसा ज्ञात होता है कि पांच वृत्तिवाला वायु प्राण है। और लोक प्रसिद्धि से वज्र अशनि ( वज्र ) ही है। यह वायुका ही महात्म्य कहा गया है। कैसे? यह सम्पूर्ण जगत् पाँच वृत्तिवाले प्राणनामक वायुमें रहकर व्यापार करता है। वायु से ही वह महान् भयानक वज्र उठाया जाता है। वायु पर्जन्यभावसे विवर्तमान होने पर विद्युत्, मेघ, वृष्टि और अशनिरूपमें भी विवर्तित होता है, ऐसा कहते हैं। वायु के ज्ञानसे भी यह अमृत्व है। 'वायुरेव व्यष्टिर्वायुः०' ( वायु ही व्यष्टि है, वायु ही समष्टि है जो ऐसा जानता है वह अपमृत्युको जीतता है ) ऐसी दूसरी श्रुति है। इसलिए यहाँ प्राणको वायु समझना चाहिए। सिद्धान्ती—ऐसा पूर्वपक्ष प्राप्त होने पर हम कहते हैं—यहाँ प्राणशब्दसे ब्रह्म ही समझना युक्त है, किससे? इससे कि पूर्व और उत्तर वाक्योंकी पर्यालोचना करने से यही स्पष्ट होता है [यदिदं किञ्च] इस वाक्यके पूर्व तथा उत्तर ग्रन्थ भागोंमें हमें ब्रह्म ही निर्दिश्यमान उपलब्ध होता है। तो हम यहीं पर मध्यमें अकस्मात् वायुको निर्दिश्यमान कैसे समझ लें। 'तदेव शुक्रं०' ( यही जो इस संसार वृक्षका मूल है, विशुद्ध ज्योतिः स्वरूप है, वही ब्रह्म है और वही अमृत कहा जाता है। सम्पूर्ण लोक उसीमें आश्रित हैं, कोई भी उसका अतिक्रमण नहीं कर सकता। यही निश्चय वह—ब्रह्म है ) इस पूर्व वाक्यमें ब्रह्म निर्दिष्ट है। यहाँ भी ऐसा ज्ञात होता है कि संनिधानसे 'सम्पूर्ण

## सत्यानन्दी-दीपिका

है। इससे मनुष्यके हृदयकी अपेक्षासे सर्वगत ब्रह्ममें भी अंगुष्ठमात्रत्वकी उपपत्ति कही गई है। इस अधिकरणके प्रसङ्गसे 'तदुपर्यपि बादरायणः' इत्यादि आठ सूत्रोंसे अष्टम देवताधिकरणमें देवताओंका भी ब्रह्मविद्यामें अधिकार कहा गया है। पुनः प्रसङ्गसे 'शुगस्य तदनादर०' इत्यादि पाँच सूत्रोंसे नवम अधिकरणमें शूद्रका वेदविद्यामें अधिकारका निषेध किया गया है। इसप्रकार प्रासंगिक अधिकार विचार समाप्त हुआ। अब प्रकृत विचारको आरम्भ करते हैं। यद्यपि 'अत एव प्राणः' इस अधिकरण सूत्रसे ही इस कम्पन अधिकरण सूत्रका विषय चरितार्थ हो जाता है, तो भी 'यदिदं किञ्च जगत् सर्वं०' इस वाक्यमें ब्रह्मका स्पष्ट लिङ्ग नहीं है अथवा 'अत एव प्राणः' इस अधिकरणका भी यह कम्पन अधिकरण विस्तार है, इसलिए इस अधिकरणकी पृथक् रचना करनेमें कोई दोष नहीं है। 'शब्दादेव

संनिधानात्, जगत्सर्वं प्राण एजतीति च लोकाश्रयत्वप्रत्यभिज्ञानान्निर्दिष्टमिति गम्यते। प्राणशब्दोऽप्ययं परमात्मन्येव प्रयुक्तः, 'प्राणस्य प्राणम्' ( बृ० ४।४।१८ ) इति दर्शनात्। एजयितृत्वमपीदं परमात्मन एवोपपद्यते न वायुमात्रस्य। तथा चोक्तम्—'न प्राणेन नापानेन मर्त्यो जीवति कश्चन। इतरेण तु जीवन्ति यस्मिन्नेतावुपाश्रितौ' (का० २।५।५) इति। उत्तरत्रापि 'भयादस्याग्निस्तपति भयात्तपति सूर्यः। भयादिन्द्रश्च वायुश्च मृत्युर्धावति पञ्चमः' ( का० २।६।३ ) इति ब्रह्मैव निर्देक्ष्यते न वायुः। सवायुकस्य जगतो भयहेतुत्वाभिधानात्। तदेवेहापि संनिधानात् 'महद्भयं वज्रमुद्यतम्' इति च भयहेतुत्वप्रत्यभिज्ञानान्निर्दिष्टमिति गम्यते। वज्रशब्दोऽप्ययं भयहेतुत्वसामान्यात्प्रयुक्तः। यथा हि वज्रमुद्यतं ममैव शिरसि निपतेद्यद्यहमस्य शासनं न कुर्यामित्यनेन भयेन जनो नियमेन राजादिशासने प्रवर्तते एवमिदमग्निवायुसूर्यादिकं जगदस्मादेव ब्रह्मणो बिभ्यन्नियमेन स्वव्यापारे प्रवर्तत इति भयानकं वज्रोपमितं ब्रह्म। तथा च ब्रह्मविषयं श्रुत्यन्तरम्—'भीषाऽस्माद्वातः पवते। भीषोदेति सूर्यः। भीषाऽस्मादग्निश्चेन्द्रश्च। मृत्युर्धावति पञ्चमः' ( तै० ८।१ ) इति। अमृतत्वफलश्रवणादपि ब्रह्मैवेदमिति गम्यते। ब्रह्मज्ञानाद्ध्यमृतत्वप्राप्तिः। 'तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय' (श्वे० ६।१५) इति मन्त्रवर्णात्। यत्तु वायुविज्ञानात्क्वचिदमृतत्वमभिहितम्, तदापेक्षिकम्।

---

जगत् प्राणमें चेष्टा करता है' इस तरह लोकाश्रयरूपसे प्रत्यभिज्ञान होनेसे वही निर्दिष्ट है। यह प्राण शब्द भी परमात्मामें ही प्रयुक्त है, क्योंकि 'प्राणस्य प्राणम्०' ( प्राणका प्राण है ) ऐसा देखा जाता है। और यह एजयितृत्व-कम्पनकर्तृत्व भी परमात्मामें ही उपपन्न होता है, वायुमात्रमें नहीं, क्योंकि 'न प्राणेन नापानेन०' ( कोई भी मनुष्य-प्राणी न प्राणसे और न अपानसे जीवित रहता है, किन्तु वे तो, जिसमें ये दोनों आश्रित हैं ऐसे किसी अन्यसे ही जीवित रहते हैं ) ऐसा कहा गया है। आगे भी 'भयादस्य०' ( इस—परमेश्वरके भयसे अग्नि तपता है, इसीके भयसे सूर्य तपता है तथा इसीके भयसे इन्द्र, वायु और पाँचवीं मृत्यु दौड़ती हैं अर्थात् नियमतः अपने अपने व्यापारमें प्रवृत्त होते हैं ) इस प्रकार ब्रह्मका ही निर्देश करेंगे वायुका नहीं, क्योंकि इसमें वायु सहित जगत्के भय हेतुत्वका अभिधान है। यहाँ भी ऐसा ज्ञात होता है कि संनिधान-प्रकरणसे और 'महद्भयं०' ( उद्यत वज्रके समान महान् भयका हेतु है ) इस प्रकार भय हेतुत्वरूप प्रत्यभिज्ञान होनेसे वही निर्दिष्ट है। यह वज्र शब्द भी भय हेतुत्व सादृश्यसे उसमें प्रयुक्त है। यदि मैं इसकी आज्ञाका पालन नहीं करूँगा तो यह उठा हुआ वज्र मेरे ही शिरपर पड़ेगा, इस भयसे जैसे लोग राजा आदिके शासनमें प्रवृत्त होते है, वैसे अग्नि, वायु, सूर्यादि यह जगत् इसी ब्रह्मसे डरता हुआ नियमसे अपने व्यापारमें प्रवृत्त होता है, इससे भयानक वज्रके साथ ब्रह्मकी उपमा-तुलना की गई है। और 'भीषास्माद्वातः०' (इसके भयसे वायु चलता है, इसके भयसे सूर्य उदय होता है, तथा इसके भयसे अग्नि, इन्द्र और पाँचवीं मृत्यु दौड़ती हैं अर्थात् नियमतः अपना अपना व्यापार करते हैं ) इस प्रकार ब्रह्म विषयक यह दूसरी श्रुति है और अमृतत्व फलके श्रवणसे भी यही ज्ञात होता है कि प्राण ब्रह्म ही है, क्योंकि ब्रह्मज्ञानसे ही अमृतत्वकी प्राप्ति होती है, कारण कि 'तमेव विदित्वा० ( उसीको जानकर मनुष्य मृत्युका अतिक्रमण कर जाता है, इससे भिन्न मोक्ष प्राप्तिका कोई अन्य मार्ग नहीं है ) यह मन्त्र है। किसी स्थलपर

### सत्यानन्दी-दीपिका

प्रमितः' इस ब्रह्मवाक्यमें ब्रह्मज्ञानके लिए जीवका अनुवाद किया गया है। उसी प्रकार यहाँ 'यदिदं' इस वाक्यमे प्राणानुवाद युक्त नहीं है, क्योंकि वह कल्पित है, इसलिए उसमें ब्रह्मैकत्व युक्त नहीं है। इस प्रत्युदाहरण संगतिसे 'प्रसिद्धेः' आदिसे पूर्वपक्ष करते हैं। पूर्वपक्षमें प्राणकी उपासना है, सिद्धान्तमे ब्रह्मका ज्ञान ॥ ३९ ॥

तत्रैव प्रकरणान्तरकरणेन परमात्मानमभिधाय 'अतोऽन्यदार्तम्' ( बृ० ३।४ ) इति वाय्वादेरार्तत्वाभिधानात्। प्रकरणादप्यत्र परमात्मनिश्चयः, 'अन्यत्र धर्मादन्यत्राधर्मादन्यत्रास्मात्कृताकृतात्। अन्यत्र भूताच्च भव्याच्च यत्तत्पश्यसि तद्वद'(का० १।२।१४)इति परमात्मनः पृष्टत्वात्॥३९॥

( ११ ज्योतिरधिकरणम् सू० ४० )

## ज्योतिर्दर्शनात् ॥ ४० ॥

पदच्छेद—ज्योतिः, दर्शनात्।

सूत्रार्थ—( ज्योतिः ) 'एष सम्प्रसादो०' इस श्रुतिमें ज्योतिः शब्दसे ब्रह्म ही प्रतिपाद्य है, ( दर्शनात् ) क्योंकि 'य आत्मा' इस उपक्रम वाक्यके पर्यालोचनसे ब्रह्मकी ही प्रतिपाद्यरूपसे अनुवृत्ति देखी जाती है।

* 'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' ( छा० ८।१२।३ ) इति श्रूयते। तत्र संशय्यते—किं ज्योतिःशब्दं चक्षुर्विषयतमोपहं तेजः, किंवा परं ब्रह्मेति। किं तावत्प्राप्तम्? प्रसिद्धमेव तेजो ज्योतिःशब्दमिति। कुतः? तत्र ज्योतिःशब्दस्य रूढत्वात्। 'ज्योतिश्चरणाभिधानात्' (ब्र० सू० १।१।२४) इत्यत्र हि प्रकरणाज्ज्योतिःशब्दः स्वार्थं परित्यज्य ब्रह्मणि वर्तते। न चेह तद्वत्किंचित्स्वार्थपरित्यागे कारणं दृश्यते। तथा च नाडीखण्डे-'अथ यत्रैतदस्माच्छरीरादुत्क्रामत्यथैतैरेव रश्मिभिरूर्ध्वमाक्रमते' (छा० ८।६।५)इति मुमुक्षोरादित्यप्राप्तिरभिहिता। तस्मात्प्रसिद्धमेव तेजो ज्यतिःशब्दमिति।

---

वायुके विज्ञानसे जो अमृतत्व अभिहित है वह सापेक्षिक है, क्योंकि वही दूसरे प्रकारणमें परमात्माका अभिधान कर 'अतोऽन्यदार्तम्' ( इससे भिन्न आर्त-विनाशी है ) इस प्रकार वायु आदिको नाशवान् अभिधान किया है। प्रकरणसे भी यहाँ परमात्माका ही निश्चय होता है, क्योंकि 'अन्यत्र धर्माद०' ( जो धर्मसे भिन्न, अधर्मसे भिन्न तथा इस कार्यकारणरूप प्रपञ्चसे भिन्न है और जो भूत एवं भविष्यत् से भिन्न है, ऐसा जिसे देखते अनुभव करते हैं उसका ही मुझे उपदेश कीजिए ) इस प्रकार नचिकेता द्वारा परमात्मा ही पूछा गया है॥ ३९॥

'एष सम्प्रसादो०' (यह सम्प्रसाद-जीव अविद्या दशामें देहात्मभावापन्न हुआ ब्रह्मनिष्ठ आचार्यके उपदेशसे देहमें आत्माभिमानको छोड़कर परम ज्योतिः को प्राप्तकर अपने स्वरूपसे अभिनिष्पन्न होता है ) ऐसी श्रुति है। यहाँ संशय होता है कि ज्योतिः शब्द वाच्य चक्षु विषय घट आदि पदार्थोंके आवरक अन्धकारका नाशक सूर्यादि तेज है अथवा परब्रह्म है? तब यहाँ क्या प्राप्त होता है? पूर्वपक्षी–प्रसिद्ध तेज ही ज्योतिः शब्द वाच्य है, किससे? इससे कि उसमें ज्योतिः शब्द रूढ़ है। 'ज्योतिश्चरणाभिधानात्' इस सूत्रमें तो प्रकरणसे ज्योतिः शब्द अपने अर्थका परित्याग कर ब्रह्मपरक है, परन्तु यहाँ उसके समान अपने प्रसिद्ध तेजरूप अर्थके परित्याग करनेमें कोई कारण दिखाई नहीं देता। इसी प्रकार नाडीखण्डमें 'अथ यत्र०' ( फिर जिस समय यह इस शरीरसे उत्क्रमण करता है उस समय नाड़ियोंमें फैली रश्मियोंसे ऊपरकी ओर चढ़ता है ) इस प्रकार मुमुक्षुके लिए आदित्यकी प्राप्तिका अभिधान है। इससे प्रसिद्ध तेज ही ज्योतिः शब्द वाच्य है। सिद्धान्ती—ऐसा प्राप्त होनेपर

### सत्यानन्दी-दीपिका

* पूर्व अधिकरणमें ब्रह्म प्रकरणके समर्थक सर्व जगत् व्यापार हेतुत्वरूप लिङ्गके सम्बन्धसे प्राणशब्द प्रसिद्ध वायु अर्थको छोड़कर ब्रह्मके लिए माना गया है। परन्तु उसीप्रकार 'य आत्मा' इस प्रकारका अनुग्राहक कोई लिङ्ग नहीं है जिससे ज्योतिःशब्द प्रसिद्ध तेजको छोड़कर ब्रह्म परक हो। इस तरह प्रत्युदाहरणसंगतिसे यह पूर्वपक्ष है। अतः यहाँ ज्योतिशब्दसे प्रसिद्ध सूर्यादि ज्योतिका ग्रहण करना चाहिए।

* एवं प्राप्ते ब्रूमः–परमेव ब्रह्म ज्योतिःशब्दम्। कस्मात् ? दर्शनात्। तस्य हीह प्रकरणे वक्तव्यत्वेनानुवृत्तिर्दृश्यते, 'य आत्माऽपहतपाप्मा' ( छा० ८।७।१ ) इत्यपहतपाप्मत्वादिगुणकस्यात्मनः प्रकरणादावन्वेष्टव्यत्वेन विजिज्ञासितव्यत्वेन च प्रतिज्ञानात्। 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' ( छा० ८।९।३ ) इति चानुसंधानात्। 'अशरीरं वाव सन्तं न प्रियाप्रिये स्पृशतः' ( छा० ८।१२।१ ) इति चाशरीरतायै ज्योतिःसंपत्तेरस्याभिधानात्, ब्रह्मभावाच्चान्यत्राशरीरतानुपपत्तेः, 'परं ज्योतिः', 'स उत्तमः पुरुषः' ( छा० ८।१२।३ ) इति च विशेषणात्। यत्तूक्तं मुमुक्षोरादित्यप्राप्तिरभिहितेति, नासावात्यन्तिको मोक्षो गत्युत्क्रान्तिसंबन्धात्। न ह्यात्यन्तिके मोक्षे गत्युत्क्रान्ती स्त इति वक्ष्यामः ॥ ४० ॥

---

हम कहते हैं–परब्रह्म ही ज्योतिःशब्द वाच्य है, किससे ? इससे कि उसका ही दर्शन (अनुवृत्ति) है। इस प्रकरणमें वक्तव्यरूपसे उसकी ही अनुवृत्ति दिखाई देती है। क्योंकि 'य आत्माऽपहतपाप्मा' ( जो आत्मा पाप रहित है ) इस प्रकार पाप रहितत्व आदि गुण विशिष्ट आत्माकी प्रकरणसे अन्वेष्टव्यरूपसे और विजिज्ञासितव्यरूपसे प्रतिज्ञा की है। 'एतं त्वेव ते भूयो०' ( मैं तुम्हारे प्रति इसकी पुनः व्याख्या करूँगा ) इस प्रकार आत्माका अनुसन्धान है। 'अशरीरं वाव सन्तं०' ( अशरीर होनेपर प्रिय और अप्रिय स्पर्श नहीं कर सकते ) इस प्रकार शरीररहित स्वरूपके लिए इस जीवको ज्योतिःस्वरूपताका अभिधान है; ब्रह्मभावके विना अशरीरत्वकी उपपत्ति नहीं हो सकती। 'परं ज्योतिः०' ( जो पर ज्योति है वह उत्तम पुरुष है ) ऐसा विशेषण है। जो यह कहा गया है कि मुमुक्षुके लिए आदित्य प्राप्तिका अभिधान है वह आत्यन्तिक मोक्ष नहीं, क्योंकि उसमें गति और उत्क्रान्तिका सम्बन्ध है। ऐसा आगे कहेंगे कि आत्यन्तिक मोक्षमें गति और उत्क्रान्ति नहीं होतीं ॥ ४० ॥

## सत्यानन्दी-दीपिका

* प्रकरणका प्रधान प्रतिपाद्य अर्थ वही होता है जिसकी उपक्रममें प्रतिज्ञा, मध्यमें अनुसन्धान और अन्तमें उपसंहार हो, अतः मध्यगतवाक्य भी उस वस्तुका प्रतिपादन करता है, यह शास्त्रकी मर्यादा है। छान्दोग्यके अष्टम अध्यायमें १५ खण्ड हैं—दो प्रकरण हैं। प्रथम प्रकरणमें प्रथम ६ खण्डोंमें दहरविद्याका प्रतिपादन है। द्वितीय प्रकरणमें 'य आत्माऽपहतपाप्मा' इस प्रकार सप्तम खण्डसे लेकर समाप्ति पर्यन्त निर्गुणब्रह्मका ही प्रतिपादन है। द्वितीय प्रकरणमें 'एष सम्प्रसादः०' यह मन्त्र भी निर्गुणब्रह्म परक है। 'य आत्माऽपहतपाप्मा' इस प्रकरणके आरम्भमें पापरहितत्व आदि गुणविशिष्ट आत्माके जाननेकी प्रतिज्ञा है। 'एतं त्वेव ते' इस वचनसे प्रजापतिने इन्द्रके प्रति पापरहित आत्माका मध्यमें तीन वार परामर्शकर उपदेश किया है। 'स उत्तमः पुरुषः' इस वचनसे निर्गुणब्रह्मका ही उपसंहार किया। 'उत्तमः पुरुषस्त्वन्यः परमात्मेत्युदाहृतः' ( गी० १५।१७ ) ( तथा उन दोनोंसे उत्तम पुरुष तो अन्य ही है। उसे अविनाशी परमेश्वर परमात्मा कहा गया है ) इत्यादि गीतावचनसे भी परमात्मा ही उत्तम पुरुष कहा गया है। इसलिए पूर्वोक्त प्रतिज्ञा, परमार्श, उपसंहार और फलरूप लिङ्गसे इस प्रकरणमें ब्रह्मकी ही अनुवृत्ति देखी जाती है। ज्योतिःशब्द सूर्यादि तेजका अभिधान नहीं करता किन्तु ब्रह्मका ही करता है। और आदित्य प्राप्तिरूप जो मोक्ष कहा गया है वह भी वास्तवमें मोक्ष नहीं है, क्योंकि कैवल्यमोक्षमें गमन आदि नहीं होते। 'न तस्य प्राणाः उत्क्रामन्ति अत्रैव समविलीयन्ते' ( ब्रह्मवेत्ताके प्राण [ पुर्यष्टका ] उत्क्रमण नहीं करते किन्तु यहीं विलीन हो जाते हैं ) इत्यादि श्रुतिमें ब्रह्मवेत्ताके गमनागमनका निषेधकर परज्योतिःस्वरूपमें लीन-सा होना ही मोक्ष कहा गया है। पूर्वपक्षमें सूर्यकी उपासनासे ब्रह्मलोकद्वारा क्रममुक्तिफल है। सिद्धान्तमें ब्रह्मज्ञानसे साक्षात् मुक्ति ही फल है ॥ ४० ॥

## ( १२ अर्थान्तरत्वव्यपदेशाधिकरणम् सू० ४१ )
## आकाशोऽर्थान्तरत्वादिव्यपदेशात् ॥ ४१ ॥

पदच्छेद—आकाशः, अर्थान्तरत्वादिव्यपदेशात् ।

सूत्रार्थ—( आकाशः ) 'आकाशो वै नाम-नाम रूपयोर्निर्वहिता' इस श्रुतिमें प्रतिपादित आकाश ब्रह्म है, (अर्थान्तरत्वादिव्यपदेशात्) क्योंकि 'ते यदन्तरा' इसमें आकाशका नामरूपसे अर्थान्तरत्व आदि रूपसे व्यपदेश है । (आदि) शब्दसे 'तद् ब्रह्म तदमृतं स आत्मा' इस प्रकार ब्रह्मत्वका व्यपदेश है ।

* 'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म तदमृतं स आत्मा' (छा० ८।१४।१) इति श्रूयते । तत्किमाकाशशब्दं परं ब्रह्म, किंवा प्रसिद्धमेव भूताकाशमिति विचारे भूतपरिग्रहो युक्तः; आकाशशब्दस्य तस्मिन्रूढत्वात् , नामरूपनिर्वहणस्य चावकाशदानद्वारेण तस्मिन्योजयितुं शक्यत्वात् , स्रष्टृत्वादेश्च स्पष्टस्य ब्रह्मलिङ्गस्याश्रवणादिति । एवं प्राप्त इदमुच्यते—परमेव ब्रह्मेहाकाशशब्दं भवितुमर्हति । कस्मात् ? अर्थान्तरत्वादिव्यपदेशात् । 'ते यदन्तरा तद्ब्रह्म' इति हि नामरूपाभ्यामर्थान्तरभूतमाकाशं व्यपदिशति । न च ब्रह्मणोऽन्यन्नामरूपाभ्यामर्थान्तरं संभवति; सर्वस्य विकारजातस्य नामरूपाभ्यामेव व्याकृतत्वात् । नामरूपयोरपि निर्वहणं निरङ्कुशं न ब्रह्मणोऽन्यत्र संभवति; 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' ( छा० ६।३।२ ) इत्यादिब्रह्मकर्तृकत्वश्रवणात् । ननु जीवस्यापि प्रत्यक्षं नामरूपविषयं निर्वोढृत्वमस्ति । वाढमस्ति । अभेदस्त्विह विवक्षितः । नामरूपनिर्वहणाभिधानादेव च स्रष्टृत्वादि ब्रह्मलिङ्गमभिहितं भवति । 'तद्ब्रह्म तदमृतं स आत्मा' (छा० ८।१४।१) इति च ब्रह्मवादस्य लिङ्गानि । 'आकाशस्तल्लिङ्गात्' ( ब्र० १।१।२२ ) इत्यस्यैवायं प्रपञ्चः ॥४१॥

'आकाशो वै नाम०' ( आकाश नामसे प्रसिद्ध आत्मा नाम और रूपका निर्वाह करनेवाला है । वे ( नाम रूप ) जिसके अन्तर हैं वह ब्रह्म है, अमृत है, वही आत्मा है ) ऐसी श्रुति है । क्या वह आकाशशब्द परब्रह्म विषयक है ? अथवा प्रसिद्ध भूत आकाश विषयक ? ऐसा विचार उपस्थित होने पर पूर्वपक्षमें भूत आकाशका ग्रहण युक्त है, क्योंकि उसमें आकाश शब्द रूढ है । अवकाश देनेके कारण नाम रूपके निर्वाहकत्वकी उसमें योजना हो सकती है और श्रुतिमें स्रष्टृत्वादि स्पष्ट ब्रह्म लिङ्ग नहीं हैं । सिद्धान्ती—ऐसा प्राप्त होने पर यह कहते हैं— यहाँ परब्रह्म ही आकाशशब्द वाच्य होना चाहिए, किससे ? इससे कि यहाँ अर्थान्तरत्वादिका व्यपदेश है । 'ते यदन्तरा तद्ब्रह्म०' ( वे जिसके अन्तर हैं वह ब्रह्म है ) इस प्रकार नाम रूपसे भिन्न अर्थभूत आकाशका व्यपदेश है । ब्रह्मसे अतिरिक्त नाम और रूपसे भिन्न अन्य पदार्थका संभव नहीं है, क्योंकि समस्त विकार समूह नाम रूपसे ही व्याकृत हैं । उसी प्रकार नाम रूपका स्वतन्त्ररूपसे निर्वहण ब्रह्मसे अन्यत्र सम्भव नहीं है, क्योंकि 'अनेन जीवेनाऽऽत्मना०' ( मैं इस जीवात्मरूपसे इन तीनों देवताओंमें अनुप्रवेश कर नाम रूपकी अभिव्यक्ति करूँ ) इत्यादि ब्रह्मकर्तृत्व श्रुति है । परन्तु जीवमें भी नाम रूप विषयक निर्वहणकर्तृत्व प्रत्यक्ष है । यह सत्य है, परन्तु यहाँ तो अभेद विवक्षित है । नाम रूपके निर्वाहके अभिधानसे ही स्रष्टृत्वादि ब्रह्मलिङ्गका अभिधान है । 'तद् ब्रह्म तदमृतं स आत्मा०' ( वह ब्रह्म है, वह अमृत है, वह आत्मा है ) ये ब्रह्मवादके लिङ्ग हैं । यह सूत्र 'आकाशस्तल्लिङ्गात्' इस सूत्रका ही विस्तार है ॥४१॥

### सत्यानन्दी-दीपिका

ॐ जैसे पूर्वाधिकरणमें ज्योतिःशब्दसे प्रसिद्ध सूर्यादि तेजका बाध कर ब्रह्मका प्रतिपादन किया गया है, वैसे आकाशशब्दसे प्रसिद्ध भूताकाशका बाध कर भगवान् सूत्रकार ब्रह्मका प्रतिपादन करते हैं । इस प्रकार दृष्टान्तसंगतिसे इस अधिकरणका आरम्भ है । पूर्वपक्षी—'आकाशस्तल्लिङ्गात्' ( ब्र० सू० १।१।२२ ) इस सूत्रमें 'सर्वाणि ह वा इमानि भूतान्याकाशादेव समुत्पद्यन्ते' ( छा० १।९।१ ) इस

## ( १३ सुषुप्त्युत्क्रान्त्यधिकरणम् सू० ४२-४३ )

## सुषुप्त्युत्क्रान्त्योर्भेदेन ॥४२॥

पदच्छेद—सुषुप्त्युत्क्रान्त्योः, भेदेन ।

सूत्रार्थ—'योऽयं विज्ञानमयः' इत्यादि श्रुतियोंमें प्रतिपाद्यमान पुरुष परमात्मा है, क्योंकि ( सुषुप्त्युत्क्रान्त्योः ) 'प्राज्ञेनात्मना' इस प्रकार सुषुप्ति और उत्क्रान्ति अवस्थाओंमें ( भेदेन ) जीवसे भिन्नरूपसे परमात्माका प्राज्ञशब्दसे व्यपदेश है ।

* व्यपदेशादित्यनुवर्तते। बृहदारण्यके षष्ठे प्रपाठके 'कतम आत्मेति योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः' (बृ० ४।३।७) इत्युपक्रम्य भूयानात्मविषयः प्रपञ्चः कृतः। तत्किं संसारिस्वरूपमात्रान्वाख्यानपरं वाक्यम्, उतासंसारिस्वरूपप्रतिपादनपरमिति संशयः। किं तावत्प्राप्तम्? संसारिस्वरूपमात्रविषयमेवेति। कुतः? उपक्रमोपसंहाराभ्याम्। उपक्रमे 'योऽयं विज्ञानमयः प्राणेषु' इति शारीरलिङ्गात्। उपसंहारे च 'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु' (बृ० ४।४।२२) इति तदपरित्यागात्, मध्येऽपि बुद्धान्ताद्यवस्थोपन्यासेन तस्यैव प्रपञ्चनादिति। एवं प्राप्ते ब्रूमः—परमेश्वरोपदेशपरमेवेदं वाक्यं न शारीरमात्रान्वाख्यानपरम्। कस्मात्? सुषुप्तावुत्क्रान्तौ च शारीराद्भेदेन परमेश्वरस्य व्यपदेशात्। सुषुप्तौ तावत् 'अयं पुरुषः प्राज्ञेनात्मना संपरिष्वक्तो न बाह्यं किंचन वेद नान्तरम्'

---

'व्यपदेशात्' इस पदकी पिछले सूत्रसे अनुवृत्ति होती है । बृहदारण्यकके षष्ठ प्रपाठकमें 'कतम आत्मेति०,( जनक—अहं बुद्धिके विषय देह, इन्द्रिय, मन और प्राण आदिमें से आत्मा कौन है ? 'याज्ञवल्क्य—यह जो प्राणोंमें बुद्धिवृत्तियोंका साक्षिभूत हृदयके अन्तर्गत विज्ञानमय ज्योतिःस्वरूप पुरुष है वह आत्मा है ) ऐसा उपक्रम कर आत्मविषयक बहुत विस्तार किया गया है । क्या वह वाक्य केवल संसारी जीवके स्वरूप अनुवाद परक है अथवा परमात्माके स्वरूप प्रतिपादन परक है, ऐसा संशय होता है, तब क्या प्राप्त हुआ ? पूर्वपक्षी—[ कतम आत्मेति ] यह वाक्य केवल जीवस्वरूप विषयक है, किससे ? इससे कि उपक्रम और उपसंहारसे ऐसा ही ज्ञात होता है । उपक्रममें 'योऽयं विज्ञानमयः०' ( यह जो प्राणोंमें विज्ञानमय है ) ऐसा जीवका लिङ्ग है,और 'स वा एष०' ( वह यह महान् अजन्मा आत्मा, जो कि यह प्राणोंमें विज्ञानमय है) इस उपसंहारमें भी उसका परित्याग नहीं है और मध्यमें भी जाग्रत् आदि अवस्थाओंके उपन्याससे उसका ही विस्तार है । सिद्धान्ती—ऐसा प्राप्त होनेपर हम कहते हैं—[ कतम आत्मा ] यह वाक्य परमेश्वर उपदेश परक ही है, केवल जीव स्वरूप अनुवाद परक नहीं है, किससे ? इससे कि सुषुप्ति और उत्क्रान्ति (मरण) में जीवसे भिन्नरूपसे परमेश्वरका व्यपदेश है। सुषुप्तिमें

### सत्यानन्दी-दीपिका

प्रकार सर्व जगत् स्रष्टृत्व आदि ब्रह्मके असाधारण लिङ्ग होनेके कारण आकाशशब्दसे परमात्माका ग्रहण किया गया है, वैसे 'आकाशो वै नाम' यहाँ पर जगत् स्रष्टृत्व आदि ब्रह्मके स्पष्ट लिङ्गका श्रवण नहीं है । अतः आकाशशब्दसे ब्रह्मका ग्रहण न कर भूताकाशका ग्रहण करना चाहिए । पूर्वपक्षमें अमृत आदि रूपसे आकाशकी उपासना है । सिद्धान्तमें निर्गुणब्रह्मका ज्ञान फल है ॥४१॥

* पूर्वाधिकरणमें नाम और रूपसे भिन्न होनेके कारण आकाश ब्रह्म कहा गया है, वह युक्त नहीं है, क्योंकि 'प्राज्ञेनात्मना' इत्यादिसे ब्रह्मके-साथ जीवका अभेद सिद्ध होने पर भी जैसे भेद कहा जाता है, वैसे औपचारिक भेदका कथन हो सकता है, ऐसी आक्षेपसंगति है । पूर्वाधिकरणमें जगत् स्रष्टृत्व ब्रह्मके लिङ्गसे भूताकाशका बाध किया गया है, अब भगवान् सूत्रकार इस अधिकरणमें ब्रह्मके लिङ्गसे जीवके लिङ्गका बाध दिखाते हैं । पूर्वपक्षमें 'कतम आत्मेति' इस प्रकारके उपक्रम आदि वाक्योंसे जीव ही प्रतिपाद्य सिद्ध होता है, ब्रह्म नहीं ।

भावात्प्रश्नभेदः। न पूर्वस्यैवोत्तरत्रानुकर्षणमिति चेत्-न; जीवप्राज्ञयोरेकत्वाभ्युपगमात्। भवेत्प्रष्टव्यभेदात्प्रश्नभेदो यद्यन्यो जीवः प्राज्ञात्स्यात्। न त्वन्यत्वमस्ति। तत्त्वमसीत्यादिश्रुत्यन्तरेभ्यः। इह च 'अन्यात्र धर्मात्' इत्यस्य प्रश्नस्य प्रतिवचनं 'न जायते म्रियते वा विपश्चित्' इति जन्ममरणप्रतिषेधेनप्रतिपाद्यमानं शारीरपरमेश्वरयोरभेदं दर्शयति। सति हि प्रसङ्गे प्रतिषेधो भागी भवति। प्रसङ्गश्च जन्मरणयोः शरीरसंस्पर्शाच्छारीरस्य भवति न परमेश्वरस्य। तथा-'स्वप्नान्तं जागरितान्तं चोभौ येनानुपश्यति। महान्तं विभुमात्मानं मत्वा धीरो न शोचति॥ (का० २।४।४) इति स्वप्नजागरितदृशो जीवस्यैव महत्त्वविभुत्वविशेषणस्य मननेन शोकविच्छेदं दर्शयन्न प्राज्ञादन्योजीव इति दर्शयति। प्राज्ञविज्ञानाद्धि शोकविच्छेद इति वेदान्तसिद्धान्तः। * तथाऽग्रे-'यदेवेह तदमुत्र यदमुत्र तदन्विह। मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति॥' (का० २।४।१०) इति जीवप्राज्ञभेददृष्टिमपवदति। तथा जीवविषयस्यास्तित्वनास्तित्वप्रश्नस्यानन्तरम् 'अन्यं वरं नचिकेतो वृणीष्व' इत्यारभ्य मृत्युना तैस्तैः कामैः प्रलोभ्यमानोऽपि नचिकेता यदा न चचाल, तदैनं मृत्युरभ्युदयनिःश्रेयसविभागप्रदर्शनेन विद्याविद्याविभागप्रदर्शनेन च 'विद्याभीप्सिनं नचिकेतसं मन्ये न त्वा कामा बहवोऽलोलुपन्त'

---

परस्पर भेद है, ऐसा यदि कहो कि पूर्व प्रश्नकी उत्तर वाक्यमें अनुवृत्ति नहीं है, तो यह कथन युक्त नहीं है, 'क्योंकि जीव और प्राज्ञमें एकत्व स्वीकार किया गया है, यदि जीव प्राज्ञसे अन्य होता तो प्रष्टव्यके भेदसे प्रश्नका भेद होता, परन्तु 'तत्त्वमसि' इत्यादि अन्य श्रुतियोंसे यह सिद्ध होता है कि दोनोंमें भेद नहीं है, यहाँ भी 'अन्यत्र धर्मात्' इस प्रश्नका 'न जायते म्रियते०' (विद्वान् न जन्मता है न मरता है) इस प्रकार जन्म-मरणके प्रतिषेधसे प्रतिपाद्यमान प्रतिवचन जीव और परमेश्वरका अभेद दिखलाता है। जन्म-मरणका प्रसङ्ग होनेपर ही प्रतिषेध युक्त होता है। शरीरके साथ सम्बन्धके होनेसे जीवात्मामें जन्म-मरणका प्रसङ्ग होता है परमेश्वरमें नहीं होता। उसी प्रकार 'स्वप्रान्त जागरितान्तं०' ( जिसके द्वारा स्वप्नमें प्रतीत होनेवाले तथा जाग्रत्में दिखाई देनेवाले दोनों प्रकारके पदार्थों को देखता है उस महान् और विभु आत्माको जानकर बुद्धिमान् पुरुष शोक नहीं करता ) इस प्रकार स्वप्न और जाग्रत् पदार्थोंको देखनेवाले महत्त्व एवं विभुत्व विशिष्ट जीवके चिन्तनसे ही शोककी अत्यन्त निवृत्ति दिखलाते हुए यमराज प्राज्ञ-परमात्मासे जीव भिन्न नहीं है ऐसा दिखलाते हैं। यह वेदान्त सिद्धान्त है कि प्राज्ञके विज्ञानसे ही शोकका नाश होता है। उसी प्रकार आगे 'यदेवेह०' ( जो तत्त्व इस-देहेन्द्रिय संघातमें भासता है वही अन्यत्र-देहादिसे परे भी है और जो अन्यत्र है वही इसमें है। जो मनुष्य इस तत्त्वमें नानात्व-सा देखता है वह मृत्युसे मृत्युको-जन्म मरणको प्राप्त होता है ) इस प्रकार यह मन्त्र जीव और प्राज्ञमें भेददृष्टिका निषेध करता है। इस प्रकार नचिकेताके जीव विषयक अस्तित्व, नास्तित्व ( है, नहीं है ) प्रश्नके अनन्तर 'अन्यं वरं०' ( हे नचिकेता ! आत्मविषयक वरको छोड़कर अन्य वर मांगो ) ऐसा आरम्भकर यमराजद्वारा पुत्र दारा आदि अनेक तत् तत् कामनाओंसे अत्यन्त प्रलोभित किया गया भी नचिकेता जब अपने वरसे विचलित न हुआ तब धर्मराजने अभ्युदय और मोक्षके विभाग-भेदके प्रदर्शनसे तथा विद्या और अविद्याके विभागके प्रदर्शनसे 'विद्याभीप्सिनं०'

## सत्यानन्दी-दीपिका

* यदि जीव परमेश्वरसे भिन्न होता तो 'येयं प्रेते' इस प्रश्नका परमेश्वर विषयक 'तं दुर्दर्शं गूढ०' यह उत्तर किस प्रकार संगत होता, अतः दोनों मन्त्र एक आत्मविषयक हैं और उनमें आत्मविषयक एक ही प्रश्न है। 'उदरमन्तरं कुरुते अथ तस्य भयं भवति' ( जो उस प्रत्यगभिन्न ब्रह्मतत्त्वमें अल्प-सा भेद करता है उसे संसार भय प्राप्त होता है ) इत्यादि श्रुतियोंमें भेदकी निन्दा और भेददर्शीको जन्म-मरणमय संसारकी प्राप्ति कही गई है। इसलिए यहाँ जीव-ब्रह्मका अभेद ही विवक्षित है।

( का० १।२।४) इति प्रशस्य प्रश्नमपि तदीयं प्रशंसन्नुदुवाच—'तं दुर्दर्शं गूढमनुप्रविष्टं गुहाहितं गह्वरेष्ठं पुराणम्। अध्यात्मयोगाधिगमेन देवं मत्वा धीरो हर्षशोकौ जहाति ॥' ( का० १।२।१२ ) इति, तेनापि जीवप्राज्ञयोरभेद एवेह विवक्षित इति गम्यते। यत्प्रश्ननिमित्तां च प्रशंसां महतीं मृत्योः प्रत्यपद्यत नचिकेता यदि तं विहाय प्रशंसानन्तरमन्यमेव प्रश्नमुपक्षिपेद-स्थान एव सा सर्वा प्रशंसा प्रसारिता स्यात्। तस्मात् 'येयं प्रेते' इत्यस्यैव प्रश्नस्यैतदनु-कर्षणम् 'अन्यत्र धर्मात्' इति। यत्तु प्रश्नच्छायावैलक्षण्यमुक्तम्, तददूषणम्, तदीयस्यैव विशेषस्य पुनः पृच्छ्यमानत्वात्। पूर्वत्र हि देहादिव्यतिरिक्तस्यात्मनोऽस्तित्वं पृष्टम्, उत्त-रत्र तु तस्यैवासंसारित्वं पृच्छ्यत इति; यावद्ध्यविद्या न निवर्तते तावद्धर्मादिगोचरत्वं जीव-स्य जीवत्वं च न निवर्तते। तन्निवृत्तौ तु प्राज्ञ एव तत्त्वमसीति श्रुत्या प्रत्याय्यते। न चाविद्या-वत्त्वे तदपगमे च वस्तुनः कश्चिद्विशेषोऽस्ति। यथा कश्चित्संतमसे पतितां कांचिद्रज्जुमहिं मन्यमानो भीतो वेपमानःपलायते, तं चापरो ब्रूयान्मा भैषीर्नायमही रज्जुरेवेति। स च तदुपश्रुत्याहिकृतं भयमुत्सृजेद्वेपथुं पलायनं च। न त्वहिबुद्धिकाले तदपगमकाले च वस्तुन कश्चिद्विशेषः स्यात्। तथैवैतदपि द्रष्टव्यम्। ततश्च 'न जायते म्रियते वा' इत्येवमाद्यपि भवत्य-स्तित्वप्रश्नस्य प्रतिवचनम्। * सूत्रं त्वविद्याकल्पितजीवप्राज्ञभेदापेक्षया योजयितव्यम्।

( मैं तुझ नचिकेताको विद्याभिलाषी मानता हूँ; क्योंकि तुझे बहुतसे भोगोंने भी नहीं लुभाया ) इस प्रकार नचिकेताकी प्रशंसा कर उसके प्रश्नकी भी प्रशंसा करते हुए 'तं दुर्दर्श०' ( उस कठिनतासे दीख पड़नेवाले, गूढ़ स्थानमें अनुप्रविष्ट, गुहा-बुद्धिमें स्थित, गह्वर-अनेक अनर्थोंसे व्याप्त देहमें स्थित, पुरातन देवको अध्यात्मयोगकी प्राप्ति द्वारा जानकर धी-बुद्धिमान् पुरुष हर्ष-शोकको त्याग देता है) ऐसा कहा है। इससे भी ऐसा ज्ञात होता है कि जीव और प्राज्ञ-परमात्माका अभेद ही यहाँ विवक्षित है। जिस प्रश्नके कारण मृत्युने नचिकेताकी महती प्रशंसाकी यदि नचिकेता उसको छोड़कर प्रशंसाके अनन्तर अन्य ही प्रश्नको उठाता तो वह सब प्रशंसा अनुपयुक्त स्थानमें ही प्रसारित होगी अर्थात् अनुपयुक्त स्थानमें की जानेके कारण व्यर्थ हो जायगी, इसलिए 'येयं प्रेते' इस प्रश्नकी ही 'अन्यत्र धर्मात्' इस मन्त्रमें अनुवृत्ति है। जो यह कहा गया है कि दोनों प्रश्नोंमें सादृश्य न होनेके कारण वैलक्षण्य है, वह दोष नहीं है, क्योंकि उसीका विशेष पुनः पूछा गया है। पूर्ववाक्य 'येयं प्रेते, में देहादिसे अतिरिक्त आत्माका अस्तित्व ही पूछा गया है और उत्तर मन्त्र ( अन्यत्र धर्मात् ) में तो उसीका असंसारित्व पूछा जाता है, इसलिए जब तक अविद्या निवृत्त नहीं होती तब तक जीवमें धर्मादि आश्रयत्व और जीवत्व निवृत्त नहीं होते। उसकी निवृत्ति होने पर तो वह प्राज्ञ ही है, ऐसी 'तत्त्वमसि' इसप्रकारकी श्रुतिसे प्रतीति कराई जाती है। अविद्याके योगसे अथवा अविद्याके निवृत्त होनेसे वस्तुमें कुछ भी विशेष नहीं आता। जैसे अंधकारमें पड़ी किसी रज्जुमें सर्प समझकर कोई पुरुष भयसे कांपता हुआ वहाँसे भागता है। उससे यदि कोई अन्य विज्ञपुरुष कहे कि भय मत करो यह सर्प नहीं है किन्तु रज्जु है, तब वह पुरुष उसका वचन सुनकर सर्पज्ञान जन्य भय, कँपन और पलायन त्याग देता है। परन्तु सर्प बुद्धि कालमें अथवा उसकी निवृत्तिकालमें वस्तु (रज्जुमें) कोई विशेषता नहीं है, उसी प्रकार यहाँ भी समझना चाहिए। इसके अतिरिक्त जीव ब्रह्मके अभेद होनेसे 'न जायते म्रियते वा' इत्यादि भी अस्तित्व प्रश्नका प्रतिवचन है। [ जीव ब्रह्म एक होनेपर भी ] अविद्यासे कल्पित जीव

## सत्यानन्दी-दीपिका

* जीव ब्रह्मका अभेद होनेसे ब्रह्मविषयक प्रश्नका तृतीय वरमें अन्तर्भाव है। प्रधानकी कल्पनामें तो कोई भी वर प्रदानादि नहीं हैं, और प्रधान अनात्मा है, अतः उसका आत्मविषयक तृतीय वरमें अन्तर्भाव भी सम्भव नहीं है, यही प्रधानमें विषमता है। इससे प्रधान अव्यक्त शब्द वाच्य नहीं है ॥६॥

एकत्वेऽपि ह्यात्मविषयस्य प्रश्नस्य प्रायणावस्थायां देहव्यतिरिक्तास्तित्वमात्रविचिकित्सनात्कर्तृत्वादिसंसारस्वभावानपोहनाच्च पूर्वस्य पर्यायस्य जीवविषयत्वमुत्प्रेक्ष्यते। उत्तरस्य तु धर्माद्यत्ययसंकीर्तनात्प्राज्ञविषयत्वमिति। ततश्च युक्ताऽग्निजीवपरमात्मकल्पना। प्रधानकल्पनायां तु न वरप्रदानं न प्रश्नो न प्रतिवचनमिति वैषम्यम् ॥६॥

## महद्वच्च ॥७॥

पदच्छेद—महद्वत्, च।

सूत्रार्थ—'बुद्धेरात्मा महान् परः' इसमें पठित "महत्" शब्द जैसे सांख्याभिमत तत्त्वका वाचक नहीं है, वैसे वैदिक अव्यक्तशब्द भी प्रधानका वाचक नहीं है।

❀ यथा महच्छब्दः सांख्यैः सत्तामात्रेऽपि प्रथमजे प्रयुक्तो न तमेव वैदिकेऽपि प्रयोगेऽभिधत्ते। 'बुद्धेरात्मा महान्परः' ( का० १।३।१० ), 'महान्तं विभुमात्मानम्' ( का० १।२।२२ ), 'वेदाहमेतं पुरुषं महान्तम्' ( श्वे० ३।८ ) इत्येवमादावात्मशब्दप्रयोगादिभ्यो हेतुभ्यः। तथाऽव्यक्तशब्दोऽपि न वैदिके प्रयोगे प्रधानमभिधातुमर्हति। अतश्च नास्त्यानुमानिकस्य शब्दवत्त्वम् ॥७॥

( २ चमसाधिकरण सू० ८-१० )

## चमसवदविशेषात् ॥८॥

पदच्छेद—चमसवत्, अविशेषात्।

सूत्रार्थ—( चमसवत् ) 'अर्वाग्बिलश्चमसः' चमस ( यज्ञपात्र ) के समान ( अविशेषात् ) अविशेष होनेसे श्रुतिपठित अजाशब्द भी प्रधानका वाचक नहीं है अर्थात् जैसे अर्वाग्बिलत्व सामान्य धर्म होनेसे चमसका वाचक नहीं है, वैसे अजात्व धर्म भी सामान्य होनेसे प्रधानका वाचक नहीं है।

❀ पुनरपि प्रधानवाद्यशब्दत्वं प्रधानस्यासिद्धमित्याह। कस्मात्? मन्त्रवर्णात्—'अजामेकां लोहितशुक्लकृष्णां बह्वीः प्रजाः सृजमानां सरूपाः। अजो ह्येको जुषमाणोऽनुशेते जहात्येनां

---

ब्रह्मके भेदकी अपेक्षा सूत्रकी योजना करनी चाहिए। यद्यपि आत्मविषयक प्रश्न एक ही है तो भी मरणावस्थामें देहसे भिन्न आत्मामें अस्तित्वमात्रका संशय होने तथा कर्तृत्वादि संसार स्वभावका निषेध न होनेसे पूर्व पर्याय ( प्रश्न ) में जीव विषयक उत्प्रेक्षाकी जाती है। उत्तर पर्यायमें तो धर्मादिके राहित्यका प्रतिपादन होनेसे वह प्राज्ञविषयक है। इसलिए अग्नि, जीव और परमात्माकी कल्पना युक्त है। प्रधानकी कल्पनामें तो न वर प्रदान है, न प्रश्न है और न प्रतिवचन है, इस प्रकारकी यहां विषमता है ॥६॥

जैसे सांख्याचार्यों द्वारा सत्तामात्र, प्रथमोत्पन्न महत्तत्त्व अर्थमें प्रयुक्त महत् शब्द 'बुद्धेरात्मा'० ( बुद्धिसे महान् आत्मा श्रेष्ठ है ) 'महान्तं०' ( महान् विभु आत्माको ) 'वेदाहमेतं०' ( मैं इस महान् पुरुषको जानता हूँ ) इत्यादिमें आत्मशब्द प्रयोग आदि हेतुओंसे वैदिक प्रयोगमें उसी अर्थका अभिधान नहीं करता, उसी प्रकार अव्यक्त शब्द भी वैदिक प्रयोगमें प्रधानका अभिधान नहीं कर सकता, इसलिए अनुमानगम्य प्रधान श्रुति प्रतिपादित नहीं है ॥७॥

प्रधानवादी फिर भी कहता है कि प्रधानको अशब्द-श्रुतिसे अप्रतिपादित कहना असिद्ध है, किससे? इससे कि 'अजामेकां'० ( अपने अनुरूप बहुत-सी प्रजा उत्पन्न करनेवाली, लोहित, शुक्ल, कृष्ण वर्णा एक अजा ( बकरी-प्रकृति ) को एक अज ( बकरा-जीव ) सेवन करता हुआ भोगता है और दूसरा

### सत्यानन्दी-दीपिका

❀ 'श्रौतः अव्यक्तशब्दो न सांख्यासाधारणतत्त्वगोचरः वैदिकशब्दत्वात् महच्छब्दवत्'। 'श्रौत अव्यक्त शब्द सांख्यके असाधारण प्रधानतत्त्वका प्रतिपादन नहीं करता है, क्योंकि वैदिक शब्द है, जैसे महत् शब्द।' इस प्रकार यह सिद्ध हुआ कि प्रधान श्रुति प्रतिपादित नहीं है ॥७॥

भुक्तभोगामजोऽन्यः' ( श्वे० ४।५) इति। अत्र हि मन्त्रे लोहितशुक्लकृष्णशब्दै रजःसत्त्वतमांस्यभिधीयन्ते। लोहितं रजः; रञ्जनात्मकत्वात्। शुक्लं सत्त्वं; प्रकाशात्मकत्वात्। कृष्णं तमः; आवरणात्मकत्वात्। तेषां साम्यावस्थाऽवयवधर्मैर्व्यपदिश्यते लोहितशुक्लकृष्णेति। न जायत इति चाजा स्यात्; 'मूलप्रकृतिरविकृतिः' इत्युभ्युपगमात्। नन्वजाशब्दश्छागायां रूढः। बाढम्; सा तु रूढिरिह नाश्रयितुं शक्या; विद्याप्रकरणात्। सा च बह्वीः प्रजास्त्रैगुण्यान्विता जनयति। तां प्रकृतिमज एकः पुरुषो जुषमाणः प्रीयमाणः सेवमानो वाऽनुशेते। तामेवाविद्ययाऽऽत्मत्वेनोपगम्य सुखी दुःखी मूढोऽहमित्यविवेकतया संसरति। अन्यः पुनरजः पुरुष उत्पन्नविवेकज्ञानो विरक्तो जहात्येनां प्रकृतिं भुक्तभोगां कृतभोगापवर्गां परित्यजति-मुच्यत इत्यर्थः। तस्माच्छ्रुतिमूलैव प्रधानादिकल्पना कापिलानामिति। एवं प्राप्ते ब्रूमः—नानेन मन्त्रेण श्रुतिमत्त्वं सांख्यवादस्य शक्यमाश्रयितुम्। न ह्ययं मन्त्रः स्वातन्त्र्येण कंचिदपि वादं समर्थयितुमुत्सहते; सर्वत्रापि यया कयाचित्कल्पनयाऽजात्वादिसंपादनोपपत्तेः, सांख्यवाद एवेहाभिप्रेत इति विशेषावधारणकारणाभावात्। चमसवत्। यथा हि 'अर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' ( बृ० २।२।३ ) इत्यस्मिन्मन्त्रे स्वातन्त्र्येणायं नामासौ

---

अज उस भुक्त भोगाको त्याग देता है ) ऐसा मन्त्र है। इसी मन्त्रमें लोहित, शुक्ल, और कृष्णशब्दोंसे रज, सत्त्व और तमका अभिधान होता है। लोहित, रागात्मक होनेसे रज, शुक्ल प्रकाशात्मक होनेसे सत्त्व और कृष्ण आवरकात्मक होनेसे तम है। उनके अवयव धर्मोंसे लोहित, शुक्ल, कृष्णरूप साम्यावस्था कही जाती है। 'न जायते इति अजा' 'जो उत्पन्न नहीं होती वह अजा है' क्योंकि 'मूलप्रकृतिरविकृतिः' ( मूलप्रकृति किसीका कार्य नहीं होती ) ऐसा सांख्य लोग स्वीकार करते हैं। परन्तु अजाशब्द तो बकरीमें रूढ है ? यह सत्य है, परन्तु यहाँ उस रूढिका आश्रय-ग्रहण नहीं किया जा सकता, क्योंकि यह विद्याका प्रकरण है। वह अजा अपने अनुरूप त्रिगुणान्वित-सुख, दुःख मोहात्मक देव मनुष्य पशु आदि बहुत प्रजाओंको जन्म देती है। एक अज-पुरुष उस प्रकृति पर प्रेम रखता हुआ और उसका सेवन करता हुआ उसके पास शयन करता है अर्थात् अविद्यासे उसीको आत्मरूपसे मानकर 'मैं सुखी' दुःखी एवं मूढ हूँ' इस प्रकार अविवेकसे जन्म मरणको प्राप्त होता है। परन्तु उत्पन्न हुए विवेक ज्ञानवाला अन्य अज-विरक्त पुरुष जिसने भोग और अपवर्ग सम्पादनकर लिया है, ऐसी भुक्त भोगा प्रकृतिका परित्याग करता है उससे मुक्त हो जाता है, ऐसा अर्थ है। इसलिए कपिलमतानुयायियोंकी प्रधानादि कल्पना श्रुतिमूलक ही है। सिद्धान्ती—ऐसा प्राप्त होनेपर हम कहते हैं—'अजामेकां' इस मन्त्रसे सांख्यवाद श्रुति-प्रतिपादित है ऐसा स्वीकार नहीं किया जा सकता, क्योंकि यह मन्त्र स्वतन्त्ररूपसे किसी भी वादका समर्थन करनेमें उत्साह नहीं करता। सभी वादोंमें जिस किसी कल्पनासे अजात्वादिका सम्पादन उपपन्न होता है। सांख्यवाद ही यहाँ अभिप्रेत है ऐसा विशेषका निश्चायक कोई कारण-प्रमाण नहीं है। चमसके समान। 'अर्वाग्बिलश्चमस' ( जो नीचेकी ओर छिद्रवाला और ऊपरकी ओर उठा हुआ चमस है ) इस मन्त्रमें स्वतन्त्ररूपसे यह चमस नामक यज्ञपात्र

## सत्यानन्दी-दीपिका

* सिद्धान्तमें पहले अव्यक्तशब्दसे स्थूलशरीरका ग्रहण किया गया है, अब लोहित आदि धर्मवाचक पदोंसे तेज, जल और अन्न ( पृथिवी ) रूप धर्मीको भगवान् सूत्रकार दिखलाते हैं। इस अधिकरणका 'अजा' पद विषय है। विद्याके प्रकरणमें रूढि अर्थका सम्भव न होनेसे यौगिक 'अजा' पद प्रधान परक है अथवा मायापरक है ? ऐसा संशय होनेपर पूर्वाधिकरणमें केवल अव्यक्तशब्दसे प्रधानकी प्रत्यभिज्ञा न होनेपर भी यहाँ तो त्रिगुणत्व आदि लिङ्गोंसे युक्त प्रधानकी प्रत्यभिज्ञा होनी चाहिए। इस प्रकार प्रत्युदाहरणसंगतिसे 'पुनरपि' इत्यादिसे पूर्वपक्षको उपस्थित करते हैं॥ ८॥

चमसोऽभिप्रेत इति न शक्यते निरूपयितुम्। सर्वत्रापि यथाकथंचिदर्वाग्बिलत्वादिकल्पनोपपत्तेः। एवमिहाप्यविशेषः 'अजामेकाम्' इत्यस्य मन्त्रस्य। नास्मिन्मन्त्रे प्रधानमेवाजाऽभिप्रेतेति शक्यते नियन्तुम् ॥८॥

तत्र तु 'इदं तच्छिर एष ह्यर्वाग्बिलश्चमस ऊर्ध्वबुध्नः' इति वाक्यशेषाच्चमसविशेषप्रतिपत्तिर्भवति। इह पुनः केयमजा प्रतिपत्तव्येति? अत्र ब्रूमः—

**ज्योतिरुपक्रमा तु तथा ह्यधीयत एके ॥९॥**

पदच्छेद—ज्योतिरुपक्रमा, तु, तथा, हि, अधीयते, एके।

सूत्रार्थ—( ज्योतिरुपक्रमा ) तेज जिसके उपक्रम-आरम्भमें है उसी तेज, जल और अन्नरूप प्रकृतिका ही अजाशब्दसे निश्चय करना चाहिए, प्रधानका नहीं, ( हि ) क्योंकि ( तथा ) वैसे ही ( एके ) छान्दोग तेज, जल और अन्नरूप प्रकृतिका रोहित आदि रूप ( अधीयते ) कहते हैं। ( तु ) शब्द अवधारणार्थक है।

*परमेश्वरादुत्पन्ना ज्योतिःप्रमुखा तेजोबन्नलक्षणा चतुर्विधस्य भूतग्रामस्य प्रकृतिभूतेयमजा प्रतिपत्तव्या। तुशब्दोऽवधारणार्थः भूतत्रयलक्षणैवेयमजा विज्ञेया, न गुणत्रयलक्षणा। कस्मात्? तथा ह्येके शाखिनस्तेजोबन्नानां परमेश्वरादुत्पत्तिमाम्नाय तेषामेव रोहितादिरूपतामामनन्ति–'यदग्ने रोहितं रूपं तेजसस्तद्रूपं यच्छुक्लं तदपां यत्कृष्णं तदन्नस्य' इति, तान्येवेह तेजोबन्नानि प्रत्यभिज्ञायन्ते रोहितादिशब्दसामान्यात्। रोहितादीनां च शब्दानां रूपविशेषेषु मुख्यत्वाद्भाक्तत्वाच्च गुणविषयत्वस्य। असंदिग्धेन च संदिग्धस्य निगमनं न्याय्यं

---

अभिप्रेत है ऐसा निरूपण नहीं किया जा सकता, क्योंकि सर्वत्र हि किसी न किसी प्रकार अर्वाग्बिलत्वकी कल्पना हो सकती है; वैसे यहाँ भी 'अजामेकां' इस मन्त्रमें कोई विशेष अर्थ प्रतिपादित नहीं है, इसलिए इस मन्त्रमें अजाशब्दसे प्रधान ही अभिप्रेत है, ऐसा नियमन नहीं किया जा सकता ॥८॥

परन्तु उसमें तो 'इदं तच्छिर'० ( वह यह सिर है जो कि अधोमुख और ऊपरकी ओर उठा हुआ गोलाकार है ) इस प्रकार वाक्यशेषसे चमस विशेषकी प्रतीति होती है, किन्तु यहाँ अजापदसे किसको समझना चाहिए, इसपर हम कहते हैं—

जो परमेश्वरसे उत्पन्न हुई है, तेज प्रमुख-तेज, जल एवं अन्नरूप है, जरायुज, आण्डज, स्वेदज, उद्भिज्जरूप चार प्रकारके भूत समूहका कारणरूप है वह यहाँ अजापदसे समझना चाहिए। सूत्रस्थ 'तु' शब्द अवधारण ( निश्चय ) अर्थमें प्रयुक्त है। यह अजा तेज, जल, अन्न भूत त्रयात्मक समझनी चाहिए न कि गुण त्रयात्मक-प्रधान, क्योंकि उसी प्रकार छन्दोग शाखावाले तेज, जल और अन्नकी परमेश्वरसे उत्पत्ति कहकर 'यदग्नेरोहितं रूपं०' ( जो अग्निमें रोहित-रक्त रूप है वह तेजका है, जो शुक्लरूप है वह जलका है, जो कृष्णरूप है वह अन्न-पृथिवीका है ) इस प्रकार उन तीनोंके ही रोहित आदि रूप कहते हैं। इस अजामन्त्रमें उन तेज, जल, और अन्नकी ही लोहित, शुक्ल और कृष्णरूपसे प्रत्यभिज्ञा होती है, क्योंकि रोहित आदि शब्द दोनों मन्त्रोंमें समान हैं। रोहितादि शब्द रूपविशेषोंमें मुख्य हैं और गुणविषयमें गौण हैं अर्थात् रोहित आदि शब्दोंका मुख्य अर्थ तो तेज आदिका रूप

### सत्यानन्दी-दीपिका

* जैसे 'अजामेकां०' इस मन्त्रमें अजा सम्पूर्ण कार्यकी प्रकृति कही गई है, वैसे छान्दोग्य श्रुतिमें प्रतिपादित तेज, जल और अन्न भी सम्पूर्ण कार्यके कारण कहे गये हैं, क्योंकि दोनों मन्त्रोंमें रोहित आदि शब्द समानरूपसे पाये जाते हैं, रोहित एवं लोहितका एक ही अर्थ है। छान्दोग्य श्रुति असंदिग्ध है, अतः उससे 'अजामेकां' इस संदिग्ध वाक्यार्थका निर्णय करना न्याय संगत है, इसलिए अजापदसे भूत त्रयात्मक तेज, जल एवं अन्नका ही ग्रहण करना चाहिए, सांख्य अभिमत प्रधानका नहीं।

मन्यन्ते। * तथेहापि 'ब्रह्मवादिनो वदन्ति । किं कारणं ब्रह्म' (श्वे० १।१) इत्युपक्रम्य 'ते ध्यानयोगानुगता अपश्यन्देवात्मशक्तिं स्वगुणैर्निगूढाम्' (श्वे० १।३) इति पारमेश्वर्याः शक्तेः समस्तजगद्विधायिन्या वाक्योपक्रमेऽवगमात्। वाक्यशेषेऽपि 'मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्' इति 'यो योनिं योनिमधितिष्ठत्येकः' ( श्वे० ४।१०, ११ ) इति च तस्या एवावगमान्न स्वतन्त्रा काचित्प्रकृतिः प्रधानं नामाजामन्त्रेणाम्नायत इति शक्यते वक्तुम्। प्रकरणात्तु सैव देवी शक्तिरव्याकृतनामरूपा नामरूपयोः प्रागवस्थानेनापि मन्त्रेणाम्नायत इत्युच्यते। तस्याश्च स्वविकारविषयेण त्रैरूप्येण त्रैरूप्यमुक्तम् ॥९॥

कथं पुनस्तेजोबन्नात्मना त्रैरूप्येण त्रिरूपाऽजा प्रतिपत्तुं शक्यते? यावता न तावत्तेजोबन्नेष्वजाकृतिरस्ति। न च तेजोबन्नानां जातिश्रवणादजातिनिमित्तोऽप्यजाशब्दः संभवतीति। अत उत्तरं पठति—

## कल्पनोपदेशाच्च मध्वादिवदविरोधः ॥१०॥

पदच्छेद— कल्पनोपदेशात्, च, मध्वादिवत्, अविरोधः।

सूत्रार्थ—( कल्पनोपदेशाच्च ) तेज, जल और अन्नरूप प्रकृतिमें सादृश्य सूचित करनेके लिए कल्पनासे अजात्वका उपदेश किया गया है, ( मध्वादिवत् ) जैसे मधु भिन्न आदित्यमें मधुत्वका उपदेश है, वैसे अजा भिन्न प्रकृतिमें अजात्वका उपदेश होनेसे ( अविरोधः ) विरोध नहीं है, अतः प्रधान श्रुतिप्रतिपादित नहीं है।

---

विशेष है सत्त्व आदि गुण तो गौण अर्थ है, और असंदिग्धवाक्यसे संदिग्धवाक्यार्थका निगमन-निर्णय करना न्याय्य संगत मानते हैं। उसी प्रकार यहाँ भी 'ब्रह्मवादिनो०' ( ब्रह्मवेत्ता लोग कहते हैं—जगत्का कारणभूत ब्रह्म कैसा है ? ) ऐसा उपक्रमकर 'ते ध्यानयोगानुगता०' ( उन ऋषियोंने ध्यान योगका अनुवर्तनकर अपने गुणोंसे अत्यन्त छिपी हुई देवात्मशक्तिका साक्षात्कार किया ) इस प्रकार वाक्यके उपक्रममें सम्पूर्ण जगत्को उत्पन्न करनेवाली परमेश्वरकी शक्ति अवगत होती है। वाक्यशेषमें भी 'मायां तु०' ( प्रकृतिको माया जानो और महेश्वरको मायावी ) और 'यो योनिं०' ( जो परमात्मा अकेला ही प्रत्येक योनिका अधिष्ठाता है ) इस प्रकार उसी शक्तिकी अवगति होनेसे प्रधान नामकी कोई स्वतन्त्र प्रकृति अजामन्त्रसे कही जाती है ऐसा नहीं कहा जा सकता। ऐसा कहा जाता है कि प्रकरणसे तो वही दैवी शक्ति अव्याकृत नामरूपवाली, नाम और रूपकी पूर्वावस्था इस मन्त्रसे भी कही जाती है, त्रैरूप्य स्वविकार विषय ( आश्रय ) से उसको भी त्रैरूप्य कहा गया है ॥९॥

[ रूढिको लेकर यहाँ शङ्का है ] जब तेज, जल और अन्नमें अजाकी जाति नहीं है तो तेज, जल एवं अन्न त्रैरूप्य होनेसे अजा त्रिरूप किस प्रकार समझी जा सकती है। [ 'न जायते इति अजा' इस यौगिकको लेकर कहते हैं ] तेज, जल और अन्नकी उत्पत्तिके श्रवण होनेसे उनमें जन्माभाव निमित्तक अजाशब्दका प्रयोग संभव नहीं है। इसलिए उत्तर सूत्र कहते हैं—

### सत्यानन्दी-दीपिका

* ब्रह्मवादियोंने विचार किया कि शुद्ध ब्रह्मसे इस विचित्र नामरूपात्मक जगत्की उत्पत्ति तो असम्भव है, क्योंकि वह निर्विकार है। किञ्च ब्रह्मसे भिन्न केवल जड़से भी जगत्की उत्पत्ति नहीं हो सकती, क्योंकि जड़में कार्य विषयक ज्ञान आदि नहीं होते, अतः मायारूप सहायक कारण सहित ब्रह्म जगत्का कारण है। अनभिव्यक्त नाम-रूप होनेके कारण मायाको अव्याकृत कहा गया है। माया एक होनेपर भी उसकी अविद्यारूप शक्तियाँ अनन्त हैं, वही उपाधि है। इस अविद्यारूप उपाधिसे ब्रह्म ही जीव कहलाता है, वस्तुतः जीव ब्रह्मसे भिन्न कोई वस्तु नहीं है। मायाके विकार तेज, जल और अन्न ( पृथिवी ) ये क्रमसे रक्त, शुक्ल और कृष्णरूप हैं, इस प्रकार कार्यकी अपेक्षा माया भी

नायमजाकृतिनिमित्तोऽजाशब्दः। नापि यौगिकः। किं तर्हि? कल्पनोपदेशोऽयम्। अजारूपकक्लृप्तिस्तेजोबन्नलक्षणायाश्चराचरयोनेरुपदिश्यते। यथा हि लोके यदृच्छया काचिदजा लोहितशुक्लकृष्णवर्णा स्याद्बहुबर्करा सरूपबर्करा च, तां च कश्चिदजो जुषमाणोऽनुशयीत, कश्चिच्चैनां भुक्तभोगां जह्यात्, एवमियमपि तेजोबन्नलक्षणा भूतप्रकृतिस्त्रिवर्णा बहु सरूपं चराचरलक्षणं विकारजातं जनयति, अविदुषा च क्षेत्रज्ञेनोपभुज्यते, विदुषा च परित्यज्यत इति। * न चेदमाशङ्कितव्यम्—एकः क्षेत्रज्ञोऽनुशेतेऽन्यो जहातीत्यतः क्षेत्रज्ञभेदः पारमार्थिकः परेषामिष्टः प्राप्नोतीति। न हीयं क्षेत्रज्ञभेदप्रतिपिपादयिषा, किंतु बन्धमोक्षव्यवस्थाप्रतिपिपादयिषा त्वेषा। प्रसिद्धं तु भेदमनूद्य बन्धमोक्षव्यवस्था प्रतिपाद्यते। भेदस्तूपाधिनिमित्तो मिथ्याज्ञानकल्पितो न पारमार्थिकः; 'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' इत्यादिश्रुतिभ्यः। मध्वादिवत्, यथा 'आदित्यस्यामधुनो मधुत्वम्' (छा० ३।१) 'वाचश्चाधेनोर्धेनुत्वम्' (बृ० ५।८), 'द्युलोकादीनां चानग्नीनामग्नित्वम् (बृ० ८।२।९) इत्येवंजातीयकं कल्प्यते, एवमिदमनजाया अजात्वं कल्प्यत इत्यर्थः। तस्मादविरोधस्तेजोबन्नेष्वजाशब्दप्रयोगस्य ॥१०॥

---

[ अजामेका ] यह अजाशब्द जातिनिमित्तक रूढि नहीं है और यौगिक भी नहीं है, किन्तु यह काल्पनिक उपदेश है। चराचर जगत्के कारण भूत तेज, जल और अन्नरूप प्रकृतिमें अजा सादृश्य कल्पनाका उपदेश है। जैसे लोकमें दैववश रक्त, शुक्ल, कृष्ण वर्ण कोई एक ऐसी अजा-बकरी हो उसे समानरूपवाले बहुतसे बकरे हों, उसपर कोई एक अज-बकरा प्रेम करता हुआ उसके पीछे-पीछे फिरे और कोई एक अज भोग भोगके अनन्तर उसे त्याग दे, वैसे ही यह तेज, जल और अन्नरूप त्रिवर्णात्मक भूतप्रकृति भी समान रूपवाले चराचरात्मक विकार समूहको उत्पन्न करती है। अविद्वान् क्षेत्रज्ञ इसका उपभोग करता है और विद्वान् इसका परित्याग करता है। यह आशङ्का यहाँ नहीं करनी चाहिए कि एक क्षेत्रज्ञ सेवन करता हुआ इसके पास शयन करता है और दूसरा इसका परित्याग करता है, इससे पारमार्थिक क्षेत्रज्ञ भेद जो पर—सांख्यको इष्ट है, वह प्राप्त होता है, क्योंकि यह क्षेत्रज्ञके भेदका प्रतिपादन करनेकी इच्छा नहीं है, किन्तु बन्ध-मोक्ष व्यवस्थाका प्रतिपादन करनेकी इच्छा है। लोक प्रसिद्ध भेदका अनुवादकर बन्ध-मोक्ष व्यवस्थाका प्रतिपादन किया जाता है। भेद तो उपाधिनिमित्तक और मिथ्याज्ञानसे कल्पित है, पारमार्थिक नहीं है। क्योंकि 'एको देवः०' ( एक देव सम्पूर्ण भूतोंमें गूढ, सबमें व्यापक और सब भूतोंका अन्तरात्मा है ) इत्यादि श्रुतियाँ हैं। मधु आदिके समान, अर्थात् जैसे मधुसे भिन्न आदित्यको मधु कहा गया है, धेनुसे भिन्न वाणीमें धेनुशब्दका प्रयोग किया गया है, और अनग्नि द्युआदि लोकोंमें अग्नि शब्दका प्रयोग किया गया है, इस प्रकारकी कल्पना की जाती है, वैसे ही यहाँ भी अनजा-अजासे भिन्नमें यह अजात्वकी कल्पनाकी गई है, ऐसा अर्थ है। इसलिए तेज, जल और अन्नमें अजाशब्दके प्रयोगका विरोध नहीं है ॥१०॥

## सत्यानन्दी-दीपिका

रक्त, शुक्ल एवं कृष्णरूप कही जाती है। इसलिए 'अजामेकां' इस मन्त्रसे अव्याकृत मायाका ग्रहण करना युक्त है, प्रधानका नहीं ॥९॥

* पूर्वपक्षी—'न जायत इति अजा' यह यौगिक अर्थ मुख्य है, अतः इससे प्रधानका ग्रहण करना युक्त है? सिद्धान्ती—रूढार्थकी अपेक्षा न करनेवाले यौगिक अर्थसे रूढार्थमें आश्रित गुणोंको लेकर की हुई लक्षणा अधिक बलवती होती है, यह नियम है, क्योंकि गुणोंके आधारपर रूढि रहती है, इसलिए जैसे मधु आदि शब्दोंसे प्रसिद्ध मधु आदिके आश्रित गुणवृत्तिरूप लक्षणासे आदित्य आदिका ग्रहण होता है, वैसे रोहित आदि गुण वाचक शब्दोंके साथ अजाशब्दके सहोच्चारणसे समर्थित तथा रूढिमें आश्रित गुणवृत्तिरूप लक्षणासे यौगिक अर्थ प्रधानका बाधकर तेज, जल और

( ३ संख्योपसंग्रहाधिकरणम् सू० ११-१३ )

## न संख्योपसंग्रहादपि नानाभावादतिरेकाच्च ॥११॥

**पदच्छेद**—न संख्योपसंग्रहात्, अपि, नानाभावात्, अतिरेकात्, च ।

**सूत्रार्थ**—( संख्योपसंग्रहादपि ) 'यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः' इस मन्त्रमें श्रूयमाण संख्यावाचक पदसे पच्चीस संख्याका ग्रहण करनेपर भी ( न ) प्रधान श्रुति-प्रतिपादित नहीं है, ( नानाभावात् ) क्योंकि नाना भाव है ( अतिरेकाच्च ) आत्मा और आकाश अतिरिक्त कहे गए हैं, इससे सप्तविंशति तत्त्व मानने पड़ेंगे। इससे तो अपसिद्धान्त होगा, अतः प्रधान आदि तत्त्वोंका ग्रहण युक्त नहीं है।

❀ एवं परिहृतेऽप्यजामन्त्रे पुनरन्यस्मान्मन्त्रात्सांख्यः प्रत्यवतिष्ठते । 'यस्मिन्पञ्च पञ्चजना आकाशश्च प्रतिष्ठितः । तमेव मन्य आत्मानं विद्वान्ब्रह्मामृतोऽमृतम्' ( बृ० ४।४।१७ ) इति । अस्मिन्मन्त्रे पञ्च पञ्चजना इति पञ्चसंख्याविषयाऽपरा पञ्चसंख्या श्रूयते; पञ्चशब्दद्वयदर्शनात् । त एते पञ्चपञ्चकाः पञ्चविंशतिः संपद्यन्ते । तथा पञ्चविंशतिसंख्यया यावन्तः संख्येया आकाङ्क्ष्यन्ते तावन्त्येव च तत्त्वानि सांख्यैः संख्यायन्ते—'मूलप्रकृतिरविकृतिर्महदाद्याः प्रकृतिविकृतयः सप्त । षोडशकश्च विकारो न प्रकृतिर्न विकृतिः पुरुषः' (सांख्यका० ३) इति । तया श्रुतिप्रसिद्धया पञ्चविंशतिसंख्यया तेषां स्मृतिप्रसिद्धानां पञ्चविंशतितत्त्वानामुपसंग्रहात्प्राप्तं पुनः श्रुतिमत्त्वमेव प्रधानादीनाम् ।❀ ततो ब्रूमः—न संख्योपसंग्रहादपि प्रधानादीनां

---

इस प्रकार अजामन्त्रमें सांख्याभिमत प्रधानादिका परिहार होनेपर भी अन्य मन्त्रके आधारपर सांख्य पुनः पूर्वपक्ष करता है—'यस्मिन्पञ्च पञ्चजना०' ( जिसमें पाँच पञ्चजन और [ अव्याकृत संज्ञक ] आकाश भी प्रतिष्ठित है, उस आत्माको ही मैं अमृत ब्रह्म मानता हूँ । उस ब्रह्मको जाननेवाला मैं अमृत ही हूँ ) इस मन्त्रमें 'पञ्च पञ्चजना' इस प्रकार पाँच संख्या विषयक दूसरी पाँच संख्याका श्रवण है, क्योंकि दो बार पञ्चशब्द देखनेमें आता है, वे ये पाँच पंचक मिलकर पच्चीस होते हैं । एवं पच्चीस संख्यासे जितने सांख्यवालोंकी आकांक्षा होती है उतने ही तत्त्व सांख्योंने गिने हैं—'मूलप्रकृति०' ( मूल प्रकृति अविकृति है अर्थात् किसीकी विकृति नहीं है, महदादि सात प्रकृति और विकृति दोनों हैं, सोलह तत्त्व विकार ही हैं, पुरुष न प्रकृति है और न विकृति ही ) श्रुति प्रसिद्ध उस पच्चीस संख्यासे उन स्मृति प्रसिद्ध पच्चीस तत्त्वोंका उपसंग्रह होनेसे प्रधान आदि श्रुति-प्रतिपादित हैं, ऐसा पुनः प्राप्त हुआ । सिद्धान्ती—इस विषयमें हम कहते हैं—संख्याके संग्रहसे भी प्रधानादि श्रुति-प्रतिपादित हैं

### सत्यानन्दी-दीपिका

अन्न रूप अवान्तर प्रकृतिका अजाशब्दसे ग्रहण करना चाहिए । अतः यह सिद्ध हुआ कि अजा मिश्र तेज, जल और अन्नमें अजा शब्द विरुद्ध नहीं है और प्रधान अजाशब्दसे गृहीत न होनेसे श्रुति-प्रतिपादित नहीं है । वाक्योंके समन्वयकी असिद्धि पूर्वपक्षमें फल है और सिद्धान्तमें उसकी सिद्धि फल है ॥१०॥

❀ 'यस्मिन्पञ्च पञ्चजनाः' इस मन्त्रमें पठित पञ्चजनशब्द यौगिक है अथवा रूढ़, यह निश्चय न होनेसे सांख्य तत्त्वोंका प्रतिपादन करता है अथवा अन्य पदार्थका, ऐसा संशय उत्पन्न होता है । जैसे तत्त्वविद्याके प्रकरणमें प्रसिद्ध अजा बकरीरूप अर्थमें तात्पर्य न होनेसे अजामन्त्रगत अजापदसे रूढ़ि अर्थका त्यागकर तेज आदिका ग्रहण किया गया है, वैसे ही 'यस्मिन्पञ्च पञ्चजनाः' इस मन्त्रमें पंचजन शब्दसे मनुष्योंमें तात्पर्यके अभाव होनेसे रूढिका त्यागकर सांख्याभिमत पच्चीस तत्त्वोंका ग्रहण करना चाहिए, इस प्रकार दृष्टान्तसंगतिसे मन्त्रको उद्धृतकर 'एवम्' इत्यादिसे पूर्वपक्ष करते हैं । इस प्रकार 'मूल प्रकृति, महत्, अहङ्कार, शब्दादि पाँच तन्मात्राएँ ये सात, एकादश इन्द्रियाँ, एवं पांच स्थूलभूत ये सोलह केवल विकार और पुरुष सांख्यशास्त्रमें २५ तत्त्व गिने जाते हैं ।' इसलिए प्रधान आदि श्रुति प्रतिपादित हैं ।

श्रुतिमत्त्वं प्रत्याशा कर्तव्या। कस्मात् ? नानाभावात्। नाना ह्येतानि पञ्चविंशतिस्तत्त्वानि। नैषां पञ्चशः पञ्चशः साधारणो धर्मोऽस्ति, येन पञ्चविंशतेरन्तराले पराः पञ्च पञ्चसंख्या निविशेरन्। न ह्येकनिबन्धनमन्तरेण नानाभूतेषु द्वित्वादिकाः संख्या निविशन्ते। अथोच्यत पञ्चविंशतिसंख्यैवेयमवयवद्वारेण लक्ष्यते, यथा 'पञ्च सप्त च वर्षाणि न ववर्ष शतक्रतुः' इति

---

ऐसी आशा नहीं करनी चाहिए, किससे ? इससे कि नानाभाव है अर्थात् ये पच्चीस तत्त्व नाना-पृथक् ही हैं, इनमें प्रत्येक पञ्चकका साधारण धर्म नहीं है, जिससे कि पच्चीस संख्याके बीचमें दूसरी पाँच-पाँच संख्याएँ अन्तर्भूत हों, क्योंकि किसी एक अनुगत धर्मके विना पृथक् भूत पदार्थोंमें द्वित्व आदि संख्या प्रविष्ट नहीं होती। यदि कहो कि जैसे 'पञ्च सप्त च वर्षाणि॰ ( पाँच और सात वर्ष अर्थात् बारह वर्ष इन्द्रने

## सत्यानन्दी-दीपिका

* 'यस्मिन्पञ्च पञ्चजनाः' इस मन्त्रमें पच्चीस संख्याके ग्रहण करनेसे भी प्रधान आदि श्रुति प्रतिपादित नहीं हैं, क्योंकि पुरुष, प्रधान, महत् आदि भिन्न-भिन्न पदार्थ हैं, इनमें अनुगत कोई एक धर्म नहीं है, अतः भिन्न-भिन्न पदार्थोंमें द्वित्व संख्या पञ्च-पञ्च दो वार संख्याका प्रवेश भी नहीं होता अर्थात् इतर पञ्चकमें न रहनेवाले पाँच-पाँच तत्त्वोंमें अनुगत साधारण धर्मका अभाव ही यहाँ पृथग्भाव विवक्षित है। यद्यपि पाँच ज्ञानेन्द्रियोंमें ज्ञान कारणत्व, पाँच कर्मेन्द्रियोंमें कर्मकारणत्व और पाँच तन्मात्राओंमें स्थूलप्रकृतित्व है, तोभि 'यस्मिन्' इस प्रकार आत्मा और आकाशके पृथक् कथनके कारण सत्त्व, रज, तम, महत् और अहंकार इन पाँचोंका एक समूह, मन और चार भूतोंको मिलाकर इन पाँचोंका एक और समूह, इन दोनों पँचकोंमें प्रत्येकमें अनुवृत्त इतर पँचकोंसे व्यावृत्त धर्म नहीं है। क्योंकि 'पञ्चजन' एक समस्त पद है। 'यस्मिन्पञ्च पञ्चजनाः' इस मन्त्रमें पञ्चजन शब्द समस्त पद है, क्योंकि संहितामें उदात्त, अनुदात्त और स्वरित भेदसे स्वर तीन होते हैं। ब्राह्मणमें उदात्त और अनुदात्त दो ही स्वर होते हैं। यह नियम ऐत्तरेय ब्राह्मण, सामवेद ब्राह्मण, शुक्ल यजुर्वेद-शतपथ ब्राह्मणमें माना जाता है। इसलिए इस मन्त्रमें प्रथम पञ्चशब्द आद्युदात्त है, द्वितीय पञ्चशब्द सर्वानुदात्त है और जनशब्द अन्तोदात्त है, द्वितीय पञ्चशब्द और जनशब्दमें समासके विना अन्त्य आकार उदात्त और उसके पूर्व वर्ण अनुदात्त नहीं हो सकते। 'समासस्य' ( पा० सू० ६।१।२२३ ) इस सूत्रसे समासका अन्त उदात्त होता है और 'अनुदात्तं पदमेकवर्जम्' ( पा० सू० ६।१।१५८ ) इस सूत्रसे जिस पदमें जिस वर्णके स्थानमें उदात्त अथवा स्वरितका विधान है, उस एक वर्णको छोड़कर उस पदके शेष सब स्वर उदात्त होते हैं, ऐसा विधान है, इसलिए मन्त्रमें अन्त्य स्वर उदात्त होनेसे एक पदत्वका निश्चय होता है। 'छन्दोगा बह्वृचाश्चैव तथा वाजसनेयिनः ऊचनीचस्वरं प्राहुः स वैभाषिक उच्यते ॥' 'सामवेद, ऋग्वेद, शुक्ल यजुर्वेद इनके ब्राह्मण ग्रन्थोंमें उदात्त और अनुदात्त स्वरको भाषिकस्वर कहते हैं' उसमें 'स्वरितोऽनुदात्तो वा' इस सूत्रसे जो मन्त्र दशामें स्वरित अथवा अनुदात्त रहता है, वह ब्राह्मणदशामें उदात्त होता है, ऐसा अपवाद स्वीकार किया है, इसलिए अन्त्य आकारसे पूर्वस्थित अनुदात्त स्वरोंको ब्राह्मणदशामें उदात्तत्व प्राप्त हुआ, 'उदात्तमनुदात्तमनन्त्यम्' इस सूत्रसे मन्त्रदशामें अन्त्य भिन्न एवं अग्रिम पदसे मिलकर उच्चार्यमाण उदात्तस्वरमें अनुदात्तत्वका विधान है। इसलिए यहाँ नकारोत्तरवर्त्ती आकार अग्रिम 'आकाशश्च' पदके साथ मिलकर पठ्यमान अनुदात्त होता है, यह मन्त्रानुदात्त स्वरभाषिक है। इससे एक पदत्वका निश्चय होता है। 'पञ्च पञ्चजनाः' इसमें अन्तोदात्त मान्त्रिक स्वर है, और 'यस्मिन्पञ्च पञ्चजनाः' इसमें अन्तानुदात्त ब्राह्मस्वर है, दोनों प्रकारसे पदके एक होनेके कारण समास सिद्ध होता है। पूर्वपक्षमें पञ्चजन शब्द व्यस्त है, सिद्धान्तमें एक समस्त पद है, क्योंकि इसमें एक स्वर और एक विभक्तिका भी नियम है। अतः आज्य ग्रहण मन्त्रमें 'पञ्चानां त्वा पञ्चजनानां यन्त्राय धर्त्राय गृह्णामि' ( हे आज्य ! पाँच देवताओंके कर्ममें

द्वादशवार्षिकीमनावृष्टिं कथयन्ति, तद्वदिति । तदपि नोपपद्यते; अयमेवास्मिन्पक्षे दोषो यल्लक्षणाश्रयणीया स्यात् । परश्चात्र पञ्चशब्दो जनशब्देन समस्तः पञ्चजना इति; भाषिकस्वरेणैकपदत्वनिश्चयात् । प्रयोगान्तरे च 'पञ्चानां त्वा पञ्चजनानाम्' (तै० १।६।२।२) इत्येकपद्यैकस्वर्यैकविभक्तिकत्वावगमात् । ❀ समस्तत्वाच्च न वीप्सा 'पञ्च पञ्च' इति । न च पञ्चकद्वयग्रहणं पञ्च पञ्चेति । न च पञ्चसंख्याया एकस्याः पञ्चसंख्यया परया विशेषणं पञ्च पञ्चका इति; उपसर्जनस्य विशेषणेनासंयोगात् । नन्वापन्नपञ्चसंख्याका जना एव पुनः पञ्चसंख्यया विशेष्यमाणाः पञ्चविंशतिः प्रत्येष्यन्ते । यथा पञ्च पञ्चपूल्य इति पञ्चविंशतिपूलाः प्रतीयन्ते; तद्वत् । नेति ब्रूमः; युक्तं यत्पञ्चपूलीशब्दस्य समाहाराभिप्रायत्वात्कतीति सत्यां भेदाकाङ्क्षायां पञ्च पञ्चपूल्य इति विशेषणम्, इह तु पञ्चजना इत्यादित एव भेदोपादानात्कतीत्यसत्यां भेदाकाङ्क्षायां न पञ्च पञ्चजना इति विशेषणं भवेत् । भवदपीदं विशेषणं

---

वृष्टि नहींको ) यहाँ बारह वर्षकी अनावृष्टि कहते हैं, वैसे [ पञ्च पञ्च ] इस अवान्तर अवयव संख्या द्वारा पच्चीस संख्या ही लक्षित होती है, यह कथन भी युक्त नहीं है । इस पक्षमें यही दोष है कि लक्षणा ग्रहण करनी पड़ती है । और यहाँ अन्य पञ्चशब्द जनशब्दके साथ समस्त होकर पञ्चजन हुआ है, कारण कि भाषिकस्वरसे एकपदत्व निश्चय होता है । एवं 'पञ्चानां त्वा पञ्चजनानाम्' ( तुझे पञ्च-पञ्च जनके ) इस अन्य प्रयोगमें एक पद, एक स्वर और एक विभक्ति प्रतीत होती है । समस्त पद होनेसे पञ्च पञ्च ऐसी वीप्सा ( दो बार कथन ) भी नहीं है और इससे 'पञ्च पञ्च' इस प्रकार दो पञ्चकोंका भी ग्रहण नहीं है । किञ्च 'पञ्च पञ्चकाः' ( पाँच पँचक ) इस प्रकार एक पाँच संख्याका दूसरी पाँच संख्याके साथ विशेषण—अन्वय नहीं होता, क्योंकि ( एक ) विशेषणका अन्य विशेषणके साथ सम्बन्ध ( अन्वय ) नहीं होता पू०—परन्तु पाँच संख्याको प्राप्त हुए जन ही फिर पाँच संख्यासे विशेष्यमाण होकर पच्चीस प्रतीत होंगे । जैसे कि 'पञ्च पञ्चपूल्यः' (पाँच पूली पञ्चक) यहाँ पच्चीस पूली प्रतीत होती हैं । इसके समान प्रकरणमें भी समझना चाहिए । सि०—हम कहते हैं कि यह ठीक नहीं है, क्योंकि पञ्चपूली शब्दमें समाहार अभिप्रेत होनेसे कितनी पञ्चपूली हैं इस प्रकार भेदकी आकांक्षा होने पर 'पञ्च पञ्चपूल्यः' ( पाँच पूली पँचक ) इस प्रकार पाँच पूलीका विशेषण पुनः पाँच युक्त है । परन्तु यहाँ तो 'पञ्चजनाः' ( पाँच जन ) ऐसा आरम्भसे ही भेद ( विशेषण ) का ग्रहण है, अतः 'कितने' इस प्रकार भेदकी आकांक्षा न होनेपर 'पञ्च पञ्चजनाः' ( पाँच पँचजन ) इस तरह पञ्चजनका पञ्च ( संख्या ) विशेषण नहीं हो सकता । यदि विशेषण हो तो भी केवल पाँच संख्याका

सत्यानन्दी-दीपिका

यन्त्ररूपसे अवस्थित, ऐहिक और पारलौकिक भोग धारण करनेमें समर्थ अपने शरीरकी रक्षाके लिए तुझे ग्रहण करता हूँ ) यह यजमानकी उक्ति है । इसमें भी पञ्चजन शब्द समस्त है ।

❀ 'पञ्चजनाः' यदि यह समस्त पद न हो तो दो पञ्चशब्दोंसे उक्त दो पञ्चत्वोंका परस्पर अन्वय है अथवा उनका जन पदार्थके साथ अन्वय है अथवा पञ्चत्व विशिष्ट जनोंके साथ अन्य पञ्चत्वका अन्वय है ? इनमेंसे प्रथम पक्ष तो युक्त नहीं है, क्योंकि एक पञ्च संख्या दूसरी पाँच संख्याका विशेषण नहीं होती, कारण कि विशेषणका विशेषणके साथ साक्षात् अन्वय नहीं होता, सब अप्रधान विशेषणोंका प्रधान विशेष्यके साथ अन्वय होता है । यदि अप्रधान-गुणोंका भी अन्वय मानें तो वाक्य भेद हो जायगा । दूसरा पक्ष भी युक्त नहीं है, क्योंकि उसमें दस संख्याकी प्रतीति होती है पच्चीसकी नहीं । तीसरे पक्षमें दृष्टान्त द्वारा पच्चीस संख्याकी प्रतीति होती है । इसमें दृष्टान्तको विषम कहकर शङ्काका 'नेति ब्रूमः' इत्यादिसे सिद्धान्ती निराकरण करते हैं । 'पञ्चानां पूलानां समहारः पञ्चपूल्यः' यहाँ पर 'संख्यापूर्वो द्विगुः' ( पा० सू० २।१।५२ ) इस सूत्रसे समासका विधान है । अनन्तर 'द्विगोः'

पञ्चसंख्याया एव भवेत्, तत्र चोक्तो दोषः। तस्मात्पञ्च पञ्चजना इति न पञ्चविंशतितत्त्वाभिप्रायम्। अतिरेकाच्च न पञ्चविंशतितत्त्वाभिप्रायम्। अतिरेको हि भवत्यात्माकाशाभ्यां पञ्चविंशतिसंख्यायाः। आत्मा तावदिह प्रतिष्ठां प्रत्याधारत्वेन निर्दिष्टः; यस्मिन्निति सप्तमीसूचितस्य 'तमेव मन्य आत्मानम्' इत्यात्मत्वेनानुकर्षणात्। आत्मा च चेतनः पुरुषः। स च पञ्चविंशतावन्तर्गत एवेति न तस्यैवाधारत्वमाधेयत्वं च युज्यते। अर्थान्तरपरिग्रहे च तत्त्वसंख्यातिरेकः सिद्धान्तविरुद्धः प्रसज्येत। * तथा 'आकाशश्च प्रतिष्ठितः' इत्याकशस्यापि पञ्चविंशतावन्तर्गतस्य न पृथगुपादानं न्याय्यम्। अर्थान्तरपरिग्रहे चोक्तं दूषणम्। कथं च संख्यामात्रश्रवणे सत्यश्रुतानां पञ्चविंशतितत्त्वानामुपसंग्रहः प्रतीयेत? जनशब्दस्य तत्त्वेष्वरूढत्वात्। अर्थान्तरोपसंग्रहेऽपि संख्योपपत्तेः। कथं तर्हि पञ्च पञ्चजना इति? उच्यते—

---

होगा [ जनपदका नहीं ] इस पक्षमे तो दोष ( उपसर्जनस्य विशेषणेनासंयोगात् ) कहा गया है। इसलिए 'पञ्च पञ्चजनाः' यह प्रयोग पच्चीस तत्त्वके अभिप्रायसे नहीं है, और संख्याकी अधिकतासे भी पच्चीस तत्त्वके अभिप्रायसे नहीं है, क्योंकि आत्मा और आकाशको लेकर पच्चीस संख्यासे अधिक होता है। यहाँ तत्त्वोंकी प्रतिष्ठाके आधाररूपसे आत्माका निर्देश है, क्योंकि 'यस्मिन्' इसे सप्तमी अर्थात् सप्तम्यन्त 'यत्' पदसे सूचितका 'तमेव मन्ये०' ( उसीको मैं आत्मा मानता हूँ ) इस प्रकार आत्मरूपसे अनुकर्षण है। आत्मा चेतन पुरुष है और वह सांख्याभिमत पच्चीस तत्त्वोंके अन्तर्गत ही है, इसलिए उसीमें आधाराधेयभाव अयुक्त है। तत्त्वोंसे भिन्न अर्थका ग्रहण किया जाय तो सांख्यसिद्धान्तसे विरुद्ध तत्त्वसंख्यामें अधिकता प्रसक्त होगी। इसी प्रकार पच्चीस तत्त्वोंके अन्तर्भूत आकाशका 'आकाशश्च प्रतिष्ठितः' ( और आकाश प्रतिष्ठित है ) इस प्रकार पृथक् ग्रहण अयुक्त है। अन्य अर्थका ग्रहण करनेपर तो उक्त दोष ( अधिक संख्या ) है। संख्या मात्रका श्रवण होनेपर श्रुति अप्रतिपादित पच्चीस तत्त्वोंका संग्रह किस प्रकार प्रतीत होता है? क्योंकि जनशब्द तो तत्त्वोंमें रूढ़ नहीं है, अन्य अर्थका संग्रह करनेसे भी संख्या उपपन्न होती है, तो 'पञ्च पञ्चजनाः' यह किस प्रकार है? कहते हैं—

## सत्यानन्दी-दीपिका

इस सूत्रसे 'ङीप्' ( ईकार ) का विधान होनेसे समाहारकी प्रतीति होनेपर समाहार ( समुदाय ) कितने हैं? इस आकांक्षामें 'पञ्च' इस प्रकार अन्य पदका अन्वय होना युक्त है। परन्तु 'पञ्चजनाः' इसके अन्तमें 'ङीप्' न होनेसे पञ्चपूली ( धानके गट्ठेको पूली कहा जाता है ) के समान समाहारकी प्रतीति नहीं होती, और जनपदमें पहले ही पञ्चत्वका ग्रहण होनेके कारण संख्याकी आकांक्षा न होनेसे 'पञ्च' इस दूसरे पदका अन्वय नहीं हो सकता, क्योंकि अन्वय आकांक्षाके अधीन होता है। यदि मानें तो एक विशेषणका अन्य विशेषणके साथ अन्वय नहीं होता किन्तु प्रधानके साथ ही होता है, इस न्यायके साथ विरोध होगा। वस्तुतः 'पञ्चजनाः' यहाँ तो 'पञ्च चामी जना इति पञ्चजनाः' 'सप्तर्षि' 'दक्षिणाग्निः' आदिकी तरह कर्मधारय समास है, 'पञ्चपूली' की तरह समाहार नहीं है। पञ्चजन घटकी भूत पंच संख्या जनोंकी व्यावर्तक है, पांच संख्यासे ही जनोंका भेद प्रतीत होता है। समाहारका यहाँ भान नहीं है, अतः कितने समुदाय हैं, इस प्रकारकी आकांक्षाके न होनेसे 'पञ्च पञ्चजनाः' इस पञ्च संख्याको 'पञ्चजन' का विशेषण मानकर पच्चीस संख्याका लाभ नहीं हो सकता। सूत्रस्थ 'नानाभावात्' इस पदकी व्याख्या कर अब 'अतिरेकात्' की व्याख्या करते हैं—यदि पच्चीस संख्या मानें तो आत्मा और आकाशको लेकर पच्चीससे अधिक सताईस संख्या हो जायगी, जो सांख्य सिद्धान्तके विरुद्ध है।

* 'यस्मिन्' इस प्रकार आत्मामें तत्त्वोंकी आधारताका वर्णन भी विरुद्ध होगा, क्योंकि सांख्य मतमें महत् आदि तत्त्वोंका आधार स्वतन्त्र प्रधान ही है, असङ्ग पुरुष तत्त्वोंका आधार नहीं है। किञ्च सांख्यमतमें जगत्को सत्य माना गया है, इससे 'जगत्में मिथ्यात्व बोधक 'नेहनानाऽस्ति किञ्चन'

'दिक्संख्ये संज्ञायाम्' ( पा० सू० २।१।५० ) इति विशेषस्मरणात्संज्ञायामेव पञ्चशब्दस्य जनशब्देन समासः। ततश्च रूढत्वाभिप्रायेणैव केचित्पञ्चजना नाम विवक्ष्यन्ते, न सांख्यतत्त्वाभिप्रायेण। ते कतीत्यस्यामाकाङ्क्षायां पुनः पञ्चेति प्रयुज्यते। पञ्चजना नाम ये केचित्ते च पञ्चैवेत्यर्थः। सप्तर्षयः सप्तेति यथा ॥११॥

के पुनस्ते पञ्चजना नामेति ? तदुच्यते—

## प्राणादयो वाक्यशेषात् ॥१२॥

पदच्छेद—प्राणादयः, वाक्यशेषात्।

सूत्रार्थ—( प्राणादयः ) यहाँ पञ्चजन शब्दसे प्राण, चक्षु, श्रोत्र, अन्न और मन कहे गये हैं, ( वाक्यशेषात् ) क्योंकि 'प्राणस्य प्राण०' इस वाक्यशेषमें स्थित हैं।

* 'यस्मिन्पञ्च पञ्चजनाः' इत्यत उत्तरस्मिन्मन्त्रे ब्रह्मस्वरूपनिरूपणाय प्राणादयः पञ्च निर्दिष्टाः—'प्राणस्य प्राणमुत चक्षुषश्चक्षुरुत श्रोत्रस्य श्रोत्रमन्नस्यान्नं मनसो ये मनो विदुः' इति। तेऽत्र वाक्यशेषगताः संनिधानात्पञ्चजना विवक्ष्यन्ते। कथं पुनः प्राणादिषु जनशब्दप्रयोगः? तत्त्वेषु वा कथं जनशब्दप्रयोगः? समाने तु प्रसिद्धयतिक्रमे वाक्यशेषवशात्प्राणादय एव ग्रहीतव्या भवन्ति। जनसंबन्धाच्च प्राणादयो जनशब्दभाजो भवन्ति। जनवचनश्च पुरुषशब्दः प्राणेषु प्रयुक्तः—'ते वा एते पञ्च ब्रह्मपुरुषाः' ( छा० ३।१३।६ ) इत्यत्र। 'प्राणो ह पिता

---

'दिक्संख्ये०' ( दिशा और संख्या वाचक शब्दोंके संज्ञा ( नाम ) अर्थमें सुबन्त उत्तर पदके साथ समास होता है ) इस विशेष सूत्रसे संज्ञामें पञ्च शब्दका जनपदके साथ समास है। वस्तुतः रूढित्वके अभिप्रायसे कुछ पञ्चजन नाम यहाँ विवक्षित हैं सांख्याभिमत पच्चीस तत्त्वोंके अभिप्रायसे नहीं। वे कितने हैं ? इस प्रकारकी आकांक्षा होनेपर उसके उत्तरमें यहाँ पुनः पञ्च शब्दका प्रयोग किया गया है। जैसे सप्तर्षि सात हैं, वैसे पञ्चजन नामवाले जो कोई हैं वे भी पाँच ही हैं, ऐसा अर्थ है ॥११॥

पुनः वे पञ्चजन नामके कौन हैं ? वह कहते है—

'यस्मिन्पञ्च०' ( जिसमें पाँच पञ्चजन हैं ) इससे अग्रिम मन्त्रमें ब्रह्मस्वरूपका निरूपण करनेके लिए 'प्राणस्य प्राणमुत०' ( जो उसे प्राणके प्राण, चक्षुके चक्षु, श्रोत्रके श्रोत्र, अन्नके अन्न, तथा मनके मनको जानते हैं वे ब्रह्मज्ञ हैं ) इस प्रकार प्राणादि पाँच निर्दिष्ट हैं। संनिहित होनेके कारण वाक्यशेषमें स्थित वे प्राण आदि 'यस्मिन्' इस मन्त्रमें पञ्चजन शब्दसे विवक्षित हैं। पूर्वपक्षी—प्राणादिमें जन शब्दका प्रयोग कैसे है ? सिद्धान्ती—तत्त्वोंमें जनशब्दका प्रयोग कैसे है ? प्रसिद्धि—रूढिका दोनों पक्षोंमें त्याग समान होनेपर भी वाक्यशेषके बलसे [ पञ्चजनशब्दसे ] प्राण आदि पाँच ही ग्रहण योग्य हैं और मनुष्यके साथ सम्बन्ध होनेसे भी प्राण आदि जनशब्दके भागी होते हैं। 'ते वा एते०' ( वे ये पाँच ब्रह्मपुरुष हैं ) इसमें जनवाचक पुरुष शब्द प्राणोंमें प्रयुक्त है। और उसी प्रकार 'प्राणो ह पिता०' ( प्राण पिता है, प्राण माता है ) इत्यादि ब्राह्मण है। समासके बलसे समुदायको

### सत्यानन्दी-दीपिका

इत्यादि वाक्यशेषके साथ विरोध होगा। अतः 'यस्मिन्पञ्च पञ्चजनाः' इस मन्त्रसे सांख्य सिद्ध पच्चीस तत्त्वोंकी सिद्धि नहीं हो सकती है। पूर्वपक्षमें ब्रह्ममें उद्धृत वाक्योंके समन्वयकी असिद्धि फल है, सिद्धान्तमें 'प्राणस्य प्राणमुत' इत्यादि वाक्योंके समन्वयकी सिद्धि फल है ॥११॥

* यहाँ पञ्चजनशब्दसे प्राण आदि पाँचका ग्रहण करना चाहिए सांख्याभिमत तत्त्वोंका नहीं, क्योंकि 'जायन्ते इति जनाः' इस व्युत्पत्तिसे कार्यमात्रका वाचक जन शब्द है अथवा मनुष्योंमें भी जनशब्द प्रसिद्ध है। पूर्वपक्षी—'जायन्ते इति जनाः' 'जो उत्पन्न होते हैं वे जन हैं' इस व्युत्पत्तिके अनुसार महत् आदि और उनके जनक होनेसे प्रधान भी जनशब्द वाच्य हो सकता है, इस प्रकार

प्राणो ह माता' ( छा० ७।१५।१ ) इत्यादि च ब्राह्मणम्। समासबलाच्च समुदायस्य रूढत्वमविरुद्धम्।* कथं पुनरसति प्रथमप्रयोगे रूढिः शक्याऽऽश्रयितुम्? शक्योद्भिदादिवदित्याह-प्रसिद्धार्थसंनिधाने ह्यप्रसिद्धार्थः शब्द प्रयुज्यमानःसमभिव्याहारात्तद्विषयो नियम्यते; यथा उद्भिदा यजेत', 'यूपं छिनत्ति', 'वेदिं करोति' इति। तथाऽयमपि पञ्चजनशब्दः समासान्वाख्यानादवगतसंज्ञाभावः संज्ञ्याकाङ्क्षी वाक्यशेषसमभिव्याहृतेषु प्राणादिषु वर्तिष्यते। कैश्चित्तु देवाः पितरो गन्धर्वा असुरा रक्षांसि च पञ्च पञ्चजना व्याख्याताः। अन्यैश्च चत्वारो वर्णा निषादपञ्चमाः परिगृहीताः। क्वचिच्च 'यत्पाञ्चजन्यया विशा' ( ऋ० सं० ८।५३।७ ) इति प्रजापरः प्रयोगः पञ्चजनशब्दस्य दृश्यते। तत्परिग्रहेऽपीह न कश्चिद्विरोधः आचार्यस्तु न पञ्चविंशतेस्तत्त्वानामिह प्रतीतिरस्तीत्येवंपरतया 'प्राणादयो वाक्यशेषात्' इति जगाद॥१२॥

भवेयुस्तावत्प्राणादयःपञ्चजना माध्यंदिनानाम्, येऽन्नंप्राणादिष्वामनन्ति। काण्वानां तु कथं प्राणादयः पञ्चजना भवेयुर्येऽन्नं प्राणादिषु नामनन्तीति? अत उत्तरं पठति—

---

रूढ माननेमें कोई विरोध नहीं है। परन्तु पञ्चजनशब्दके प्रथम प्राणादिमें प्रयोगकी असिद्धि होनेसे रूढिका किस प्रकार आश्रय किया जा सकता है? ऐसा कहा है कि उद्भिद् आदिके समान पञ्चजन शब्दकी भी रूढि हो सकती है। प्रसिद्धार्थक पदके सन्निधानमें प्रयुक्त हुए अप्रसिद्धार्थ वाचक शब्दका समभिव्याहारके बलसे तद्विषयक अर्थ होता है ऐसा नियम है। जैसे 'उद्भिदा यजेत' ( पशुकामना वाला उद्भिद् नामक याग करे ) 'यूपं छिनत्ति' ( यूपका छेदनसे संस्कार करे ) और 'वेदिं करोति' ( वेदिका संस्कार करे ) इत्यादिमें होता है, वैसे ही यह 'पञ्चजन' शब्द भी समासके कथनसे संज्ञाभावको प्राप्त होकर संज्ञीकी आकांक्षा करता हुआ वाक्यशेष और समभिव्याहृत-सहोच्चरित प्राण आदिमें प्रवृत्त होगा। कई एक लोगोंने तो ऐसा व्याख्यान किया है कि देव, पितर, गन्धर्व, असुर और राक्षस ये पाँच पञ्चजन हैं। दूसरोंने चार वर्ण और पाँचवें निषाद ( ब्राह्मणके द्वारा शूद्रासे उत्पन्न सन्तान ) का ग्रहण किया है। और कहींपर 'यत्पाञ्चजन्यया विशा' इस प्रकार पञ्चजन शब्दका प्रयोग प्रजाके लिए दिखाई देता है। उसका ग्रहण करनेपर भी कोई विरोध नहीं है। आचार्यने तो पच्चीस तत्त्वोंकी यहाँ प्रतीति नहीं होती, इस अभिप्रायसे 'प्राणादयो वाक्यशेषात्' यह सूत्र कहा है॥१२॥

प्राण आदिमें अन्नका पाठ करनेवाले जो माध्यन्दिन शाखावाले हैं उनके मतमें तो प्राणादि पञ्चजन भले हों, परन्तु काण्वशाखावाले जो प्राण आदिमें अन्नका पाठ नहीं करते, उनके मतमें तो प्राण आदि पञ्चजन किस प्रकार होंगे? इसके लिए उत्तर पढते ( कहते ) हैं—

## सत्यानन्दी-दीपिका

यौगिक अर्थका सम्भव होनेपर रूढिका आश्रयकर लक्षणाका प्रयास क्यों किया जाय? सिद्धान्ती—यहाँ समासके बलसे प्राण आदि समुदायमें पञ्चजन शब्द रूढ माननेमें भी कोई विरोध नहीं है, इसलिए यहाँ यौगिक अर्थका ग्रहण करना युक्त नहीं है। अब इसपर पूर्वपक्षी 'कथम्' आदिसे आक्षेप करते हैं।

* परन्तु पञ्च जनशब्दकी प्राणादिमें पहले लौकिक प्रसिद्धि नहीं है, तो फिर पञ्च जनशब्दकी प्राण आदिमें रूढि क्यों ग्रहण की जाती है? समाधान—यह नियम नहीं है, क्योंकि 'स्युः पुमांसः पञ्चजनाः' यह अमरकोश है और प्रसिद्ध अर्थ वाचक शब्दके समीपमें प्रयुज्यमान अप्रसिद्ध अर्थ वाचक शब्दका सहोच्चरित होनेसे वही अर्थ होता है जो प्रसिद्धार्थ वाचक शब्दका होता है। जैसे 'उद्भिदा यजेत' यद्यपि उद्भिद् शब्द वृक्षोंमें प्रसिद्ध है, तो भी यहाँ सन्निहित और सहोच्चरित 'यजेत' पदके योगसे यह 'उद्भिद्' शब्द उद्भिद् नामके यागमें रूढ है। 'यूपं छिनत्ति' यहाँ 'छिनत्ति पदके समभिव्याहारसे 'यूप' शब्द दारुमें रूढ है। 'वेदिं करोति' यहाँ 'करोति' पदके योगसे 'वेदि' शब्द संस्कार योग्य स्थण्डिल विशेषमें रूढ है अर्थात् गार्हपत्य और आहवनीयके मध्यमें चार अंगुल पृथिवी-

## ज्योतिषैकेषामसत्यन्ने ॥ १३ ॥

पदच्छेद—ज्योतिषा, एकेषाम्, असति, अन्ने ।

सूत्रार्थ—( एकेषाम् ) काण्वशाखावालोंके पाठमें पूर्वोक्त प्राणादिमें ( अन्ने असति ) अन्न के न होनेके कारण ( ज्योतिषा ) 'तद्देवा' इस पूर्ववाक्यस्थ ज्योतिसे पञ्चसंख्याकी पूर्ति करनी चाहिए।

असत्यपि काण्वानामान्ने ज्योतिषा तेषां पञ्चसंख्या पूर्यंत। तेऽपि हि 'यस्मिन्पञ्च पञ्चजनाः' इत्यतः पूर्वस्मिन्मन्त्रे ब्रह्मस्वरूपनिरूपणायैव ज्योतिरधीयते—'तद्देवा ज्योतिषां ज्योतिः' इति। कथं पुनरुभयेषामपि तुल्यवदिदं ज्योतिः पठ्यमानं समानमन्त्रगतया पञ्च-संख्यया केषांचिद्गृह्यते केषांचिन्नेति ? अपेक्षाभेदादित्याह। माध्यंदिनानां हि समानमन्त्र-पठितप्राणादिपञ्चजनलाभान्नास्मिन्मन्त्रान्तरपठिते ज्योतिष्यपेक्षा भवति। तदलाभात्तु काण्वानां भवत्यपेक्षा। अपेक्षाभेदाच्च समानेऽपि मन्त्रे ज्योतिषो ग्रहणाग्रहणे। यथा समानेऽप्यतिरात्रे वचनभेदात्षोडशिनो ग्रहणाग्रहणे, तद्वत्। तदेवं न तावच्छ्रुतिप्रसिद्धिः काचित्प्रधानविषयास्ति। स्मृतिन्यायप्रसिद्धी तु परिहरिष्येते ॥१३॥

( ४ कारणत्वाधिकरणम् सू० १४-१५ )

## कारणत्वे न चाकाशादिषु यथाव्यपदिष्टोक्तेः ॥१४॥

पदच्छेद—कारणत्वे, न, च, आकाशादिषु, यथाव्यपदिष्टोक्तेः।

---

काण्वशाखावालोंके पाठमें 'प्राणस्य प्राणमुत' इस मन्त्रमें अन्नका ग्रहण न होनेसे भी ज्योतिसे उसकी पञ्च संख्याकी पूर्ति हो जायगी, क्योंकि वे भी 'यस्मिन्पञ्च पञ्चजनाः' इस मन्त्रसे पूर्वमन्त्रमें ब्रह्मस्वरूपका निरूपण करनेके लिए ही 'तद्देवा ज्योतिषां०' ( उस आदित्यादि ज्योतियोंके ज्योतिःस्वरूप अमृतकी देवगण 'आयु' इस प्रकार उपासना करते हैं ) इस प्रकार ज्योतिका अध्ययन करते हैं। परन्तु दोनों शाखावालोंके पाठमें समानरूपसे पढ़ी हुई इस ज्योतिका एक ही मन्त्रमें प्राप्त पाँच संख्यासे कुछ लोग-काण्वशाखावाले क्यों ग्रहण करते हैं और कुछ लोग—माध्यन्दिन शाखावाले क्यों ग्रहण नहीं करते ? कारण कि अपेक्षा—आकांक्षाका भेद है, ऐसा कहते हैं। [ प्राणस्य प्राणमुत ] इस एक ही मन्त्रमें अन्नका ग्रहण होनेसे प्राणादि पाँच जनका माध्यन्दिनोंको लाभ होनेके कारण पूर्वमन्त्रमें पठित ज्योतिकी अपेक्षा नहीं होती। अन्नका ग्रहण न होनेसे एक ही मन्त्रमें प्राणादि पञ्च जनका लाभ न होनेके कारण काण्वशाखावालोंको ज्योतिकी अपेक्षा होती है अर्थात् चार होनेपर भी पाँचवाँ कौन है ? ऐसी अपेक्षा रहती है। जैसे एक ही अतिरात्रसत्रमें वचनभेदसे कहीं षोडशी ( यज्ञपात्र ) का ग्रहण होता है और कहींपर ग्रहण नहीं होता, वैसे अपेक्षाके भेदसे एक ही मन्त्रमें पठित ज्योतिका ग्रहण और अग्रहण होता है। इस प्रकार प्रधान विषयक कोई भी श्रुतिप्रसिद्धि नहीं है, स्मृति और न्यायप्रसिद्धिका तो आगे परिहार करेंगे ॥१३॥

### सत्यानन्दी-दीपिका

को खोदकर संस्कृत किया गया स्थान वेदि कहलाता है, वैसे 'पञ्चजन' शब्द भी 'दिक्संख्ये संज्ञायाम्' इस सूत्रद्वारा समस्तपद होनेसे किसीकी संज्ञामें रूढ ज्ञात होता है, संज्ञीकी आकांक्षा होनेपर संज्ञिहित वाक्यशेष और समभिव्याहारके बलसे 'पञ्चजन' शब्द प्राण आदिमें रूढ निश्चित होता है। किन्तु पाँच प्राण, पाँच ज्ञानेन्द्रिय, पाँच कर्मेन्द्रिय, पाँच भूत और अविद्या, अस्मिता, राग, द्वेष, अभिनिवेश ये पाँच क्लेश, इन पच्चीसका यहाँ 'पञ्च पञ्चजनाः' शब्दसे ग्रहण हो सकता है, और 'जायन्ते इति जनाः' इस योगवृत्तिका भी यहाँ सम्भव है, क्योंकि प्राण आदि उत्पत्तिवाले हैं। इस प्रकार सांख्या-भिमत पच्चीस तत्त्वोंसे भिन्न जिस अर्थ परक 'पञ्चजन' शब्दकी व्याख्याकी जाय तो कोई विरोध नहीं है, इस आशयसे आचार्यने 'प्राणादयो वाक्यशेषात्' इस सूत्रकी रचनाकी है ॥१२॥

सूत्रार्थ—( कारणत्वे ) ब्रह्मके जगत् कारण होनेमें तो ( न ) कोई विरोध नहीं है, क्योंकि ( आकाशादिषु ) सृज्यमान आकाशादि पदार्थोंके विषयमें ( यथाव्यपदिष्टोक्तेः ) यादृश ईश्वर एक उपनिषद्में कारणरूपसे व्यपदिष्ट है, (च) और तादृश ही अन्य उपनिषद्में भी कारणरूपसे कथित है।

* प्रतिपादितं ब्रह्मणो लक्षणम्, प्रतिपादितं च ब्रह्मविषयं गतिसामान्यं वेदान्तवाक्यानाम्। प्रतिपादितं च प्रधानस्याशब्दत्वम्। तत्रेदमपरमाशङ्क्यते–न जन्मादिकारणत्वं ब्रह्मणो ब्रह्मविषयं वा गतिसामान्यं वेदान्तवाक्यानां प्रतिपादयितुं शक्यम्। कस्मात्? विगानदर्शनात्। प्रतिवेदान्तं ह्यन्यान्या सृष्टिरुपलभ्यते; क्रमादिवैचित्र्यात्। तथा हि—क्वचित् 'आत्मन आकाशः संभूतः' (तै० २।१) इत्याकाशादिका सृष्टिराम्नायते। क्वचित्तेजआदिका–'तत्तेजोऽसृजत' (छा० ६।२।३) इति। क्वचित्प्राणादिका—'स प्राणमसृजत प्राणाच्छ्रद्धाम्' (प्र०६।४) इति क्वचिदक्रमेणैव लोकानामुत्पत्तिराम्नायते—'स इमाँल्लोकानसृजत। अम्भो मरीचीर्मरमापः' (ऐ० उ० ८।१।२) इति। तथा क्वचिदसत्पूर्विका सृष्टिः पठ्यते—'असद्वा इदमग्र आसीत्ततो वै सदजायत' (तै० २।७) इति। 'असदेवेदमग्र आसीत्तत्सदासीत्तत्समभवत्' (छा० ३।१९।१) इति च। क्वचिदसद्वादनिराकरणेन सत्पूर्विका प्रक्रिया प्रतिज्ञायते-'तद्धैक आहुरसदेवेदमग्र आसीत्' इत्युपक्रम्य 'कुतस्तु खलु सोम्यैवं स्यादिति होवाच कथमसतः सज्जायेतेति सत्त्वेव सोम्येदमग्र आसीत्' ( छा०

---

['जन्माद्यस्य यतः' इत्यादि सूत्रोंसे जगद् जन्मादिकारणत्व] ब्रह्मका लक्षण कहा जा चुका है, [ 'गतिसामान्यात्' इत्यादि सूत्रोंसे ] सब वेदान्तवाक्य समानरूपसे ब्रह्मके ही कारणत्व बोधक हैं, यह भी कहा जा चुका है। एवं ['ईक्षतेर्नाशब्दम् इत्यादि सूत्रोंसे'] प्रधान श्रुति प्रतिपादित नहीं है, यह भी कहा गया है। अब यहाँ दूसरी आशङ्का होती है—ब्रह्म जगत्के जन्मादिका कारण है, सम्पूर्ण वेदान्तवाक्योंकी ब्रह्मविषयक कारण गति-ज्ञान समान है, ऐसा प्रतिपादन नहीं किया जा सकता है। किससे ? इससे कि विगान-विरोध देखा जाता है। प्रत्येक उपनिषद्में क्रमादिके वैचित्र्यसे भिन्न-भिन्न सृष्टि उपलब्ध होती है। जैसे कि कहींपर 'आत्मन आकाशः०' ( आत्मासे आकाश उत्पन्न हुआ ) इस प्रकार आकाशपूर्वक सृष्टि कही गई है। कहींपर 'तत्तेजोऽसृजत' ( उसने तेज उत्पन्न किया ) इस प्रकार तेजपूर्वक सृष्टि, कहींपर 'स प्राणमसृजत०' ( उसने प्राण उत्पन्न किया, प्राणसे श्रद्धा उत्पन्न की ) इस प्रकार प्राण पूर्वक सृष्टि कही गई है। कहींपर 'स इमाँल्लोकानसृजत०' ( उसने इन लोकोंकी सृष्टिकी-जलमय-शरीरवाला स्वर्गलोक, सूर्यकिरणसे व्याप्त अन्तरिक्षलोक, मनुष्यलोक और जलमय पाताल लोक ) इस प्रकार क्रमके बिना ही लोकोंकी सृष्टि कही गई है। उसी प्रकार कहींपर 'असद्वा०' ( पहले यह ( जगत् ) असत् ही था। उसीसे सत्-नामरूपात्मक व्यक्त उत्पन्न हुआ ) और 'असदेवेदमग्र०' ( पूर्वमें यह असत् ही था, वह सत्-हुआ, वह सम्यक् अभिव्यक्त हुआ अर्थात् अंकुरित हुआ ) इस प्रकार असत् पूर्वक सृष्टि कही गई है। कहींपर असद्वादका निराकरणकर 'तद्धैक आहुरसदे०' ( उस जगत्-कारणके विषयमें किन्हींने ऐसा भी कहा है कि आरम्भमें यह असत् ही था ) इस प्रकार उपक्रमकर

## सत्यानन्दी-दीपिका

* पूर्व ग्रन्थके साथ इस अधिकरणकी संगति कहनेके लिए 'प्रतिपादितम्' इत्यादिसे वृत्तका अनुवाद करते हैं। पूर्वके तीन अधिकरणोंद्वारा प्रधानको श्रुति अप्रतिपादित कहनेसे जगत्कारणत्व लक्षणसे ब्रह्म ही बुद्धिस्थ होता है, उसी बुद्धिस्थ निर्गुण ब्रह्ममें वेदान्तवाक्योंका समन्वय है, इस प्रकार पूर्वग्रन्थसे सिद्ध किया गया है। उसमें लक्षण और समन्वय दोनों ही असिद्ध हैं, क्योंकि श्रुतियोंका परस्पर विरोध देखनेमें आता है। इस प्रकार पूर्व ग्रन्थके साथ इस अधिकरणकी 'तत्र' इत्यादिसे आक्षेपसंगति कहते हैं। पूर्वपक्षी सृष्टि विषयक विरोध दिखलाकर अब 'तथा' आदिके कारण विषयक विरोध भी दिखाते हैं।

६।२।१,२) इति। क्वचित् स्वयंकर्तृकैव व्याक्रिया जगतो निगद्यते–'तद्धेदं तर्ह्यव्याकृतमासीत्तन्नामरूपाभ्यामेव व्याक्रियते'(बृ०१।४।७) इति। एवमनेकधा विप्रतिपत्तेर्वस्तुनि च विकल्पस्यानुपपत्तेर्न वेदान्तवाक्यानां जगत्कारणावधारणपरता न्याय्या। स्मृतिन्यायप्रसिद्धिभ्यां तु कारणान्तरपरिग्रहो न्याय्य इति। *एवं प्राप्ते ब्रूमः–सत्यपि प्रतिवेदान्तं सृज्यमानेष्वकाशादिषु क्रमादिद्वारके विगाने न स्रष्टरि किञ्चिद्विगानमस्ति। कुतः? यथाव्यपदिष्टोक्तेः। यथाभूतो ह्येकस्मिन्वेदान्ते सर्वज्ञः सर्वेश्वरः सर्वात्मैकोऽद्वितीयः कारणत्वेन व्यपदिष्टस्तथाभूत एव वेदान्तान्तरेष्वपि व्यपदिश्यते। तद्यथा–'सत्यं ज्ञानमनन्तं ब्रह्म' (तै०२।१) इति। अत्र तावज्ज्ञानशब्देन परेण च तद्विषयेण कामयितृत्ववचनेन चेतनं ब्रह्म न्यरूपयत्, अपरप्रयोज्यत्वेनेश्वरं कारणमब्रवीत्। तद्विषयेणैव परेणात्मशब्देन शरीरादिकोशपरम्परया चान्तरनुप्रवेशनेन सर्वेषामन्तः प्रत्यगात्मानं निरधारयत्। 'बहु स्यां प्रजायेय' (तै०२।६) इति चात्मविषयेण बहुभवनानुशंसनेन सृज्यमानानां विकाराणां स्रष्टुरभेदमभाषत। तथा 'इदं सर्वमसृजत। यदिदं किञ्च' (तै०२।६) इति समस्तजगत्सृष्टिनिर्देशेन प्राक्सृष्टेरद्वितीयं स्रष्टारमाचष्टे। *तदत्र यल्लक्षणं ब्रह्म कारणत्वेन विज्ञातं, तल्लक्षणमेवान्यत्रापि विज्ञायते–'सदेव सोम्येदमग्र आसीदेकमेवाद्विती-

---

'कुतस्तु खलु' (किन्तु हे सोम्य ! ऐसा कैसे हो सकता है, भला असत्से सत् कैसे उत्पन्न हो सकता है, अतः हे सोम्य ! पूर्वमें यह एकमात्र अद्वितीय सत् ही था, ऐसा [ आरुणिने ] कहा ) इस प्रकार सत्पूर्वक सृष्टिकी प्रतिज्ञा की जाती है। कहींपर 'तद्धेदं०' ( वह यह जगत् सृष्टिके पूर्व अव्याकृत था। वह नाम रूपसे ही व्याकृत-व्यक्त हुआ ) इस प्रकार जगत्की अभिव्यक्ति स्वयं कर्तृक-अपने आप ही कही जाती है ! इस प्रकार अनेक रीतिसे सृष्टि आदि विषयक श्रुतियोंका परस्पर विरोध होनेसे और वस्तुमें विकल्पकी अनुपपत्ति होनेसे वेदान्तवाक्योंमें जगत्-कारणकी अवधारणपरता युक्त नहीं है, अतः स्मृति और न्याय प्रसिद्धिसे ब्रह्मसे भिन्न कारणका ग्रहण करना युक्त है। सिद्धान्ती—ऐसा प्राप्त होनेपर हम कहते हैं—प्रत्येक उपनिषद्में सृज्यमान आकाश आदिमें क्रम आदि द्वारक विरोध होनेपर भी स्रष्टाके विषयमें कुछ भी विरोध नहीं, किससे ? इससे कि जैसा एकत्र स्रष्टाका व्यपदेश है वैसा अन्यत्र भी है। एक उपनिषद्में जैसा सर्वज्ञ, सर्वेश्वर, सर्वात्मा, एक, अद्वितीय ब्रह्म कारणरूपसे व्यपदिष्ट है, वैसा ही अन्य उपनिषदोंमें भी व्यपदिष्ट है। जैसे 'सत्यं ज्ञानमनन्तं ब्रह्म' यहाँ ज्ञानशब्दसे उस ब्रह्म विषयक [सोऽकामयत] कामयितृत्व वचनसे चेतन ब्रह्मका निरूपण करती हुई श्रुति ईश्वरको स्वतन्त्ररूपसे कारण कहती है। अनन्तरोक्त ब्रह्मविषयक आत्मशब्दसे और शरीर आदि कोश परम्परा द्वारा सबके अन्तर अनुप्रवेश करनेसे सबके भीतर प्रत्यगात्माका निर्धारण किया है। 'बहु स्यां०' (मैं बहुत हो जाऊँ अर्थात् मैं उत्पन्न हो जाऊँ ) इस प्रकार आत्मविषयक अनेक स्वरूप होनेके कथनसे सृज्यमान विकारोंका स्रष्टासे अभेद कहा है। उसी प्रकार 'इदं सर्वं०' ( उसने यह जो कुछ है इस सबकी रचनाकी ) इस प्रकार समस्त जगत्की सृष्टिके निर्देशसे सृष्टिके पूर्व केवल अद्वितीय स्रष्टाको श्रुति कहती है। जिस प्रकार यहाँ तैत्तिरीय उपनिषदमें जो सर्वज्ञत्व आदि लक्षणवाला ब्रह्म जगत्-कारणरूपसे विज्ञात है उस प्रकारके लक्षणवाला ब्रह्म 'सदेव सोम्य०' (हे सोम्य ! पहले यह सारा प्रपञ्च एक-

## सत्यानन्दी-दीपिका

* कार्य विषयक विरोध होनेसे कारण विषयक विरोध नहीं हो सकता, अन्यथा अतिप्रसंग हो जायगा अर्थात् प्रतिदिन स्वप्न सृष्टियाँ नाना प्रकारकी होती हैं, इससे 'मैं वही हूँ' इस प्रकार जिस द्रष्टाकी प्रत्यभिज्ञा होती है उसमें भी नानात्व प्रसक्त होगा। यह दोष सर्वत्र लागू होनेसे केवल अनिष्ट ही होगा। सृष्टिमें विरोध मानकर स्रष्टामें अविरोध दिखलाया गया है। सृष्टि विषयक भी विरोध नहीं है, अब इसे 'समाधास्यति' आदिसे कहते हैं।

यम्', 'तदैक्षत बहु स्यां प्रजायेयेति। तत्तेजोऽसृजत' (छा० ६।२।१,३) इति। तथा 'आत्मा वा इदमेक एवाग्र आसीन्नान्यत्किंचन मिषत्। स ईक्षत लोकान्नु सृजै' (ऐ० उ० ४।१।१,२) इति च; एवंजातीयकस्य कारणस्वरूपनिरूपणपरस्य वाक्यजातस्य प्रतिवेदान्तमविगीतार्थत्वात्। कार्यविषयं तु विगानं दृश्यते-क्वचिदाकाशादिका सृष्टिः क्वचित्तेजआदिकेत्येवंजातीयकम्। न च कार्यविषयेण विगानेन कारणमपि ब्रह्म सर्ववेदान्तेष्वविगीतमधिगम्यमानमविवक्षितं भवितुमर्हतीति शक्यते वक्तुम्; अतिप्रसङ्गात्। ❀ समाधास्यति चाचार्यः कार्यविषयमपि विगानं 'न वियदश्रुतेः' (ब्र० सू० २।३।१) इत्यारभ्य। भवेदपि कार्यस्य विगीतत्वमप्रतिपाद्यत्वात्। न ह्ययं सृष्ट्यादिप्रपञ्चः प्रतिपिपादयिषितः। नहि तत्प्रतिबद्धः कश्चित्पुरुषार्थो दृश्यते श्रूयते वा। न च कल्पयितुं शक्यते; उपक्रमोपसंहाराभ्यां तत्र तत्र ब्रह्मविषयैर्वाक्यैः साकमेकवाक्यताया गम्यमानत्वात्। दर्शयति च सृष्ट्यादिप्रपञ्चस्य ब्रह्मप्रतिपत्त्यर्थताम्—'अन्नेन सोम्य शुङ्गेनापो मूलमन्विच्छाद्भिः सोम्य शुङ्गेन तेजो मूलमन्विच्छ तेजसा सोम्य शुङ्गेन सन्मूलमन्विच्छ' ( छा० ६।८।४ ) इति। मृदादिदृष्टान्तैश्च कार्यस्य कारणेनाभेदं वदितुं सृष्ट्यादिप्रपञ्चः श्राव्यत इति गम्यते। तथाच संप्रदायविदो वदन्ति—'मृल्लोहविस्फुलिङ्गाद्यैः सृष्टिर्या

---

मात्र अद्वितीय सत् ही था ) 'तदैक्षत०' ( उस-सत्‌ने ईक्षण किया मैं बहुत हो जाऊँ अनेक प्रकारसे उत्पन्न होऊँ। इस प्रकार ईक्षण कर उसने तेज उत्पन्न किया ) उसी प्रकार 'आत्मा वा०' ( सृष्टिके पूर्व यह सब जगत् केवल आत्मरूप ही था, दूसरा कोई सचेष्ट पदार्थ नहीं था, उसने ईक्षण किया कि मैं लोकोंकी सृष्टि करूँ ) इस प्रकार अन्यत्र-छान्दोग्यादि उपनिषदोंमें भी जाना जाता है। क्योंकि कारण-स्वरूप निरूपण परक इस प्रकारके वाक्य समुदायका प्रत्येक उपनिषद्में अर्थ विषयक अविरोध है। परन्तु कहीं आकाशकी प्रथम सृष्टि, कहीं तेजकी प्रथम सृष्टि इस प्रकारका कार्य विषयक विरोध तो देखा जाता है। कार्य विषयक विरोध होनेसे भी सब वेदान्तोंमें अविरुद्धरूपसे प्रतीयमान कारण ब्रह्म भी अविवक्षित होना योग्य है ऐसा नहीं हो सकता, क्योंकि ऐसा माननेपर अतिप्रसङ्ग हो जायगा। 'न वियदश्रुते.' इस सूत्रसे आरम्भकर कार्य विषयक विरोधका भी आचार्य समाधान करेंगे। वेदान्त प्रतिपाद्य न होनेके कारण कार्य विषयक विरोध भले ही हो, परन्तु यह सृष्टि आदि प्रपञ्च वेदान्त-वाक्योंसे प्रतिपादन करनेकी इच्छाका विषय ही नहीं है। क्योंकि प्रपञ्चसे सम्बद्ध कोई भी पुरुषार्थ न देखा जाता है और न सुना जाता है और न उसकी कल्पना ही की जा सकती है। कारण कि उपक्रम और उपसंहारसे तत्-तत् उपनिषदोंमें स्थित ब्रह्मविषयक वाक्योंके साथ सृष्टिवाक्योंकी एक वाक्यता अवगत होती है।

'अन्नेन सोम्य शुङ्गेन० ( हे सोम्य ! अन्नरूप कार्यसे जलरूपमूलको खोज—प्राप्तकर, हे सोम्य ! जलरूप कार्य लिङ्गसे तेजरूप मूलको प्राप्तकर और हे सोम्य ! तेजरूप कार्यसे सद्रूप मूलका निश्चयकर) इसप्रकार श्रुति ब्रह्मज्ञानकी प्राप्तिके लिए सृष्टि आदि प्रपञ्च दिखलाती है। ऐसा ज्ञात होता है कि मृत्तिका आदि दृष्टान्तों द्वारा कार्यका कारणके साथ अभेद कहनेके लिए श्रुति सृष्टि आदि प्रपञ्च श्रवण कराती है। 'मृल्लोहविस्फुलिङ्गाद्यैः०' ( [ उपनिषदोंमें ] मृत्तिका, लोहखण्ड और विस्फुलिङ्गादि दृष्टान्तों

## सत्यानन्दी-दीपिका

❀ ब्रह्ममें 'सत्यं ज्ञानमनन्तं' इसका उपपादन करनेके लिए ही जगत् कारणत्वका अध्यारोप किया है। वेदोंमें सृष्टिका जो भिन्न-भिन्न वर्णन है वह स्वप्नसृष्टिके समान है अर्थात् जैसे स्वप्न सृष्टिमें उत्पत्ति-क्रमका नियम नहीं है, वैसे जाग्रत् प्रपञ्चमें भी नहीं है। स्वप्न प्रपञ्चकी तरह यह सारा जाग्रत् प्रपञ्च भी भ्रममात्र है। इसलिए सृष्टि आदिके प्रतिपादनमें श्रुतिका तात्पर्य नहीं है, किन्तु

चोदिताऽन्यथा । उपायः सोऽवताराय नास्ति भेदः कथंचन ॥' ( माण्डू० ३।१५ ) इति । ब्रह्मप्रतिपत्तिप्रतिबद्धं तु फलं श्रूयते—'ब्रह्मविदाप्नोति परम्' (तै० २।१) 'तरति शोकमात्मवित्' ( छा० ७।१।३ ) 'तमेव विदित्वाऽतिमृत्युमेति (श्वे० ३।८) इति । प्रत्यक्षावगमं चेदं फलम् । 'तत्त्वमसि' इत्यसंसार्यात्मत्वप्रतिपत्तौ सत्यां संसार्यात्मत्वव्यावृत्तेः ॥ १४ ॥

यत्पुनः कारणविषयं विगानं दर्शितम्—'असद्वा इदमग्र आसीत्' इत्यादि, तत्परिहर्तव्यम् । अत्रोच्यते—

## समाकर्षात् ॥ १५ ॥

सूत्रार्थ—'असदेवेदमग्र आसीत्' इसप्रकार अनभिव्यक्त नाम रूप वाची असत् शब्दसे सत्का ही आकर्षण होता है, अतः असत् कारण विषयक आशङ्काका यहाँ अवकाश नहीं है ।

'असद्वा इदमग्र आसीत्' ( तै० २।७ ) इति नात्रासन्निरात्मकं कारणत्वेन श्राव्यते । यतः 'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत् । अस्ति ब्रह्मेति चेद्वेद । सन्तमेनं ततो विदुः' इत्यसद्वादापवादेनास्तित्वलक्षणं ब्रह्मान्नमयादिकोशपरम्परया प्रत्यगात्मानं निर्धार्य 'सोऽकामयत' इति तमेव प्रकृतं समाकृष्य सप्रपञ्चां सृष्टिं तस्माच्छ्रावयित्वा 'तत्सत्यमित्याचक्षते' इति चोपसंहृत्य 'तदप्येष श्लोको भवति' इति तस्मिन्नेव प्रकृतेऽर्थे श्लोकमिममुदाहरति—'असद्वा इदमग्र आसीत्' इति । यदि त्वसन्निरात्मकमस्मिञ्छ्लोकेऽभिप्रेयेत ततोऽन्यसमाकर्षणेऽन्यस्योदा-

---

द्वारा भिन्न-भिन्न प्रकारसे सृष्टिका निरूपण किया है वह [ ब्रह्मात्मैक्यमें ] बुद्धि प्रवेश करनेका उपायमात्र है, वस्तुतः उनमें कुछ भी भेद नहीं है ) इसप्रकार संप्रदायविद्-आचार्य गौड़पाद कहते हैं । 'ब्रह्मविदाप्नोति परम्० ( ब्रह्मवित् परब्रह्मको प्राप्त होता है ) 'तरति०' ( आत्मवित् शोकमय संसारसे मुक्त हो जाता है 'तमेव०' ( उसे ही जानकर पुरुष मृत्युको पार करता है ) इसप्रकार ब्रह्मज्ञानसे सम्बद्ध फलकी श्रुति है ) ब्रह्मज्ञानसे विद्वान्को परमानन्दकी प्राप्ति, शोककी निवृत्ति और मृत्युका अतिक्रमणरूप फल प्रत्यक्ष अनुभवमें आनेवाला है, क्योंकि जब 'तत्त्वमसि' इसप्रकार असंसारी आत्मत्वका अपरोक्ष अनुभव होता है तब संसारी आत्मत्वकी निवृत्ति हो जाती है ॥ १४ ॥

परन्तु 'असद्वा० ( सृष्टिके पहले यह असत् ही था ) इत्यादि जो कारण विषयक विरोध दिखलाया गया है, उसका परिहार करना चाहिए । इसपर सूत्रकार कहते हैं—

'असद्वा० ( सृष्टिके पहले यह असत् ही था ) इस तैत्तिरीय श्रुतिमें स्वरूप रहित असत्का कारणरूपसे श्रवण नहीं कराया जाता है, क्योंकि 'असन्नेव स भवति०' ( यदि पुरुष ब्रह्म असत् है, ऐसा जानता है तो वह स्वयं भी असत् हो जाता है, यदि ऐसा जानता है कि ब्रह्म 'सत्' है तो ब्रह्मवेत्ता उसे सत् समझते हैं ) इसप्रकार असद्वादके अपवादसे सत्स्वरूप ब्रह्मको अन्नमय आदि कोशपरम्परासे प्रत्यगात्मरूपसे निर्धारणकर 'सोऽकामयत' ( उस परमात्माने कामना की ) इस प्रकार उसी प्रकृत ब्रह्मका समाकर्षणकर उसीसे विस्तृत सृष्टिका श्रवण कराकर 'तत्सत्यमि०' ( वह सत्य है ऐसा लोग कहते हैं ) इसप्रकार उपसंहारकर 'तदप्येष०' ( उसके विषयमें ही श्लोक है ) इसप्रकार उसी प्रकृत ब्रह्मरूप अर्थमें 'असद्वा इदमग्र आसीत्' इस मन्त्रको उदाहरणरूपसे कहते हैं । यदि इस श्लोकमें स्वरूपरहित असत् अभिप्रेत हो तो अन्यका समाकर्षण होनेपर अन्यका उदाहरण देनेसे वाक्य

### सत्यानन्दी-दीपिका

'अध्यारोपापवादाभ्यां निष्प्रपञ्चः प्रपञ्च्यते' ( अध्यारोप और अपवाद द्वारा निष्प्रपञ्च ब्रह्मका प्रपञ्चरूपसे वर्णन किया गया है ) इस प्रकार अध्यारोप और अपवादरूपसे अद्वितीय ब्रह्मके प्रतिपादनमें ही तात्पर्य है ॥ १४ ॥

हरणादसंबद्धं वाक्यमापद्येत। तस्मान्नामरूपव्याकृतवस्तुविषयः प्रायेण सच्छब्दः प्रसिद्ध इति तद्व्याकरणाभावापेक्षया प्रागुत्पत्तेः सदेव ब्रह्मासदिवासीदित्युपचर्यते। एषैव 'असदेवेदमग्र आसीत्' (छा० ३।१९।१) इत्यत्रापि योजना; 'तत्सदासीत्' इति समाकर्षणात्। अत्यन्ताभावाभ्युपगमे हि 'तत्सदासीत्' इति किं समाकृष्येत ? 'तद्धैक आहुरसदेवेदमग्र आसीत्' ( छा० ६।२।१) इत्यत्रापि न श्रुत्यन्तराभिप्रायेणायमेकीयमतोपन्यासः; क्रियायामिव वस्तुनि विकल्पस्यासंभवात्। तस्माच्छ्रुतिपरिगृहीतसत्पक्षदार्ढ्यायैवायं मन्दमतिपरिकल्पितस्यासत्पक्षस्योपन्यस्य निरास इति द्रष्टव्यम्। 'तद्धेदं तर्ह्यव्याकृतमासीत्' (बृ० १।४।७) इत्यत्रापि न निरध्यक्षस्य जगतो व्याकरणं कथ्यते, 'स एष इह प्रविष्ट आ नखाग्रेभ्यः' इत्यध्यक्षस्य व्याकृतकार्यानुप्रवेशित्वेन समाकर्षात्। निरध्यक्षे व्याकरणाभ्युपगमे ह्यनन्तरेण प्रकृतावलम्बिना स इत्यनेन सर्वनाम्ना कः कार्यानुप्रवेशित्वेन समाकृष्येत ? चेतनस्य चायमात्मनः शरीरेऽनुप्रवेशः श्रूयते। अनुप्रविष्टस्य चेतनत्वश्रवणात्-'पश्यंश्चक्षुः शृण्वञ्छ्रोत्रं मन्वानो मनः' इति। *अपि च यादृशमिदमद्यत्वे नामरूपाभ्यां व्याक्रियमाणं जगत्साध्यक्षं व्याक्रियत एवमादिसर्गेऽपीति

---

असम्बद्ध हो जायगा अर्थात् जिस सत् प्रकृतका यहाँ समाकर्षण किया गया है उससे भिन्न असत्का उदाहरण होनेसे यह वाक्य असम्बद्ध हो जायगा। इसलिए नाम-रूपसे अभिव्यक्त वस्तुमें प्रायः सत् शब्द प्रसिद्ध है, अतः सृष्टिसे पहले नाम-रूपके व्याकृताभावकी अपेक्षासे सत् ही ब्रह्म असत्-सा था ऐसा उपचार किया जाता है अर्थात् गौणवृत्तिसे असत् शब्दसे उपचार किया जाता है। 'असदेवेदमग्र आसीत्' इस मन्त्रमें भी यही योजना है, क्योंकि 'तत्सदासीत्' ( वह सत् था ) इस वाक्य घटक 'सत्' पदसे पूर्ववाक्य गत 'सत्' का समाकर्षण-ग्रहण है। यदि अत्यन्ताभावरूप असत्को स्वीकार करें तो 'तत्सदासीत्' इसमें किसका समाकर्षण करेंगे अर्थात् स्वरूप शून्य असत्का समाकर्षण असंभव है और असत्का सद्रूपसे ग्रहण करना भी असंगत है। 'तद्धैक०' ( उसीके विषयमें किन्हींने ऐसा भी कहा है कि सृष्टिके पहले यह असत् ही था ) इसमें भी अन्य श्रुतिके अभिप्रायसे यह किसी एकीयमतका उपन्यास नहीं है अर्थात् इस मन्त्रका 'किसी शाखावाले कारणको असत् कहते हैं' यह अर्थ नहीं है, क्योंकि क्रियाके समान वस्तुमें विकल्पका संभव नहीं है, इसलिए यहाँ यह समझना चाहिए कि श्रुतिसे परिगृहीत सत् पक्षको दृढ़ करनेके लिए मन्दमति पुरुषोंसे परिकल्पित असत् पक्षका उपन्यासकर यह परिहार है। 'तद्धेदं०' ( उत्पत्तिसे पूर्व यह जगत् अव्याकृत था ) इसमें भी अध्यक्ष रहित जगत्का व्याकरण नहीं कहा जाता। 'स एष०' ( वह यह व्याकर्ता इस शरीरमें नखाग्रपर्यन्त प्रवेश किए हुए हैं ) इसप्रकार अध्यक्षका व्याकृत वस्तुओंमें प्रवेश कर्तृत्वरूपसे समाकर्षण है। अध्यक्षके बिना ही व्याकरण-नामरूपसे जगत्की अभिव्यक्ति स्वीकार करें तो [ स एष इह प्रविष्टः ] इस अनन्तर ग्रन्थवर्ती प्रकृत अर्थका अवलम्बन करनेवाले 'स' इस सर्वनामसे कार्यमें अनुप्रवेशित्वसे किसका समाकर्षण होगा ? और चेतन आत्माका शरीरमें यह अनुप्रवेश सुना जाता है, क्योंकि 'पश्यंश्चक्षु०' ( देखनेके कारण वह चक्षु-द्रष्टा है, सुननेके कारण श्रोत्र-श्रोता है, मनन करनेके कारण मन-मन्ता है ) इसप्रकार अनुप्रवेश करनेवालेमें चेतनत्वका श्रवण है। और वर्तमान समय में नाम-रूपसे व्याकृत हुआ यह जगत् जैसा सकर्तृक व्याकृत होता है, वैसा ही आदि सृष्टिमें था, ऐसा ज्ञात

## सत्यानन्दी-दीपिका

'व्याक्रियत' यह लकार कर्ममें प्रयुक्त है, यह लोक प्रसिद्ध है कि कर्ताके विना कर्मकी सिद्धि नहीं होती, लकार कर्ममें प्रयुक्त होनेसे कर्ता अर्थतः सिद्ध हो जाता है। इस विषयमें 'गम्यते ग्रामः' यह लौकिक उदाहरण भी है। इससे यह सिद्ध हुआ कि श्रुतियोंका कारणके विषयमें अविरोध होनेसे उनका ब्रह्ममें समन्वय है ॥ १५ ॥

गम्यते; दृष्टविपरीतकल्पनानुपपत्तेः। श्रुत्यन्तरमपि 'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' ( छा० ६।३।२ ) इति साध्यक्षामेव जगतो व्याक्रियां दर्शयति। व्याक्रियत इत्यपि कर्मकर्तरि लकारः सत्येव परमेश्वरे व्याकर्तरि सौकर्यमपेक्ष्य द्रष्टव्यः। यथा लूयते केदारः स्वयमेवेति सत्येव पूर्णके लवितरि। यद्वा—कर्मण्येवैष लकारोऽर्थाक्षिप्तं कर्तारमपेक्ष्य द्रष्टव्यः। यथा गम्यते ग्राम इति ॥१५॥

( ५ बालाक्यधिकरणम् सू० १६-१८ )

## जगद्वाचित्वात् ॥१६॥

सूत्रार्थ—'यो ह वै बालाके' इस श्रुतिमें कर्मशब्द सम्पूर्ण प्रपञ्चका वाचक होनेके कारण इसका कर्ता परमात्मा ही है।

* कौषीतकिब्राह्मणे बालाक्यजातशत्रुसंवादे श्रूयते—'यो वै बालाक एतेषां पुरुषाणां कर्ता यस्य वैतत्कर्म स वै वेदितव्यः' ( कौ० ब्रा० ४।१९ ) इति। तत्र किं जीवो वेदितव्यत्वेनोपदिश्यते उत मुख्यः प्राणः, उत परमात्मेति विशयः। किं तावत्प्राप्तम्? प्राण इति। कुतः? 'यस्य वैतत्कर्म' इति श्रवणात्, परिस्पन्दलक्षणस्य च कर्मणः प्राणाश्रयत्वात्, वाक्यशेषे च 'अथास्मिन्प्राण एवैकधा भवति' इति प्राणशब्ददर्शनात्। प्राणशब्दस्य च मुख्ये प्राणे प्रसिद्धत्वात्। ये चैते पुरस्ताद्बालाकिना 'आदित्ये पुरुषश्चन्द्रमसि पुरुषः' इत्येवमादयः पुरुषा निर्दिष्टास्तेषामपि भवति प्राणः कर्ता, प्राणावस्थाविशेषत्वादादित्यादिदेवतात्मनाम्—'कतम एको देव इति प्राण

---

होता है। क्योंकि दृष्ट-प्रत्यक्षसिद्धसे विपरीत कल्पना नहीं की जा सकती है 'अनेन जीवेनात्मना०' ( मैं इस जीवात्मरूपसे इन तीनों ( तेज, जल और अन्न ) देवताओंमें अनुप्रवेश कर नाम और रूपकी अभिव्यक्ति करूँ ) इसप्रकार दूसरी श्रुति भी जगत्की अभिव्यक्ति सकर्तृक ही दिखलाती है। 'व्याक्रियते' यह कर्मकर्तामें लकार अभिव्यक्तिकर्ता परमेश्वरके होनेपर भी सौकर्यकी अपेक्षासे समझना चाहिए। जैसे केदार काटनेवाले किसी पूर्णक नामक व्यक्तिके रहनेपर भी 'लूयते केदारः' ( क्यारी स्वयं ही कट रही है ) यह प्रयोग होता है, अथवा जैसे 'गम्यते ग्रामः' ( ग्राम प्राप्त किया जाता है ) इसमें कर्ताका आक्षेप किया जाता है, वैसे ही अर्थसे आक्षिप्त कर्ताकी अपेक्षासे कर्मके अर्थमें ही यह लकार समझना चाहिए ॥१५॥

कौषीतकिब्राह्मणमें बालाकि और अजातशत्रुके संवादमें 'यो वै बालाक०' ( हे बालाकि! जो इन पुरुषोंका कर्ता है अथवा यह सम्पूर्ण प्रपञ्च जिसका कर्म है वही जानने योग्य है ) ऐसी श्रुति है। इसमें वेदितव्यरूपसे क्या जीव उपदिष्ट है अथवा मुख्य प्राण वा परमात्मा? ऐसा संशय होता है। तब क्या प्राप्त हुआ? पूर्वपक्षी—प्राण उपदिष्ट है, क्यों? क्योंकि 'यस्य वैतत्कर्म' ऐसी श्रुति है। चलनात्मक कर्म प्राणके आश्रित है। और 'अथास्मिन्प्राण०' ( जाग्रत् और स्वप्न जनक कर्मकी उपरतिके अनन्तर सुषुप्तिमें इस प्राणमें ही सब एक होता है ) इस तरह वाक्यशेषमें प्राणशब्दका श्रवण है और प्राणशब्द मुख्यप्राणमें प्रसिद्ध है। 'आदित्ये पुरुषः०' ( आदित्यमें पुरुष है, चन्द्रमामें पुरुष है ) इस प्रकार बालाकिने पहले इन जिन आदित्यादि पुरुषोंका निर्देश किया है उनका भी कर्ता प्राण है, क्योंकि आदित्य आदि देवता प्राणकी भिन्न-भिन्न अवस्थाएँ हैं, 'कतम एको देव०' ( शाकल्य—एक

### सत्यानन्दी-दीपिका

* पूर्व अधिकरणमें एक वाक्यस्थ सत् आदि शब्दोंके बलसे असत् शब्दका अर्थ किया गया है। यहाँ तो 'ब्रह्म ते ब्रवाणि' इसप्रकार बालाकि वाक्यस्थ ब्रह्मशब्दसे प्राणशब्द ब्रह्मपरक नहीं माना जा सकता, क्योंकि यहाँ वाक्यभेद है, इसप्रकार प्रत्युदाहरणसंगतिसे 'किं तावत्' इत्यादिसे पूर्वपक्ष

इति स ब्रह्म त्यदित्याचक्षते' ( बृ० ३।९।९ ) इति श्रुत्यन्तरप्रसिद्धेः । जीवो वाऽयमिह वेदितव्यतयोपदिश्यते। तस्यापि धर्माधर्मलक्षणं कर्म शक्यते श्रावयितुम्—'यस्य वैतत्कर्म' इति। सोऽपि भोक्तृत्वाद्भोगोपकरणभूतानामेतेषां पुरुषाणां कर्तोपपद्यते। वाक्यशेषे च जीवलिङ्गमवगम्यते। यत्कारणं वेदितव्यतयोपन्यस्तस्य पुरुषाणां कर्तुर्वेदनायोपेतं बालाकिं प्रति बुबोधयिषुरजातशत्रुः सुप्तं पुरुषमामन्त्र्यामन्त्रणशब्दाश्रवणात्प्राणादीनामभोक्तृत्वं प्रतिबोध्य यष्टिघातोत्थानात्प्राणादिव्यतिरिक्तं जीवं भोक्तारं प्रतिबोधयति । तथा परस्तादपि जीवलिङ्गमवगम्यते—'तद्यथा श्रेष्ठी स्वैर्भुङ्क्ते यथा वा स्वाः श्रेष्ठिनं भुञ्जन्त्येवमेवैष प्रज्ञात्मैतैरात्मभिर्भुङ्क्ते एवमेवैत आत्मान एतमात्मानं भुञ्जन्ति' (कौ० ब्रा० ४।२०) इति। प्राणभृत्त्वाच्च जीवस्योपपन्नं प्राणशब्दत्वम्। तस्माज्जीवमुख्यप्राणयोरन्यतर इह ग्रहणीयो न परमेश्वरः; तल्लिङ्गानवगमादिति । एवं प्राप्ते ब्रूमः—परमेश्वर एवायमेतेषां पुरुषाणां कर्ता स्यात्। कस्मात्? उपक्रमसामर्थ्यात्। इह हि बालाकिरजातशत्रुणा सह 'ब्रह्म ते ब्रवाणि' इति संवदितुमुपचक्रमे। स

देव कौन है ? याज्ञवल्क्य–प्राण, वह ब्रह्म है, उसीको त्यत् ( परोक्ष ) ऐसा कहते हैं ) इसप्रकार अन्य श्रुतिमें प्रसिद्ध है । अथवा यहाँ वेदितव्यरूपसे यह जीव उपदिष्ट है । उसका भी धर्माधर्मरूप कर्म 'यस्य वैतत्कर्म' इसप्रकार सुनाया जा सकता है । वह भी भोक्ता होनेसे भोगके साधनभूत इन पुरुषोंका अदृष्टद्वारा कर्ता हो सकता है । और वाक्यशेषमें भी जीवका लिङ्ग अवगत होता है, क्योंकि वेदितव्यरूपसे उपन्यस्त जो पुरुषोंका कर्ता है उसका ज्ञान प्राप्त करनेके लिए प्राप्त बालाकिको बोध करानेके अभिलाषी अजातशत्रुने सुप्त पुरुषको पुकारा उस आमन्त्रण शब्दको न सुननेके कारण प्राणादि अभोक्ता हैं ऐसा बोध कराकर पुनः लाठीके प्रहारसे उस सुप्तपुरुषके जागनेसे यह समझाया कि प्राण आदिसे भिन्न जीव भोक्ता है । तथा अग्रिम वाक्यमें भी 'तद्यथा०' ( जैसे स्वामी अपने सेवक आदि द्वारा उपहृत वस्तुका उपभोग करता है और वे सेवक आदि उस स्वामीसे आजीविका पाते हैं, वैसे यह प्रज्ञात्मा इन आत्माओं द्वारा उपभोग करता है और ये आत्माएँ–देवता या इन्द्रियादि उस प्रज्ञात्माके आश्रित भोग प्राप्त करती हैं ) इसप्रकार जीवलिङ्ग अवगत होता है । प्राणधारी होनेसे भी जीवमें प्राणशब्द युक्त है । इसलिए जीव और मुख्यप्राणमें से एकका यहाँ ग्रहण करना चाहिए, परमेश्वरका नहीं, क्योंकि उसका लिङ्ग ज्ञात नहीं है। सिद्धान्ती—ऐसा प्राप्त होनेपर हम कहते हैं—यह परमेश्वर ही इन पुरुषोंका कर्ता हो, किससे ? इससे कि उपक्रमकी ऐसी सामर्थ्य है । यहाँ बालाकिने अजातशत्रुके साथ 'ब्रह्म ते ब्रवाणि' इसप्रकार बातचीत आरम्भकी और आदित्य आदिमें रहनेवाले अमुख्य-

## सत्यानन्दी-दीपिका

करते हैं । 'यो वै बालाके०' इत्यादि वाक्य समुदाय इस अधिकरणका विषय वाक्य है । किसी समय एक गर्ग गोत्रीय विद्याभारसे गर्वित बालाकि ब्राह्मणने काशीराज अजातशत्रुके पास आकर कहा—'ब्रह्म ते ब्रवाणि' ( मैं तुम्हें ब्रह्मका उपदेश देता हूँ ) अनन्तर उसने राजाको आदित्य, चन्द्रमा, विद्युत्, आकाश, वायु, अग्नि और जल आदिके अभिमानी अनेक देवताओं का उपदेश किया। परन्तु राजा इन सबको जानता था, राजाने कहा—हे ब्रह्मन् ! यदि इससे अधिक जानते हो तो कहो ! बालाकि को चुप देखकर राजाने उसे परमात्माको समझानेके लिए उपदेश किया है । पूर्वपक्षीने राजाके इस वचनको प्राणविषयक मानकर पूर्वपक्ष किया है । अब 'जीवो वा' आदिसे जीवके विषयमें पूर्वपक्ष करते हैं ।

* 'एतत्कर्म' इस नपुंसक एकवचन 'एतत्' शब्दसे 'पुरुषाः' इस पुल्लिग और बहुवचनका परामर्श नहीं हो सकता । 'पुरुषाः' इसप्रकार पुरुषोंमें बहुवचन और पुल्लिग है जब कि 'एतत्कर्म' यहाँ एक वचन और नपुंसक लिङ्ग है, इससे 'यस्य वैतत्कर्म' इस वाक्यमें पुरुषोंका परामर्श नहीं हो

च कतिचिदादित्याद्यधिकरणान्पुरुषानमुख्यब्रह्मदृष्टिभाज उक्त्वा तूष्णींबभूव। तमजातशत्रुः 'मृषा वै खलु मा संवदिष्ठा ब्रह्म ते ब्रवाणि' इत्यमुख्यब्रह्मवादितयाऽपोद्य तत्कर्तारमन्यं वेदितव्यतयोपचिक्षेप। यदि सोऽप्यमुख्यब्रह्मदृष्टिभाक् स्यात्, उपक्रमो बाध्येत। तस्मात्परमेश्वर एवायं भवितुमर्हति। कर्तृत्वं चैतेषां पुरुषाणां न परमेश्वरादन्यस्य स्वातन्त्र्येणावकल्पते। 'यस्य वैतत्कर्म' इत्यपि नायं परिस्पन्दलक्षणस्य धर्माधर्मलक्षणस्य वा कर्मणो निर्देशः; तयोरन्यतरस्याप्यप्रकृतत्वात्, असंशब्दितत्वाच्च। नापि पुरुषाणामयं निर्देशः; एतेषां पुरुषाणां कर्तत्येव तेषां निर्दिष्टत्वात्, लिङ्गवचनविगानाच्च; नापि पुरुषविषयस्य करोत्यर्थस्य क्रियाफलस्य वाऽयं निर्देशः; कर्तृशब्देनैव तयोरुपात्तत्वात्। पारिशेष्यात्प्रत्यक्षसंनिहितं जगत् सर्वनाम्नैतच्छब्देन निर्दिश्यते। क्रियत इति च तदेव जगत्कर्म। * ननु जगदप्यप्रकृतमसंशब्दितं च। सत्यमेतत्। तथाप्यसति विशेषोपादाने साधारणेनार्थेन संनिधानेन संनिहितवस्तुमात्रस्यायं निर्देश इति गम्यते, न विशिष्टस्य कस्यचित्। विशेषसंनिधानाभावात्। पूर्वत्र च जगदेकदेशभूतानां पुरुषाणां विशेषोपादानादविशेषितं जगदेवेहोपादीयत इति गम्यते। एतदुक्तं भवति—य एतेषां पुरुषाणां जगदेकदेशभूतानां कर्ता, किमनेन विशेषेण,

---

ब्रह्मदृष्टिके भागी कुछ पुरुषोंको कहकर वह चुप हो गया। 'मृषा वै खलु०' ( तुमने मुझसे यह मिथ्या कहा कि मैं तुम्हें ब्रह्मका उपदेश करता हूँ ) इसप्रकार अजातशत्रुने बालाकिका अमुख्यब्रह्मवादिरूपसे निषेधकर उनके कर्ता अन्यको वेदितव्यरूपसे आक्षेप किया। यदि वह वेदितव्य भी अमुख्य ब्रह्म ( ब्रह्मसे भिन्न ) दृष्टिका भागी हो तो उपक्रम बाधित होगा। इसलिए यह परमेश्वर ही होना चाहिए। परमेश्वरसे अन्य इन पुरुषोंका स्वतन्त्ररूपसे कर्ता नहीं हो सकता। किञ्च 'यस्य वैतत्कर्म' यह निर्देश भी चलनात्मक अथवा धर्माधर्मात्मक कर्मके विषयमें नहीं है, क्योंकि इन दोनोंमें से कोई भी प्रकृत नहीं है और श्रुति प्रतिपादित नहीं है। पुरुषोंके लिए भी यह निर्देश नहीं है, क्योंकि इन पुरुषोंका कर्ता, इस प्रकार उनका निर्देश हो गया है। एवं लिङ्ग और वचनका भेद है अर्थात् 'यस्य वैतत्कर्म' यहाँ एकवचन और नपुंसक लिङ्ग हैं और पुरुषोत्पादन अथवा उसका फल पुरुष जन्मका भी यह निर्देश नहीं है, क्योंकि कर्तृशब्दसे ही दोनोंका ग्रहण किया गया है। परिशेषसे प्रत्यक्ष संनिहित जगत्का सर्वनाम 'एतत्' शब्दसे निर्देश किया जाता है, जो किया जाय वह कर्म है, इस व्युत्पत्तिसे वह जगत् ही कर्म है। परन्तु जगत् भी अप्रकृत और श्रुति अप्रतिपादित है। यह सत्य है, तो भी ऐसा ज्ञात होता है कि विशेष वस्तुका ग्रहण न होनेसे साधारण अर्थके साथ संनिधानसे संनिहित वस्तुमात्रका यह निर्देश है किसी विशिष्ट वस्तुका नहीं, क्योंकि विशेष संनिधान नहीं है। पूर्ववाक्यमें जगत्के एक देशभूत पुरुषोंका विशेषरूपसे ग्रहण करनेसे यह ज्ञात होता है कि अविशेषित ( सामान्य ) जगत्का ही यहाँ ग्रहण है। तात्पर्य यह है—जगत्के एक देशभूत इन पुरुषोंका जो कर्ता है। इस विशेष कथनका क्या प्रयोजन है? जिसका तो सामान्यरूपसे सारा जगत् ही कर्म है। [ यस्य वा एतत्

## सत्यानन्दी-दीपिका

सकता। पुरुषोत्पादक कर्ता व्यापार 'करोति' का अर्थ उत्पादन और उत्पादनका फल पुरुष जन्म इन दोनोंका ही कर्तृशब्दसे ग्रहण हो चुका है, अतः उनका पृथक् निर्देश नहीं किया गया है। क्रिया और फलके विना कर्तृत्व अनुपपन्न है, इसलिए कर्तृशब्दसे दोनोंका ग्रहण होता है। परिशेषसे यहाँ संनिहित जगत् ही कर्मशब्दसे ग्राह्य है और उसका कर्ता परमेश्वर ही है।

* ब्राह्मणपरिव्राजकन्याय—'ब्राह्मणा भोजयितव्याः परिव्राजकाश्च' ( ब्राह्मणोंको भोजन कराना चाहिए और परिव्राजकोंको भी ) इस वाक्यमें जैसे ब्राह्मणशब्द परिव्राजकसे भिन्न ब्राह्मणका वाचक है, वैसे ही 'एतत्कर्म' यह कर्म शब्द भी पुरुषोंसे भिन्न समस्त जगत्का वाचक है। यद्यपि

यस्य कृत्स्नमेव जगदविशेषितं कर्मेति। वाशब्द एकदेशावच्छिन्नकर्तृत्वव्यावृत्त्यर्थः। ये बालाकिना ब्रह्मत्वाभिमताः पुरुषाः कीर्तितास्तेषामब्रह्मत्वख्यापनाय विशेषोपादानम् एवं ब्राह्मणपरिव्राजकन्यायेन सामान्यविशेषाभ्यां जगतः कर्ता वेदितव्यतयोपदिश्यते। परमेश्वरश्च सर्वजगतः कर्ता सर्ववेदान्तेष्ववधारितः ॥१६॥

## जीवमुख्यप्राणलिङ्गान्नेति चेत्तद्व्याख्यातम् ॥१७॥

पदच्छेद—जीवमुख्यप्राणलिङ्गात्, न, इति, चेत्, तत्, व्याख्यातम्।

सूत्रार्थ—( जीवमुख्यप्राणलिङ्गात् ) पूर्ववाक्यमें जीव और मुख्यप्राणके लिङ्ग होनेसे ( न ) यह श्रुति ब्रह्मपरक नहीं है, ( इति चेत् ) ऐसा यदि कहो तो ( व्याख्यातम् ) प्रदर्दनाधिकरणमें उसका व्याख्यान हो गया है।

* अथ यदुक्तम्—वाक्यशेषगताज्जीवलिङ्गान्मुख्यप्राणलिङ्गाच्च तयोरेवान्यतरस्येह ग्रहणं न्याय्यं न परमेश्वरस्येति, तत्परिहर्तव्यम्। अत्रोच्यते—परिहृतं चैतत् 'नोपासात्रैविध्यादाश्रितत्वादिह तद्योगात्' (ब्र० सू० १।१।३१) इत्यत्र। त्रिविधं ह्यत्रोपासनमेवं सति प्रसज्ज्येत-जीवोपासनं मुख्यप्राणोपासनं ब्रह्मोपासनं चेति। न चैतन्न्याय्यम्। उपक्रमोपसंहाराभ्यां हि ब्रह्मविषयत्वमस्य वाक्यस्यावगम्यते। तत्रोपक्रमस्य तावद्ब्रह्मविषयत्वं दर्शितम्। उपसंहारस्यपि निरतिशयफलश्रवणाद्ब्रह्मविषयत्वं दृश्यते—'सर्वान्पाप्मनोऽपहत्य सर्वेषां च भूतानां

---

कर्म ] श्रुतिस्थ 'वा' शब्द एक देशके कर्तृत्वकी व्यावृत्तिके लिए है। बालाकि द्वारा ब्रह्मरूपसे अभिमत जो पुरुष कहे गये हैं वे अब्रह्म हैं ऐसा कहनेके लिए विशेषका ग्रहण है। इस प्रकार ब्राह्मण-परिव्राजक न्यायसे सामान्य और विशेषसे जगत्का कर्ता वेदितव्यरूपसे उपदिष्ट है। सभी वेदान्तोंमें यह निर्णय है कि परमेश्वर ही समस्त जगत्का कर्ता है ॥१६॥

जो यह कहा गया है कि वाक्यशेषगत भोक्तृत्व जीव लिङ्गसे और स्पन्दनरूप मुख्यप्राण लिङ्गसे यहाँ जीव और प्राणमें से किसी एकका ग्रहण करना युक्त है परमेश्वरका नहीं, उसका परिहार करना चाहिए, इसपर कहते हैं—'नोपासात्रैविध्यादा०' इस सूत्रमें उसका परिहार किया गया है, क्योंकि ऐसा होनेपर यहाँ जीवोपासना, मुख्यप्राणोपासना और ब्रह्मोपासना इस प्रकार तीन उपासनाएँ प्रसक्त होंगी, परन्तु युक्त नहीं है, कारण कि उपक्रम और उपसंहारसे [ यो वै बालाके ] यह वाक्य ब्रह्म विषयक अवगत होता है। ( उन दोनोंमें उपक्रम ब्रह्म विषयक दिखलाया गया है। और 'सर्वान्पाप्मनो०' ( जो उसे इस प्रकार जानता है वह सब पापोंका नाशकर सब भूतों में श्रेष्ठत्व,

### सत्यानन्दी-दीपिका

कर्मशब्द परिस्पन्दन तथा धर्माधर्ममें रूढ है और रूढि योगसे बलवती होती है, तो भी प्रकरणमें वह अपेक्षित नहीं है, क्योंकि 'क्रियते इति कर्म' इस योगसे उन दोनोंका भी ग्रहण हो सकता है। जहाँ योगसे रूढ्यर्थका संग्रह नहीं होता वहाँ रूढिका पृथक् ग्रहण किया जाता है। अथवा ब्राह्मण कहने पर स्वतः परिव्राजकका ग्रहण होनेपर भी विशेष बोधके लिए जैसे परिव्राजकका पृथक् ग्रहण है, वैसे ही कर्मशब्दसे आदित्य आदि पुरुषोंका ग्रहण होनेपर उनमें अब्रह्मत्व बोध करानेके लिए देवता निरूपित कर्तृत्वका श्रुतिमें पृथक् ग्रहण किया गया है। अतः सब वेदान्तोंमें परमेश्वर ही इस सम्पूर्ण प्रपञ्चका कर्ता और वेदितव्यरूपसे प्रतिपादित है। पूर्वपक्षमें यह वाक्य प्राणोपासना परक है, अतः वह ब्रह्ममें समन्वित नहीं है, सिद्धान्तमें यह वाक्य ज्ञेयब्रह्ममें समन्वित है ॥१६॥

* 'सर्वान्पाप्मनोऽपहत्य' इस श्रौत उपसंहारसे यह निश्चय होता है कि बालाकि और अजातशत्रुके संवादरूप वाक्य समुदायमें ब्रह्म ही वेदितव्यरूपसे उपदिष्ट है। जीव और मुख्यप्राणकी उपासना पक्षमें ब्रह्मविषयक उपक्रमका और सर्व पापनिवृत्ति, स्वराज्य-निरतिशय फलकी प्राप्ति और

श्रैष्ठ्यं स्वाराज्यमाधिपत्यं पर्येति य एवं वेद' इति। नन्वेवं सति प्रतर्दनवाक्यनिर्णयेनैवेदमपि वाक्यं निर्णीयेत; न निर्णीयते; 'यस्य वैतत्कर्म' इत्यस्य ब्रह्मविषयत्वेन तत्रानिर्धारितत्वात्। तस्मादत्र जीवमुख्यप्राणशङ्का पुनरुत्पद्यमाना निवर्त्यते। प्राणशब्दोऽपि ब्रह्मविषयो दृष्टः—'प्राणबन्धनं हि सोम्य मनः' (छा० ६।८।२) इत्यत्र। जीवलिङ्गमप्युपक्रमोपसंहारयोर्ब्रह्मविषयत्वादभेदाभिप्रायेण योजयितव्यम् ॥१७॥

## अन्यार्थं तु जैमिनिः प्रश्नव्याख्यानाभ्यामपि चैवमेके ॥१८॥

पदच्छेद—अन्यार्थम्, तु, जैमिनिः, प्रश्नव्याख्यानाभ्याम्, अपि, च, एवम्, एके।

सूत्रार्थ—(जैमिनिस्तु) आचार्य जैमिनि तो ऐसा मानते हैं कि इस प्रकरणमें जीवका परामर्श (अन्यार्थम्) ब्रह्मज्ञानके लिए है। (प्रश्नव्याख्यानाभ्याम्) 'क्वैष एतद्बालाके' क्योंकि ऐसा प्रश्न और 'यदा सुप्तः स्वप्नं न कश्चन०' ऐसा उत्तर है, (अपि च) किञ्च (एके) वाजसनेयिशाखावाले (एवम्) 'य एष विज्ञानमयः०' इस प्रश्न और 'य एषोऽन्तर्हृदय' इस उत्तर द्वारा स्पष्ट कहते हैं कि विज्ञानात्मा परमात्मासे भिन्न है।

* अपि च नैवात्र विवदितव्यम्—जीवप्रधानं वेदं वाक्यं स्याद् ब्रह्मप्रधानं वेति। यतोऽन्यार्थं जीवपरामर्शं ब्रह्मप्रतिपत्त्यर्थमस्मिन्वाक्ये जैमिनिराचार्यो मन्यते। कस्मात्? प्रश्नव्याख्यानाभ्याम्। प्रश्नस्तावत्सुप्तपुरुषप्रतिबोधनेन प्राणादिव्यतिरिक्ते जीवे प्रतिबोधिते पुनर्जीवव्यतिरिक्तविषयो दृश्यते—'क्वैष एतद्बालाके पुरुषोऽशयिष्ट क्व वा एतदभूत्कुत एतदागात्' (कौ० ब्रा० ४।१९) इति। प्रतिवचनमपि 'यदा सुप्तः स्वप्नं न कंचन पश्यत्यथास्मिन्प्राण एवैकधा भवति' इत्यादि 'एतस्मादात्मनः प्राणा यथायतनं विप्रतिष्ठन्ते प्राणेभ्यो देवा देवेभ्यो लोकाः' (कौ०

---

स्वराज्य और आधिपत्य प्राप्त करता है) इस प्रकार उपसंहार भी निरतिशय फलका श्रवण होनेसे ब्रह्मविषयक देखा जाता है। परन्तु ऐसा होनेपर तो प्रतर्दनवाक्यके निर्णयसे इस वाक्यका भी निर्णय हो जाता, किन्तु निर्णय नहीं होता, क्योंकि 'यस्य वैतत्कर्म' इसका ब्रह्म विषयरूपसे वहाँ निर्धारण नहीं किया गया है। इसलिए यहाँ पुनः उत्पन्न हुई जीव और मुख्यप्राण शङ्काका निवारण किया जाता है। 'प्राणबन्धनं हि०' (हे सोम्य! मन प्राणरूप बन्धनवाला ही है) इसमें प्राणशब्द भी ब्रह्मविषयक देखा गया है। उपक्रम और उपसंहार ब्रह्मविषयक होनेसे जीव लिङ्गकी भी अभेदाभिप्रायसे ही योजना करनी चाहिए ॥१७॥

और यहाँ विवाद भी नहीं करना चाहिए कि यह वाक्य जीव प्रधान है अथवा ब्रह्म प्रधान, कारण कि इस वाक्यमें आचार्य जैमिनि जीव परामर्शको अन्यार्थक-ब्रह्म-प्रतिपत्तिके लिए मानते हैं; किससे? इससे कि प्रश्न और व्याख्यान-उत्तर हैं। सोये हुए पुरुषको उठाकर प्राणादिसे अन्य जीवके प्रतिबोधित होनेपर 'क्वैष एतद् बालाके पुरुषो०' (हे बालाकि! यह पुरुष कहाँ सोता था, यह शयन कहाँ हुआ था अर्थात् यह सुप्त पुरुष किसको प्राप्त हुआ था और ऐक्य भ्रंशरूप आगमन कहाँसे हुआ) इस प्रकार जीवसे भिन्न विषयक फिर प्रश्न देखा जाता है। और 'यदा सुप्तः० (सोता हुआ पुरुष जब कोई स्वप्न नहीं देखता तब इस प्राणमें ही एक होता है) इत्यादि और 'एतस्मादात्मनः०' (इस आत्मासे

### सत्यानन्दी-दीपिका

आधिपत्य बोधक उपसंहारका स्पष्ट विरोध है, क्योंकि ब्रह्मज्ञानके विना जीव और प्राणकी उपासनासे सर्वपापकी निवृत्ति और स्वराज्यकी प्राप्ति असम्भव है ॥१७॥

* प्रथम सूत्रमें भोक्तृत्व आदि जीव लिङ्गसे ब्रह्मका ही प्रतिपादन किया गया है। परन्तु इस सूत्रमें जीवलिङ्गसे जीवके कथन द्वारा ब्रह्मका ग्रहण करना चाहिए, क्योंकि 'क्वैष एतद् बालाके०' इन वाक्योंमें जीवका परामर्श ब्रह्मके जाननेके लिए है।

ब्रा० ४।२० ) इति च। सुषुप्तिकाले च परेण ब्रह्मणा जीव एकतां गच्छति । परस्माच्च ब्रह्मणः प्राणादिकं जगज्जायत इति वेदान्तमर्यादा। *तस्माद्यत्रास्य जीवस्य निःसंबोधतास्वच्छतारूपः—स्वाप उपाधिजनितविशेषविज्ञानरहितं स्वरूपं, यतस्तद्भ्रंशरूपमागमनं, सोऽत्र परमात्मा वेदितव्यतया श्रावित इति गम्यते । अपि चैवमेके शाखिनो वाजसनेयिनोऽस्मिन्नेव बालाक्यजातशत्रुसंवादे स्पष्टं विज्ञानमयशब्देन जीवमाम्नाय तद्व्यतिरिक्तं परमात्मानमामनन्ति—'य एष विज्ञानमयः पुरुषः क्वैष तदाभूत्कुत एतदागात्' ( बृ० २।१।१६ ) इति प्रश्ने। प्रतिवचनेऽपि 'य एषोऽन्तर्हृदय आकाशस्तस्मिञ्शेते' इति। आकाशशब्दश्च परमात्मनि प्रयुक्तः 'दहरोऽस्मिन्नन्तराकाशः'(छा० ८।१।१)इत्यत्र। 'सर्वं एत आत्मनो व्युचरन्ति' इति चोपाधिमतामात्मनामन्यतो व्युच्चरणमामनन्तः परमात्मानमेव कारणत्वेनामनन्तीति गम्यते । प्राणनिराकरणस्यापि सुषुप्तपुरुषोत्थापनेन प्राणादिव्यतिरिक्तोपदेशोऽभ्युच्चयः ॥१८॥

( ६ वाक्यान्वयाधिकरणम् सू० १९-२२ )

## वाक्यान्वयात् ॥१९॥

सूत्रार्थ—'आत्मा वा अरे द्रष्टव्यः' इस श्रुतिमें द्रष्टव्य आदि रूपसे उपदिष्ट आत्मा परमात्मा ही है, क्योंकि उपक्रम आदिके पर्यालोचनसे ज्ञात होता है कि ब्रह्ममें ही वाक्यका अन्वय है ।

*बृहदारण्यके मैत्रेयीब्राह्मणेऽधीयते—'न वा अरे पत्युः कामाय' इत्युपक्रम्य 'न वा

---

विस्फुलिङ्गोंकी तरह वाग् आदि प्राण अपने-अपने स्थानपर जाते हैं, प्राणोंसे देव और देवोंसे लोक निकलते—उत्पन्न होते हैं ) प्रतिवचन भी है । सुषुप्तिकालमें जीव परब्रह्मके साथ एक हो जाता है और परब्रह्मसे प्राणादि जगत् उत्पन्न होता है, यह वेदान्त मर्यादा-सिद्धान्त है । इससे ज्ञात होता है कि जिसमें इस जीवका भान रहित स्वच्छतारूप स्वाप है अर्थात् उपाधि-जनित विशेष विज्ञान रहित स्वरूप है, जिस स्वरूपसे वह पतनरूप आगमन है, वह परमात्मा यहाँ वेदितव्यरूपसे सुनाया जाता है अर्थात् प्रतिपादित है । और इस प्रकार एक वाजसनेय शाखावाले बालाकि और अजातशत्रुके इसी संवादमें विज्ञानमय शब्दसे जीवका स्पष्ट श्रवण कराके उससे अन्य परमात्माको 'य एष विज्ञानमयः' ( यह जो विज्ञानमय पुरुष है, जब सोया हुआ था, तब कहाँ था ? और यह कहाँसे आया ? ) इस प्रश्नमें और 'य एष०' ( हृदयमें जो यह आकाश है उसमें सोता है ) इस प्रतिवचनमें भी कहते हैं । 'दहरोऽस्मिन्नन्तराकाशः' ( इसमें जो सूक्ष्म आकाश है ) इस छान्दोग्य श्रुतिमें आकाश शब्द परमात्मामें प्रयुक्त है । 'सर्वं एत आत्मनो० ( ये सब आत्मासे निकलते हैं ) इस प्रकार यह ज्ञात होता है कि उपाधि युक्त आत्माओंका अन्यमेंसे निकलना श्रवण कराते हुए परमात्माका ही कारणरूपसे प्रतिपादन करते हैं । प्राणके निराकरणमें सुषुप्त पुरुषके उत्थानके साथ प्राणादिसे अतिरिक्त जीवके उपदेशरूप हेतुका भी संग्रह कर लेना चाहिए अर्थात् प्राणके निराकरणमें यह भी हेतु है ॥१८॥

बृहदारण्यकके मैत्रेयीब्राह्मणमें 'न वा अरे पत्युः' ( अरे मैत्रेयी ! स्त्रीको पतिके लिए पति प्रिय नहीं होता ) इस प्रकार आरम्भकर आगे 'न वा अरे०' ( अरे मैत्रेयी ! सबके प्रयोजनके लिए सब

### सत्यानन्दी-दीपिका

* 'सता सोम्य तदा सम्पन्नो भवति०(छा०६।८।१) ( हे सोम्य ! सुषुप्तिमें जीव सत् ब्रह्मके साथ एक होता है) इस प्रकार सुषुप्तिमें जीवका आविर्भाव और तिरोभाव ब्रह्ममें ही होता है । चेतन जीव जड़ प्राणके साथ कदापि एक नहीं हो सकता। 'प्राणस्य प्राणम्' (वह तो प्राणका प्राण है) इस प्रकार यहाँ प्राण शब्द ब्रह्मका प्रतिपादक है । इसलिए यहाँ परमात्मा ही सबका कारणरूपसे उपदिष्ट और वेदितव्य है । यहाँ जीव निराकरणकी तरह प्राणके निराकरणमें भी यह सूत्र हेतु समझना चाहिए । अतः यह सिद्ध हुआ कि उक्त वाक्य जीवके परमार्थरूप प्रतिपादन द्वारा ब्रह्ममें ही समन्वित है ॥१८॥

अरे सर्वस्य कामाय सर्वं प्रियं भवत्यात्मनस्तु कामाय सर्वं प्रियं भवत्यात्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यो मैत्रेय्यात्मनो वा अरे दर्शनेन श्रवणेन मत्या विज्ञानेनेदं सर्वं विदितम्' ( बृ० ४।५।६ ) इति, तत्रैतद्विचिकित्स्यते-किं विज्ञानात्मैवायं द्रष्टव्यश्रोतव्यत्वादिरूपेणोपदिश्यत आहोस्वित्परमात्मेति। कुतः पुनरेषा विचिकित्सा ? प्रियसंसूचितेनात्मना भोक्त्रोपक्रमाद्विज्ञानात्मोपदेश इति प्रतिभाति। तथात्मविज्ञानेन सर्वविज्ञानोपदेशात्परमात्मोपदेश इति। किं तावत्प्राप्तम् ? ※ विज्ञानात्मोपदेश इति। कस्मात् ? उपक्रमसामर्थ्यात्। पतिजायापुत्रवित्तादिकं हि भोग्यभूतं सर्वं जगदात्मार्थतया प्रियं भवतीति प्रियसंसूचितं भोक्तारमात्मानमुपक्रम्यानन्तरमिदमात्मनो दर्शनाद्युपदिश्यमानं कस्यान्यस्यात्मनः स्यात्? मध्येऽपि 'इदं महद्भूतमनन्तमपारं विज्ञानघन एवैतेभ्यो भूतेभ्यः समुत्थाय तान्येवानुविनश्यति न प्रेत्य संज्ञास्ति' इति प्रकृतस्यैव महतो भूतस्य द्रष्टव्यस्य भूतेभ्यः समुत्थानं विज्ञानात्मभावेन ब्रुवन्विज्ञानात्मन एवेदं द्रष्टव्यत्वं दर्शयति। तथा 'विज्ञातारमरे केन विजानीयात्' इति कर्तृवचनेन शब्देनोपसंहरन्विज्ञानात्मानमेवेहोपदिष्टं दर्शयति। तस्मादात्मविज्ञानेन सर्वविज्ञानवचनं भोक्त्र-

प्रिय नहीं होते, अपने प्रयोजन—सुखके लिए सब प्रिय होते हैं, अतः 'अरी मैत्रेयी ! आत्मा ही दर्शनके योग्य है, अतः उसका श्रवण करना चाहिए, मनन करना चाहिए, निदिध्यासन करना चाहिए, अरी मैत्रेयी ! निश्चय ही आत्माके दर्शन, श्रवण, मनन और विज्ञानसे यह सब विदित हो जाता है ) इस प्रकार अध्ययन करते हैं। यहाँ यह संशय होता है कि क्या यह विज्ञानात्मा ही द्रष्टव्य श्रोतव्यादिरूपसे उपदिष्ट है अथवा परमात्मा ? भला यह संशय क्यों होता है ? प्रियशब्दसे सूचित भोक्ता आत्माका उपक्रम होनेके कारण प्रतीत होता है कि विज्ञानात्माका उपदेश है। उसी प्रकार आत्मविज्ञानसे सबके विज्ञानका उपदेश होनेसे परमात्माका उपदेश प्रतीत होता है। तब क्या प्राप्त होता है ? पूर्वपक्षी—विज्ञानात्माका यह उपदेश है, किससे ? इससे उपक्रमकी सामर्थ्य है। पति, स्त्री, पुत्र, वित्त आदि भोग्यरूप सारा जगत् आत्माके लिए प्रिय होता है, इसप्रकार प्रिय शब्दसे संसूचित भोक्ता आत्माका उपक्रमकर अनन्तर उपदेश किए हुए आत्माके दर्शनादि किसी अन्य आत्माके होंगे ? मध्यमें भी 'इदं महद्भूत०' ( यह महान्, सत्य, अनन्त, अपार और विज्ञानैकरस इन भूतोंसे विशेषरूपसे समुत्थित होकर उन्हींके साथ नष्ट हो जाता है। इसप्रकार मर जानेपर इसकी संज्ञा नहीं रहती ) इसप्रकार प्रकृत द्रष्टव्य महान् भूतका ही भूतोंसे विज्ञानात्मरूपसे समुत्थान कहती हुई श्रुति विज्ञात्मा ही द्रष्टव्य है ऐसा दिखलाती है। इसीप्रकार 'विज्ञातारमरे०' ( अरे मैत्रेयी ! विज्ञाताको किससे जाने ) इसप्रकार कर्तृवाचकशब्दसे उपसंहार करती हुई श्रुति विज्ञाता विज्ञानात्मा ही उपदिष्ट है ऐसा दिखलाती है। इससे यह समझना चाहिए कि आत्मविज्ञानसे सबका विज्ञान होता है, यह वचन भोक्ताके लिए होनेसे भोग्य समूहमें गौण है।

## सत्यानन्दी-दीपिका

※ 'ब्रह्म ते ब्रवाणि' इस उपक्रमके बलसे जैसे पूर्वाधिकरणका विषयवाक्य ब्रह्म परक माना गया है वैसे 'न वा अरे पत्युः कामाय' इस प्रकार मैत्रेयीब्राह्मणमें जीवका उपक्रम होनेसे यह वाक्य जीव परक होना चाहिए, इस तरह दृष्टान्तसंगतिसे 'किं तावत्' इत्यादिसे पूर्वपक्ष करते हैं।

※ 'आत्मनस्तु कामाय' इसप्रकार उपक्रममें आत्मशब्दसे विज्ञानात्माका ही ग्रहण है। मरण समयमें सब भूतोंसे समुत्थान भी विज्ञानात्मका होता है, यह मध्यमें वर्णन है और उपसंहारमें कर्तृवाची शब्दसे विज्ञानात्माका उपदेश है। इसलिए उपक्रम, मध्य और उपसंहारसे यहाँ विज्ञानात्मा ही द्रष्टव्य आदिरूपसे उपदिष्ट है। किञ्च 'आत्माके ज्ञानसे सबका ज्ञान हो जाता है' यह प्रतिज्ञा है, यद्यपि वह जीव पक्षमें मुख्यरूपसे सम्भव नहीं है, क्योंकि भोक्ता आत्मासे भोग्य समुदाय अत्यन्त

र्थत्वाद्भोग्यजातस्यौपचारिकं द्रष्टव्यमिति । * एवं प्राप्ते ब्रूमः–परमात्मोपदेश एवायम् । कस्मात् ? वाक्यान्वयात् । वाक्यं हीदं पौर्वापर्येणावेक्ष्यमाणं परमात्मानं प्रति अन्वितावयवं लक्ष्यते । कथमिति, तदुपपाद्यते– 'अमृतत्वस्य तु नाशास्ति वित्तेन' इति याज्ञवल्क्यादुपश्रुत्य 'येनाहं नामृता स्यां किमहं तेन कुर्यां यदेव भगवान्वेद तदेव मे ब्रूहि' इत्यमृतत्वमाशासानाया मैत्रेय्या याज्ञवल्क्यआत्मविज्ञानमिदमुपदिशति । न चान्यत्र परमात्मविज्ञानादमृतत्वमस्तीति श्रुतिस्मृतिवादा वदन्ति । * तथा चात्मविज्ञानेन सर्वविज्ञानमुच्यमानं नान्यत्र परमकारण-विज्ञानान्मुख्यमत्रकल्पते । नचैतदौपचारिकमाश्रयितुं शक्यम्, यत्कारणमात्मविज्ञानेन सर्वविज्ञानं प्रतिज्ञायानन्तरेण ग्रन्थेन तदेवोपपादयति–'ब्रह्म तं परादाद्योऽन्यत्रात्मनो ब्रह्म वेद' इत्यादिना । यो हि ब्रह्मक्षत्रादिकं जगदात्मनोऽन्यत्र स्वातन्त्र्येण लब्धसद्भावं पश्यति तं मिथ्यादर्शिनं तमेव मिथ्यादृष्टं ब्रह्मक्षत्रादिकं जगत्पराकरोतीति भेददृष्टिमपोद्य 'इदं सर्वं यदयमात्मा' इति सर्वस्य वस्तुजातस्यात्माव्यतिरेकमवतारयति 'दुन्दुभ्यादिदृष्टान्तैश्च' ( बृ० ४।५।८ ) तमेवाव्यतिरेकं द्रढयति । 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' (बृ० ४।५।११)

---

सिद्धान्ती–ऐसा प्राप्त होनेपर हम कहते हैं–परमात्माका ही यह उपदेश है, किससे ? इसमें ही वाक्योंके अन्वय होनेसे । पूर्वापरके पर्यालोचनसे इस वाक्यके अवयव अवेक्ष्यमाण परमात्मामें ही अन्वित लक्षित होते हैं । कैसे अन्वित होते हैं ? उसका उपपादन करते हैं 'अमृतत्वस्य०' (अमृतत्वकी तो वित्तसे आशा नहीं है) इस प्रकार याज्ञवल्क्यसे सुनकर 'येनाहं०' ( जिससे मैं अमर नहीं हो सकती, उसे लेकर मैं क्या करूँगी ? हे भगवन् ! जो अमृतत्वका साधन जानते हों वही मुझे बतलावें ) इस तरह अमृतत्वकी आशा रखनेवाली मैत्रेयीको याज्ञवल्क्य इस आत्मविज्ञानका उपदेश करते हैं । परमात्म-विज्ञानके सिवा अमृतत्वकी प्राप्ति नहीं है, ऐसा श्रुति और स्मृति वचन कहते हैं । उसी प्रकार आत्म-विज्ञानसे कहा हुआ जो सर्वविज्ञान है वह पर कारण विज्ञानके विना मुख्यरूपसे नहीं हो सकता, यह कथन औपचारिक भी ग्रहण नहीं किया जा सकता, क्योंकि आत्मविज्ञानसे सर्वविज्ञानकी प्रतिज्ञाकर 'ब्रह्म तं०' ( ब्राह्मण जाति उसे परास्त कर देती है, जो ब्राह्मण जातिको आत्मासे भिन्न समझता है ) इत्यादि अग्रिम ग्रन्थसे उसीका उपपादन करता है । निश्चय जो ब्रह्म क्षत्र आदि जगत्को आत्मासे अन्यत्र ( भिन्न ) स्वतन्त्ररूपसे सत्तावाला देखता है, वही मिथ्यादृष्ट ब्रह्म क्षत्रादि जगत् उस मिथ्या-दर्शीको कल्याणमार्गसे भ्रष्ट कर देता है, इस प्रकार भेददृष्टिका निषेधकर 'इदं सर्वं०' ( यह जो कुछ है वह सब यह आत्मा है ) इस तरह सम्पूर्ण वस्तुसमूहको आत्मासे अभिन्न अवतरण कहता है । 'दुन्दुभि आदि दृष्टान्तोंसे' उसी अभेदको दृढ करता है । 'अस्य महतो०' ( जो यह ऋग्वेद है वह इस

## सत्यानन्दी-दीपिका

भिन्न है, तो भी गौणरूपसे सम्भव है, कारण कि भोग्य समुदाय भोक्ताके लिए होता है, भोक्ता जीवका ज्ञान होनेपर तदाश्रित भोग्य समूहका भी ज्ञान सुतरां हो जाता है, इसलिए 'आत्मा वा अरे द्रष्टव्यः' इत्यादि श्रुति वाक्योंसे जीवात्माका ही द्रष्टव्य आदिरूपसे उपदेश है ।

* सि०–पूर्वापर वाक्योंके पर्यालोचनसे 'आत्मा वा अरे द्रष्टव्यः' इत्यादि वाक्योंमें परमात्माका ही उपदेश अवगत होता है, क्योंकि सारा मैत्रेयीब्राह्मण ज्ञेय ब्रह्ममें ही समन्वित है ।

* जैसे दुन्दुभि, शंख और वीणाके सामान्य शब्दके ज्ञानसे गृह्यमाण तद् तद् अवान्तर विशेष शब्द शुक्तिके ग्रहणसे ग्राह्य रजतके समान समान्यशब्दमें कल्पित हैं उससे भिन्न नहीं हैं, वैसे आत्माके भानसे भास्य सब आत्ममात्र है यह निश्चित है इस प्रकार एक विज्ञानसे सर्वविज्ञानकी प्रतिज्ञा होनेसे ब्रह्मका निश्चय होता है । सर्वस्रष्टृत्वादि लिङ्गसे भी ब्रह्मका निश्चय होता है । किंच 'स यथा सर्वासामपां समुद्र एकायनमेवं सर्वेषां स्पर्शानां त्वगेकायनम्' ( बृ० २।४।११ ) ( जैसे

इत्यादीना च प्रकृतस्यात्मनो नामरूपकर्मप्रपञ्चकारणतां व्याचक्षाणः परमात्मानमेनं गमयति। 'तथैवैकायनप्रक्रियायामपि' (बृ० ४।५।१२) सविषयस्य सेन्द्रियस्य सान्तःकरणस्य प्रपञ्चस्यैकायनमनन्तरमबाह्यं कृत्स्नं प्रज्ञानघनं व्याचक्षाणः परमात्मानमेनं गमयति। तस्मात्परमात्मन एवायं दर्शनाद्युपदेश इति गम्यते ॥१९॥

यत्पुनरुक्तम्–प्रियसंसूचितोपक्रमाद्विज्ञानात्मन एवायं दर्शनाद्युपदेश इति,अत्र ब्रूमः–

**प्रतिज्ञासिद्धेर्लिङ्गमाश्मरथ्यः ॥२०॥**

पदच्छेद—प्रतिज्ञासिद्धेः, लिङ्गम्, आश्मरथ्यः।

सूत्रार्थ—(प्रतिज्ञासिद्धेः) एकके विज्ञानसे सबका ज्ञान होता है' इस प्रतिज्ञाकी सिद्धिमें (लिङ्गम्) जीव ब्रह्मके अभेदांशको लेकर जीवका उपक्रम हेतु है, ऐसा (आश्मरथ्यः) आश्मरथ्य आचार्यका मत है।

* अस्त्यत्र प्रतिज्ञा 'आत्मनि विज्ञाते सर्वमिदं विज्ञातं भवति', 'इदं सर्वं यदयमात्मा' इति च। तस्याः प्रतिज्ञायाः सिद्धिं सूचयत्येतल्लिङ्गं यत्प्रियसंसूचितस्यात्मनो द्रष्टव्यत्वादिसंकीर्तनम्। यदि हि विज्ञानात्मा परमात्मनोऽन्यः स्यात्ततः परमात्मविज्ञानेऽपि विज्ञानात्मा न विज्ञात इत्येकविज्ञानेन सर्वविज्ञानं यत्प्रतिज्ञातं तद्धीयेत। तस्मात्प्रतिज्ञासिद्ध्यर्थं विज्ञानात्मपरमात्मनोरभेदांशेनोपक्रमणमित्याश्मरथ्य आचार्यो मन्यते ॥२०॥

---

सत्य ब्रह्मका निःश्वास है ) इत्यादिसे प्रकृत आत्मामें नाम, रूप, कर्म प्रपञ्चकी कारणताके व्याख्यानकी इच्छा करते हुए इस परमात्माका अवगम-बोध कराते हैं। 'उसी प्रकार एकायनप्रक्रियामें भी' विषय, इन्द्रिय और अन्तःकरणके साथ सम्पूर्ण प्रपञ्चका एक आधार बाह्य और आभ्यान्तर भेद शून्य, अखण्ड और प्रज्ञानैकरसके व्याख्यानकी इच्छा करते हुए याज्ञवल्क्य इस परमात्माका ही बोध कराते हैं, इससे ज्ञात होता है कि परमात्माका ही यह दर्शनादि उपदेश है ॥१९॥

जो यह कहा गया है कि प्रिय शब्दसे सूचित भोक्ता आत्माके उपक्रमसे विज्ञानात्माका ही यह दर्शन आदि उपदेश है, उसपर हम कहते हैं—

'आत्मनि विज्ञाते०' (आत्माका विज्ञान होनेपर इस सम्पूर्ण प्रपञ्चका ज्ञान हो जाता है) और 'इदं सर्वं०' ( यह आत्मा ही यह सब कुछ है ) ऐसी यहाँ प्रतिज्ञा है। प्रिय शब्दसे संसूचित आत्माका जो द्रष्टव्यत्वादि संकीर्तन है, यह लिङ्ग उस प्रतिज्ञाकी सिद्धिको सूचित करता है। यदि विज्ञानात्मा परमात्मासे अन्य हो तो परमात्माका विज्ञान होनेपर भी विज्ञानात्मा विज्ञात न होगा, इस प्रकार एक का विज्ञान होनेसे सबका विज्ञान होता है यह जो प्रतिज्ञा की गई है वह बाधित हो जायगी। इसलिए प्रतिज्ञाकी सिद्धिके लिए जीवात्मा और परमात्माके अभेदांशको लेकर उपक्रम है, इस प्रकार आश्मरथ्य आचार्य मानते हैं ॥२०॥

## सत्यानन्दी-दीपिका

सब जलोंका समुद्र एकमात्र आश्रय है, वैसे सब स्पर्शोंका त्वक् एकमात्र आश्रय है ) यहाँ कार्यका कारणमें लय श्रुतिको विवक्षित है, अतः प्रपञ्चरूप कार्यका ब्रह्ममें लय प्रतिपादन करनेके लिए 'एवं सर्वेषामात्मैकायनम्' ( सबका आत्मा एकमात्र आश्रय है ) इस वाक्यका अध्याहार करना चाहिए। इस प्रकार एकायन ( प्रलयकाल ) प्रक्रियासे प्रपञ्चका आश्रय ब्रह्म सिद्ध होता है। अतः जीवसे समस्त जगत्की उत्पत्ति आदिके संभव न होनेसे मैत्रेयीब्राह्मणमें उपदिष्ट आत्मा परमात्मा ही है। किञ्च 'अमृतत्व फलसे उपक्रम, मध्यमें आत्मविज्ञानसे सर्वविज्ञानकी प्रतिज्ञा, अन्तमें 'महद्भूतमनन्तं' इत्यादिसे मैत्रेयीब्राह्मणमें ब्रह्म ही प्रतिपाद्य है जीवात्मा नहीं। उसके विज्ञानसे ही भोक्तृभोग्यसमूहके ज्ञानकी प्रतिज्ञा भी सिद्ध होती है। अतः 'आत्मा वा अरे द्रष्टव्यः' इत्यादि श्रुतिवाक्योंमें परमात्मा ही द्रष्टव्य आदि रूपसे उपदिष्ट है। इसका फल पूर्वके समान है ॥१९॥

## उत्क्रमिष्यत एवंभावादित्यौडुलोमिः ॥२१॥

**पदच्छेद**—उत्क्रमिष्यतः, एवंभावात्, इति, औडुलोमिः ।

**सूत्रार्थ**—(उत्क्रमिष्यतः) ब्रह्म साक्षात्कार होनेके अनन्तर देह आदि संघातसे उत्क्रमण करते हुए जीवका ( एवंभावात् ) परमात्माके साथ ऐक्य होता है । इस भविष्यत् अभेदको लेकर जीवका उपक्रम है, ( औडुलोमिः ) यह औडुलोमि आचार्यका मत है ।

*** विज्ञानात्मन एव देहेन्द्रियमनोबुद्धिसंघातोपाधिसंपर्कात्कलुषीभूतस्य ज्ञानध्यानादिसाधनानुष्ठानात्संप्रसन्नस्य देहादिसंघातादुत्क्रमिष्यतः परमात्मैक्योपपत्तेरिदमभेदेनोपक्रमणमित्यौडुलोमिराचार्यो मन्यते । श्रुतिश्चैवं भवति**—'एष संप्रसादोऽस्माच्छरीरात्समुत्थाय परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते' (छा० ८।१२।३) इति । **क्वचिच्च जीवाश्रयमपि नामरूपं नदीनिदर्शनेन ज्ञापयति**—'यथा नद्यः स्यन्दमानाः समुद्रेऽस्तं गच्छन्ति नामरूपे विहाय । तथा विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' ( मुण्ड० ३।२।८ ) इति । **यथा लोके नद्यः स्वाश्रयमेव नामरूपं विहाय समुद्रमुपयन्त्येवं जीवोऽपि स्वाश्रयमेव नामरूपं विहाय परं पुरुषमुपैतीति हि मंत्रार्थः प्रतीयते दृष्टान्तदार्ष्टान्तिकयोस्तुल्यतायै ॥२१॥**

---

देह, इन्द्रिय, मन और बुद्धिके संघातरूप उपाधिके सम्बन्धसे कलुषित विज्ञानात्माका ही ज्ञान, ध्यान आदि साधनोंके अनुष्ठानसे संप्रसन्न हुए दृष्ट देहादि संघातसे उत्क्रमण होनेपर परमात्माके साथ ऐक्य उपपन्न होता है, अतः यहः उपक्रम अभेदसे है, ऐसा औडुलोमि आचार्य मानते हैं । श्रुति भी ऐसी ही है—'एष सम्प्रसादो०' ( यह सम्प्रसाद-जीव इस शरीरसे समुत्थानकर - आनात्माभिमान त्यागकर परमज्योतिको प्राप्त हो अपने स्वरूपमें स्थित होता है ) कहींपर जीवाश्रय नाम रूपको भी औडुलोमि आचार्य नदीके दृष्टान्तसे ज्ञापन कराते हैं—'यथा नद्यः स्यन्दमानाः०' जैसे लोकमें नदियाँ स्वाश्रय नामरूपका त्यागकर समुद्रको प्राप्त होती हैं, वैसे जीव भी स्वाश्रय नाम-रूपका त्यागकर परम पुरुषको प्राप्त प्रोता है, यहाँ दृष्टान्त और दार्ष्टान्तकी तुल्यताके लिए ऐसा अर्थ प्रतीत होता है ॥२१॥

### सत्यानन्दी-दीपिका

* अग्नि और विस्फुलिङ्गोंकी तरह जीव और ब्रह्मका भेद तथा अभेद है । अभेद अंशको लेकर 'आत्मा वा अरे द्रष्टव्यः' यह जीवात्माका उपक्रम प्रतिज्ञाका साधक है, यह आश्मरथ्य आचार्यका मत है॥२०॥

* देह आदि संघातके साथ सम्बन्ध होनेसे जीवका परमात्मासे संसारदशामें भेद है और ब्रह्मात्मत्व साक्षात्कार होनेपर अविद्या तथा देह आदि संघातसे मुक्त होनेसे मुक्तिदशामें जीवका परमात्माके साथ अभेद होता है । इस प्रकार पाञ्चरात्र भी कहते हैं—

'आमुक्तेर्भेद एव स्याज्जीवस्य च परस्य च । मुक्तस्य तु न भेदोऽस्ति भेदहेतोरभावतः' ॥

(मुक्ति पर्यन्त जीव और परमात्माका भेद ही है, मुक्तिदशामें तो भेद हेतुके अभाव होनेसे जीवका परमात्माके साथ भेद नहीं है) इस भविष्यत् वृत्ति अभेदको लेकर 'आत्मा वा अरे द्रष्टव्यः' यह उपक्रम है । इस विषयमें 'एष सम्प्रसादः' यह श्रुति भी है । अब तक तो देहादि उपाधिसे जीवात्मा कलुषित कहा गया है, परन्तु अब तो जीवमें 'क्वचिच्च' आदिसे नाम-रूप प्रपञ्चका आश्रयस्वरूप कालुष्य स्वाभाविक है, जैसे पार्थिव परमाणुमें श्यामत्व स्वाभाविक है वह पाकद्वारा निवृत्त हो जाता है, वैसे ज्ञान ध्यान आदिसे उस कालुष्यको निवृत्तकर जीव परसे पर दिव्य पुरुषको प्राप्त होता है । इस विषयमें नदीका दृष्टान्त है । इस मतमें भविष्यत् वृत्तिको लेकर 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादि वाक्य अभेद परक समझने चाहिए । 'सिद्धान्तमें' ब्रह्मात्मैक्य ज्ञानसे पूर्व जीवभेद आदि प्रपञ्च भ्रान्तिमात्र-मिथ्या है, औडुलोमिके मतमें सत्य है । सिद्धान्तमें नाम रूप उपाधिके धर्म हैं और इस मतमें जीवात्माके हैं । इस प्रकार दोनोमें अन्तर है ॥२१॥

## अवस्थितेरिति काशकृत्स्नः ॥२२॥

पदच्छेद—अवस्थितेः, इति, काशकृत्स्नः ।

सूत्रार्थ—( इति काशकृत्स्नः ) ऐसा काशकृत्स्न आचार्यका मत है कि ( अवस्थितेः ) अविद्या कल्पितभेदसे ब्रह्म ही जीवरूपसे अवस्थित है, इसलिए जीवसे उपदेशका उपक्रम है ।

* अस्यैव परमात्मनोऽनेनापि विज्ञानात्मभावेनावस्थानादुपपन्नमिदमभेदेनोपक्रमणमिति काशकृत्स्न आचार्यो मन्यते। तथाच ब्राह्मणम्—'अनेन जीवेनात्मनानुप्रविश्य नामरूपे व्याकरवाणि' ( छा० ६।३।२ ) इत्येवंजातीयकं परस्यैवात्मनो जीवभावेनावस्थानं दर्शयति। मन्त्रवर्णश्च—सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाभिवदन्यदास्ते' (तै० आ० ३।१२।७) इत्येवंजातीयकः। न च तेजःप्रभृतीनां सृष्टौ जीवस्य पृथक्सृष्टिः श्रुता, येन परस्मादात्मनोऽन्यस्तद्विकारो जीवः स्यात्। काशकृत्स्नस्याचार्यस्याविकृतः परमेश्वरो जीवो नान्य इति मतम्। आश्मरथ्यस्य तु यद्यपि जीवस्य परस्मादनन्यत्वमभिप्रेतं तथापि प्रतिज्ञासिद्धेरिति सापेक्षत्वाभिधानात्कार्यकारणभावः कियानप्यभिप्रेत इति गम्यते। * औडुलोमिपक्षे पुनः स्पष्टमेवावस्थान्तरापेक्षौ भेदाभेदौ गम्येते। तत्र काशकृत्स्नीयं मतं श्रुत्यनुसारीति गम्यते; प्रतिपिपादयिषितार्थानुसारात् 'तत्त्वमसि' इत्यादिश्रुतिभ्यः। एवं च सति तज्ज्ञानादमृतत्वमवकल्पते। विकारात्मकत्वे हि जीवस्याभ्युपगम्यमाने विकारस्य प्रकृतिसंबन्धे प्रलयप्रसङ्गान्न

---

काशकृत्स्न आचार्य इस प्रकार मानते हैं कि इसी परमात्माकी इस जीवात्मरूपसे अवस्थिति होनेके कारण अभेदरूपसे यह उपक्रम युक्त है। उसी प्रकार 'अनेन जीवेनात्मना०' ( मैं इस जीवात्मरूपसे तेज, जल और अन्न इन तीनों देवताओंमें अनुप्रवेशकर नाम और रूपको अभिव्यक्ति करूँ ) इस प्रकारका ब्राह्मणवाक्य परमात्माका ही जीवात्मरूपसे अवस्थान दिखलाता है। और 'सर्वाणि रूपाणि०' ( सर्वज्ञ समस्त चराचरको उत्पन्नकर उनका नाम रख और उनमें प्रवेशकर भाषण आदि व्यवहार करता हुआ रहता है ) इस प्रकारका मन्त्र भी है। तेज आदिकी सृष्टिमें जीवकी पृथक् सृष्टि श्रुत नहीं है जिससे कि जीव परमात्मासे अन्य एवं उसका विकार हो। काशकृत्स्न आचार्यका यह मत है कि अविकृत परमेश्वर ही जीव है अन्य नहीं है। आश्मरथ्यको तो यद्यपि जीवात्माका परमात्मासे अनन्यत्व अभिप्रेत है, तो भी 'प्रतिज्ञासिद्धेः' इस प्रकार सापेक्षत्वाभिधानसे यत्किञ्चित् कार्यकारणभाव अभिप्रेत है, ऐसा ज्ञात होता है। पुनः औडुलोमिके पक्षमें तो संसारदशाकी अपेक्षासे भेद और मोक्षावस्थाकी अपेक्षासे अभेद स्पष्ट प्रतीत होता है। उन सब मतोंमें आचार्य काशकृत्स्नका मत श्रुति अनुरूप ज्ञात होता है, क्योंकि 'तत्त्वमसि' इत्यादि श्रुतियों से प्रतिपादनके अभीष्ट अर्थके अनुसार है। श्रुति अनुरूप होनेसे उसके ज्ञानसे अमृतत्व हो सकता है। यदि जीवको ब्रह्मका विकारात्मक स्वीकार किया जाय तो प्रकृतिके साथ सम्बन्ध होनेपर विकारका लय प्रसङ्ग हो जानेसे उसके ज्ञानसे अमृतत्व

### सत्यानन्दी-दीपिका

* परन्तु यह मत असंगत है, क्योंकि सत्य कार्य करण संघातवाला जीव यदि ब्रह्मसे अत्यन्त भिन्न है तो मुक्तिमें उसका ब्रह्मके साथ अभेद अनुपपन्न है, इस अरुचिसे 'अवस्थितेरिति' आदि सूत्र कहते हैं। आश्मरथ्य आचार्यके मतमें अग्नि और विस्फुलिङ्गोंकी तरह जीवकी परमात्मासे उत्पत्ति होनेके कारण जीव और ब्रह्मका भेद सत्य है। भेद अंशको लेकर दोनोंमें कार्यकारण भाव है। 'प्रतिज्ञासिद्धेः' 'एकके विज्ञानसे सबका ज्ञान हो जाता है, इस प्रतिज्ञाकी सिद्धिमें अभेद अंशको लेकर यह जीविका उपक्रम है।

* यद्यपि 'यथाग्नेः क्षुद्राविस्फुलिङ्गा व्युच्चरन्त्येवमेवास्मादात्मनः सर्वे प्राणाः' ( जैसे अग्निसे छोटी-छोटी चिनगारियां निकलती हैं, वैसे ही इस आत्मासे प्राण उत्पन्न होते हैं ) इत्यादि श्रुतिसे

व्याख्याताः' (ब्र० सू० १।४।२८) इति च पूर्वत्रापि सांख्यादिपक्षप्रतिक्षेपः कृतः, किं पुनः कृतकरणेनेति ? * तदुच्यते—सांख्यादयः स्वपक्षस्थापनाय वेदान्तवाक्यान्यप्युदाहृत्य स्वपक्षानुगुण्येनैव योजयन्तो व्याचक्षते, तेषां यद्व्याख्यानं तद्व्याख्यानाभासं न सम्यग्व्याख्यानमित्येतावत्पूर्वं कृतम्, इह तु वाक्यनिरपेक्षः स्वतन्त्रस्तद्युक्तिप्रतिषेधः क्रियत इत्येष विशेषः। तत्र सांख्या मन्यन्ते—यथा घटशरावादयो भेदा मृदात्मनाऽन्वीयमाना मृदात्मकसामान्यपूर्वका लोके दृष्टाः, तथा सर्व एव बाह्याध्यात्मिका भेदाः सुखदुःखमोहात्म-

---

हुएको करनेसे क्या लाभ ? इसपर कहते हैं—सांख्यादि अपने पक्षकी स्थापना करनेके लिए वेदान्त-वाक्योंका उदाहरण देकर स्वपक्षके अनुसार ही उनकी योजना करते हुए व्याख्यान करते हैं, उनका जो व्याख्यान है, वह व्याख्यानाभास है, सम्यग्व्याख्यान नहीं है। इतना ही पूर्व प्रतिपादन किया गया है। इस पादमें तो वेदान्तवाक्योंकी अपेक्षा न रखते हुए स्वतन्त्ररूपसे उनकी युक्तियोंका प्रतिषेध किया जाता है, यही विशेष है। यहाँ सांख्य ऐसा मानते हैं—जैसे लोकमें घट शराव आदि कार्य मृत्तिकारूपसे अन्वित होते हुए मृत्तिकारूप सामान्य कारण पूर्वक देखे जाते हैं, वैसे ही सब बाह्य और आध्यात्मिक कार्य सुखदुःखमोहरूप से अन्वित होते हुए सुखदुःखमोहरूप सामान्य कारण पूर्वक होने चाहिए। जो

### सत्यानन्दी-दीपिका

युक्तियोंद्वारा परपक्षका खण्डन किया जाता है। इस शास्त्रके आरम्भका मुख्य प्रयोजन तत्त्वनिर्णय है उसकी सिद्धि तब तक नहीं हो सकती जब तक परमतमें भ्रान्ति मूलकता सिद्ध न हो, उसकी सिद्धि अपने सिद्धान्तके संरक्षण और ब्रह्मकी सिद्धिसे हो सकती है। तत्त्वनिर्णयके लिए परपक्षका खण्डन द्वेष नहीं है। भ्रान्तिमूलक मार्गका अनुसरण करनेवाले मन्दबुद्धिवालोंको वहांसे हटाकर यथार्थ मार्ग पर लाना ही वास्तवमें परहित है। अतः भ्रान्ति मूलक परपक्षका खण्डन करना युक्त है।

* पूर्वपाद और इस पादमें अर्थके भेद होनेसे पुनरुक्ति नहीं है। अचेतन प्रधान जगत्का उपादानकारण है यह सांख्यसिद्धान्त इस अधिकरणका विषय है। वह प्रमाण मूलक है वा भ्रान्ति-मूलक ? ऐसा सन्देह उपस्थित होनेपर 'सर्वधर्मोपपत्तेश्च' इस सूत्रमें प्रतिपादित सब धर्मोंका प्रधानमें सम्भव है, अतः प्रधान ही जगत्का उपादानकारण है। इस प्रकार आक्षेपसंगतिसे सांख्यसिद्धान्त प्रमाण मूलक है, ऐसा दिखाते हुए 'तत्र सांख्या' इत्यादिसे पूर्वपक्ष करते हैं। इस पादके सब अधिकरण परमत निरासात्मक हैं, इसलिए सब अधिकरणोंकी पाद संगति है। पूर्वपक्षमें प्रमाणमूलक सांख्यके विरोधसे ब्रह्ममें श्रुति-समन्वयकी असिद्धि फल है और सिद्धान्तमें उसकी सिद्धि फल है, ऐसा, पाद समाप्ति तक समझना चाहिए। जो कार्य स्थूलतासे लेकर सूक्ष्मता पर्यन्त जिससे अन्वित-सम्बद्ध होते हैं, वे तत्, तत् उपादानकारणवाले होते हैं, यह व्याप्ति है। कारणमें सुखात्मकता सत्त्व, दुःखात्मकता रज और मोहात्मकता तमोगुणसे है, इसलिए कारण त्रिगुणात्मक है। अतएव प्रत्येक भाव कार्य भी त्रिगुणात्मक है। मृत्सुवर्ण आदिके समान प्रधान अचेतन है, चेतन पुरुषके भोग और मोक्षरूप पुरुषार्थ सिद्धिके लिए स्वभावसे महदादि विचित्र कार्यरूपसे प्रवृत्त होता है। जैसे कि 'पुरुषार्थ एव हेतुर्न केनचित्कार्यते करणम्' ( सां० का० ३१ ) ( इसकी प्रवृत्तिमें पुरुषका भोग और मोक्षरूप पुरुषार्थ ही कारण है, किसी अन्य चेतनसे प्रेरित नहीं होता ) किञ्च 'भेदानां परिमाणात्समन्वयाच्छक्तितः प्रवृत्तेश्च। कारणकार्यविभागादविभागाद्वैश्वरूप्यस्य' ॥ ( सां० का० १५ ) ( विकारोंके परिमाणसे, समन्वयसे, शक्तिकी प्रवृत्तिसे और कारणसे विचित्र कार्यके विभाग और अविभागसे प्रधान सिद्ध होता है ) इस कारिकामें समन्वय लिङ्गका तो व्याख्यान किया गया है। दूसरा हेतु—'क्षित्यादीनां भेदानां कारणमव्यक्तमस्ति परिमितत्वात् घटवत्' 'पृथिवी आदि विकारोंका कारण अव्यक्त है, क्योंकि वे घट आदिके समान परिमित हैं।' जैसे घटादि कार्योंकी मृत्तिकारूप कारणशक्तिसे

तयाऽन्वीयमानाः सुखदुःखमोहात्मकसामान्यपूर्वका भवितुमर्हन्ति। यत्सुखदुःखमोहात्मकं सामान्यं तत्त्रिगुणं प्रधानं मृद्वदचेतनं चेतनस्य पुरुषस्यार्थं साधयितुं स्वभावेनैव विचित्रेण विकारात्मना प्रवर्तत इति। तथा परिमाणादिभिरपि लिङ्गैस्तदेव प्रधानमनुमिमते। * तत्र वदामः—यदि दृष्टान्तबलेनैवैतन्निरूप्येत, नाचेतनं लोके चेतनानधिष्ठितं स्वतन्त्रं किंचिद्विशिष्टपुरुषार्थनिर्वर्तनसमर्थान्विकारान्विरचयद्दृष्टम्। गेहप्रासादशयनासनविहारभूम्यादयो हि लोके प्रज्ञावद्भिः शिल्पिभिर्यथाकालं सुखदुःखप्राप्तिपरिहारयोग्या रचिता दृश्यन्ते। तथेदं जगदखिलं पृथिव्यादि नानाकर्मफलोपभोगयोग्यं बाह्यम्, आध्यात्मिकं च शरीरादि नानाजात्यन्वितं प्रतिनियतावयवविन्यासमनेककर्मफलानुभवाधिष्ठानं दृश्यमानं प्रज्ञावद्भिः संभाविततमैः शिल्पिभिर्मनसाप्यालोचयितुमशक्यं सत् कथमचेतनं प्रधानं रचयेत्? लोष्टपाषाणादिष्वदृष्टत्वात्। मृदादिष्वपि कुम्भकाराद्यधिष्ठितेषु विशिष्टाकारा रचना दृश्यते, तद्वत्प्रधानस्यापि चेतनान्तराधिष्ठितत्वप्रसङ्गः। नच मृदाद्युपादानस्वरूपव्यपाश्रयेणैव धर्मेण मूलकारणमवधारणीयं न

---

सुख दुःखमोहात्मक सामान्य ( कारण ) है वह त्रिगुणात्मक प्रधान मृत्तिकाके समान अचेतन चेतन पुरुषके भोग और मोक्षरूप प्रयोजनको सिद्ध करनेके लिए स्वभावसे ही विचित्र विकाररूपसे प्रवृत्त होता है। उसी प्रकार कार्यगत परिमाणादि लिङ्गोंसे भी उसी प्रधानका वे अनुमान करते हैं। उसपर हम कहते हैं—यदि दृष्टान्तके बलसे ही यह निरूपण करें, तो लोकमें चेतनसे अनधिष्ठित स्वतन्त्ररूपसे अचेतन विशिष्ट पुरुषार्थके संपादन करनेमें समर्थ विकारोंकी रचना करता हुआ नहीं देखा जाता। लोकमें गृह, महल, शयन, आसन, विहारभूमि आदि समयके अनुसार बुद्धिमान् शिल्पियों द्वारा सुख प्राप्ति और दुःख परिहारके योग्य रचे गये देखे जाते हैं, वैसे भिन्न-भिन्न कर्मफलके उपभोग योग्य पृथिव्यादि यह सम्पूर्ण बाह्य जगत् और अनेक प्रकारकी जातियोंसे सम्बद्ध असाधारण अवयवोंसे युक्त अनेक कर्मफलोंके अनुभवका आश्रय दृश्यमान शरीर आदि आध्यात्मिक जगत्, जिसकी आलोचना बड़े-बड़े बुद्धिमान् शिल्पियों द्वारा मनसे भी नहीं की जा सकती, उसकी रचना अचेतन प्रधान कैसे कर सकता है? क्योंकि अचेतन लोष्ट, पाषाण आदिमें नहीं देखा जाता है, किन्तु कुलाल आदिसे अधिष्ठित मृत्तिका आदिमें विशिष्ट आकार रचना देखी जाती है। इस प्रकार प्रधानको भी अन्य चेतनसे अधिष्ठित मानना पड़ेगा। मृत्तिका आदि उपादान स्वरूपके व्यपाश्रित धर्मसे ही मूल-

## सत्यानन्दी-दीपिका

प्रवृत्ति होती है, वैसे महद् आदि विकारोंकी भी कारण शक्तिसे प्रवृत्ति कहना चाहिए, वह शक्ति युक्त कारण प्रधान है। कारणसे विचित्र कार्यकी उत्पत्ति देखी जाती है, जैसे मृत्तिकासे घटादिकी, यह विभाग है और उत्पत्तिके विपरीत कारणमें कार्यके लीन होनेका नाम अविभाग है, यथा घट मृत्तिकामें, मृत्तिका पृथिवीमें, पृथिवी जलमें लीन होती है, इत्यादि हेतुओंसे प्रधानका अनुमान होता है। इस प्रकार अव्यक्त प्रधान जगत्का उपादानकारण सिद्ध होता है।

* सिद्धान्ती—क्या इन अनुमानोंसे जगत्का उपादानकारण अचेतन सिद्ध करते हो अथवा स्वतन्त्र अचेतन? प्रथम पक्षमें तो सिद्ध साधन दोष है, क्योंकि ईश्वरसे अधिष्ठित अनादि त्रिगुणात्मक मायाको जगत्का उपादान हम भी स्वीकार करते हैं। द्वितीय पक्षका ग्रहण करें तो घट आदि दृष्टान्तोंमें साध्य अप्रसिद्ध है, क्योंकि मृत्तिका आदि चेतनोंसे अधिष्ठित होकर घट आदि कार्योंके उपादान होते हैं। यह नियम कार्य जगत्में भी है। 'जगत् चेतनानधिष्ठिताचेतनप्रकृतिकं समन्वयात् मृदादिवत्।' ( यह जगत् चेतनसे अनधिष्ठित अचेतन प्रकृतिक है, क्योंकि समन्वय है जैसे मृदादि ) इस पूर्वपक्षीके अनुमानमें समन्वयरूप हेतु साध्यके अभावका साधक होनेसे विरुद्ध हेतु है अर्थात् मृत्सुवर्ण आदि दृष्टान्तोंमें यह हेतु चेतनसे अनधिष्ठित नहीं किन्तु कुलालादि चेतनोंसे अधिष्ठित अचेतन कारणत्व सिद्ध करता है,

बाह्यकुम्भकारादिव्यपाश्रयेणेति किंचिन्नियामकमस्ति। न चैवं सति किंचिद्विरुध्यते, प्रत्युत श्रुतिरनुगृह्यते, चेतनकारणसमर्पणात्। अतो रचनानुपपत्तेश्च हेतोर्नाचेतनं जगत्कारणमनुमातव्यं भवति। अन्वयाद्यनुपपत्तेश्चेति चशब्देन हेतोरसिद्धिं समुच्चिनोति। *न हि बाह्याध्यात्मिकानां भेदानां सुखदुःखमोहात्मकतयान्वय उपपद्यते, सुखादीनां चान्तरत्वप्रतीतेः, शब्दादीनां चातद्रूपत्वप्रतीतेः। तन्निमित्तत्वप्रतीतेश्च, शब्दाद्यविशेषेऽपि च भावनाविशेषात्सुखादिविशेषोपलब्धेः। तथा परिमितानां भेदानां मूलाङ्कुरादीनां संसर्गपूर्वकत्वं दृष्ट्वा बाह्याध्यात्मिकानां भेदानां परिमितत्वात्संसर्गपूर्वकत्वमनुमिमानस्य सत्त्वरजस्त-

---

कारणका निश्चय करना चाहिए और बाह्य कुलालादिके व्यपाश्रित धर्मसे नहीं करना चाहिए, ऐसा कोई नियामक नहीं है। ऐसा होनेपर कुछ विरुद्ध नहीं है, प्रत्युत श्रुति अनुगृहीत होती है, क्योंकि वह चेतनमें कारणत्व समर्पण ( वर्णन ) करती है। अतएव रचनानुपपत्तिरूप हेतुसे अचेतन जगत्का कारण है, ऐसा अनुमान करना उचित नहीं है, और 'अन्वयाद्यनुपपत्तेश्च' अन्वयादिकी अनुपपत्ति होनेसे, इस हेतुकी असिद्धि ( स्वरूपासिद्धि ) का भी 'च' शब्दसे समुच्चय करते हैं। बाह्य और आध्यात्मिक विकारोंका सुखदुःख मोहात्मकताके साथ अन्वय उपपन्न नहीं होता, क्योंकि सुखादि आन्तर प्रतीत होते हैं और शब्दादि अतद्रूप-बाह्य प्रतीत होते हैं और सुखादिके निमित्तरूपसे प्रतीत होते हैं, शब्दादिके विशेष न होनेपर भी भावनाविशेषसे सुख आदि विशेषकी उपलब्धि होती है। इसीप्रकार मूलाङ्कुरादि परिमित विकारोंको संसर्ग पूर्वक देखकर बाह्य और आध्यात्मिक विकार परिमित होनेसे संसर्ग पूर्वक हैं ऐसा अनुमान करनेवालेको सत्त्व, रज और तम भी संसर्ग

## सत्यानन्दी-दीपिका

अतः व्यभिचारी है। दूसरा दोष यह है कि साध्य सिद्धिके लिये दृष्टान्त भी नहीं है, क्योंकि घटादि तो चेतनसे अधिष्ठित अचेतन प्रकृतिवाले हैं, अतः जगद्रूप पक्षमें साध्य सिद्ध नहीं हो सकता, इससे इस अनुमानमें साध्य अप्रसिद्ध दोष भी है। सत्प्रतिपक्ष दोष भी है, क्योंकि पूर्वपक्ष कृत साध्याभावका साधक अन्य हेतु भी है—जैसे 'विचित्ररचनात्मकं कार्यं ( जगत् ) चेतनाधिष्ठिताचेतनप्रकृतिकं कार्यत्वात् गृहादिवत्' 'यह विचित्र कार्य जगत् चेतनसे अधिष्ठित अचेतन प्रकृतिवाला है, क्योंकि गृह आदिके समान यह कार्य है।' यदि इसमें सांख्यवादी कहे कि 'रचनानुपपत्तेः' हेतुसे प्रधान सिद्ध होता है। यदि अचेतनको जगत्का कारण नहीं मानें, तो जगत्में विचित्रता सिद्ध नहीं होगी, क्योंकि चेतन एक रस है। विचित्ररचना अनुपपन्न न हो इसलिए अचेतन प्रधान जगत्का कारण मानना चाहिए। परन्तु 'रचनानुपपत्तेः' यह हेतु भी विरुद्ध हैं, क्योंकि गृह आदिमें विचित्रता चेतन बुद्धिमान् शिल्पियों द्वारा उपलब्ध है अचेतनसे नहीं, समन्वयरूप हेतु जगद्रूप पक्षमें न रहनेसे स्वरूपासिद्धि दोष ग्रस्त है, कारण कि जगत् सुख दुःख, मोहसे अन्वित नहीं है, सुखादि आन्तर और आध्यात्मिक हैं जब कि जगत् बाह्य है।

* यदि चन्दन आदि बाह्य पदार्थ स्वभावसे सुखादिरूप होते, तो ग्रीष्म ऋतुके समान हेमऋतुमें भी सुखकर होते, कुसुम हेमऋतुके समान ग्रीष्मऋतुमें भी सुखकर होता, कण्टक उष्ट्रके लिए सुखकर है इसलिए मनुष्यादिके लिए भी हो, यह नियम नहीं है। इस विषयमें नैषधकार श्रीहर्ष का यह श्लोक बिल्कुल उपयुक्त है—

क्रमेलकं निन्दति कोमलेच्छुः क्रमेलकः कण्टकलम्पटस्तम्।
प्रीतौ तयोरिष्टभुजोः समायां मध्यस्थता नैकतरोपहासः' ॥ (नैष० ६।१०४)

( मृदु वस्तु अभिलाषी पुरुष कठिन कण्टक भक्षी उष्ट्रकी निन्दा करता है, कण्टकाशी उष्ट्र मृदु आदिकी निन्दा करता है। अपनी-अपनी इष्ट वस्तुके भक्षणमें दोनोंकी प्रीति समान है, किसीका

मसामपि संसर्गपूर्वकत्वप्रसङ्गः, परिमितत्वाविशेषात्। कार्यकारणभावस्तु प्रेक्षापूर्वकनिर्मितानां शयनासनादीनां दृष्ट इति न कार्यकारणभावाद्बाह्याध्यात्मिकानां भेदानामचेतनपूर्वकत्वं शक्यं कल्पयितुम् ॥ १ ॥

## प्रवृत्तेश्च ॥२॥

पदच्छेद—प्रवृत्तेः, च।

सूत्रार्थ—अचेतन प्रधानकी साम्यावस्थाकी प्रच्युतिरूप प्रवृत्ति चेतनके विना उपपन्न नहीं हो सकती, इसलिए भी प्रधान जगत्का कारण नहीं हो सकता।

ॐ अस्तां तावदियं रचना। तत्सिद्ध्यर्था या प्रवृत्तिः साम्यावस्थानात्प्रच्युतिः सत्त्वरजस्तमसामङ्गाङ्गिभावरूपापत्तिर्विशिष्टकार्याभिमुखप्रवृत्तिता, सापि नाचेतनस्य प्रधानस्य स्वतन्त्रस्योपपद्यते, मृदादिष्वदर्शनाद्रथादिषु च। नहि मृदादयो रथादयो वा स्वयमचेतनाः सन्तश्चेतनैः कुलालादिभिरश्वादिभिर्वानधिष्ठिता विशिष्टकार्याभिमुखप्रवृत्तयो दृश्यन्ते, दृष्टाच्चादृष्टसिद्धिः। अतः प्रवृत्त्यनुपपत्तेरपि हेतोर्नाचेतनं जगत्कारणमनुमातव्यं भवति।

---

पूर्वक मानने पड़ेंगे, क्योंकि उनमें भी परिमितत्व समान है। प्रेक्षा ( बुद्धि ) पूर्वक निर्मित शयन, आसन आदिका कार्य-कारणभाव देखा गया है, अतः कार्यकारणभाव होनेसे बाह्य और आध्यात्मिक विकारोंमें अचेतन पूर्वकत्वकी कल्पना नहीं की जा सकती है ॥ १ ॥

इस विचित्र रचनाको रहने दो, उस रचनाकी सिद्धिके लिए जो प्रधानकी साम्यावस्थासे प्रच्युतिरूप प्रवृत्ति अर्थात् सत्त्व, रज और तम इन तीनों गुणोंके अङ्गाङ्गिभावकी आपत्ति ( प्राप्तिरूप ) विशेष कार्यके संपादनके लिए जो प्रवृत्तिता है वह भी स्वतन्त्र अचेतन प्रधानकी नहीं हो सकती, क्योंकि मृत्तिका आदि और रथ आदि में स्वतन्त्र प्रवृत्ति नहीं देखी जाती। मृत्तिका आदि अथवा रथ आदि स्वयं अचेतन होते हुए चेतन कुलाल आदि अथवा अश्व आदिसे अनधिष्ठित होकर विशिष्ट कार्यके अभिमुख प्रवृत्तिवाले नहीं देखे जाते, और दृष्टसे अदृष्टकी सिद्धि होती है। इसलिए 'प्रवृत्त्यनुपपत्तेः' प्रवृत्तिकी अनुपपत्तिरूप हेतुसे भी अचेतन जगत्का कारण अनुमातव्य नहीं है। परन्तु केवल

### सत्यानन्दी-दीपिका

उपहास करना ठीक नहीं, किन्तु मध्यस्थता ठीक है ) इसलिए कोई भी वस्तु सुखादिरूप नहीं है। असुख आदिरूप होते हुए भी चन्दन आदि जाति, काल और अवस्था आदिसे सुख आदिके हेतु देखे जाते हैं। शब्दादि विषय एक होनेपर भी पुरुष वासनाके वैचित्र्यसे उसमें किसीको सुख बुद्धि, किसीको दुःख बुद्धि और किसीको मोह बुद्धि होती है। इस प्रकार 'समन्वयात्' इस हेतुको दूषितकर अब 'परिमाणात्' आदि हेतुओंको 'तथा' इत्यादिसे दूषित करते हैं। प्रधानवादीका यह अनुमान है—'जगत् संसर्गपूर्वकं परिमाणात् घटादिवत्' ( यह जगत् कारण सम्बन्धपूर्वक है, क्योंकि घटादिके समान परिमित है )। 'जो जो परिमित होता है वह वह संसर्ग पूर्वक होता है' 'यह व्याप्ति है', परन्तु इस व्याप्तिका सत्त्व आदि गुणोंमें व्यभिचार है, क्योंकि उनमें परिमितत्व हेतु तो है किन्तु साध्य नहीं है, कारण कि वे नित्य और निरवयव हैं, अतः व्यभिचारी हेतुसे जगत्में कारण संसर्गपूर्वकत्व साध्य सिद्ध नहीं हो सकता। सदृशोंमें ही कार्यकारणभाव होता है विकार अचेतनप्रकृतिक होते हैं, इस नियमका 'न विलक्षणत्वात्' ( ब्र० सू० २।१।४ ) इस सूत्रमें निराकरण किया गया है। चेतनाधिष्ठित अचेतन प्रकृतिकत्वका ग्रहण करनेसे भी सादृश्य बन सकता है। इसप्रकार कारिकागत 'शक्तितः प्रवृत्तेश्च' इस हेतुका भी चेतनाधिष्ठित कारण शक्तिसे कार्यका संभव हो सकता है, तो केवल कारण शक्तिसे कार्यकी प्रवृत्ति होती है, यह हेतु अन्यथासिद्ध है ॥ १ ॥

ॐ अचेतन प्रधान स्वतन्त्ररूपसे जगत्का कारण है, ऐसा अनुमान नहीं करना चाहिए

ननु चेतनस्यापि प्रवृत्तिः केवलस्य न दृष्टा, सत्यमेतत्? तथापि चेतनसंयुक्तस्य रथादेरचेतनस्य प्रवृत्तिर्दृष्टा, न त्वचेतनसंयुक्तस्य चेतनस्य प्रवृत्तिर्दृष्टा। किं पुनरत्र युक्तम्? यस्मिन्प्रवृत्तिर्दृष्टा तस्य सा, उत यत्संप्रयुक्तस्य दृष्टा तस्य सेति? ननु यस्मिन्दृश्यते प्रवृत्तिस्तस्यैव सेति युक्तम्, उभयोः प्रत्यक्षत्वात्। ननु प्रवृत्त्याश्रयत्वेन केवलश्चेतनो रथादिवत्प्रत्यक्षः। प्रवृत्त्याश्रयदेहादिसंयुक्तस्यैव तु चेतनस्य सद्भावसिद्धिः—केवलाचेतनरथादिवैलक्षण्यं जीवद्देहस्य दृष्टमिति। अत एव च प्रत्यक्षे देहे सति दर्शनादसति चादर्शनाद्देहस्यैव चैतन्यमपीति लौकायतिकाः प्रतिपन्नाः। तस्मादचेतनस्यैव प्रवृत्तिरिति। तदभिधीयते—न ब्रूमो यस्मिन्नचेतने प्रवृत्तिर्दृश्यते न तस्य सेति। भवतु तस्यैव सा। सा तु चेतनाद्भवतीति ब्रूमः, तद्भावे भावात्तदभावे चाभावात्, यथा काष्ठादिव्यपाश्रयापि दाहप्रकाशलक्षणा विक्रियाऽनुपलभ्यमानापि च केवले ज्वलने ज्वलनादेव भवति, तत्संयोगे दर्शनात्तद्वियोगे चादर्शनात्, तद्वत्। लौकायतिकानामपि चेतन एव देहोऽचेतनानां रथादीनां प्रवर्तको दृष्ट इत्यविप्रतिषिद्धं चेतनस्य प्रवर्तकत्वम्।

---

चेतनमें भी प्रवृत्ति नहीं देखी गई है? यह ठीक है, तो भी चेतन संयुक्त अचेतन रथ आदिकी प्रवृत्ति देखी जाती है। अचेतन संयुक्त चेतनकी भी तो प्रवृत्ति नहीं देखी जाती, तो इन दोनोंमें कौन युक्ति युक्त है? जिसमें प्रवृत्ति देखा जाती है उसकी वह प्रवृत्ति है अथवा जिसके संसर्गसे अचेतनमें प्रवृत्ति देखी जाती है उसकी है? पूर्वपक्षी—जिसमें प्रवृत्ति देखी जाती है वह उसकी है, ऐसा युक्त है, क्योंकि प्रवृत्ति और उसका आश्रय दोनों प्रत्यक्ष हैं। परन्तु केवल चेतन रथादिके समान प्रवृत्तिके आश्रयरूपसे प्रत्यक्ष नहीं है, किन्तु प्रवृत्तिके आश्रयभूत देहादिसे संयुक्त होकर ही चेतनके सद्भाव (अस्तित्व) की सिद्धि होती है, क्योंकि जीवित देहमें केवल अचेतन रथादिसे वैलक्षण्य देखा जाता है। अतएव देहके प्रत्यक्ष होनेपर चैतन्य दिखाई देता है और देहके प्रत्यक्ष न होनेपर चैतन्य दिखाई नहीं देता, इससे देह ही चेतन है, ऐसा लौकायितक (चार्वाक) मानते हैं। इसलिए अचेतनकी ही प्रवृत्ति है।

सिद्धान्ती—इसपर कहते हैं—हम यह नहीं कहते हैं कि जो अचेतनमें प्रवृत्ति देखी जाती है वह उसकी नहीं है, वह उसीकी हो, परन्तु वह तो चेतनसे होती है, ऐसा हम कहते हैं, क्योंकि चेतनके होनेपर उसका अस्तित्व है और चेतनके अभावमें अभाव है, जैसे काष्ठ आदिके आश्रित दाह और प्रकाशरूप विक्रिया केवल अग्निमें उपलभ्यमान न होनेपर भी अग्नि से ही होती है, क्योंकि काष्ठ आदिसे अग्निका संयोग होनेपर वह दिखाई देती है और वियोग होनेपर नहीं दिखाई देती, वैसे ही चेतनके साथ संयोग होनेपर शरीर आदिमें प्रवृत्ति देखी जाती है और उसके अभावमें नहीं देखी जाती। चार्वाकोंके मतमें भी चेतन देह ही अचेतन रथ आदिका प्रवर्तक माना गया है। इसलिए चेतनके प्रवर्तक होनेमें कोई विरोध नहीं है। ऐसा यदि कहो कि तुम्हारे मतमें देहादिसे

### सत्यानन्दी-दीपिका

क्योंकि सृष्टिके लिए उसमें प्रवृत्ति उपपन्न नहीं होती है। इसप्रकार सूत्रस्थ 'च' शब्दसे इस सूत्रमें पूर्वसूत्रसे 'अनुपपत्तेः' पदकी अनुवृत्तिकर सूत्रकी योजना करनी चाहिए अर्थात् 'प्रवृत्तेश्चानुपपत्तेर्नानुमानं कारणम्' (प्रवृत्तिकी अनुपपत्ति होनेसे अनुमान—प्रधान कारण नहीं है) ऐसी सूत्रकी योजना है। गुणोंकी साम्यावस्था ही महद् आदि तत्त्वोंका प्रलय है, उसमें कोई कार्य नहीं होता। सृष्टिके आरम्भमें गुणोंकी साम्यावस्थाकी प्रच्युतिरूप विषमता होती है। इन तीनों गुणोंमें जो गुण कार्योन्मुख होता है, वह प्रधान-अङ्गी है, शेष दो गुण उसके अङ्ग होकर रहते हैं, इसप्रकार अङ्गाङ्गिभाव होता है। ऐसा होनेपर महद्, अहंकार आदिमें कार्योत्पादनरूप प्रवृत्ति होती है। उससे ही यह देव, मनुष्य, पशु, पक्षी आदि शरीरोंका परस्पर विलक्षण अवयव विन्यास होता है, यही रचना है, यह सांख्योंकी प्रक्रिया है। सिद्धान्ती—'गुणानां प्रवृत्तिः चेतनाधिष्ठानपूर्विका प्रवृत्तित्वात् रथादिप्रवृत्तिवत्' (गुणोंकी

* ननु तव देहादिसंयुक्तस्याप्यात्मनो विज्ञानस्वरूपमात्रव्यतिरेकेण प्रवृत्त्यनुपपत्तेरनुपपन्नं प्रवर्तकत्वमिति चेत्—न,अयस्कान्तवद्रूपादिवच्च प्रवृत्तिरहितस्यापि प्रवर्तकत्वोपपत्तेः। यथाऽयस्कान्तो मणिः स्वयं प्रवृत्तिरहितोऽप्ययसः प्रवर्तको भवति, यथा वा रूपादयो विषयाः स्वयं प्रवृत्तिरहिता अपि चक्षुरादीनां प्रवर्तका भवन्ति। एवं प्रवृत्तिरहितोऽपीश्वरः सर्वगतः सर्वात्मा सर्वज्ञः सर्वशक्तिश्च सन् सर्वं प्रवर्तयेदित्युपपन्नम्। एकत्वात्प्रवर्त्याभावे प्रवर्तकत्वानुपपत्तिरिति चेत् न, अविद्याप्रत्युपस्थापितनामरूपमायावेशवशेनासकृत्प्रत्युक्तत्वात्। तस्मात्संभवति प्रवृत्तिः सर्वज्ञकारणत्वे, न त्वचेतनकारणत्वे ॥२॥

## पयोम्बुवच्चेत्तत्रापि ॥३॥

पदच्छेद—पयोम्बुवत्, चेत्, तत्र, अपि।

सूत्रार्थ—(पयोम्बुवत्) जैसे दूध बछड़ेके पोषणके लिए स्वयं प्रवृत्त होता है, और जल स्वयं बहता है, वैसे प्रधान भी स्वयं प्रवृत्त होता है। (चेत्) ऐसा यदि कहो तो (तत्रापि) उनमें भी चेतनसे अधिष्ठित प्रवृत्ति है, क्योंकि 'योऽप्सु तिष्ठन्' इत्यादि श्रुतियाँ हैं, अतः प्रधान जगत्का कारण नहीं है।

---

संयुक्त भी आत्माके विज्ञानस्वरूपमात्रसे अतिरिक्त प्रवृत्तिकी अनुपपत्ति होनेसे प्रवर्तकत्व अनुपपन्न है, तो यह युक्त नहीं है, क्योंकि अयस्कान्तमणि (लोहचुम्बक) और रूपादिके समान प्रवृत्ति रहित वस्तुमें भी प्रवर्तकत्व हो सकता है। जैसे अयस्कान्तमणि स्वयं प्रवृत्ति रहित होता हुआ भी लोहका प्रवर्तक होता है, अथवा जैसे रूपादि विषय स्वयं प्रवृत्ति रहित होते हुए भी चक्षु आदिके प्रवर्तक होते हैं। वैसे ही प्रवृत्ति रहित होता हुआ भी ईश्वर सर्वगत, सर्वात्मा, सर्वज्ञ, सर्वशक्तिमान् होकर सबको प्रवृत्त करे, यह युक्त है। यदि कहो कि एकत्वके कारण प्रवर्त्यके न होनेपर प्रवर्तकत्व अनुपपन्न है, तो यह युक्त नहीं है, क्योंकि अविद्यासे प्रत्युपस्थापित नाम रूपात्मक मायाके आवेशके बलसे [ चेतनमें ईश्वर भाव और प्रवर्त्य-प्रवर्तकभाव उपपन्न है ] ऐसा अनेक वार निराकरण किया गया है। इसलिए सर्वज्ञको कारण माननेपर प्रवृत्ति संभव है किन्तु अचेतनको कारण माननेमें नहीं ॥ २ ॥

### सत्यानन्दी-दीपिका

प्रवृत्ति चेतनाधिष्ठानपूर्वक होती है, क्योंकि रथादि प्रवृत्तिके समान यह भी प्रवृत्ति है ) दृष्टके अनुसार ही अदृष्टकी कल्पना की जाती है। अनुमानकी शरण लेनेवालेको दृष्टान्तके बिना अतीन्द्रियार्थकी सिद्धि नहीं हो सकती। परन्तु 'जीवद्देहः सात्मकः प्राणादिमत्त्वात् यन्नैवं तन्नैवं रथादिवत्' ( जीवित देह आत्मासे युक्त है, क्योंकि उसमें प्राण आदि हैं, व्यतिरेक दृष्टान्त रथादि हैं ) इससे चेतनकी सिद्धि होती है। परन्तु वह प्रवर्तक है यह सिद्ध नहीं होता, इसलिए अन्वय-व्यतिरेकसे जीवित देह ही आत्मा है, यह चार्वाकका मत है। इसलिए अचेतनकी प्रवृत्ति है।

* 'यः प्रवर्तकः स स्वयं प्रवृत्तिमान् अश्वादिवत्' (जो प्रवर्तक है वह स्वरूपसे प्रवृत्तिमान् है जैसे अश्वादि) इस प्रकार व्याप्तिके होनेसे आत्मामें व्यापक प्रवृत्तिमत्त्वके न होनेसे व्याप्य प्रवर्तकत्व भी नहीं है अर्थात् आत्मा प्रवृत्ति रहित होनेसे प्रवर्तक नहीं है, अतः अचेतन को प्रवृत्ति चेतनसे नहीं है किन्तु अपनी है। सि०—जो प्रवर्तक होता है वह प्रवृत्तियुक्त होता है, इस व्याप्तिका अयस्कान्तमणि आदिमें व्यभिचार है, अतः उक्त व्याप्ति अयुक्त है। परन्तु जिनके मतमें चेतनसे अतिरिक्त अधिष्ठाता ईश्वर माना जाता है उनके मतमें तो यह युक्त है कि चेतनसे अधिष्ठित होकर अचेतन प्रवृत्त होता है। परन्तु वेदान्तमतमें तो 'नान्योऽतोऽस्ति द्रष्टा' इत्यादि श्रुतियोंके आधारपर चेतनसे अतिरिक्त कुछ भी नहीं है। उस मतमें प्रवर्त्यके न होनेसे चेतनमें प्रवर्तकत्व कैसे हो सकता है? समाधान—उस मतमें अविद्यासे चेतनमें कल्पित द्वैतसे प्रवर्त्य प्रवर्तकभाव आदि सब उपपन्न होता है। अतः माया प्रवर्त्य है और सर्वज्ञ ईश्वर प्रवर्तक, इसप्रकार सर्वज्ञ ईश्वरको माननेसे सृष्ट्यात्मक प्रवृत्ति युक्त है ॥२॥

* स्यादेतत्—यथा क्षीरमचेतनं स्वभावेनैव वत्सविवृद्ध्यर्थं प्रवर्तते, यथा च जलमचेतनं स्वभावेनैव लोकोपकाराय स्यन्दते, एवं प्रधानमचेतनं स्वभावेनैव पुरुषार्थसिद्धये प्रवर्तिष्यत इति। नैतत्साधूच्यते, यतस्तत्रापि पयोम्बुनोश्चेतनाधिष्ठितयोरेव प्रवृत्तिरित्यनुमिमीमहे, उभयवादिप्रसिद्धे रथादावचेतने केवले प्रवृत्त्यदर्शनात्। शास्त्रं च 'योऽप्सु तिष्ठन् योऽपोऽन्तरो यमयति' (बृ० ३।७।४) 'एतस्य वा अक्षरस्य प्रशासने गार्गि प्राच्योऽन्या नद्यः स्यन्दन्ते' (बृ० ३।८।९) इत्येवंजातीयकं समस्तस्य लोकपरिस्पन्दितस्येश्वराधिष्ठिततां श्रावयति। तस्मात्साध्यपक्षनिक्षिप्तत्वात्पयोम्बुवदित्यनुपन्यासः, चेतनायाश्च धेन्वाः स्नेहेच्छया पयसः प्रवर्तकत्वोपपत्तेः, वत्सचोषणेन च पयस आकृष्यमाणत्वात्। न चाम्बुनोऽप्यत्यन्तमनपेक्षा, निम्नभूम्याद्यपेक्षत्वात्स्यन्दनस्य। चेतनापेक्षत्वं तु सर्वत्रोपदर्शितम्। 'उपसंहारदर्शनान्नेति चेन्न क्षीरवद्धि' (ब्र० सू० २।१।२४) इत्यत्र तु बाह्यनिमित्तनिरपेक्षमपि स्वाश्रयं कार्यं भवतीत्येतल्लोकदृष्ट्या निदर्शितम्। शास्त्रदृष्ट्या तु पुनः सर्वत्रैवेश्वरापेक्षत्वमापद्यमानं न पराणुद्यते ॥३॥

## व्यतिरेकानवस्थितेश्चानपेक्षत्वात् ॥४॥

पदच्छेद—व्यतिरेकानवस्थितेः, च, अनपेक्षत्वात्।

सूत्रार्थ—( व्यतिरेकानवस्थितेः ) प्रधानसे भिन्न कर्म आदि सहकारीके न होनेसे (च) और ( अनपेक्षत्वात् ) पुरुषके असंग आदि होनेके कारण प्रवृत्ति और निवृत्तिमें अपेक्षाका स्वीकार न होनेसे अचेतन प्रधान जगत्‌का कारण नहीं हो सकता।

सांख्यानां त्रयो गुणाः साम्येनावतिष्ठमानाः प्रधानम्, न तु तद्व्यतिरेकेण प्रधानस्य

---

पूर्वपक्षी—यह ठीक है, जैसे अचेतन दूध स्वभावसे ही बछड़ेकी विशेषवृद्धिके लिए प्रवृत्त होता है और जैसे अचेतन जल स्वभावसे ही लोगोंके उपकारके लिए बहता है, वैसे ही अचेतन प्रधान भी स्वभावसे ही पुरुषार्थ ( भोग और मोक्ष ) की सिद्धिके लिए प्रवृत्त होगा। सिद्धान्ती—यह ठीक नहीं कहा जाता, क्योंकि उनमें भी अर्थात् चेतनाधिष्ठित ही दूध और जलमें प्रवृत्ति है, ऐसा हम अनुमान करते हैं। कारण कि दोनों वादियों करके प्रसिद्ध चेतनसे अनधिष्ठित केवल अचेतन रथादिमें प्रवृत्ति नहीं दिखाई देती। 'योऽप्सु०' (जो जलमें रहता हुआ, जो जलके भीतर रहकर उसका नियमन करता है) 'एतस्य वा०' (हे गार्गी ! इस अक्षरके ही प्रशासनमें पूर्ववाहिनी एवं अन्य नदियाँ श्वेतपर्वतोंसे बहती हैं ) इस प्रकारका शास्त्र सम्पूर्ण लोककी क्रियाएँ ईश्वरसे अधिष्ठित हैं, ऐसा कहता है। इसलिए जिसमें साध्य सिद्ध किया जा रहा है उस पक्षकुक्षिनिक्षिप्त होनेसे 'पयोम्बुवत्' यह व्यभिचारस्थल नहीं है, क्योंकि चेतन गौ स्नेह-इच्छासे दूधकी प्रवर्तिका हो सकती है, बछड़ेके चोषणसे दूध खींचा जाता है। जलको भी किसीकी अपेक्षा नहीं है, ऐसा नहीं है, कारण कि उसकी वहनक्रिया को निम्नभूमि आदिकी अपेक्षा है। चेतनकी अपेक्षा तो सर्वत्र दिखलाई गई है। 'उपसंहारदर्शनान्नेति' इस सूत्रमें तो बाह्य निमित्तकी अपेक्षा किए विना भी स्वाश्रय कार्य होता है, यह लोक दृष्टिसे दिखलाया गया है। पुनः शास्त्रदृष्टिसे तो सर्वत्र ईश्वरकी प्राप्त अपेक्षाका वादीसे निराकरण नहीं किया जाता ॥३॥

सांख्योंके मतमें साम्यसे अवस्थित हुए तीन गुण प्रधान हैं। परन्तु उससे भिन्न प्रधानका प्रवर्तक अथवा निवर्तक कुछ बाह्य अपेक्ष्य अवस्थित नहीं है, पुरुष तो उदासीन है वह न प्रवर्तक है

### सत्यानन्दी-दीपिका

* 'अनादिजडस्य प्रवृत्तिः चेतनाधीना प्रवृत्तित्वात् रथादिप्रवृत्तिवत्' ('अनादि जड़की प्रवृत्ति चेतनके अधीन है, प्रवृत्ति होनेसे, रथादिकी प्रवृत्तिके समान') इस अनुमान और 'योऽप्सु तिष्ठन्' इस आगमसे साध्य सिद्ध होनेपर दूध और जलमें दिया हुआ व्यभिचार अयुक्त है। क्योंकि दूध और जल भी पक्षसम हैं, अतः जड़में स्वतन्त्र प्रवृत्ति नहीं होती है ॥ ३ ॥

प्रवर्तकं निवर्तकं वा किंचिद्बाह्यमपेक्ष्यमवस्थितमस्ति। पुरुषस्तुदासीनो न प्रवर्तको न निवर्तक इत्यतोऽनपेक्षं प्रधानम्, अनपेक्षत्वाच्च कदाचित्प्रधानं महदाद्याकारेण परिणमते कदाचिन्न परिणमत इत्येतदयुक्तम्। ईश्वरस्य तु सर्वज्ञत्वात्सर्वशक्तित्वान्महामायत्वाच्च प्रवृत्त्यप्रवृत्ती न विरुध्येते ॥४॥

अन्यत्राभावाच्च न तृणादिवत् ॥५॥

पदच्छेद—अन्यत्राभावात्, च, न, तृणादिवत्।

सूत्रार्थ—( च ) और (तृणादिवत्) तृण आदिके समान प्रधानका भी स्वभावसे ही परिणाम नहीं हो सकता, ( अन्यत्राभावात् ) क्योंकि अन्यत्र दूधरूपसे तृणादिके परिणामका अभाव है।

स्यादेतत्—यथा तृणपल्लवोदकादि निमित्तान्तरनिरपेक्षं स्वभावादेव क्षीराद्याकारेण परिणमते, एवं प्रधानमपि महदाद्याकारेण परिणंस्यत इति। कथं च निमित्तान्तरनिरपेक्षं तृणादीति गम्यते? निमित्तान्तरानुपलम्भात्। यदि हि किंचिन्निमित्तमुपलभेमहि, ततो यथाकामं तेन तृणाद्युपादाय क्षीरं संपादयेमहि, न तु संपादयामहे। तस्मात्स्वाभाविकस्तृणादेः परिणामः, तथा प्रधानस्यापि स्यादिति। अत्रोच्यते—भवेत्तृणादिवत्स्वाभाविकः प्रधानस्यापि परिणामः, यदि तृणादेरपि स्वाभाविकः परिणामोऽभ्युपगम्येत, न त्वभ्युपगम्यते, निमित्तान्तरोपलब्धेः। कथं निमित्तान्तरोपलब्धिः? अन्यत्राभावात्। धेन्वैवह्युपभुक्तं तृणादि क्षीरीभवति न प्रहीणमनडुहाद्युपभुक्तं वा। यदि हि निर्निमित्तमेतत्स्याद्धेनुशरीरसंबन्धादन्यत्रापि तृणादि क्षीरीभवेत्। न च यथाकामं मानुषैर्न शक्यं संपादयितुमित्येतावता निर्निमित्तं भवति। भवति हि किंचित्कार्यं मानुषसंपाद्यं किंचिद्दैवसंपाद्यम्। मनुष्या अपि शक्नुवन्त्येवोचितेनोपायेन तृणाद्युपादाय क्षीरं संपादयितुम्। प्रभूतं हि क्षीरं कामयमानाः प्रभूतं

---

और न निवर्तक है, इसलिए प्रधान अनपेक्ष है, अनपेक्ष होनेसे कभी प्रधान महदादि आकारसे परिणत होगा और कभी न होगा, यह अयुक्त है। ईश्वरको तो सर्वज्ञ, सर्वशक्तिमान् और महामायामय होनेसे प्रवृत्ति और निवृत्तिमें विरोध नहीं है ॥ ४ ॥

पूर्वपक्षी—यह ठीक है, परन्तु जैसे तृण, पल्लव, उदक आदि अन्य निमित्तकी अपेक्षा किए विना स्वभावसे ही क्षीर आदि रूपमें परिणत होते हैं, वैसे प्रधान भी महदादिरूपमें परिणत हो जायगा। परन्तु यह कैसे ज्ञात हो कि तृण आदि निमित्तान्तरकी अपेक्षा नहीं रखते? इससे कि अन्य निमित्त उपलब्ध नहीं होता। यदि हम अन्य कोई निमित्त उपलब्ध करते तो हम उससे इच्छानुसार तृण आदि लेकर दूधका संपादन करते, किन्तु हम संपादन नहीं कर सकते, इसलिए तृणादिका परिणाम स्वाभाविक है, उसी प्रकार प्रधानका भी परिणाम हो।

सिद्धान्ती—इसपर कहते हैं—यदि तृण आदिका स्वाभाविक परिणाम स्वीकार किया जाता तो तृण आदिके समान प्रधानका भी स्वाभाविक परिणाम होता। परन्तु तृणादिका स्वाभाविक परिणाम स्वीकार नहीं किया जाता, क्योंकि अन्य निमित्तकी उपलब्धि है। अन्य निमित्तकी किस प्रकार उपलब्धि है? कारण कि अन्यत्र अभाव है। क्योंकि धेनुसे ही उपभुक्त तृण आदि क्षीर होता है, नष्ट हुआ अथवा बैल आदिसे खाया गया तृणादि क्षीर नहीं होता। यदि विना निमित्तके भी यह हो जाय, तो धेनु शरीरके सम्बन्धसे अन्यत्र भी तृणादि दूध हो जाय। मनुष्य अपनी इच्छा अनुसार उसे संपादन करनेमें समर्थ नहीं हैं इतने मात्रसे यह निर्निमित्त नहीं होता, क्योंकि कोई कार्य मनुष्य संपाद्य है और कोई कार्य दैव सम्पाद्य है। मनुष्य भी उचित उपायसे तृण आदि लेकर दूधके संपादन करनेमें समर्थ होते हैं, पुष्कल दूध चाहनेवाले पुरुष गौको पुष्कल घास खिलाते हैं, उससे पुष्कल

घासं धेनुं चारयन्ति । ततश्च प्रभूतं क्षीरं लभन्ते । तस्मान्न तृणादिवत्स्वाभाविकः प्रधानस्य परिणामः ॥५॥

## अभ्युपगमेऽप्यर्थाभावात् ॥६॥

पदच्छेद—अभ्युपगमे, अपि, अर्थाभावात् ।

सूत्रार्थ—( अभ्युपगमेऽपि ) प्रधानकी स्वतः प्रवृत्ति मानने पर भी ( अर्थाभावात् ) प्रवृत्तिका कोई प्रयोजन न होनेसे दोष तदवस्थ ही है ।

* स्वाभाविकी प्रधानप्रवृत्तिर्न भवतीति स्थापितम् । तथापि नाम भवतः श्रद्धामनुरुध्यमानाः स्वाभाविकीमेव प्रधानस्य प्रवृत्तिमभ्युपगच्छेम, तथापि दोषोऽनुषज्येतैव। कुतः? अर्थाभावात्। यदि तावत्स्वाभाविकी प्रधानस्य प्रवृत्तिर्न किंचिदन्यदिहापेक्षत इत्युच्येत ततो यथैव सहकारि किंचिन्नापेक्षत एवं प्रयोजनमपि किंचिन्नापेक्षिष्यते-इत्यतः प्रधानं पुरुषस्यार्थं साधयितुं प्रवर्तत इतीयं प्रतिज्ञा हीयेत। स यदि ब्रूयात्—सहकार्येव केवलं नापेक्षते न प्रयोजनमपीति, तथापि प्रधानप्रवृत्तेः प्रयोजनं विवेक्तव्यं भोगो वा स्यादपवर्गो वोभयं वेति । भोगश्चेत्कीदृशोऽनाधेयातिशयस्य पुरुषस्य भोगो भवेत्, अनिर्मोक्षप्रसङ्गश्च । अपवर्गश्चेत्प्रागपि प्रवृत्तेरपवर्गस्य सिद्धत्वात्प्रवृत्तिरनर्थिका स्यात्, शब्दाद्यनुपलब्धिप्रसङ्गश्च। उभयार्थताभ्युपगमेऽपि भोक्तव्यानां प्रधानमात्राणामानन्त्यादनिर्मोक्षप्रसङ्ग एव। * न चौत्सुक्यनिवृत्त्यर्था प्रवृत्तिः। नहि प्रधानस्याचेतनस्यौत्सुक्यं संभवति। न च पुरुषस्य निर्मलस्य निष्कल-

---

हुए प्राप्त करते हैं । इसलिए तृण आदिके समान प्रधानका परिणाम स्वाभाविक नहीं है ॥५॥

प्रधानकी प्रवृत्ति स्वाभाविक नहीं होती यह सिद्ध किया गया, परन्तु आपकी श्रद्धाके अनुसार हम प्रधानकी स्वाभाविक प्रवृत्ति मान भी लें, तो भी दोष प्रसक्त ही है । क्यों ? क्योंकि प्रयोजनका अभाव है । यदि कहो कि प्रधानकी स्वाभाविक प्रवृत्ति है उसमें किसी अन्यकी अपेक्षा नहीं है, तो जिस प्रकार प्रधानको किसी सहकारीकी अपेक्षा नहीं है उसी प्रकार किसी प्रयोजनकी भी अपेक्षा नहीं होगी, इससे तो प्रधान पुरुषके भोग तथा मोक्ष रूप अर्थके सिद्ध करनेके लिए प्रवृत्त होता है, इस प्रतिज्ञाकी हानि होगी । यदि वह ऐसा कहे कि प्रधान केवल सहकारीकी अपेक्षा नहीं रखता, इससे प्रयोजनकी भी अपेक्षा नहीं रखता, ऐसा नहीं, प्रयोजनकी अपेक्षा तो रखता है । तो भी प्रधान प्रवृत्तिके प्रयोजनका विवेचन करना चाहिए कि भोग वा मोक्ष अथवा दोनों प्रवृत्तिके प्रयोजन हैं ? यदि भोग है तो सुख आदि आधान अतिशयसे रहित पुरुषका भोग किस प्रकार होगा ? और मोक्षाभाव प्रसंग भी होगा । यदि मोक्ष प्रयोजन है तो प्रवृत्तिके पूर्व भी मोक्षके सिद्ध होनेसे प्रवृत्ति निष्फल होगी और शब्द आदिकी अनुपलब्धिका प्रसंग आ जायगा । दोनों प्रयोजन माननेपर भोगके योग्य प्रधान तन्मात्राओंके अनन्त होनेसे मोक्षके अभावका प्रसङ्ग ही है । उत्सुकताकी निवृत्तिके लिए भी प्रवृत्ति नहीं है, क्योंकि अचेतन प्रधानमें उत्सुकताका संभव नहीं है, एवं निर्मल, निष्कल पुरुषमें भी उत्सुकता नहीं हो सकती ।

### सत्यानन्दी-दीपिका

* उपर्युक्त तीनों विकल्पोंमें केवल मोक्षके लिए प्रवृत्त हुआ प्रधान भोगका संपादन नहीं कर सकेगा, इससे शब्द आदिकी उपलब्धिका अभाव होगा । यदि दोनों प्रयोजन मानें तो प्रधानकी केवल अप्रवृत्तिसे ही मोक्ष सिद्ध है, शेष भोगके लिए प्रवृत्त होगा, वह तो एक बार शब्दादिकी उपलब्धि होनेसे ही सिद्ध हो जाता है । प्रधान पुनः पुनः भोगके लिए प्रवृत्त होता है तब तो भोग्य शब्दादि अनन्त होनेसे कभी समाप्त ही नहीं होंगे, इससे पुनः मोक्षका अभाव होगा ।

* 'औत्सुक्यनिवृत्त्यर्थं यथा क्रियासु प्रवर्तते लोकः । पुरुषस्य विमोक्षार्थं प्रवर्तते तद्वदव्यक्तम् ॥ (सां०का० १८) (जैसे उत्सुकताकी निवृत्तिके लिए लोग क्रियाओंमें प्रवृत होते हैं, वैसे ही पुरुषके मोक्ष

स्यौत्सुक्यम्। दृक्शक्तिसर्गशक्तिवैयर्थ्यभयाच्चेत्प्रवृत्तिस्तर्हि दृक्शक्त्यनुच्छेदवत्सर्गशक्त्यनुच्छेदात्संसारानुच्छेदादनिर्मोक्षप्रसङ्ग एव। तस्मात्प्रधानस्य पुरुषार्था प्रवृत्तिरित्येतदयुक्तम् ॥ ६ ॥

पुरुषाश्मवदिति चेत्तथापि ॥७॥

पदच्छेद—पुरुषाश्मवत्, इति, चेत्, तथापि।

सूत्रार्थ—( पुरुषाश्मवत् ) अन्ध और पङ्गु पुरुषके समान अथवा लोहचुम्बकके समान पुरुष प्रधानका प्रवर्तक है, ( इति चेत् ) ऐसा यदि कहो ( तथापि ) तो भी दोषकी निवृत्ति नहीं हो सकती।

स्यादेतत्-यथा कश्चित्पुरुषो दृक्शक्तिसंपन्नः प्रवृत्तिशक्तिविहीनः पङ्गुरपरं पुरुषं प्रवृत्तिशक्तिसंपन्नं दृक्शक्तिविहीनमन्धमधिष्ठाय प्रवर्तयति। यथा वाऽयस्कान्तोऽश्मा स्वयमप्रवर्तमानोऽप्ययः प्रवर्तयति। एवं पुरुषः प्रधानं प्रवर्तयिष्यतीति दृष्टान्तप्रत्ययेन पुनः प्रत्यवस्थानम्। अत्रोच्यते-तथापि नैव दोषान्निर्मोक्षोऽस्ति। अभ्युपेतहानं तावद्दोष आपतति, प्रधानस्य स्वतन्त्रस्य प्रवृत्त्यभ्युपगमात्; पुरुषस्य च प्रवर्तकत्वानभ्युपगमात्। कथं चोदासीनः पुरुषः प्रधानं प्रवर्तयेत्? पंगुरपि ह्यन्धं वागादिभिः पुरुषं प्रवर्तयति। नैवं पुरुषस्य कश्चिदपि प्रवर्तनव्यापारोऽस्ति, निष्क्रियत्वान्निर्गुणत्वाच्च। नाप्ययस्कान्तवत्संनिधिमात्रेण प्रवर्तयेत्। संनिधिनित्यत्वेन प्रवृत्तिनित्यत्वप्रसङ्गात्। अयस्कान्तस्य त्वनित्यसंनिधेरस्ति स्वव्यापारः संनिधिः; परिमार्जनाद्यपेक्षा चास्यास्तीत्यनुपन्यासः पुरुषाश्मवदिति। ❀ तथा प्रधानस्याचैतन्यात्पुरुषस्य चौदासीन्यात्तृतीयस्य च तयोः

पुरुषमें दृक्शक्ति और प्रधानमें सर्गशक्तिकी व्यर्थताके भयसे यदि प्रवृत्ति स्वीकार है, तो दृक्शक्तिके अनुच्छेद (नित्य)के समान सर्गशक्ति के अनुच्छेद होनेसे संसारका अनुच्छेद होनेके कारण मोक्षाभाव प्रसङ्ग होगा, इसलिए प्रधानकी प्रवृत्ति पुरुषके प्रयोजनके लिए है यह अयुक्त है ॥ ६ ॥

पूर्वपक्षी—ऐसा हो, परन्तु जैसे दृक्शक्ति सम्पन्न किन्तु प्रवृत्ति-गमन शक्ति रहित कोई पङ्गु पुरुष प्रवृत्तिशक्ति सम्पन्न किन्तु दृक्शक्ति विहीन अन्य अन्धपुरुषको कन्धेपर बैठकर प्रवृत्त करता है अथवा जैसे अयस्कान्तमणि स्वयं अप्रवृत्त होती हुई भी लोहको प्रवृत्त करती है। वैसे पुरुष प्रधानको प्रवृत्त करेगा, इसप्रकार दृष्टान्तबलसे पुनः सांख्य खड़ा होता ( शङ्का करता ) है। सिद्धान्ती—इसपर कहते हैं—तो भी दोषसे मुक्ति नहीं है, क्योंकि स्वीकृत सिद्धान्तकी हानि दोष आ पड़ता है, कारण कि प्रधानकी स्वतन्त्ररूपसे प्रवृत्ति स्वीकारकी गई है और पुरुषको प्रवर्तक स्वीकार नहीं किया गया है, तो ऐसी अवस्थामें उदासीन पुरुष प्रधानको कैसे प्रवृत्त करेगा ? पङ्गुपुरुष भी अन्धपुरुषको वाणी आदिसे प्रवृत्त करता है। परन्तु इसप्रकार पुरुषमें कोई भी प्रवृत्तिजनक व्यापार नहीं है, क्योंकि वह निष्क्रिय और निर्गुण है। अयस्कान्तमणिके समान संनिधिमात्रसे भी प्रवृत्त नहीं कर सकता, क्योंकि संनिधिके नित्य होनेसे प्रवृत्तिमें भी नित्यता प्रसक्त होगी, और अयस्कान्तमणिकी अनित्य संनिधि होनेसे उसका अपना व्यापार संनिधि [ भी अनित्य ] है। उसको परिमार्जन ( सन्मुख सीधा रखना ) आदिकी अपेक्षा है, इससे 'पुरुषाश्मवत्' ( पुरुष और अश्मके समान ) यह सम दृष्टान्तका उपन्यास नहीं है। उसीप्रकार प्रधानको अचेतन और पुरुषको उदासीन होनेके कारण दोनोंका सम्बन्ध करानेवाले

सत्यानन्दी-दीपिका

के लिए प्रधान प्रवृत्त होता है) इस प्रकारकी उत्सुकता अचेतन प्रधान और निर्मल चेतन पुरुषमें संभव नहीं है। इसलिए प्रधानकी प्रवृत्ति पुरुषके प्रयोजनके लिए है, यह सर्वथा अयुक्त है ॥ ६ ॥

❀ प्रधान अचेतन है, अतः उसमें दृश्यरूप योग्यता है और पुरुष चेतन है, इसलिए उसमें द्रष्टृरूप योग्यता है। इसप्रकार दोनोंकी योग्यता निमित्तक सम्बन्ध मानें तो योग्यताके नित्य होनेसे मोक्षाभाव प्रसंग है। जैसे प्रधानके स्वतन्त्र प्रवृत्ति पक्षमें भोग, अपवर्ग अथवा दोनों प्रवृत्तिके

संबन्धयितुरभावात्संबन्धानुपपत्तिः। योग्यतानिमित्ते च संबन्धे योग्यतानुच्छेदादनिर्मोक्षप्रसङ्गः। पूर्ववच्चे ह्यप्यर्थाभावो विकल्पयितव्यः। परमात्मनस्तु स्वरूपव्यपाश्रयमौदासीन्यम्, मायाव्यपाश्रयं च प्रवर्तकत्वमित्यस्त्यतिशयः ॥ ७ ॥

## अङ्गित्वानुपपत्तेश्च ॥८॥

पदच्छेद—अङ्गित्वानुपपत्तेः, च।

सूत्रार्थ—गुणोंके अङ्गाङ्गिभावकी अनुपपत्ति होनेसे भी प्रधानकी प्रवृत्ति नहीं हो सकती है।

* इतश्च न प्रधानस्य प्रवृत्तिरवकल्पते। यद्धि सत्त्वरजस्तमसामन्योन्यगुणप्रधानभावमुत्सृज्य साम्येन स्वरूपमात्रेणावस्थानं सा प्रधानावस्था। तस्यामवस्थायामनपेक्षस्वरूपाणां स्वरूपप्रणाशभयात्परस्परं प्रत्यङ्गाङ्गिभावानुपपत्तेः। बाह्यस्य च कस्यचित्क्षोभयितुरभावाद्गुणवैषम्यनिमित्तो महदाद्युत्पादो न स्यात् ॥ ८ ॥

## अन्यथानुमितौ च ज्ञशक्तिवियोगात् ॥९॥

पदच्छेद—अन्यथा, अनुमितौ, च, ज्ञशक्तिवियोगात्।

सूत्रार्थ—हम अनपेक्ष गुणोंका अनुमान नहीं करते, किन्तु ( अन्यथानुमितौ ) प्रकारान्तरसे परस्पर सापेक्ष गुणोंका अनुमान करते हैं। जिससे पूर्वोक्त दोष प्रसक्त न हो। यह ठीक नहीं है, ( ज्ञशक्तिवियोगात् ) क्योंकि ऐसा माननेपर भी गुणोंमें ज्ञानशक्तिके न होनेसे स्वयं साम्यावस्थासे च्युति न होनेके कारण परस्पर अङ्गाङ्गिभाव नहीं हो सकता, इससे महद् आदिका अनुत्पत्तिदोष तदवस्थ ही है।

अथापि स्यादन्यथा वयमनुमिमीमहे—यथा नायमनन्तरो दोषः प्रसज्येत। न ह्यनपेक्षस्वभावाः कूटस्थाश्चास्माभिर्गुणा अभ्युपगम्यन्ते, प्रमाणाभावात्। कार्यवशेन तु गुणानां स्वभावोऽभ्युपगम्यते। यथा यथा कार्योत्पाद उपपद्यते तथा तथैषां स्वभावोऽभ्युपगम्यते।

---

तीसरेके अभाव होनेसे सम्बन्धकी अनुपपत्ति होगी, उनकी योग्यता निमित्तक सम्बन्ध स्वीकार करें तो योग्यताके अनुच्छेद-नित्य होनेसे मोक्षाभाव प्रसङ्ग है। पूर्वके समान यहाँ भी प्रयोजन ( भोग और मोक्ष ) के अभावका विकल्प करना चाहिए। परमात्मा तो स्वरूप व्यपाश्रयसे उदासीन और मायाके आश्रयसे प्रवर्तक है। इसप्रकार अतिशय ( विशेष ) है ॥ ७ ॥

और इस हेतुसे भी प्रधानकी प्रवृत्ति नहीं हो सकती, क्योंकि सत्त्व, रज और तमकी परस्पर गुण प्रधानभावको छोड़कर समभावसे केवल स्वरूपमात्रसे अवस्थिति यह प्रधानावस्था है। उस साम्यावस्थामें एक दूसरेके स्वरूपकी अपेक्षासे रहित सत्त्व आदि गुणोंके अपने-अपने स्वरूप नाश होनेके भयसे परस्परके प्रति अङ्गाङ्गिभाव नहीं हो सकता और उनमें क्षोभ उत्पन्न करनेवाले किसी बाह्य पदार्थके न होनेसे गुणोंकी विषमता निमित्तक महद् आदिकी उत्पत्ति नहीं होगी ॥ ८ ॥

पूर्वपक्षी—ऐसा हो, परन्तु हम अन्य प्रकारसे अनुमान करते हैं, जिससे यह पूर्वोक्त दोष प्रसक्त न हो। हम गुणोंको निरपेक्ष स्वभाव तथा कूटस्थ स्वीकार नहीं करते, क्योंकि ऐसा माननेमें कोई प्रमाण नहीं है। कार्यके अनुसार गुणोंका स्वभाव स्वीकार किया जाता है। जैसे जैसे कार्यकी

### सत्यानन्दी-दीपिका

प्रयोजन हैं, ऐसा विकल्पकर दूषित किया गया है, वैसे पुरुषके अधीन प्रधानकी प्रवृत्ति पक्षमें भी इसप्रकार प्रयोजन विषयक विकल्पकर दूषित करना चाहिए। सांख्य मतमें उदासीनत्व और प्रवर्तकत्व दोनों सत्य हैं, अतः एकपुरुषमें दोनोंका होना विरुद्ध है। परन्तु वेदान्त सिद्धान्तमें तो परमात्मामें उदासीनत्व पारमार्थिक है और प्रवर्तकत्व मायासे कल्पित है ॥ ७ ॥

चलं गुणवृत्तमिति चास्त्यभ्युपगमः। तस्मात्साम्यावस्थायामपि वैषम्योपगमयोग्या एव गुणा अवतिष्ठन्त इति। एवमपि प्रधानस्य ज्ञशक्तिवियोगाद्रचनानुपपत्त्यादयः पूर्वोक्ता दोषास्तदवस्था एव। ज्ञशक्तिमपि त्वनुमिमानः प्रतिवादित्वान्निवर्तेत। चेतनमेकमनेकप्रपञ्चस्य जगत उपादानमिति ब्रह्मवादप्रसङ्गात्। वैषम्योपगमयोग्या अपि गुणाः साम्यावस्थायां निमित्ताभावान्नैव वैषम्यं भजेरन्। भजमाना वा निमित्ताभावाविशेषात्सर्वदैव वैषम्यं भजेरन्निति प्रसज्यत एवायमनन्तरोऽपि दोषः ॥९॥

## विप्रतिषेधाच्चासमञ्जसम् ॥१०॥

पदच्छेद—विप्रतिषेधात्, च, असमञ्जसम्।

सूत्रार्थ—( च ) और ( विप्रतिषेधात् ) सांख्य लोग कहीं महद्से तन्मात्राओंकी उत्पत्ति मानते हैं तो कहीं अहङ्कारसे, इसप्रकार परस्पर विरुद्ध होनेसे (असमञ्जसम्) सांख्य मत असंगत है।

❀ परस्परविरुद्धश्चायं सांख्यानामभ्युपगमः—क्वचित्सप्तेन्द्रियाण्यनुक्रामन्ति, क्वचिदेकादश, तथा क्वचिन्महतस्तन्मात्रसर्गमुपदिशन्ति, क्वचिदहङ्कारात्, तथा क्वचित्त्रीण्यन्तःकरणानि वर्णयन्ति, क्वचिदेकमिति। प्रसिद्ध एव तु श्रुत्येश्वरकारणवादिन्या विरोधस्तदनुवर्तिन्या च स्मृत्या। तस्मादप्यसमञ्जसं सांख्यानां दर्शनमिति। अत्राह—नन्वौपनिषदानामप्यसमञ्जसमेव दर्शनम्, तप्यतापकयोर्जात्यन्तरभावानभ्युपगमात्। एकं हि ब्रह्म सर्वात्मकं सर्वस्य प्रपञ्चस्य कारणमभ्युपगच्छतामेकस्यैवात्मनो विशेषौ तप्यतापकौ न जात्यन्तरभूतावित्यभ्युपगन्तव्यं स्यात्। यदि चैतौ तप्यतापकावेकस्या-

---

उत्पत्ति उपपन्न होती है वैसे वैसे इनका स्वभाव माना जाता है। गुणोंका स्वभाव चलरूप है, ऐसा हमारा स्वीकार-सिद्धान्त है, इसलिए साम्यावस्थामें भी गुण वैषम्य प्राप्तिके योग्य ही रहते हैं। सिद्धान्ती—ऐसा अनुमान करनेपर भी प्रधानमें ज्ञानशक्तिका अभाव होनेसे रचना अनुपपत्ति आदि पूर्वोक्त दोष ज्योंके त्यों हैं। उन दोषोंके परिहारके लिए यदि सांख्य प्रधानमें ज्ञानशक्तिका भी अनुमान करे, तो वह प्रतिपक्षितासे ही निवृत्त हो जायगा, क्योंकि एक चेतन अनेक प्रपञ्चरूप जगत्का उपादानकारण है, इस ब्रह्मवादका प्रसङ्ग होगा। वैषम्य प्राप्तिके योग्य भी गुण सम्यावस्थामें निमित्तके न होनेसे वैषम्यको नहीं प्राप्त होंगे। यदि वे निमित्तके विना भी विषमताको प्राप्त करने वाले होंगे तो निमित्तका अभाव समान होनेसे सर्वदा ही विषमताको प्राप्त होते रहेंगे, इसप्रकार पूर्वोक्त दोष ( कार्यकी अनुत्पत्ति ) प्रसक्त ही है ॥ ९ ॥

सांख्योंका यह स्वीकार परस्पर विरुद्ध है, क्योंकि वे कहीं सात इन्द्रियाँ ( मन, त्वक् और पाँच कर्मेन्द्रियाँ ) कहते हैं, कहीं ग्यारह ( पाँच ज्ञानेन्द्रिय, पाँच कर्मेन्द्रिय और मन ), एवं कहीं महत्से तन्मात्राओं ( शब्द, स्पर्श, रूप, रस और गन्ध ) की उत्पत्तिका उपदेश करते हैं, तो कहीं अहङ्कारसे। और कहीं अन्तःकरण तीन ( मन, बुद्धि और अहङ्कार ) वर्णन करते हैं और कहीं एक ( बुद्धि )। ईश्वरको जगत्का कारण कहनेवाली श्रुति और उसकी अनुवर्तिनी स्मृतिसे विरोध तो प्रसिद्ध ही है, इससे भी सांख्योंका दर्शन असंगत है। पूर्वपक्षी—इस पर कहते हैं—वेदान्तियोंका दर्शन भी असंगत ही है, क्योंकि उसमें तप्य ( दुःख भोक्ता जीव ) और तापक ( दुःखप्रद संसार ) का जाति-भेद स्वीकार नहीं किया गया है। वेदान्तमें एक ही ब्रह्म सर्वात्मक है और सम्पूर्ण प्रपञ्चका कारण है, ऐसा स्वीकार करनेवालोंको तप्य और तापक एक ही आत्माके विशेष हैं इससे वे भिन्न नहीं हैं ऐसा

### सत्यानन्दी-दीपिका

❀ पू०—वेदान्तमें एक आत्माके ही विशेष होनेसे तप्य-तापकका भेद न माननेपर लोक प्रसिद्ध तप्य तापकभाव ही लुप्त हो जायगा। 'तपि' धातु सकर्मक है, इसलिए तप्य (कर्म) से तापक

त्मनो विशेषौ स्यातां स ताभ्यां तप्यतापकाभ्यां न निर्मुच्येत इति तापोपशान्तये सम्यग्दर्शनमुपदिशच्छास्त्रमनर्थकं स्यात्। न ह्यौष्ण्यप्रकाशधर्मकस्य प्रदीपस्य तदवस्थस्यैव ताभ्यां निर्मोक्ष उपपद्यते। * योऽपि जलतरङ्गवीचीफेनाद्युपन्यासः, तत्रापि जलात्मन एकस्य वीच्यादयो विशेषा आविर्भावतिरोभावरूपेण नित्या एवेति समानो जलात्मनो वीच्यादिभिरनिर्मोक्षः। प्रसिद्धश्चायं तप्यतापकयोर्जात्यन्तरभावो लोके। तथा हि—अर्थी चार्थश्चान्योन्यभिन्नौ लक्ष्येते। यद्यर्थिनः स्वतोऽन्योऽर्थो न स्यात्, यस्यार्थिनो यद्विषयमर्थित्वं स तस्यार्थो नित्यसिद्ध एवेति न तस्य तद्विषयमर्थित्वं स्यात्, यथा प्रकाशात्मनः प्रदीपस्य प्रकाशाख्योऽर्थो नित्यसिद्ध एवेति न तस्य तद्विषयमर्थित्वं भवति। अप्राप्ते ह्यर्थेऽर्थिनोऽर्थित्वं स्यादिति। तथार्थस्याप्यर्थत्वं न स्यात् यदि स्यात्स्वार्थत्वमेव स्यात् न चैतदस्ति, संबन्धिशब्दौ ह्येतावर्थी चार्थश्चेति। द्वयोश्च संबन्धिनोः संबन्धः स्यान्नैकस्यैव तस्माद्भिन्नावेतावर्थार्थिनौ। तथानर्थानर्थिनावपि। अर्थिनोऽनुकूलोऽर्थः प्रतिकूलोऽनर्थस्ताभ्यामेकः पर्यायेणोभाभ्यां संबध्यते। तत्रार्थस्याल्पीयस्त्वाद्भूयस्त्वाच्चानर्थस्योभाव-

---

मानना पड़ेगा। यदि ये तप्य और तापक एक ही आत्माके विशेष हैं तो वह इन तप्य, तापकसे मुक्त नहीं हो सकता, तब तो तापकी निवृत्तिके लिए तत्त्वज्ञानका उपदेश करनेवाला उपनिषद् शास्त्र व्यर्थ हो जायगा। उष्णता और प्रकाश धर्मसे युक्त प्रदीप है, उनसे युक्त दीपक उनसे मुक्त नहीं हो सकता। और जो जलके तरङ्ग, लहर, फेन आदिका उपन्यास है, उसमें भी एक ही जल स्वरूपके तरङ्ग आदि विशेष कभी प्रकट और कभी विलीनरूपसे नित्य हैं, इसलिए जल स्वरूपको तरङ्ग आदिसे मुक्त न होना समान ही है। परन्तु तप्य तापकका यह पृथक्त्व लोकमें प्रसिद्ध है। वैसे ही अर्थ और अर्थी परस्पर भिन्न लक्षित होते हैं। यदि अर्थीसे स्वतः अन्य अर्थ न हो तो जिस अर्थीका जिस विषयमें अर्थित्व है, उसके लिए वह अर्थ नित्यसिद्ध ही है, इससे उसका तद्विषयक अर्थित्व नहीं होगा। जैसे प्रकाशरूप दीपकका प्रकाश नामक अर्थ नित्य सिद्ध ही है, इसलिए उसका तद्विषयक अर्थित्व नहीं होता, क्योंकि अप्राप्त अर्थमें ही अर्थीका अर्थित्व होता है। इसी प्रकार अर्थका भी अर्थत्व न होगा यदि हो तो स्वके लिए ही होगा, परन्तु ऐसा नहीं होता, क्योंकि ये अर्थी और अर्थ सम्बन्धिशब्द हैं, दो संबन्धियोंका सम्बन्ध होता है एकका नहीं, इसलिए ये दोनों अर्थ और अर्थी भिन्न हैं। वैसे अनर्थ और अनर्थी भी भिन्न हैं। अर्थीके अनुकूल अर्थ और प्रतिकूल अनर्थ होता है। एकका उन दोनोंके साथ क्रमसे सम्बन्ध होता है। उनमें अर्थके अल्प और अनर्थके अधिक होनेसे अर्थ और अनर्थ दोनों

## सत्यानन्दी-दीपिका

(कर्ता) भिन्न होना चाहिए। 'तप्यः तापकादन्यः कर्मत्वात् नगरवत्' (तप्य तापकसे भिन्न है, क्योंकि वह कर्म है जैसे नगर) तो क्या वे तप्य तापक दोनों आत्माके स्वरूप हैं अथवा धर्म? यदि स्वरूप हैं तो उनसे आत्मा कभी मुक्त नहीं होगा, इससे उनकी निवृत्तिके लिए तत्त्वज्ञानका प्रतिपादक उपनिषद् शास्त्र व्यर्थ सिद्ध होगा। यदि धर्म हैं तो वे स्वरूपके अन्तर्भूत हैं या बहिर्भूत? प्रथम पक्षमें भी दीपक अपने स्वरूपगतधर्म उष्णता और प्रकाशसे मुक्त नहीं होता, इस प्रकार आत्मा भी तप्य-तापकसे मुक्त नहीं होगा।

* दूसरा विकल्प—इसमें जो जल और तरङ्ग आदिका उपन्यास है उसमें भी यह देखा जाता है कि जल अपने धर्म तरङ्ग आदिके आविर्भाव और तिरोभावसे कभी मुक्त नहीं होता, उसी प्रकार आत्मा भी अपने बाह्य धर्म तप्य और तापकके आविर्भाव और तिरोभावसे कभी मुक्त नहीं होगा। तप्य तापकका आत्मासे भेद अथवा अभेद माननेपर भी दोष है। भेद माननेसे अभेद सिद्धान्तकी हानि और अभेद माननेसे लोक प्रसिद्धिसे विरोध है, क्योंकि लोकमें तप्य तापक, अर्थी और अर्थका भेद व्यवहार होता है।

प्यर्थानर्थावनर्थ एवेति तापकः स उच्यते। तप्यस्तु पुरुषो य एकः पर्यायेणोभाभ्यां संबध्यत इति तयोस्तप्यतापकयोरेकात्मतायां मोक्षानुपपत्तिः।ॐ जात्यन्तरभावे तु तत्संयोगहेतुपरिहारात्स्यादपि कदाचिन्मोक्षोपपत्तिरिति। अत्रोच्यते–न, एकत्वादेव तप्यतापकभावानुपपत्तेः। भवेदेष दोषो यद्येकात्मतायां तप्यतापकावन्योन्यस्य विषयविषयिभावं प्रतिपद्येयाताम्। न त्वेतदस्ति, एकत्वादेव। न ह्यग्निरेकः सन्स्वमात्मानं दहति प्रकाशयति वा सत्यप्यौष्ण्यप्रकाशादिधर्मभेदे परिणामित्वे च। किं कूटस्थे ब्रह्मण्येकस्मिंस्तप्यतापकभावः संभवेत् ? क पुनरयं तप्यतापकभावः स्यादिति ? ॐ उच्यते–किं न पश्यसि कर्मभूतो जीवद्देहस्तप्यस्तापकः सवितेति ? ननु तप्तिर्नाम दुःखम्, सा चेतयितुर्नाचेतनस्य देहस्य। यदि हि देहस्यैव तप्तिः स्यात्सा देहनाशे स्वयमेव नश्यतीति तन्नाशाय साधनं नैषितव्यं स्यादिति। उच्यते—देहाभावेऽपि केवलस्य चेतनस्य तप्तिर्न दृष्टा। न च त्वयापि तप्तिर्नाम विक्रिया चेतयितुः केवलस्येष्यते। नापि देहचेतनयोः संहतत्वम्, अशुद्ध्यादिदोषप्रसङ्गात्। नच तप्तेरेव तप्तिमभ्युपगच्छसि। कथं तवापि तप्यतापकभावः ? सत्त्वं तप्यं तापकं रज

---

अनर्थ ही हैं, इससे वह तापक कहा जाता है। जो एक क्रमसे दोनोंके साथ सम्बद्ध होता है वह पुरुष तप्य है। उन तप्य और तापकके एकरूप होनेपर मोक्षकी उपपत्ति नहीं होगी। यदि उनमें भेद हो तो उसके संयोगके हेतुका परिहार होनेसे कदाचित् मोक्ष भी हो सकता है। सिद्धान्ती—इसपर कहते हैं कि ऐसा नहीं, क्योंकि परमार्थमें एकत्व होनेसे तप्य तापकभाव ही नहीं हो सकता। यह दोष होता यदि एकरूपमें तप्य और तापक परस्पर विषयविषयिभावको प्राप्त होते, परन्तु यहाँ एकत्व होनेसे ऐसा नहीं है। एक अग्नि यद्यपि उष्णता, प्रकाश आदि भिन्न धर्मोंसे युक्त और परिणामशील है, तो भी वह अपनेको जलाती या प्रकाशित नहीं करती, तो फिर एक कूटस्थ ब्रह्ममें तप्यतापकभाव कैसे संभव होगा ? पुनः यह तप्यतापकभाव कहाँ होगा ? कहते हैं—क्या नहीं देखता कि कर्मरूप जीवित देह तप्य है और सूर्य तापक। परन्तु तप्ति नाम दुःखका है वह चेतनको होता है अचेतन देहको नहीं, यदि देहको ही दुःख होता तो वह देहके नाश होनेपर स्वयं ही नष्ट हो जाता है, उसके नाश करनेके लिए साधनोंकी खोज नहीं करनी चाहिए। कहते हैं—देहके अभावमें केवल चेतनको भी दुःख नहीं देखा गया है। यह तुमको भी इष्ट नहीं है कि तप्ति क्रिया केवल चेतनको है। अशुद्धि आदि दोषोंके प्रसङ्ग होनेसे देह और चेतनका संघात भी तुमको इष्ट नहीं है, और तापको ताप होना भी तुम स्वीकार नहीं करते, तो तुम्हारे मतमें तप्यतापकभाव किस प्रकार सिद्ध होगा ? यदि कहो कि सत्त्वगुण तप्य है

## सत्यानन्दी-दीपिका

ॐ इस प्रकार अद्वैतमतमें मुक्तिकी अनुपपत्ति दिखलाकर सांख्य अब अपने मतमें 'जात्यन्तरभावे तु' इत्यादिसे मुक्तिकी उपपत्ति दिखलाते हैं—द्रक्शक्ति पुरुषका जो बुद्धिके साथ स्वस्वामिभाव सम्बन्ध है वह तापका कारण है, उसका कारण अविवेक है, उसकी निवृत्ति विवेकख्याति ( जड़ और चेतनके भेदज्ञान ) से होती है, उसकी निवृत्तिसे सम्बन्ध निवृत्त और सम्बन्ध निवृत्तिसे तापकी निवृत्ति हो जाती है, इस प्रकार पुरुषकी मुक्ति हो जाती है। इस विषयमें पञ्चशिखाचार्यने कहा भी है–'तत्संयोगहेतुविवर्जनात्स्यादयमात्यन्तिको दुःखप्रतिकारः' ( बुद्धि और पुरुषके स्वस्वामिभाव सम्बन्धके हेतु अविवेकके निवृत्त होनेसे यह आत्यन्तिक दुःखका प्रतिकार ( निवृत्ति ) होता है ) वस्तुतः असङ्ग पुरुषमें बन्ध और मोक्ष नहीं हैं ये तो चित्प्रतिबिम्बित बुद्धिके धर्म हैं, केवल पुरुषमें उपचारसे कहे जाते हैं, जैसे राजामें जय-पराजयका गौण व्यवहार होता है। 'सैव च बध्यते मुच्यते च' ( वह बुद्धि ही बद्ध और मुक्त होती है ) इस प्रकार हमारे मतमें मोक्ष सिद्ध हो सकता है।

ॐ यहाँ सांख्यसे पूछना चाहिए कि ताप केवल चेतनको है अथवा देहके साथ तादात्म्यापन्न चेतनको वा तापको ही तप्ति है अथवा सत्त्वगुणको ताप है ? क्रमशः सबको 'उच्यते' आदिसे कहते हैं।

इति चेत्-न, ताभ्यां चेतनस्य संहतत्वानुपपत्तेः। सत्त्वानुरोधित्वाच्चेतनोऽपि तप्यत इवेति चेत्-परमार्थतस्तर्हि नैव तप्यत इत्यापतति, इवशब्दप्रयोगात्। न चेत्तप्यते नेवशब्दो दोषाय। नहि डुण्डुभः सर्प इवेत्येतावता सविषो भवति। सर्पो वा डुण्डुभ इवेत्येतावता निर्विषो भवति। अतश्चाविद्याकृतोऽयं तप्यतापकभावो न पारमार्थिक इत्यभ्युपगन्तव्यमिति। नैवं सति ममापि किंचिद्दुष्यति। अथ पारमार्थिकमेव चेतनस्य तप्यत्वमभ्युपगच्छसि, तवैव सुतरामनिर्मोक्षः प्रसज्येत, नित्यत्वाभ्युपगमाच्च तापकस्य।* तप्यतापकशक्त्योर्नित्यत्वेऽपि सनिमित्तसंयोगापेक्षत्वात्तप्तेः संयोगनिमित्तादर्शननिवृत्तावात्यन्तिकः संयोगोपरमः, ततश्चात्यन्तिको मोक्ष उपपन्न इति चेत्-न, अदर्शनस्य तमसो नित्यत्वाभ्युपगमात्। गुणानां चोद्भवाभिभवयोरनियतत्वादनियतः संयोगनिमित्तोपरम इति वियोगस्याप्यनियतत्वात्सांख्यस्यैवानिर्मोक्षोऽपरिहार्यः स्यात्। औपनिषदस्य त्वात्मैकत्वाभ्युपगमादेकस्य च विषयविषयिभावानुपपत्तेर्विकारभेदस्य च वाचारम्भणमात्रत्वश्रवणादनिर्मोक्षशङ्का स्वप्नेऽपि नोपजायते। व्यवहारे तु यत्र यथा दृष्टस्तप्यतापकभावस्तत्र तथैव स इति न चोदयितव्यः परिहर्तव्यो वा भवति ॥ १० ॥

( २ महद्दीर्घाधिकरणम् सू० ११ )

प्रधानकारणवादो निराकृतः। परमाणुकारणवाद इदानीं निराकर्तव्यः। तत्रादौ

---

रजोगुण तापक है, तो यह युक्त नहीं है, क्योंकि उनके साथ चेतनाका संहतत्व नहीं हो सकता। यदि कहो कि सत्त्व ( बुद्धि ) के अनुसारी होनेसे चेतन भी तपता-सा दुःख भोगता-सा है, तो परमार्थसे वह दुःखी नहीं होता, क्योंकि 'इव' शब्दके प्रयोग होनेसे ऐसा ही प्राप्त होता है। यदि परमार्थसे चेतन तप्त नहीं होता तो 'इव' शब्द दोषके लिए नहीं होता। डुण्डुभ साँप-सा होता है ऐसा कहनेमात्रसे डुण्डुभ विषयुक्त नहीं हो जाता, एवं सर्प डुण्डुभ-सा होता है इतने कथन मात्रसे सर्प विषरहित नहीं हो जाता। इसलिए यह तप्यतापकभाव अविद्याकृत है, पारमार्थिक नहीं है, ऐसा स्वीकार करना चाहिए। ऐसा माननेपर हमारे पक्षमें भी कोई दोष नहीं है। यदि चेतनको पारमार्थिक ही तुम तप्य मानें तो तुम्हारे मतमें ही सुतरां मोक्षाभाव प्रसक्त होगा, क्योंकि तुम्हारे सिद्धान्तमें तापक ( रजोगुण ) नित्य स्वीकार किया गया है। यदि कहो कि तप्य और तापककी शक्तियोंके नित्य होनेपर भी ताप निमित्त सहित संयोगकी अपेक्षा रखता है, इससे संयोगके निमित्त अज्ञानकी निवृत्ति हो जानेसे संयोग आत्यन्तिक उपरत हो जाता है, उससे आत्यन्तिक मोक्ष उपपन्न होता है, तो यह ठीक नहीं है, क्योंकि अज्ञानरूप तमोगुण नित्य स्वीकार किया गया है। गुणोंका उद्भव और अभिभव ( लय ) अनियत होनेसे संयोगके निमित्तका उपरम भी अनियत है, इस प्रकार उनका वियोग भी अनियत होनेसे सांख्योंके मतमें ही मोक्षाभाव अपरिहार्य है। वेदान्तमें तो आत्मैकत्व स्वीकार होनेसे एकमें विषयविषयिभाव नहीं हो सकता, विकारभेद तो वाचारम्भण मात्र है। ऐसी श्रुति होनेसे मोक्षाभावकी शङ्का तो स्वप्नमें भी उत्पन्न नहीं होती। परन्तु व्यवहारमें तो जहाँ जैसा तप्यतापकभाव देखा गया है वह वहाँ वैसा ही है। इसलिए इसके विषयमें शङ्का करना अथवा परिहार करना योग्य नहीं है ॥ १० ॥

प्रधान कारणवादका निराकरण किया गया। अब परमाणु कारणवादका निराकरण करना चाहिए। इस विषयमें पहले परमाणु कारणवादीने ब्रह्मवादीपर जो दोष लगाया है उसका प्रति-

## सत्यानन्दी-दीपिका

* 'चलं गुणवृत्तम्' ( गुणोंका स्वभाव चल है ) इसलिए संयोगके समान वियोग अनियत है, अतः सांख्यमतमें ही मोक्षाभाव प्रसङ्ग होगा। हमारे मतमें तो कल्पित द्वैतको लेकर लोक प्रसिद्ध तप्यतापकभाव स्वीकार करते हैं। अतः वेदान्तसमन्वय विरुद्ध नहीं है ॥ १० ॥

तावद्योऽणुवादिना ब्रह्मवादिनि दोष उत्प्रेक्ष्यते स प्रतिसमाधीयते। तत्रायं वैशेषिकाणामभ्युपगमः—कारणद्रव्यसमवायिनो गुणाः कार्यद्रव्ये समानजातीयं गुणान्तरमारभन्ते, शुक्लेभ्यस्तन्तुभ्यः शुक्लस्य पटस्य प्रसवदर्शनात्तद्विपर्ययादर्शनाच्च। तस्माच्चेतनस्य ब्रह्मणो जगत्कारणत्वेऽभ्युपगम्यमाने कार्येऽपि जगति चैतन्यं समवेयात्, तददर्शनात्तु न चेतनं ब्रह्म जगत्कारणं भवितुमर्हतीति। इममभ्युपगमं तदीययैव प्रक्रियया व्यभिचारयति—

महद्दीर्घवद्वा ह्रस्वपरिमण्डलाभ्याम् ॥११॥

पदच्छेद—महद्दीर्घवत्, वा, ह्रस्वपरिमण्डलाभ्याम्।

सूत्रार्थ—( ह्रस्वपरिमण्डलाभ्याम् ) ह्रस्व द्व्यणुक और परमाणुसे (महद्दीर्घवद्वा) महत् और दीर्घ उत्पन्न होते हैं, वैसे चेतन ब्रह्मसे अचेतन जगत् उत्पन्न होता है।

* एषा तेषां प्रक्रिया—परमाणवः किल कञ्चित्कालमनारब्धकार्या यथायोगं रूपादिमन्तः पारिमाण्डल्यपरिमाणाश्च तिष्ठन्ति। ते च पश्चाददृष्टादिपुरःसराः संयोगसचिवाश्च सन्तो द्व्यणुकादिक्रमेण कृत्स्नं कार्यजातमारभन्ते। कारणगुणाश्च कार्ये गुणान्तरम्। यदा द्वौ परमाणू द्व्यणुकमारभेते तदा परमाणुगता रूपादिगुणविशेषाः शुक्लादयो द्व्यणुके शुक्लादीनपरानारभन्ते। परमाणुगुणविशेषस्तु पारिमाण्डल्यं न द्व्यणुके पारिमाण्डल्यमपरमारभते, द्व्यणुकस्य परिमाणान्तरयोगाभ्युपगमात्। अणुत्वह्रस्वत्वे

---

समाधान किया जाता है। उसमें वैशेषिकोंका यह सिद्धान्त है कि कारण द्रव्यमें समवाय सम्बन्धसे विद्यमान गुण कार्य द्रव्यमें समान जातीय अन्य गुणको आरम्भ करते हैं, जैसे शुक्लतन्तुओंसे शुक्ल पटका प्रसव देखनेमें आता है, उसके विपर्यय देखनेमें नहीं आता, इसलिए चेतन ब्रह्मको जगत्का कारण स्वीकार करनेपर कार्य जगत्में भी चेतनता सम्बन्धित होनी चाहिए। परन्तु उसके दर्शन न होनेसे चेतन ब्रह्म जगत्का कारण नहीं हो सकता। उनके इस सिद्धान्तको उन्हींकी प्रक्रियासे व्यभिचरित करते हैं—

उनकी यह प्रक्रिया है—यथायोग रूपादि युक्त पारिमाण्डल्य परिमाण ( अणुगत परिमाण ) विशिष्ट परमाणु कुछ काल पर्यन्त कार्यका आरम्भ किए बिना रहते हैं, पश्चात् वे अदृष्ट आदि कारण पूर्वक संयोग सहकारी युक्त होते हुए द्व्यणुक आदि क्रमसे सम्पूर्ण कार्य समूहका आरम्भ करते हैं। और कारणके गुण कार्यमें [ समानजातीय ] अन्य गुणोंका आरम्भ करते हैं। जब दो परमाणु द्व्यणुकका आरम्भ करते हैं तब परमाणुगत शुक्ल आदि रूप विशेष गुण द्व्यणुकमें अन्य शुक्ल आदिका आरम्भ करते हैं। परन्तु परमाणुगत गुण विशेष पारिमाण्डल्य द्व्यणुकमें अन्य पारिमाण्डल्यका आरम्भ नहीं करता, क्योंकि द्व्यणुकमें अन्य परिमाणका सम्बन्ध माना गया है। द्व्यणुकवर्ती परिमाणको अणुत्व और ह्रस्वत्व वर्णन करते हैं। परन्तु जब भी दो द्व्यणुक चतुरणुकका आरम्भ करते

## सत्यानन्दी-दीपिका

* चेतन ब्रह्मसे जगत्की उत्पत्तिका प्रतिपादक वेदान्तसमन्वय इस अधिकरणका विषय है। यद्यपि 'न विलक्षणत्वात्' ( ब्र० सू० २।२।४ ) इस सूत्रमें चेतनसे अचेतनकी सृष्टि कही गई है, तो भी वैशेषिक न्यायका व्यभिचार उसकी प्रक्रियासे सिद्ध करना इस सूत्रका प्रयोजन है। यह उनकी प्रक्रिया है—प्रलयमें परमाणु निश्चल और असंयुक्त रहते हैं। सृष्टिकालमें जीवोंके कर्मोंको लेकर जब ईश्वरको सृष्टि करनेकी इच्छा होती है तब परमाणुओंमें परस्पर संयुक्त होनेकी क्रिया उत्पन्न होती है। उससे दो परमाणुओंका संयोग होता है, जिससे द्व्यणुक उत्पन्न होता है, तीन द्व्यणुकके संयोगसे त्र्यणुक, चार द्व्यणुकके संयोगसे चतुरणुक उत्पन्न होता है। और कारणके गुण कार्यमें

हि द्व्यणुकवर्तिनी परिमाणे वर्णयन्ति। यदापि द्वे द्व्यणुके चतुरणुकमारभेते, तदापि समानं द्व्यणुकसमवायिनां शुक्लादीनामारम्भकत्वम्। अणुत्वह्रस्वत्वे तु द्व्यणुकसमवायिनी अपि नैवारभेते, चतुरणुकस्य महत्त्वदीर्घत्वपरिमाणयोगाभ्युपगमात्। यदापि बहवः परमाणवो बहूनि वा द्व्यणुकानि द्व्यणुकसहितो वा परमाणुः कार्यमारभते, तदापि समानैषा योजना। तदेवं यथा परमाणोः परिमण्डलात्सतोऽणु ह्रस्वं च द्व्यणुकं जायते, महद्दीर्घं च त्र्यणुकादि, न परिमण्डलम्, यथा वा द्व्यणुकादणोर्ह्रस्वाच्च सतो महद्दीर्घं च त्र्यणुकं जायते नाणु, नो ह्रस्वम्, एवं चेतनाद्ब्रह्मणोऽचेतनं जगज्जनिष्यत इत्यभ्युपगमे किं तव च्छिन्नम्? अथ मन्यसे विरोधिना परिमाणान्तरेणाक्रान्तं कार्यद्रव्यं द्व्यणुकादीत्यतो नारम्भकाणि कारणगतानि पारिमाण्डल्यादीनीत्यभ्युपगच्छामि, न तु चेतनाविरोधिना गुणान्तरेण जगत आक्रान्तत्वमस्ति, येन कारणगता चेतना कार्ये चेतनान्तरं नारभेत। न ह्यचेतना नाम चेतनाविरोधी कश्चिद्गुणोऽस्ति, चेतनाप्रतिषेधमात्रत्वात्। तस्मात्पारिमाण्डल्यादिवैषम्या-

---

हैं, तभी द्व्यणुकमें समवाय सम्बन्धसे विद्यमान शुक्ल आदि गुणोंको आरम्भकत्व समान है। परन्तु अणुत्व और ह्रस्वत्व द्व्यणुकमें समवाय सम्बन्धसे रहनेपर भी कार्यके आरम्भक नहीं होते हैं, क्योंकि चतुरणुकका महत्त्व और दीर्घत्व परिमाणयोग माना गया है। परन्तु जब भी बहुत परमाणु, बहुत द्व्यणुक अथवा द्व्यणुक सहित परमाणु कार्य आरम्भ करते हैं तब भी यह योजना समान ही है। तो इसप्रकार जैसे परिमण्डल परमाणुसे अणु और ह्रस्व द्व्यणुक उत्पन्न होता है तथा महत् और दीर्घ त्र्यणुक आदि उत्पन्न होते हैं परिमण्डल उत्पन्न नहीं होता, अथवा जिस प्रकार अणु और ह्रस्व द्व्यणुकसे महत् और दीर्घ त्र्यणुक उत्पन्न होता है, न अणु और न ह्रस्व। उसी प्रकार चेतन ब्रह्मसे अचेतन जगत् उत्पन्न हो जायगा, ऐसा स्वीकार करनेमें तुम्हारी क्या हानि है? यदि तुम ऐसा मानो कि द्व्यणुक आदि कार्यद्रव्य विरोधी अन्य परिमाणसे आक्रान्त हैं, इससे कारणगत पारिमाण्डल्यादि आरम्भक नहीं होते, मैं ऐसा स्वीकार करता हूँ। परन्तु चेतनासे विरोधी अन्य गुणसे जगत् आक्रान्त नहीं है, जिससे कि कारणगत चेतना कार्यमें अन्य चेतनाका आरम्भ न करे, क्योंकि अचेतना नामक चेतनाका विरोधी कोई गुण नहीं है केवल चेतनाका अभावमात्र है। इसलिए पारिमाण्डल्य आदिसे

## सत्यानन्दी-दीपिका

समान जातीय अन्य गुणोंको उत्पन्न करते हैं। इसप्रकार सम्पूर्ण कार्य जगत्की उत्पत्ति होती है। परन्तु समवायिकारण परमाणु तथा द्व्यणुकका परिमाण क्रमसे द्व्यणुक, त्र्यणुक अथवा चतुरणुकके परिमाणको उत्पन्न नहीं करता, क्योंकि कारणका परिमाण समानजातीय और उत्कृष्ट परिमाणको उत्पन्न करता है। परमाणुको परिमण्डल और तद्गत परिमाणको पारिमाण्डल्य कहा जाता है। द्व्यणुका ह्रस्व और अणु परिमाण है। उनसे उत्पन्न कार्यपरिमाण उत्कृष्ट होनेसे अणुतर होगा। इससे त्र्यणुकका चाक्षुष प्रत्यक्ष नहीं होगा, कारण कि प्रत्यक्षमें उद्भूतरूप और महत्परिमाण कारण माने गये हैं। अतः द्व्यणुकसे उत्पन्न कार्य द्व्यणुकके ही समान होगा, स्थूल न होनेसे उसका प्रत्यक्ष भी न होगा। इससे इसप्रकारकी सृष्टिका आरम्भ व्यर्थ सिद्ध होगा, इसलिए वैशेषिक सिद्धान्तमें परमाणु और द्व्यणुक गत संख्याको कार्यपरिमाणका आरम्भक माना गया है। जो परमाणुके समुदायसे घट आदि कार्यकी उत्पत्ति मानते हैं, उनके मतमें भी घटके परिमाणका परमाणु परिमाण आरम्भक माननेसे घटका प्रत्यक्ष ही न होगा, क्योंकि वह स्वयं अणुपरिमाण घटमें अणुतर परिमाणको उत्पन्न करेगा। दूसरी बात यह भी है कि अवयवी घटके ध्वस्त होनेसे उसके अवयव-टुकड़े नहीं दीखने चाहिए, कारण कि वे घटके आरम्भक नहीं हैं, घटका आरम्भक परमाणु समुदाय है वह अतीन्द्रिय है तो उसका कार्य घट भी अतीन्द्रिय ही होगा, इत्यादि दोष प्रसक्त होंगे।

त्प्राप्नोति चेतनाया आरम्भकत्वमिति। * मैवं मंस्थाः-तथा कारणे विद्यमानानामपि पारिमाण्डल्यादीनामनारम्भकत्वमेवं चैतन्यस्यापीत्यस्यांशस्य समानत्वात्। नच परिमाणान्तराक्रान्तत्वं पारिमाण्डल्यादीनामनारम्भकत्वे कारणम्, प्राक्परिमाणान्तरारम्भात्पारिमाण्डल्यादीनामारम्भकत्वोपपत्तेः, आरब्धमपि कार्यद्रव्यं प्राग्गुणारम्भात्क्षणमात्रमगुणं तिष्ठतीत्यभ्युपगमात्। न च परिमाणान्तरारम्भे व्यग्राणि पारिमाण्डल्यादीनीत्यतः स्वसमानजातीयं परिमाणान्तरं नारभन्ते, पारिमाणान्तरस्यान्यहेतुत्वाभ्युपगमात्। 'कारणबहुत्वात्कारणमहत्त्वात्प्रचयविशेषाच्च महत्' (वै० सू० ७।१।९) 'तद्विपरीतमणु' (वै०सू० ७।१।१०) 'एतेन दीर्घत्वह्रस्वत्वे व्याख्याते' (वै०सू० ७।१।१७) इति हि काणभुजानि सूत्राणि। न च संनिधानविशेषात्कुतश्चित्कारणबहुत्वादीन्येवारभन्ते न पारिमाण्डल्यादीनीत्युच्येत, द्रव्यान्तरे गुणान्तरे वारभ्यमाणे सर्वेषामेव कारणगुणानां स्वाश्रयसमवायाविशेषात्। तस्मात्स्वभावादेव पारिमाण्डल्यादीनामनारम्भकत्वं, तथा चेतनाया अपीति द्रष्टव्यम्। * संयोगाच्च द्रव्यादीनां विलक्षणानामुत्पत्तिदर्शनात्समानजातीयोत्पत्तिव्यभिचारः। द्रव्ये प्रकृते गुणोदाह-

---

वैषम्य (भिन्न) होनेके कारण चेतनामें आरम्भकत्व प्राप्त होता है। सिद्धान्ती—ऐसा मत समझो, क्योंकि जैसे कारणमें विद्यमान भी पारिमाण्डल्यादि अनारम्भक हैं, वैसे चैतन्य भी, इस अंशमें तो दोनों पक्ष समान है। पारिमाण्डल्यादिके अनारम्भकत्वमें अन्य परिमाणसे आक्रान्त होना कारण नहीं है, क्योंकि अन्य परिमाण (अणुत्व और ह्रस्वत्व) के आरम्भके पूर्व पारिमाण्डल्यादि आरम्भक हो सकते हैं, कारण कि आरब्ध भी कार्यद्रव्य गुणोंके आरम्भके पूर्व क्षणमात्र गुण रहित रहता है, ऐसा स्वीकार किया गया है। पारिमाण्डल्यादि अन्य परिमाणके आरम्भमें व्यग्र हैं, इससे समानजातीय अन्य परिमाणका आरम्भ नहीं करते, यह कथन युक्त नहीं है, क्योंकि परिमाणान्तरका अन्य हेतु (कारणगत संख्या) स्वीकार किया गया है, 'कारणबहुत्वात्०' (कारणके बहुतसे, कारणके महत्त्वसे और अवयवोंके संयोग विशेष से महत् परिमाण उत्पन्न होता है) 'तद्विपरीतमणु' (उससे विपरीत अणु परिमाण उत्पन्न होता है) 'एतेन०' (इससे दीर्घत्व और ह्रस्वत्वका व्याख्यान हुआ) ये कणादके सूत्र हैं। किसी संनिधान विशेषसे कारण बहुत्व आदि आरम्भक होते हैं पारिमाण्डल्यादि नहीं होते, ऐसा नहीं कहा जा सकता, क्योंकि अन्य द्रव्य अथवा अन्य गुणके आरम्भ करनेमें सब कारण गुणोंका स्वाश्रय समवाय समान है, इसलिए स्वभावसे पारिमाण्डल्यादि अनारम्भक हैं, वैसे चेतना भी अनारम्भक है ऐसा समझना चाहिए। और इसीप्रकार संयोगसे विलक्षण द्रव्य आदिकी उत्पत्ति देखनेमें आती है, इससे समान जातियोंकी उत्पत्तिमें व्यभिचार है। यदि कहो कि प्रकृत द्रव्यमें गुणका उदाहरण अयुक्त है, तो ऐसा नहीं है, क्योंकि दृष्टान्तसे केवल विलक्षण आरम्भमात्र विवक्षित

## सत्यानन्दी-दीपिका

* द्व्यणुक परिमाणका कारण परमाणुगत द्वित्वसंख्या है, इसलिए पारिमाण्डल्यादिके आरम्भक होनेमें कोई बाधक नहीं है। द्व्यणुक परिमाण आदिके विषयमें वैशेषिक दर्शनके सूत्र उद्धृत किये गये हैं। द्व्यणुकके बहुत संख्यासे त्र्यणुकमें महत्परिमाण उत्पन्न होता है, मृत्तिका कारणके महत्त्वसे घट आदिमें महत्त्व, दो रूईके पिण्डोंसे आरब्ध अतिस्थूल तूलपिण्डमें प्रचय-अवयवोंके स्थलसंयोगविशेषसे महत्त्व उत्पन्न होता है और महत्त्वके विरुद्ध अणुत्व परमाणुगत द्वित्वसंख्यासे द्व्यणुकमें उत्पन्न होता है।

* वैशेषिक लोग शरीरको पाँच भौतिक मानते हैं और चार्वाक लोग आकाशको भूत न मानकर केवल शून्य अवकाशात्मक मानते हैं, अतः उनके मतमें शरीर चार भूतोंका है। इसलिए वे 'प्रत्यक्षाप्रत्यक्षाणाम' इस सूत्रसे शङ्का करते हैं। यद्यपि यह सूत्र पूर्वपक्षका है तो भी कणादको द्रव्यके

रणमयुक्तमिति चेत्-न, दृष्टान्तेन विलक्षणारम्भमात्रस्य विवक्षितत्वात्। न च द्रव्यस्य द्रव्यमेवोदाहर्तव्यं गुणस्य वा गुण एवेति कश्चिन्नियमे हेतुरस्ति। सूत्रकारोऽपि भवतां द्रव्यस्य गुणमुदाजहार—'प्रत्यक्षाप्रत्यक्षाणामप्रत्यक्षत्वात्संयोगस्य पञ्चात्मकं न विद्यते' ( वै० सू० ४।२।२) इति। यथा प्रत्यक्षाप्रत्यक्षयोर्भूम्याकाशयोः समवयन्संयोगोऽप्रत्यक्ष एवं प्रत्यक्षाप्रत्यक्षेषु पञ्चसु भूतेषु समवयच्छरीरमप्रत्यक्षं स्यात्। प्रत्यक्षं हि शरीरम्। तस्मान्न पाञ्चभौतिकमिति। एतदुक्तं भवति—गुणश्च संयोगो द्रव्यं शरीरम्। 'दृश्यते तु' ( ब्र० सू० २।१।६ ) इति चात्रापि विलक्षणोत्पत्तिः प्रपञ्चिता। नन्वेवं सति तेनैवैतद्गतम्। नेति ब्रूमः—तत्सांख्यं प्रत्युक्तम्, एतत्तु वैशेषिकं प्रति। नन्वतिदेशोऽपि समानन्यायतया कृतः। 'एतेन शिष्टापरिग्रहा अपि व्याख्याताः' ( ब्र० सू० २।१।१२ ) इति। सत्यमेतत्, तस्यैव त्वयं वैशेषिकप्रक्रियारम्भे तत्प्रक्रियानुगतेन निदर्शनेन प्रपञ्चः कृतः ॥११॥

( ३ परमाणुजगदकारणत्वाधिकरणम्, सू० १२-१७ )

## उभयथापि न कर्मातस्तदभावः ॥१२॥

पदच्छेद—उभयथा, अपि, न, कर्म, अतः, तदभावः।

सूत्रार्थ—( उभयथापि ) दोनों प्रकारसे भी परमाणुमें ( न कर्म ) उत्पत्ति विषयक क्रिया नहीं हो सकती, ( अतः ) ( तदभावः ) परमाणुसे द्व्यणुक आदि क्रमसे सृष्टि नहीं हो सकती।

* इदानीं परमाणुकारणवादं निराकरोति। स च वाद इत्थं समुत्तिष्ठते—पटादीनि हि लोके सावयवानि द्रव्याणि स्वानुगतैरेवसंयोगसचिवैस्तन्त्वादिभिर्द्रव्यैरारभ्यमाणानि

---

है। द्रव्यका द्रव्य ही उदाहरण होना चाहिए अथवा गुणका गुण ही, इस नियममें कोई हेतु नहीं है। आपके सूत्रकारने भी द्रव्यका गुण उदाहरण दिया है—'प्रत्यक्षाप्रत्यक्षाणाम०' ( प्रत्यक्ष और अप्रत्यक्षका संयोग प्रत्यक्ष न होनेसे शरीर पंचभूतात्मक नहीं है ) जैसे प्रत्यक्ष और अप्रत्यक्ष भूमि और आकाशमें समवाय सम्बन्धसे रहता हुआ संयोग अप्रत्यक्ष है, वैसे ही प्रत्यक्ष और अप्रत्यक्ष पांच भूतोंमें समवाय सम्बन्धसे रहता हुआ शरीर अप्रत्यक्ष होगा। परन्तु शरीर तो निश्चित प्रत्यक्ष है, इसलिए पाँच भौतिक नहीं है। तात्पर्य यह है कि संयोग गुण है और शरीर द्रव्य है। 'दृश्यते तु' इस सूत्रमें भी विलक्षण उत्पत्तिका विस्तारसे वर्णन किया गया है। परन्तु ऐसा हो तो उससे ही यह सूत्र गतार्थ है। हम कहते हैं कि ऐसा नहीं है, वह सांख्यके प्रति कहा गया और यह सूत्र वैशेषिकोंके प्रति कहा जाता है। परन्तु 'एतेन शिष्टापरिग्रहा अपि व्याख्याताः' ( इससे शिष्टोंसे अपरिगृहीतोंका भी प्रत्याख्यान समझना ) इसप्रकार समान न्यायरूपसे अतिदेश भी किया गया है। यह सत्य है, परन्तु उसीका तो वैशेषिक प्रक्रियाके आरम्भमें उसकी प्रक्रियाके अनुसारी दृष्टान्तसे यह विस्तार किया गया है ॥ ११ ॥

अब परमाणु कारणवादका निराकरण करते हैं—वह वाद इसप्रकार उपस्थित होता है, लोकमें पट आदि सावयव द्रव्य स्वानुगत संयोग सहकारी तन्तु आदि द्रव्योंसे उत्पन्न होते देखे गये

### सत्यानन्दी-दीपिका

विषयमें गुणका उदाहरण मान्य है। अतः भगवान् भाष्यकारने भी इस सूत्रको उदाहरणरूपसे दिया है, इसलिए चेतन ब्रह्मसे भी अचेतन जगत् उत्पन्न हो जायगा और उसमें चेतना उत्पन्न नहीं होगी ॥११॥

* ईश्वरसे अनधिष्ठित होनेसे प्रधान जगत्का कारण नहीं है, तो भी ईश्वरसे अधिष्ठित होनेसे परमाणु जगत्के कारण हों, इसप्रकार प्रत्युदाहरण संगतिसे सांख्याधिकरणके अनन्तर इस अधिकरणका आरम्भ है। द्व्यणुक आदि क्रमसे परमाणुद्वारा यह समस्त भावात्मक कार्य जगत् उत्पन्न

दृष्टानि। तत्सामान्येन यावत्किंचित्सावयवं तत्सर्वं स्वानुगतैरेव संयोगसचिवैस्तैस्तैर्द्रव्यैरारब्धमिति गम्यते। स चायमवयवावयविविभागो यतो निवर्तते, सोऽपकर्षपर्यन्तगतः परमाणुः। सर्वं चेदं जगद्गिरिसमुद्रादिकं सावयवम्, सावयवत्वाच्चाद्यन्तवत्। न चाकारणेन कार्येण भवितव्यमित्यतः परमाणवो जगतः कारणमिति कणभुगभिप्रायः। तानीमानि चत्वारि भूतानि भूम्युदकतेजःपवनाख्यानि सावयवान्युपलभ्य चतुर्विधाः परमाणवः परिकल्प्यन्ते, तेषां चापकर्षपर्यन्तगतत्वेन परतो विभागासंभवाद्विनश्यतां पृथिव्यादीनां परमाणुपर्यन्तो विभागो भवति, स प्रलयकालः। ततः सर्गकाले च वायवीयेष्वणुष्वदृष्टापेक्षं कर्मोत्पद्यते, तत्कर्म स्वाश्रयमणुमण्वन्तरेण संयुनक्ति, ततो द्व्यणुकादिक्रमेण वायुरुत्पद्यते। एवमग्निरेवमाप एवं पृथिवी, एवमेव शरीरं सेन्द्रियमिति। एवं सर्वमिदं जगदणुभ्यः संभवति, अणुगतेभ्यश्च रूपादिभ्यो द्व्यणुकादिगतानि रूपादीनि संभवन्ति तन्तुपटन्यायेनेति काणादा मन्यन्ते। तत्रेदमभिधीयते—विभागावस्थानां तावदणूनां संयोगः कर्मापेक्षोऽभ्युपगन्तव्यः, कर्मवतां तन्त्वादीनां संयोगदर्शनात्। कर्मणश्च कार्यत्वान्निमित्तं किमप्यभ्युपगन्तव्यम्। अनभ्युपगमे निमित्ताभावान्नाणुष्वाद्यं कर्म स्यात्। अभ्युपगमेऽपि यदि प्रयत्नोऽभिघातादिर्वा यथादृष्टं

---

हैं। इस सामान्य उदाहरणसे ज्ञात होता है कि जो कोई सावयव ( अवयवी द्रव्य ) है वह सब अपने अनुगत संयोग सहकारी युक्त तत् तत् द्रव्योंसे आरब्ध है। यह जो अवयवावयविविभाग जहाँपर निवृत्त होता है वह न्यूनतम परिमाणको प्राप्त हुआ ही परमाणु है। पर्वत, समुद्र आदि यह सम्पूर्ण जगत् सावयव है, सावयव होनेसे आदि और अन्तवाला है। कार्य कारणके बिना नहीं होना चाहिए, अतः परमाणु जगत्के कारण हैं, यह कणादका आशय-मत है। पृथिवी, जल, अग्नि और वायु इन चार भूतोंको सावयव देखकर चार प्रकारके परमाणुओंकी कल्पना की जाती है, न्यूनतम परिमाण तक विभक्त होनेसे आगे और विभागके संभव न होनेपर विनष्ट होते हुए उन पृथिवी आदिका परमाणु पर्यन्त जो विभाग होता है, वह प्रलयकाल है। तदनन्तर पुनः सृष्टिकालमें वायुके परमाणुओं में जीवोंके अदृष्टको अपेक्षासे क्रिया उत्पन्न होती है, वह कर्म अपने आश्रयभूत परमाणुका अन्य परमाणुसे संयोग करता है, ततः द्व्यणुक आदि क्रमसे वायु उत्पन्न होता है, इसीप्रकार अग्नि एवं जल एवं पृथिवी उत्पन्न होती है और इसीप्रकार इन्द्रियों सहित शरीर उत्पन्न होता है। इसप्रकार यह सारा जगत् अणुओंसे उत्पन्न होता है। जैसे तन्तुके रूपसे पटगतरूप उत्पन्न होता है, वैसे परमाणुगत रूप आदिसे द्व्यणुक आदिगत रूपादि उत्पन्न होते हैं, ऐसा वैशेषिक मानते हैं। सिद्धान्ती—इस विषयमें कहते हैं—विभागावस्थामें स्थित परमाणुओंका संयोग कर्मको अपेक्षासे मानना चाहिए, क्योंकि कर्म युक्त तन्तु आदिका संयोग देखनेमें आता है। कर्म कार्य है, इसलिए उसका कोई भी निमित्त ( कारण ) मानना चाहिए। निमित्तके स्वीकार न करने पर तो निमित्तके अभाव होनेसे परमाणुओंमें आद्य ( पहला ) कर्म नहीं होगा, यदि स्वीकार करें तो व्यवहारमें जैसे कर्मका निमित्त प्रयत्न अथवा अभिघात ( शब्दजनक संयोग विशेष ) आदि देखे जाते हैं, वैसे परमाणुके कर्मका कोई

### सत्यानन्दी-दीपिका

होता है, यह वैशेषिकोंका सिद्धान्त इस अधिकरणका विषय है। उनके मतमें प्रत्येकभाव कार्यके समवायी, असमवायी और निमित्त तीन कारण होते हैं। तन्तुओंमें समवाय सम्बन्धसे पट उत्पन्न होता है, इससे तन्तु पटका समवायिकारण हैं। तन्तुओंका परस्पर संयोग समवाय सम्बन्धसे तन्तुओंमें रहकर पटको उत्पन्न करता है, इसलिए तन्तुओंका संयोग पटके प्रति असमवायिकारण है। शेष जुलाहा वेम आदि निमित्तकारण हैं। इस पटके उदाहरणसे यह समझना चाहिए कि सब सावयव द्रव्य अपने अवयवोंसे उत्पन्न होते हैं। पृथिवी आदि चारोंके परमाणु नित्य और निरवयव होते हैं।

किमपि कर्मणो निमित्तमभ्युपगम्येत, तस्यासंभवान्नैवाणुष्वाद्यं कर्म स्यात्। नहि तस्यामवस्थायामात्मगुणः प्रयत्नः संभवति, शरीराभावात्। शरीरप्रतिष्ठे हि मनस्यात्मनः संयोगे सत्यात्मगुणः प्रयत्नो जायते। एतेनाभिघाताद्यपि दृष्टं निमित्तं प्रत्याख्यातव्यम्। सर्गोत्तरकालं हि तत्सर्वं नाद्यस्य कर्मणो निमित्तं संभवति। * अथादृष्टमाद्यस्य कर्मणो निमित्तमित्युच्येत, तत्पुनरात्मसमवायि वा स्यादणुसमवायि वा? उभयथापि नादृष्टनिमित्तमणुषु कर्मावकल्पेत, अदृष्टस्याचेतनत्वात्। नह्यचेतनं चेतनेनानधिष्ठितं स्वतन्त्रं प्रवर्तते प्रवर्तयति वेति सांख्यप्रक्रियायामभिहितम्, आत्मनश्चानुत्पन्नचैतन्यस्य तस्यामवस्थायामचेतनत्वात्, आत्मसमवायित्वाभ्युपगमाच्च नादृष्टमणुषु कर्मणो निमित्तं स्यादसंबन्धात्। अदृष्टवता पुरुषेणास्त्यणूनां संबन्ध इति चेत्—संबन्धसातत्यात्प्रवृत्तिसातत्यप्रसङ्गो नियामकान्तराभावात्। तदेवं नियतस्य कस्यचित्कर्मनिमित्तस्याभावान्नाणुष्वाद्यं कर्म स्यात्। कर्माभावात्तन्निबन्धनः संयोगो न स्यात्। संयोगाभावाच्च तन्निबन्धनं द्व्यणुकादि कार्यजातं न स्यात्। * संयोगश्चाणोरण्वन्तरेण सर्वात्मना वा स्यादेकदेशेन वा? सर्वात्मना चेदुपचयानुपपत्तेरणुमात्रत्वप्रसङ्गो दृष्टविपर्ययप्रसङ्गश्च। प्रदेशवतो द्रव्यस्य प्रदेशवता द्रव्यान्तरेण संयोगस्य दृष्टत्वात्। एकदेशेन चेत्सावयवत्वप्रसङ्गः। परमाणूनां कल्पिताः प्रदेशाः स्युरिति

---

भी निमित्त मानना पड़ेगा। उसका असंभव होनेसे परमाणुओंमें आद्य कर्म नहीं होगा, क्योंकि उस अवस्थामें आत्माके गुण प्रयत्नका संभव नहीं है, कारण कि उस समय शरीर नहीं है। शरीर स्थित हुए मनके साथ आत्माका संयोग होनेपर आत्माका गुण प्रयत्न उत्पन्न होता है। इस कथनसे अभिघात आदि दृष्टनिमित्तका भी प्रत्याख्यान करना चाहिए, क्योंकि यह सब सृष्टिके अनन्तर होनेसे आद्यकर्मका निमित्त नहीं हो सकता है। यदि कहो कि अदृष्ट आद्य कर्मका निमित्त है, तो वह अदृष्ट आत्मामें समवाय सम्बन्धसे रहने वाला है अथवा अणु समवायी है? दोनों प्रकारसे अदृष्ट निमित्तक परमाणुओंमें कर्मकी कल्पना नहीं की जा सकती, क्योंकि अदृष्ट अचेतन है। चेतनसे अनधिष्ठित अचेतन स्वतन्त्ररूपसे न प्रवृत्त होता है और न किसीको प्रवृत्त करा सकता है, यह सांख्यप्रक्रियामें कहा गया है। जिसमें चैतन्य उत्पन्न नहीं हुआ है वह आत्मा उस अवस्थामें अचेतन है। आत्मसमवायित्व स्वीकार करनेसे अदृष्ट परमाणुओंमें कर्मका निमित्त न होगा, क्योंकि उसका अदृष्टके साथ कोई सम्बन्ध नहीं है। यदि कहो कि अदृष्टवाले पुरुषके साथ अणुओंका सम्बन्ध है, तो सम्बन्धके निरन्तर रहनेसे सर्वदा प्रवृत्तिका प्रसंग होगा, कारण कि अन्य नियामकका अभाव है। इसप्रकार किसी नियत कर्म निमित्तके अभाव होनेसे अणुओंमें आद्यकर्म न होगा, कर्मके अभाव होनेसे कर्म निमित्तक संयोग न होगा। संयोगके अभाव होनेसे तन्निमित्तक द्व्यणुक आदि कार्य समुदाय नहीं होगा। एक परमाणुका अन्य परमाणुके साथ संयोग सर्वात्मना होगा अथवा एक देशसे? यदि सर्वात्मना हो, तो उपचय (स्थूलता) की अनुपपत्ति होनेसे परमाणुमात्रत्व प्रसङ्ग और दृष्ट विपर्यय प्रसङ्ग होगा, क्योंकि प्रदेशवाले द्रव्यका प्रदेशवाले अन्य द्रव्यके साथ संयोग देखा गया है। यदि एक देशसे हो तो

## सत्यानन्दी-दीपिका

* तुम्हारे मतमें आत्मा जड़ है ज्ञानमें चेतनता है, अतः अचेतन आत्मासे अचेतन अदृष्ट अधिष्ठित नहीं हो सकता है। ज्ञान शरीरके होनेपर आत्मा और मनके संयोगसे उत्पन्न होता है, इसलिए सृष्टिकालमें आत्मा अचेतन ही है। अदृष्ट आत्मामें समवाय सम्बन्धसे रहता है, उसका बाह्य परमाणुके साथ कोई सम्बन्ध ही नहीं, जिससे क्रियाका कारण हो। यदि अदृष्टवाले आत्माका परमाणुके साथ सम्बन्ध मानें तो आत्मा व्यापक है, इससे निरन्तर सम्बन्ध होनेके कारण परमाणुमें निरन्तर क्रिया होगी और पुनः कभी भी प्रलय नहीं होगा, क्योंकि अन्य कोई नियामक नहीं है।

चेत्—कल्पितानामवस्तुत्वादवस्त्वेव संयोग इति वस्तुनः कार्यस्यासमवायिकारणं न स्यात्। असति चासमवायिकारणे द्व्यणुकादिकार्यद्रव्यं नोत्पद्येत। यथा चादिसर्गे निमित्ताभावात्संयोगोत्पत्त्यर्थं कर्म नाणूनां संभवति, एवं महाप्रलयेऽपि विभागोत्पत्त्यर्थं कर्म नैवाणूनां संभवेत्। नहि तत्रापि किंचिन्नियतं तन्निमित्तं दृष्टमस्ति। अदृष्टमपि भोगप्रसिद्ध्यर्थं न प्रलयप्रसिद्ध्यर्थमित्यतो निमित्ताभावान्न स्यादणूनां संयोगोत्पत्त्यर्थं विभागोत्पत्त्यर्थं वा कर्म। अतश्च संयोगविभागाभावात्तदायत्तयोः सर्गप्रलययोरभावः प्रसज्येत। तस्मादनुपपन्नोऽयं परमाणुकारणवादः ॥१२॥

## समवायाभ्युपगमाच्च साम्यादनवस्थितेः ॥१३॥

पदच्छेद—समवायाभ्युपगमात्, च, साम्याद, अनवस्थितेः।

सूत्रार्थ—(च) और (समवायाभ्युपगमात्) जैसे परमाणुओंसे अत्यन्त भिन्न द्व्यणुक समवाय सम्बन्धसे उनके साथ सम्बद्ध है ऐसा स्वीकार किया है, वैसे समवाय भी समवायियोंसे अत्यन्त भिन्न होता हुआ अन्य समवाय सम्बन्धसे उनके साथ सम्बद्ध होगा, ( साम्यात् ) क्योंकि अत्यन्त भेद दोनोंमें समान है, ( अनवस्थितेः ) ऐसी स्थितिमें तत्, तत् समवायके लिए अन्य अन्य समवायकी कल्पना करनी होगी, इससे अनवस्था होनेके कारण द्व्यणुक आदि क्रमसे सृष्टि नहीं होगी।

* समवायाभ्युपगमाच्च तदभाव इति प्रकृतेनाणुवादनिराकरणेन संबध्यते। द्वाभ्यां चाणुभ्यां द्व्यणुकमुत्पद्यमानमत्यन्तभिन्नमणुभ्यामण्वोः समवैतीत्यभ्युपगम्यते भवता। न

---

परमाणुमें सावयवत्व प्रसंग होगा। यदि कहो कि परमाणुओंके कल्पित प्रदेश होंगे, तो कल्पितको अवस्तुरूप होनेसे उनका संयोग भी अवस्तुरूप होगा, इससे वह वस्तु कार्यका असमवायिकरण न होगा। असमवायिकारणके न होनेपर द्व्यणुक आदि कार्य द्रव्य उत्पन्न नहीं होगा। जैसे आदि सृष्टिमें निमित्तके अभावसे संयोगकी उत्पत्तिके लिए परमाणुओंमें कर्म नहीं हो सकता, वैसे महाप्रलयमें भी विभागकी उत्पत्तिके लिए परमाणुओंमें कर्म नहीं हो सकेगा, कारण कि उसमें भी उस ( विभाग ) का कोई नियत निमित्त नहीं देखा गया है। अदृष्ट ( धर्माधर्म ) भी भोगकी सिद्धिके लिए है प्रलयकी सिद्धिके लिए नहीं है, इसलिए निमित्तके अभावसे परमाणुओंमें संयोगकी उत्पत्तिके लिए अथवा विभागकी उत्पत्तिके लिए कर्म नहीं है। अतएव संयोग और विभागके अभावसे तदधीन होनेवाले सर्ग और प्रलयका अभाव प्रसक्त होगा, इसलिए यह परमाणु कारणवाद अनुपपन्न है ॥१२॥

और वैशेषिकों द्वारा समवाय स्वीकार करनेसे भी सृष्टि और प्रलयका अभाव है, इसका प्रकृत परमाणु कारणवादके निराकरणके साथ सम्बन्ध है। दो परमाणुओंसे उत्पद्यमान द्व्यणुक परमाणुओंसे

### सत्यानन्दी-दीपिका

* इस प्रकार संयोगके निमित्तका खण्डनकर, अब परमाणुमें संयोगके स्वरूपका 'संयोगश्चाणो' आदिसे खण्डन करते हैं—परमाणुका संयोग व्याप्यवृत्ति है अथवा अव्याप्यवृत्ति ( एकदेशवृत्ति )? प्रथम पक्ष ठीक नहीं है, क्योंकि सम्पूर्णरूपसे व्याप्त होनेसे एक परमाणुका दूसरे परमाणुमें अन्तर्भाव होनेके कारण कार्यमें स्थूलता न आनेसे कार्य परमाणुमात्र होगा और वह दृष्टिगोचर न होगा, इससे लोक प्रसिद्धिका भी विरोध होगा, क्योंकि व्यवहारमें सावयव द्रव्योंका अन्य सावयव द्रव्यके साथ एक देशसे-अव्याप्यवृत्ति संयोग होता है। जैसे पक्षी आदिका वृक्षादिके साथ। दूसरा पक्ष भी युक्त नहीं है, क्योंकि अव्याप्यवृत्ति संयोग सावयवोंका होता है। यदि परमाणुको सावयव मानें तो निरवयवत्व सिद्धान्त भङ्ग होगा, अतः यह परमाणुकारणवाद युक्त नहीं है ॥१२॥

* समवायको अन्य समवायकी अपेक्षा जो अनवस्था दोष दिया गया है, वह युक्त नहीं है, क्योंकि

चैवमभ्युपगच्छता शक्यतेऽणुकारणता समर्थयितुम् । कुतः ? साम्यादनवस्थितेः । यथैव ह्यणुभ्यामत्यन्तभिन्नं सद्द्व्यणुकं समवायलक्षणेन संबन्धेन ताभ्यां संबध्यत एवं समवायोऽपि समवायिभ्योऽत्यन्तभिन्नः सन्समवायलक्षणेनान्येनैव संबन्धेन समवायिभिः संबध्येत, अत्यन्तभेदसाम्यात् । ततश्च तस्य तस्यान्योन्यः संबन्धः कल्पयितव्य इत्यनवस्थैव प्रसज्येत । नन्विह प्रत्ययग्राह्यः समवायो नित्यसंबद्ध एव समवायिभिर्गृह्यते नासंबद्धः संबन्धान्तरापेक्षो वा । ततश्च न तस्यान्यः संबन्धः कल्पयितव्यो येनानवस्था प्रसज्येतेति । * नेत्युच्यते—संयोगोऽप्येवं सति संयोगिभिर्नित्यसंबद्ध एवेति समवायवन्नान्यं संबन्धमपेक्षेत । अथार्थान्तरत्वात्संयोगः संबन्धान्तरमपेक्षेत,समवायोऽपि तर्ह्यर्थान्तरत्वात्संबन्धान्तरमपेक्षेत । नच गुणत्वात्संयोगः संबन्धान्तरमपेक्षते न समवायोऽगुणत्वादिति युज्यते वक्तुम्, अपेक्षाकारणस्य तुल्यत्वात्, गुणपरिभाषायाश्चातन्त्रत्वात् । तस्मादर्थान्तरं समवायमभ्युपगच्छतः प्रसज्येतैवानवस्था । प्रसज्यमानायां चानवस्थायामेकासिद्धौ सर्वासिद्धेर्द्वाभ्यामणुभ्यां द्व्यणुकं नैवोत्पद्येत । तस्मादप्यनुपपन्नः परमाणुकारणवादः ॥१३॥

---

अत्यन्त भिन्न होता हुआ परमाणुओंमें समवेत है ऐसा आप स्वीकार करते हैं । परन्तु ऐसा स्वीकार करते हुए आप परमाणुमें कारणताका समर्थन नहीं कर सकते, क्यों ? क्योंकि साम्य और अनवस्थिति है । जिस प्रकार परमाणुओंसे अत्यन्त भिन्न होता हुआ द्व्यणुक समवायरूप सम्बन्धसे उनके साथ सम्बद्ध होता है, उसी प्रकार समवाय भी समवायियोंसे अत्यन्त भिन्न होता हुआ समवायरूप अन्य सम्बन्धसे ही समवायियोंके साथ सम्बद्ध होगा, क्योंकि दोनोंमें अत्यन्त भेद समान है । इसलिए तत् तत् समवायके लिए अन्य अन्य सम्बन्धकी कल्पना करनी चाहिए, इससे अनवस्था ही प्रसक्त होगी । परन्तु 'इह' ( यहाँ ) इस प्रतीतिसे ग्राह्य समवाय समवायियोंसे नित्य सम्बद्ध ही गृहीत होता है न असम्बद्ध और न अन्य सम्बन्धकी अपेक्षावाला है, इसलिए उसके लिए अन्य सम्बन्धकी कल्पना करना युक्त नहीं है जिससे अनवस्था प्रसक्त हो । सिद्धान्ती—नहीं, ऐसा कहते हैं, क्योंकि ऐसा होनेपर संयोग भी संयोगियोंके साथ नित्य सम्बद्ध ही है, इससे समवायके समान संयोग भी अन्य सम्बन्धकी अपेक्षा न करेगा । यदि [ संयोगियोंसे ] भिन्न पदार्थ होनेसे संयोग अन्य सम्बन्धकी अपेक्षा रखेगा, तो समवाय भी [ समवायियोंसे ] भिन्न पदार्थ होनेसे अन्य सम्बन्धकी अपेक्षा करेगा । गुण होनेसे संयोग अन्य सम्बन्धकी अपेक्षा करता है और अगुण होनेसे समवाय अपेक्षा नहीं करता, यह कहना युक्त नहीं है, क्योंकि दोनोंमें अपेक्षाका कारण ( सम्बन्धियोंसे भिन्नता ) समान है और गुणपरिभाषा अशास्त्रीय है । इसलिए समवायको अन्य पदार्थ स्वीकार करनेवालेको अनवस्था प्रसक्त होगी । इस प्रकार अनवस्थाके प्रसक्त होनेपर एककी असिद्धिसे सबकी असिद्धि होनेसे दो परमाणुओंसे द्व्यणुक उत्पन्न नहीं होगा । इससे भी परमाणु कारणवाद अनुपपन्न है ॥ १३ ॥

## सत्यानन्दी-दीपिका

'इह तन्तुषु पटः' ( इन तन्तुओंमें पट है ) इत्यादि विशिष्ट प्रतीतिका नियामक समवाय है । उसको अन्य सम्बन्धकी अपेक्षा नहीं है, क्योंकि वह स्वरूपसे ही नित्य सम्बद्ध है ।

* वस्तुतः संयोगके समान समवाय भी द्रव्याश्रयी है, द्रव्यके नाशसे जैसे संयोगका नाश होता है, वैसे समवायका भी, इससे समवाय माननेकी अपेक्षा नहीं है । जैसे कार्य होनेसे दो परमाणुओंके संयोगके लिए निमित्त नहीं है, वैसे समवायकी उत्पत्तिके लिए भी निमित्त नहीं है, अतः परमाणु कारणवाद अयुक्त है ॥ १३ ॥

## नित्यमेव च भावात् ॥१४॥

पदच्छेद—नित्यम्, एव, च, भावात् ।

सूत्रार्थ—परमाणुका प्रवृत्तिस्वभाव मानें तो ( नित्यमेव ) प्रवृत्तिके नित्य होनेसे (भावात्) प्रलयाभाव प्रसङ्ग (च) और निवृत्ति स्वभाव मानें तो ( नित्यमेव ) निवृत्ति नित्य होनेसे ( भावात् ) सृष्टिका अभाव प्रसङ्ग होगा । इससे भी परमाणु कारणवाद अनुपपन्न है ।

अपि चाणवः प्रवृत्तिस्वभावा वा निवृत्तिस्वभावा वोभयस्वभावा वाऽनुभयस्वभावा वाऽभ्युपगम्यन्ते, गत्यन्तराभावात्। चतुर्धापि नोपपद्यते। प्रवृत्तिस्वभावत्वे नित्यमेव प्रवृत्तेर्भावात्प्रलयाभावप्रसङ्गः। निवृत्तिस्वभावत्वेऽपि नित्यमेव निवृत्तेर्भावात्सर्गाभावप्रसङ्गः। उभयस्वभावत्वं च विरोधादसमञ्जसम्। अनुभयस्वभावत्वे तु निमित्तवशात्प्रवृत्तिनिवृत्त्योरभ्युपगम्यमानयोरदृष्टादेर्निमित्तस्य नित्यसंनिधानान्नित्यप्रवृत्तिप्रसङ्गात्, अतन्त्रत्वेऽप्यदृष्टादेर्नित्याप्रवृत्तिप्रसङ्गात्। तस्मादप्यनुपपन्नः परमाणुकारणवादः ॥ १४ ॥

## रूपादिमत्त्वाच्च विपर्ययो दर्शनात् ॥१५॥

पदच्छेद—रूपादिमत्त्वात्, च, विपर्ययः, दर्शनात् ।

सूत्रार्थ—( च ) और ( रूपादिमत्त्वात् ) वैशेषिकमतमें परमाणुको रूपादि युक्त होनेसे ( विपर्ययः ) उसमें निरवयवत्व अणुत्व आदिके विपरीत सावयवत्व आदिकी प्रसक्ति होगी, ( दर्शनात् ) क्योंकि व्यवहारमें रूपादि युक्त घट आदिमें ऐसा देखनेमें आता है ।

* सावयवानां द्रव्याणामवयवशो विभज्यमानानां यतः परो विभागो न संभवति ते चतुर्विधा रूपादिमन्तः परमाणवश्चतुर्विधस्य रूपादिमतो भूतभौतिकस्यारम्भका नित्याश्चेति यद्वैशेषिका अभ्युपगच्छन्ति स तेषामभ्युपगमो निरालम्बन एव, यतो रूपादिमत्त्वात्परमाणूनामणुत्वनित्यत्वविपर्ययः प्रसज्येत। परमकारणापेक्षया स्थूलत्वमनित्यत्वं च तेषामभिप्रेतविपरीतमापद्येतेत्यर्थः। कुतः? एवं लोके दृष्टत्वात्। यद्धि लोके रूपादिमद्वस्तु

---

और परमाणु प्रवृत्ति स्वभाववाले वा निवृत्तिस्वभाववाले अथवा उभयस्वभाववाले वा अनुभयस्वभाववाले माने जाते हैं ? क्योंकि इनसे अतिरिक्तगति ( प्रकार ) नहीं है । चारों प्रकार भी उपपन्न नहीं होते । प्रवृत्तिस्वभावत्व होनेपर नित्य ही प्रवृत्ति होनेसे प्रलयका अभाव प्रसङ्ग होगा। निवृत्तिस्वभावत्व होनेपर भी नित्य ही निवृत्त होनेसे सृष्टिका अभाव प्रसङ्ग होगा । प्रवृत्ति और निवृत्ति दोनों स्वभाव होने पर परस्पर विरुद्ध होने के कारण असंगत है । यदि प्रवृत्ति और निवृत्ति उभयस्वभाव न मानें तो किसी कारणवश प्रवृत्ति और निवृत्ति स्वीकार करनेमें अदृष्ट आदि निमित्तके नित्य सन्निहित होनेसे नित्यप्रवृत्तिका प्रसङ्ग होगा, अदृष्टादि अनियामक होनेपर भी नित्य अप्रवृत्ति प्रसङ्ग होगा, इससे भी परमाणु कारणवाद अनुपपन्न है ॥ १४ ॥

अवयवशः (क्रमसे) विभज्यमान सावयव द्रव्योंका जहाँसे आगे विभाग नहीं हो सकता, वे चार प्रकारके रूपादि युक्त परमाणु रूपादि विशिष्ट चार प्रकारके भूत और भौतिकके आरम्भक हैं और नित्य हैं, ऐसा जो वैशेषिक स्वीकार करते हैं; उनका वह स्वीकार निरालम्ब-निराधार है, क्योंकि रूपादि विशिष्ट होनेसे परमाणुओंको अणुत्व और नित्यत्वके विपर्यय ( स्थूलत्व और अनित्यत्व ) की प्रसक्ति होगी । परमकारणकी अपेक्षा उनको अभिप्रेतके विपरीत स्थूलत्व, अनित्यत्व प्रसङ्ग होगा, ऐसा अर्थ है । क्यों ? क्योंकि लोकमें इस प्रकार देखनेमें आता है । लोकमें जो रूप आदि युक्त वस्तु है वह अपने

### सत्यानन्दी-दीपिका

* परमाणु स्पर्श, रूप, रस, गन्ध आदि गुणोंसे युक्त चार प्रकारके हैं । वे रूपादि गुणोंसे युक्त वायु, अग्नि, जल और पृथिवी इन चार प्रकारके भूतों और घट, पट आदि भौतिक पदार्थोंके आरम्भक

तत्स्वकारणापेक्षया स्थूलमनित्यं च दृष्टम्, तद्यथा पटस्तन्तूनपेक्ष्य स्थूलोऽनित्यश्च भवति, तन्तवश्चांशूनपेक्ष्य स्थूला अनित्याश्च भवन्ति, तथा चामी परमाणवो रूपादिमन्तस्तैरभ्युपगम्यन्ते, तस्मात्तेऽपि कारणवन्तस्तदपेक्षया स्थूला अनित्याश्च प्राप्नुवन्ति। * यच्च नित्यत्वे कारणं तैरुक्तम्—'सदकारणवन्नित्यम्' (वै० सू० ४।१।१ ) इति। तदप्येवं सत्यणुषु न संभवति, उक्तेन प्रकारेणाणूनामपि कारणवत्त्वोपपत्तेः। यदपि नित्यत्वे द्वितीयं कारणमुक्तम्—'अनित्यमिति च विशेषतः प्रतिषेधाभावः'( वै० ४।१।४ ) इति, तदपि नावश्यं परमाणूनां नित्यत्वं साधयति। असति हि यस्मिन्कस्मिंश्चिन्नित्ये वस्तुनि नित्यशब्देन नञः समासो नोपपद्यते, न पुनः परमाणुनित्यत्वमेवापेक्ष्यते। तच्चास्त्येव नित्यं परमकारणं ब्रह्म। न च शब्दार्थव्यवहारमात्रेण कस्यचिदर्थस्य प्रसिद्धिर्भवति, प्रमाणान्तरसिद्धयोः शब्दार्थयोर्व्यवहारावतारात्। * यदपि नित्यत्वे तृतीयं कारणमुक्तम्—'अविद्या च' (वै० ४। १।५) इति, तद्यद्येवं विव्रीयेत सतां परिदृश्यमानकार्याणां कारणानां प्रत्यक्षेणाग्रहणमविद्येति, ततो द्व्यणुकनित्यताऽप्यापद्येत। अथाद्रव्यत्वे सतीति विशेष्येत, तथाप्यकारणव-

कारणकी अपेक्षा स्थूल और अनित्य देखी जाती है। जैसे पट तन्तुओंकी अपेक्षा स्थूल और अनित्य होता है, तन्तु अपने अवयवोंकी अपेक्षा स्थूल और अनित्य होते हैं, वैसे ये परमाणु भी रूपादि युक्त हैं, ऐसा वे स्वीकार करते हैं। इसलिए वे भी कारणवाले हैं और उसकी अपेक्षा स्थूल और अनित्य प्राप्त होते हैं। 'सदकारणवन्नित्यम्' (सत् और अकारणवाला होनेसे नित्य है) इसप्रकार परमाणुके नित्यत्वमें उन्होंने जो कारण कहा है, वह भी ऐसा होनेपर अर्थात् परमाणु कारणवाला होनेपर परमाणुमें संभव नहीं है, क्योंकि उक्त प्रकार ( स्पर्शवत्त्व, परिच्छिन्नत्व ) से परमाणु भी कारणवाले हो सकते हैं। और 'अनित्यमिति च०' ( अनित्य है, इसप्रकार विशेषरूपसे प्रतिषेधका अभाव है ) इसप्रकार नित्यत्वमें जो दूसरा कारण कहा गया है, वह भी अवश्य परमाणुओंमें नित्यत्व सिद्ध नहीं करता। यदि कोई नित्य वस्तु न हो तो नित्य शब्दके साथ नञ्का समास उपपन्न न होता। अतः यहाँ परमाणुके नित्यत्वकी अपेक्षा नहीं है। वह नित्य परम कारण ब्रह्म ही है। शब्द और अर्थके व्यवहारमात्रसे किसी अर्थकी प्रसिद्धि नहीं होती, क्योंकि अन्य प्रमाणसे सिद्ध शब्द और अर्थको व्यवहारमें लाया जाता है। 'अविद्या च' (और अविद्या) इसप्रकार परमाणुके नित्यत्वमें जो भी तृतीय कारण कहा गया है। उसका यदि ऐसा विवर्ण करें कि जिसका कार्य परिदृश्यमान है ऐसे विद्यमान कारणोंका प्रत्यक्षसे अग्रहण अविद्या है, तो इससे द्व्यणुकको भी नित्यत्व प्रसंग होगा। यदि 'अद्रव्यत्वे सति' अर्थात् 'अकारणवत्त्वे सति' ( अकारणवाला होना ) ऐसा विशेषण दें, तो भी अकारणवत्त्व ( न कारणवाला ) नित्यत्वका

## सत्यानन्दी-दीपिका

हैं और नित्य हैं। यह वैशेषिकोंका सिद्धान्त प्रमाण रहित है। इसमें 'परमाणवः समवायिकारणवन्तः स्वकारणापेक्ष्या स्थूला अनित्याश्च रूपवत्त्वात्, रसवत्त्वात्, स्पर्शवत्त्वात्, गन्धवत्त्वात् घटवत्' ( परमाणु समवायिकारण वाले हैं और अपने कारण की अपेक्षा स्थूल और अनित्य हैं, क्योंकि रूप रस, स्पर्श और गन्धवाले हैं, जैसे घट ) यह अनुमान प्रमाण भी है।

* 'कार्यमनित्यम्' ( कार्य अनित्य है ) इसप्रकार कार्यमें विशेषरूपसे नित्यत्वके प्रतिषेध होनेसे पमाणुओंमें नित्यत्व सिद्ध होता है, अन्यथा 'न नित्यमनित्यम्' प्रतियोगी नित्यके अभावमें 'नञ्' प्रतिषेधका समास नहीं हो सकता ? परन्तु इससे भी परमाणु नित्य सिद्ध नहीं होता, किन्तु कार्यमें नित्यत्वके प्रतिषेधसे नित्य परम कारण ब्रह्म ही प्रतियोगीरूपसे सिद्ध होता है। किञ्च 'इह वटे यक्षः तिष्ठति' (इस वटमें यक्ष रहता है) इसप्रकार वटमें यक्ष शब्द व्यवहारमात्रसे यक्षकी सिद्धि माननी पड़ेगी। मूलका ज्ञान होनेपर तो उसीसे सब सिद्ध होनेसे व्यवहारका प्रमाणरूपसे उपन्यास व्यर्थ है।

त्वमेव नित्यतानिमित्तमापद्येत। तस्य च प्रागेवोक्तत्वात् 'अविद्या च' इति पुनरुक्तं स्यात्। अथापि कारणविभागात्कारणविनाशाच्चान्यस्य तृतीयस्य विनाशहेतोरसंभवोऽविद्या, सा परमाणूनां नित्यत्वं ख्यापयतीति व्याख्यायेत। नावश्यं विनश्यद्वस्तु द्वाभ्यामेव हेतुभ्यां विनष्टुमर्हतीति नियमोऽस्ति। संयोगसचिवे ह्यनेकस्मिंश्च द्रव्ये द्रव्यान्तरस्यारम्भकेऽभ्युपगम्यमान एतदेवं स्यात्। यदा त्वपास्तविशेषं सामान्यात्मकं कारणं विशेषवदवस्थान्तरमापद्यमानमारम्भकमभ्युपगम्यते, तदा घृतकाठिन्यविलयनवन्मूर्त्यवस्थाविलयनेनापि विनाश उपपद्यते। तस्माद्रूपादिमत्त्वात्स्यादभिप्रेतविपर्ययः परमाणूनाम्। तस्मादप्यनुपपन्नः परमाणुकारणवादः ॥ १५ ॥

## उभयथा च दोषात् ॥१६॥

पदच्छेद—उभयथा, च, दोषात्।

सूत्रार्थ—(उभयथा) परमाणु उपचितापचित गुणात्मक है कि नहीं ? प्रथम पक्षमें अणुत्वका भङ्ग होगा और द्वितीय पक्षमें उनके कार्य पृथिवी आदिमें रूपादिकी अनुपलब्धिका प्रसङ्ग होगा, इस तरह दोनों प्रकारसे (च) भी (दोषात्) दोष होनेसे परमाणु कारणवाद अनुपपन्न है।

गन्धरसरूपस्पर्शगुणा स्थूला पृथिवी, रूपरसस्पर्शगुणाः सूक्ष्मा आपः, रूपस्पर्शगुणं सूक्ष्मतरं तेजः सूक्ष्मतमो वायुरित्येवमेतानि चत्वारि भूतान्युपचितापचितगुणानि

---

निमित्त प्रसक्त होगा। और उसके पूर्व कथित होनेसे 'अविद्या च' यह पुनरुक्त हो जायगा। यदि कारणके विभागसे और कारणके विनाशसे अन्य तृतीय विनाश हेतुका असंभव अविद्या है और वह परमाणुओंका नित्यत्व ख्यापन करती है, ऐसी व्याख्या करें, तो विनष्ट होती हुई वस्तु अवश्य दो ही हेतुओंसे विनष्ट होनेके योग्य है ऐसा नियम नहीं है, क्योंकि संयोग सचिव अनेक द्रव्योंको अन्य द्रव्यका आरम्भक स्वीकार करें तो यह नियम हो, परन्तु जिसमेंसे विशेष निवृत्त हो गया है ऐसा सामान्यात्मक कारण विशेष युक्त अन्य अवस्थाको प्राप्त हुआ आरम्भक स्वीकार किया गया है, तो घृतके काठिन्य विलयके समान मूर्त्त अवस्थाके विलयसे भी विनाश हो सकता है। इसलिए परमाणु रूप आदि विशिष्ट होनेसे उनमें अभिप्रेतके विपर्यय होगा। इससे भी परमाणु कारणवाद अनुपपन्न है ॥१५॥

गन्ध, रस, रूप और स्पर्श गुणवाली पृथिवी स्थूल है, रूप, रस और स्पर्श गुण विशिष्ट जल सूक्ष्म है, रूप और स्पर्श गुण युक्त तेज सूक्ष्मतर है और स्पर्श गुणवाला वायु सूक्ष्मतम है, इस प्रकार

### सत्यानन्दी-दीपिका

* यदि द्व्यणुकमें नित्यत्वके परिहारके लिए 'अद्रव्यत्वे सति' यह विशेषण दें अर्थात् जिसका कोई द्रव्य आरम्भक न हो, उस कारणका प्रत्यक्षसे अग्रहण अविद्या है, ऐसा लक्षण करनेसे द्व्यणुकका व्यभिचार तो निवृत्त हो जायगा, क्योंकि उसके अनेक द्रव्य आरम्भक हैं। परन्तु 'कारणका प्रत्यक्षसे अग्रहण' यह विशेष्य व्यर्थ होगा अकारणवत्त्व ही नित्यत्वका निमित्त हो जायगा, इससे 'सदकारणवत्' इस सूत्रकी पुनरुक्ति होगी। जैसे तन्तु आदि अवयवोंके विभाग अथवा नाशसे पटका नाश होता है, परन्तु ये दोनों नाशके हेतु परमाणुमें नहीं है, अतः परमाणु नित्य है। यह युक्त नहीं है, क्योंकि यदि अनेक द्रव्य अन्य द्रव्यके आरम्भ होते तो यह नियम होता परन्तु आरम्भमें कोई प्रमाण नहीं है, कारण कि तन्तुओंके आतान वितानसे अतिरिक्त पट कोई वस्तु नहीं है। केवल तन्तुओंकी ही एक अवस्था विशेष है। इसलिए परमाणु अविद्याका परिणाम है। उसके प्रलयनिमित्त कालादिसे पिण्डात्मक स्वरूपके तिरोभाव-अदृश्य होनेसे कारणभावकी प्राप्तिरूप विनाश उपपन्न होता है। जैसे अग्निके सम्पर्कसे घृतके काठिन्यका अवयव संयोगका अवयवोंके नाश हुए विना विलय होता है। इसलिए परमाणु कारणवाद युक्त नहीं है ॥ १५ ॥

स्थूलसूक्ष्मसूक्ष्मतरसूक्ष्मतमतारतम्योपेतानि च लोके लक्ष्यन्ते, तद्वत्परमाणवोऽप्युपचितापचितगुणाः कल्प्येरन्न वा ? उभयथापि च दोषानुषङ्गोऽपरिहार्य एव स्यात्। कल्प्यमाने तावदुपचितापचितगुणत्वे उपचितगुणानां मूर्त्युपचयादपरमाणुत्वप्रसङ्गः। न चान्तरेणापि मूर्त्युपचयं गुणोपचयो भवतीत्युच्यते, कार्येषु भूतेषु गुणोपचये मूर्त्युपचयदर्शनात्। अकल्प्यमाने तूपचितापचितगुणत्वे परमाणुत्वसाम्यप्रसिद्धये यदि तावत्सर्व एकैकगुणा एव कल्प्येरंस्ततस्तेजसि स्पर्शस्योपलब्धिर्न स्यात्, अप्सु रूपस्पर्शयोः, पृथिव्यां च रसरूपस्पर्शानाम्, कारणगुणपूर्वकत्वात्कार्यगुणानाम्। अथ सर्वे चतुर्गुणा एव कल्प्येरन्, ततोऽप्स्वपि गन्धस्योपलब्धिः स्यात्, तेजसि गन्धरसयोः, वायौ गन्धरूपरसानाम्। नचैवं दृश्यते। तस्मादप्यनुपपन्नः परमाणुकारणवादः ॥ १६ ॥

## अपरिग्रहाच्चात्यन्तमनपेक्षा ॥१७॥

पदच्छेद—अपरिग्रहात्, च, अत्यन्तम्, अनपेक्षा।

सूत्रार्थ—( अपरिग्रहाच्च )परमाणु कारणवादको किसी भी अंशमें मनु आदि शिष्टोंने ग्रहण नहीं किया है, अतः ( अत्यन्तमनपेक्षा ) कल्याणार्थी पुरुषोंको उसमें अत्यन्त अनपेक्षा करनी चाहिए।

* प्रधानकारणवादो वेदविद्भिरपि कैश्चिन्मन्वादिभिः सत्कार्यत्वाद्यंशोपजीवनाभिप्रायेणोपनिबद्धः। अयं तु परमाणुकारणवादो न कैश्चिदपि शिष्टैः केनचिदप्यंशेन परिगृहीत इत्यत्यन्तमेवानादरणीयो वेदवादिभिः। अपि च वैशेषिकास्तन्त्रार्थभूतान्षट्पदार्थान्द्रव्य-

---

ये चारमूत अधिक और न्यून गुणवाले स्थूल, सूक्ष्म, सूक्ष्मतर और सूक्ष्मतम तारतम्यसे युक्त लोकमें देखे जाते हैं। इसी प्रकार स्थूल-सूक्ष्म पृथिवी जलादिके समान उनके परमाणु भी उपचित ( अधिक ) अपचित ( न्यून ) गुणवाले कल्पना किये जाते हैं कि नहीं ? दोनों प्रकारसे दोषकी प्रसक्ति अपरिहार्य ही होगी। उपचित और अपचित गुणत्व विशिष्ट परमाणुओंकी कल्पना करनेपर तो उपचित गुणवाले परमाणुओंकी मूर्ति ( आकार ) के उपचय ( स्थूल ) होनेसे अपरमाणुत्वका प्रसङ्ग होगा। मूर्तिके उपचयके विना भी गुणोंका उपचय होता है, ऐसा नहीं कहा जा सकता, क्योंकि कार्य भूतोंमें गुणोंके उपचय होनेपर मूर्तिका उपचय देखनेमें आता है। यदि उपचित और अपचित गुणत्व विशिष्ट परमाणुओंकी कल्पना न कर परमाणुत्वके साम्य सिद्धि ( रक्षा ) के लिए सब परमाणु एक एक गुण युक्त माने जायें, तो तेजमें स्पर्शकी, जलमें रूप और स्पर्शकी, पृथिवीमें रस, रूप और स्पर्शकी उपलब्धि नहीं होगी, क्योंकि कार्यके गुण कारण गुण पूर्वक होते हैं। यदि सब चार गुण युक्त ही कल्पना किये जायें, तो जलमें भी गन्धकी, तेजमें गन्ध और रसकी और वायुमें गन्ध, रूप और रसकी उपलब्धि होगी। परन्तु ऐसा देखा नहीं जाता। इसलिए भी परमाणु कारणवाद अनुपपन्न है ॥ १६ ॥

कई एक वेदवित् मनु आदिने, प्रधान कारणवाद सत्कार्यत्व आदि अंशोंका उपजीवन करता है इस अभिप्रायसे उसे अपने स्मृति ग्रन्थोंमें स्थान दिया है। परन्तु यह परमाणु कारणवाद तो किसी भी अंशमें किन्हीं भी शिष्ट पुरुषोंसे गृहीत नहीं है, इसलिए वेदवादियोंसे अत्यन्त ही अनादरणीय है। और वैशेषिक अपने शास्त्रके अर्थभूत द्रव्य, गुण, कर्म, सामान्य, विशेष और समवाय नामके

### सत्यानन्दी-दीपिका

* द्रव्य आदि छः भाव और एक अभाव इस प्रकार वैशेषिक मतमें सात पदार्थ हैं। छः भाव पदार्थ परस्पर अत्यन्त भिन्न हैं और उनके लक्षण भी भिन्न-भिन्न हैं। भाष्यमें अन्वय-व्यतिरेकसे भी यही सिद्ध किया गया है कि गुणादि द्रव्यकी एक अवस्था विशेष है। यह द्रव्य है यह गुण है इत्यादि भेद व्यवहार तो कल्पित भेदको लेकर हो सकता है, क्योंकि जैसे अत्यन्त भेदमें धर्मधर्मिभाव

गुणकर्मसामान्यविशेषसमवायाख्यानत्यन्तभिन्नान्भिन्नलक्षणानभ्युपगच्छन्ति, यथा मनुष्योऽश्वः शश इति। तथात्वं चाभ्युपगम्य तद्विरुद्धं द्रव्याधीनत्वं शेषाणामभ्युपगच्छन्ति। तन्नोपपद्यते, कथम्? यथा हि लोके शशकुशपलाशप्रभृतीनामत्यन्तभिन्नानां सतां नेतरेतराधीनत्वं भवति, एवं द्रव्यादीनामत्यन्तभिन्नत्वान्नैव द्रव्याधीनत्वं गुणादीनां भवितुमर्हति। अथ भवति द्रव्याधिनत्वं गुणादीनाम्, ततो द्रव्यभावे भावाद्द्रव्याभावेऽभावाद्द्रव्यमेव संस्थानादिभेदादनेकशब्दप्रत्ययभाग्भवति। यथा देवदत्त एक एव सन्नवस्थान्तरयोगादनेकशब्दप्रत्ययभाग्भवति, तद्वत्। तथा सति सांख्यसिद्धान्तप्रसङ्गः स्वसिद्धान्तविरोधश्चापद्येयाताम्।* नन्वग्नेरन्यस्यापि सतो धूमस्याग्न्यधीनत्वं दृश्यते। सत्यं दृश्यते, भेदप्रतीतेस्तु तत्राग्निधूमयोरन्यत्वं निश्चीयते, इह तु शुक्लः कम्बलो रोहिणी धेनुर्नीलमुत्पलमिति द्रव्यस्यैव तस्य तस्य तेन तेन विशेषणेन प्रतीयमानत्वान्नैव द्रव्यगुणयोरग्निधूमयोरिव भेदप्रतीतिरस्ति, तस्माद्द्रव्यात्मकता गुणस्य। एतेन कर्मसामान्यविशेषसमवायानां द्रव्यात्म-

---

मनुष्य, अश्व और शशकके समान अत्यन्त भिन्न और भिन्न लक्षणवाले छः पदार्थ स्वीकार करते हैं। और इसी प्रकार अङ्गीकार कर उसके विरुद्ध शेष सब पदार्थ द्रव्यके अधीन मानते हैं। परन्तु वह उपपन्न नहीं होता। क्यों? जैसे व्यवहारमें ही शशक, कुश, पलाश आदि अत्यन्त भिन्न होते हुए एक दूसरेके अधीन नहीं होते हैं, वैसी ही द्रव्य आदिके भी अत्यन्त भिन्न होनेसे गुण आदि द्रव्यके अधीन नहीं हो सकते। यदि गुण आदि द्रव्यके अधीन होते हैं, तो द्रव्यके भावमें भाव और द्रव्यके अभावमें अभाव होनेसे द्रव्य ही संस्थान आदि भेदसे अनेक शब्द और प्रतीतिका भागी होता है। जैसे देवदत्त एक होता हुआ भी अन्य अवस्थाके सम्बन्धसे अनेक शब्द और प्रत्ययका भागी होता है। ऐसा माननेपर सांख्य (वेदान्त) सिद्धान्तका प्रसंग और स्वसिद्धान्तका विरोध प्रसंग हो जायगा। परन्तु अग्निसे भिन्न होता हुआ धूम अग्निके अधीन देखा जाता है, ठीक देखा जाता है, भेद प्रतीतिसे तो वहाँ अग्नि और धूमका अन्यत्व निश्चित होता है। परन्तु यहाँ शुक्ल कम्बल, लाल गौ और नील-कमल इस प्रकार तत् तत् द्रव्य तत् तत् विशेषणसे प्रतीयमान होनेके कारण अग्नि और धूमके समान द्रव्य और गुणकी भेद प्रतीति नहीं है, इसलिए गुण द्रव्यात्मक है, इससे कर्म, सामान्य, विशेष और समवाय द्रव्यात्मक व्याख्यात हुए। यदि कहो कि द्रव्य और गुण अयुतसिद्ध हैं, इससे गुण आदि द्रव्यके

### सत्यानन्दी–दीपिका

नहीं होता, वैसे अत्यन्त अभेदमें भी नहीं होता है। इसलिए यदि गुण और द्रव्यका तादात्म्य स्वीकार करें तो वेदान्त सिद्धान्तका प्रसङ्ग और अपने सिद्धान्तसे विरोध होगा।

* पूर्वपक्षी यहाँ अधीनका अर्थ कार्य मानकर व्यभिचारकी शङ्का करते हैं—जैसे धूम अग्निका कार्य है और उससे भिन्न है, वैसे गुण आदि द्रव्यके कार्य हैं और उससे भिन्न हैं। परन्तु यह दृष्टान्त विषम है, क्योंकि जैसे धूम और अग्निका महानस आदिमें प्रत्यक्ष भेद उपलब्ध होता है, वैसे द्रव्य और गुणका भेद उपलब्ध नहीं होता। शुक्लकम्बल, शुक्लपट आदि स्थलोंमें सामानाधिकरण्य प्रतीतिसे द्रव्य और गुणकी अभिन्नता ही उपलब्ध होती है। भिन्न देशस्थ घट आदि पदार्थ संयोग द्वारा संयुक्त होते हैं वे युतसिद्ध कहे जाते हैं और अवयव अवयवी, गुण गुणी, जाति व्यक्ति, क्रिया क्रियावान् और नित्यद्रव्योंमें विशेष इनका अविनाभाव है, इसलिए ये अयुतसिद्ध कहलाते हैं, इनका सम्बन्ध समवाय है। अब अयुतसिद्धके विकल्पोंमें से प्रथम विकल्पपर-समवायसम्बन्धसे पट तन्तुमें उत्पन्न होता है, इसलिए पटका देश तन्तु है पट नहीं। तन्तु गुण पटके गुणोंके आरम्भक हैं। वे गुण पटमें उत्पन्न होते हैं, इससे उनका देश पट है तन्तु नहीं। इसप्रकार पटका तन्तु और पटके गुणोंका पट देश है। इस तरह भिन्न-भिन्न देश होनेसे द्रव्य और गुणका अपृथग्देशत्व अयुतसिद्धत्व बाधित है।

कता व्याख्याता। गुणादीनां द्रव्याधीनत्वं द्रव्यगुणयोरयुतसिद्धत्वादिति यद्युच्येत, तत्पुनरयुतसिद्धत्वमपृथग्देशत्वं वा स्यादपृथक्कालत्वं वाऽपृथक्स्वभावत्वं वा सर्वथापि नोपपद्यते। अपृथग्देशत्वे तावत्स्वाभ्युपगमो विरुध्येत। कथम्? तन्त्वारब्धो हि पटस्तन्तुदेशोऽभ्युपगम्यते, न पटदेशः। पटस्य तु गुणाः शुक्लत्वादयः पटदेशा अभ्युपगम्यन्ते, न तन्तुदेशाः। तथा चाहुः—'द्रव्याणि द्रव्यान्तरमारभन्ते गुणाश्च गुणान्तरम्' (वै० १।१।१०) इति। तन्तवो हि कारणद्रव्याणि कार्यद्रव्यं पटमारभन्ते, तन्तुगताश्च गुणाः शुक्लादयः कार्यद्रव्ये पटे शुक्लादिगुणान्तरमारभन्त इति हि तेऽभ्युपगच्छन्ति। सोऽभ्युपगमो द्रव्यगुणयोरपृथग्देशत्वेऽभ्युपगम्यमाने बाध्येत। * अथापृथक्कालत्वमयुतसिद्धत्वमुच्येत, सव्यदक्षिणयोरपि गोविषाणयोरयुतसिद्धत्वं प्रसज्येत। तथाऽपृथक्स्वभावत्वे त्वयुतसिद्धत्वे न द्रव्यगुणयोरात्मभेदः संभवति, तस्य तादात्म्येनैव प्रतीयमानत्वात्। युतसिद्धयोः संबन्धः संयोगोऽयुतसिद्धयोस्तु समवाय इत्ययमभ्युपगमो मृषैव तेषाम्, प्राक्सिद्धस्य कार्यात्कारणस्यायुतसिद्धत्वानुपपत्तेः। अथान्यतरापेक्ष एवायमभ्युपगमः स्यादयुतसिद्धस्य कार्यस्य कारणेन संबन्धः समवाय इति, एवमपि प्रागसिद्धस्यालब्धात्मकस्य कार्यस्य कारणेन संबन्धो नोपपद्यते, द्वयायत्तत्वात्संबन्धस्य। * सिद्धं भूत्वा संबध्यत इति चेत्, प्राक्कारणसंबन्धात्कार्यस्य सिद्धावभ्युपगम्यमानायामयुतसिद्ध्यभावा-

अधीन हैं, तो वह अयुतसिद्धत्व अपृथग्देशत्व है वा अपृथक्कालत्व है अथवा अपृथक्स्वभावत्व है, सर्वथापि वह उपपन्न नहीं होता। यदि अपृथग्देशत्व हो तो स्वसिद्धान्तसे विरोध होगा, क्योंकि तन्तुमें उत्पन्न हुए पटका तन्तुदेश स्वीकार किया जाता है पट देश नहीं, एवं पटके शुक्लत्व आदि गुण पट देशवाले माने जाते हैं तन्तु देशवाले नहीं। वैशेषिक कहते हैं—'द्रव्याणि०' ( द्रव्य अन्य द्रव्यको आरम्भ करते हैं और गुण अन्य गुणको ) इस प्रकार कारण द्रव्य तन्तु कार्यद्रव्य पटको आरम्भ करते हैं और तन्तु गत शुक्ल आदि गुण कार्यद्रव्य पटमें अन्य शुक्ल आदि गुणोंको आरम्भ करते हैं, ऐसा वे स्वीकार करते हैं। द्रव्य और गुणका अपृथग्देशत्व स्वीकार करनेपर वह सिद्धान्त बाधित हो जायगा। यदि अपृथक्कालत्व अयुतसिद्धत्व कहो, तो गौके वाम और दक्षिण सींग भी अयुतसिद्ध हो जायंगे। उसीप्रकार अपृथक्स्वभावत्व आयुतसिद्धत्व हो तो द्रव्य और गुणका स्वरूप भेद असंभव है, क्योंकि वह ( गुण ) तो तादात्म्यसे ही प्रतीयमान है। युतसिद्ध पदार्थोंका सम्बन्ध संयोग है और अयुतसिद्ध पदार्थोंका सम्बन्ध समवाय, इसप्रकार उनका यह सिद्धान्त मिथ्या ही है। कारण कि कार्यसे पूर्व सिद्ध कारण अयुतसिद्ध नहीं हो सकता, यदि कहो कि दोमेंसे एककी अपेक्षा यह अंगीकार होगा इससे अयुतसिद्ध कार्यका कारणके साथ सम्बन्ध समवाय है। तो ऐसा माननेपर भी जिसने अपना स्वरूप ही प्राप्त नहीं किया है ऐसे पूर्व असिद्ध कार्यका कारणके साथ सम्बन्ध उपपन्न नहीं होता, क्योंकि सम्बन्ध दोके अधीन होता है। यदि कहो कि कार्य सिद्ध होकर कारणके साथ सम्बद्ध होता है, तो

## सत्यानन्दी-दीपिका

* द्वितीय विकल्प 'सव्यदक्षिणयोरपि' आदिसे कहते हैं। तृतीय विकल्पमें तो 'स्वभाव' का अर्थ स्वरूप है, इससे वेदान्तसिद्धान्तका प्रसंग हो जायगा। छः पदार्थ अत्यन्त भिन्न हैं यह अनुभव विरुद्ध होनेसे अयुतसिद्धत्व बाधित है। अयुत सिद्धि दोकी है कि एककी? इसको 'प्राक्सिद्धस्य' आदिसे कहते हैं।

* 'अप्राप्त सत् पदार्थोंकी प्राप्ति संयोग है' यह विभु आकाश आदिके संयोगमें नहीं घटेगा, क्योंकि वे नित्य प्राप्त हैं, यदि मानें तो तन्तु और पटका भी संयोग हो जायगा, यह अपसिद्धान्त है। उत्पत्तिकालीन द्रव्य निर्गुण और निष्क्रिय मानते हैं, क्योंकि यदि उत्पत्तिके समय द्रव्य गुण और

त्कार्यकारणयोःसंयोगविभागौ न विद्येते इतीदं दुरुक्तं स्यात्। यथा चोत्पन्नमात्रस्याक्रियस्य कार्यद्रव्यस्य विभुभिराकाशादिभिर्द्रव्यान्तरैः संबन्धः संयोग एवाभ्युपगम्यते, न समवायः, एवं कारणद्रव्येणापि संबन्धः संयोग एव स्यान्न समवायः। नापि संयोगस्य समवायस्य वा संबन्धस्य संबन्धिव्यतिरेकेणास्तित्वे किंचित्प्रमाणमस्ति। संबन्धिशब्दप्रत्ययव्यतिरेकेण संयोगसमवायशब्दप्रत्ययदर्शनात्तयोरस्तित्वमिति चेत् न, एकत्वेऽपि स्वरूपबाह्यरूपापेक्षयानेकशब्दप्रत्ययदर्शनात्। यथैकोऽपि सन् देवदत्तो लोके स्वरूपं संबन्धिरूपं चापेक्ष्यानेकशब्दप्रत्ययभाग्भवति—मनुष्यो ब्राह्मणः श्रोत्रियो वदान्यो बालो युवा स्थविरः पिता पुत्रः पौत्रो भ्राता जामातेति, यथा चैकापि सती रेखा स्थानान्यत्वेन निवेशमानैकदशशतसहस्रादिशब्दप्रत्ययभेदमनुभवति, तथासंबन्धिनोरेव संबन्धिशब्दप्रत्ययव्यतिरेकेण संयोगसमवायशब्दप्रत्ययार्हत्वम्, न व्यतिरिक्तवस्त्वस्तित्वेन, इत्युपलब्धिलक्षणप्राप्तस्यानुपलब्धेरभावो वस्त्वन्तरस्य। ॐ नापि संबन्धिविषयत्वे संबन्धशब्दप्रत्ययोः संततभावप्रसङ्गः। स्वरूपबाह्यरूपापेक्षयेत्युक्तोत्तरत्वात्। तथाऽण्वात्ममनसामप्रदेशत्वान्न संयोगः सम्भवति, प्रदेशवतो द्रव्यस्य प्रदेशवता द्रव्यान्तरेण संयोगदर्शनात्। कल्पिताः प्रदेशा अण्वात्ममनसां भविष्यन्तीति

---

कारण सम्बन्धसे पूर्व कार्यकी सिद्धि स्वीकार करनेपर अयुतसिद्धिका अभाव होनेसे 'कार्यकारणके संयोग और विभाग नहीं होते' यह उक्त कथन असंगत हो जायगा। और जैसे उत्पन्नमात्र-उत्पद्यमान क्रिया-रहित द्रव्यका विभु आकाश आदि अन्य द्रव्योंके साथ सम्बन्ध संयोग ही स्वीकार किया जाता है समवाय नहीं, वैसे कारण द्रव्यके साथ भी सम्बन्ध संयोग ही होगा समवाय नहीं। सम्बन्धियों से भिन्न संयोग अथवा समवाय सम्बन्धके अस्तित्वमें कोई भी प्रमाण नहीं है। यदि कहो कि 'सम्बन्धी' इस शब्द और प्रत्ययके अतिरिक्त संयोग और समवाय शब्द और प्रतीतिके दर्शनसे उनका पृथक् अस्तित्व है, तो यह युक्त नहीं है, क्योंकि एकमें भी स्वरूप और बाह्यरूपकी अपेक्षा अनेक शब्द और प्रत्यय देखनेमें आते हैं। जैसे देवदत्त एक होता हुआ भी व्यवहारमें स्वरूप और सम्बन्धिरूपकी अपेक्षाकर मनुष्य, ब्राह्मण, श्रोत्रिय, दाता, बालक, युवा, वृद्ध, पिता, पुत्र, पौत्र, भ्राता जामाता इस प्रकार अनेक शब्द और प्रत्ययोंका भागी होता है। और जैसे रेखा एक होती हुई भी स्थानभेदसे नियोजित हुई एक, दश, शत, सहस्र आदि शब्द और प्रत्ययविशेषके अनुभवका विषय होती है। वैसे दो सम्बन्धी ही ( सम्बन्धका अनुयोगी और प्रतियोगी ) 'सम्बन्धी' शब्द और प्रत्ययके भेदसे संयोग और समवाय इन शब्द और प्रत्ययके योग्य होते हैं, किन्तु अतिरिक्त वस्तुके अस्तित्वसे नहीं। इस प्रकार उपलब्धिरूप लिङ्गसे प्राप्त अन्य पदार्थका ( संयोग आदि सम्बन्धियोंसे भिन्न हैं इस ) अनुपलब्धिसे अभाव निश्चित होता है। उसी प्रकार 'सम्बन्ध' शब्द और प्रत्ययका सम्बन्धी विषय होनेपर भी उसका निरन्तर अस्तित्व प्रसंग भी न होगा, क्योंकि वह स्वरूप और पररूपकी अपेक्षासे है, ऐसा उत्तर कह दिया गया है। उसी प्रकार परमाणु, आत्मा और मनका प्रदेश न होने से संयोग संभव नहीं है। प्रदेश विशिष्ट ( सावयव ) द्रव्यका प्रदेश युक्त ( सावयव ) अन्य द्रव्यके साथ संयोग देखनेमें

## सत्यानन्दी-दीपिका

क्रिया युक्त उत्पन्न हो तो अपने गुणोंके प्रति वह कारण सिद्ध नहीं होगा, कारण कार्यसे पूर्ववृत्ति होना चाहिए। उपलब्धिरूप लिङ्गसे प्राप्त संयोग और समवाय आदि पदार्थोंकी सम्बन्धियोंसे भिन्नरूपसे उपलब्धि न होनेके कारण उनका अभाव निश्चित होता है।

ॐ अदृष्ट विशिष्ट आत्माके साथ परमाणुका संयोग परमाणुमें क्रियाका कारण है। आत्मा और मनका संयोग ज्ञान आदिका असमवायिकारण है। अब इसका 'तथाऽण्वात्ममनसाम' इत्यादिसे निराकरण करते हैं। किञ्च अविद्यमानकी कल्पनासे ही सब अर्थकी सिद्धि होनेसे बन्ध और मुक्तिके नियम भी लुप्त हो जायंगे।

चेत्—न, अविद्यमानार्थकल्पनायां सर्वार्थसिद्धिप्रसङ्गात्, इयानेवाविद्यमानो विरुद्धोऽविरुद्धो वार्थः कल्पनीयो नातोऽधिक इति नियमहेत्वभावात्, कल्पनायाश्च स्वायत्तत्वात्प्रभूतत्वसंभवाच्च। नच वैशेषिकैः कल्पितेभ्यः षड्भ्यः पदार्थेभ्योऽन्येऽधिकाः शतं सहस्रं वाऽर्था न कल्पयितव्या इति निवारको हेतुरस्ति। तस्माद्यस्मै यस्मै यद्यद्रोचते तत्तत्सिध्येत्। कश्चित्कृपालुः प्राणिनां दुःखबहुलः संसार एव मा भूदिति कल्पयेत्। अन्यो वा व्यसनी मुक्तानामपि पुनरुत्पत्तिं कल्पयेत्। कस्तयोर्निवारकः स्यात्? * किंचान्यत्—द्वाभ्यां परमाणुभ्यां निरवयवाभ्यां सावयवस्य द्व्यणुकस्याकाशेनेव संश्लेषानुपपत्तिः। न ह्याकाशस्य पृथिव्यादीनां च जतुकाष्ठवत्संश्लेषोऽस्ति। कार्यकारणद्रव्ययोराश्रिताश्रयभावोऽन्यथा नोपपद्यत इत्यवश्यं कल्प्यः समवाय इति चेत्—न, इतरेतराश्रयत्वात्। कार्यकारणयोर्हि भेदसिद्धावाश्रिताश्रयभावसिद्धिः आश्रिताश्रयभावसिद्धौ च तयोर्भेदसिद्धिः कुण्डबदरवदितीतरेतराश्रयता स्यात्। न हि कार्यकारणयोर्भेद आश्रिताश्रयभावो वा वेदान्तवादिभिरभ्युपगम्यते, कारणस्यैव संस्थानमात्रं कार्यमित्यभ्युपगमात्। किंचान्यत्—परमाणूनां परिच्छिन्नत्वाद्यावत्यो दिशः षडष्टौ दश वा तावद्भिरवयवैः सावयवास्ते स्युः, सावयवत्वादनित्याश्चेति नित्यत्वनिरवयवत्वाभ्युपगमो बाध्येत। यांस्त्वं दिग्भेदभेदिनोऽवयवान्कल्पयसि त एव परमाणव इति चेत्—न,

---

जाता है। यदि कहो कि अणु, आत्मा और मनके कल्पित प्रदेश होंगे, तो यह युक्त नहीं है, क्योंकि अविद्यमान पदार्थकी कल्पना करनेपर सर्वार्थ सिद्धि होनेका प्रसंग हो जायगा। इतनी ही अविद्यमान, विरुद्ध अथवा अविरुद्ध अर्थकी कल्पना करनी चाहिए, इससे अधिक नहीं, इस विषयमें कोई नियम हेतु नहीं है। कल्पना तो अपने अधीन होती है इससे उसके अधिक होनेकी भी संभावना है। वैशेषिकों द्वारा कल्पित छः पदार्थोंसे भिन्न अतिरिक्त ( अधिक ) शत, अथवा सहस्र पदार्थोंकी कल्पना नहीं करनी चाहिए, इसका कोई निवारक हेतु नहीं है, इसलिए जिस जिसको जो जो रुचिकर होगा वह वह सिद्ध हो जायगा। कोई कृपालु ऐसी कल्पना करेगा कि प्राणियोंके लिए यह दुःख बहुल संसार ही न हो अथवा अन्य कोई व्यसनी मुक्त पुरुषोंकी पुनरुत्पत्तिकी कल्पना करेगा। ऐसी स्थितिमें उनका कौन निवारक होगा। और इससे भिन्न दूसरा दोष यह है—आकाशके साथ सावयव द्व्यणुकके समान निरवयव दो परमाणुओंका संश्लेष नहीं हो सकता। आकाश और पृथिवी आदिका लाख और काष्ठके समान संश्लेष ( मिलाप ) नहीं है। कार्य कारण द्रव्योंका आश्रिताश्रयभाव अन्यथा उपपन्न न होगा, इसलिए समवायकी अवश्य कल्पना करनी चाहिए। ऐसा यदि कहो तो युक्त नहीं है, क्योंकि अन्योन्याश्रय हो जायगा। कार्य कारणका कुण्डबदरके समान भेद सिद्ध हो तो आश्रिताश्रयभावकी सिद्धि हो, आश्रिताश्रयभावकी सिद्धि हो तो उनका भेद सिद्ध हो, इसप्रकार अन्योन्याश्रय होगा। वेदान्तवादी कार्य और कारणका भेद अथवा आश्रिताश्रयभाव स्वीकार नहीं करते, क्योंकि कारणका ही संस्थान ( आकार विशेष ) मात्र कार्य है, ऐसा वे मानते हैं। अन्य दोष यह है—परमाणुओंके परिच्छिन्न होने से जितनी दिशाएं छः, आठ अथवा दश हैं। उतने अवयवोंसे वे सावयव हो जायंगे, सावयव होनेसे अनित्य हो जायंगे, इससे उनका नित्यत्व निरवयवत्व सिद्धान्त बाधित हो जायगा। यदि कहो कि दिशाके भेदसे भेदविशिष्ट जिन अवयवोंकी तुम कल्पना करते हो वे ही हमारे मतमें परमाणु हैं। तो यह कथन ठीक नहीं है, क्योंकि स्थूल, सूक्ष्मके तारतम्यक्रमसे परम कारण

## सत्यानन्दी-दीपिका

* समवायका अन्योन्याश्रय दोषसे खण्डनकर अब परमाणुका नित्यत्व, निरवयवत्व खण्डन करते हैं—'परमाणवः सावयवाः परिच्छिन्नत्वात् घटवत्' ( परमाणु सावयव हैं परिच्छिन्न होनेसे घटके समान ) इसलिए परमाणुका द्व्यणुकके समान पृथिवीत्व एक जातीय होनेसे विनाश होता है।

मोत्तमभावेन हि प्राणिभेदान्विदधत ईश्वरस्य रागद्वेषादिदोषप्रसक्तेरस्मदादिवदनीश्वरत्वं प्रसज्येत। प्राणिकर्मापेक्षितत्वाददोष इति चेत्—न; कर्मेश्वरयोःप्रवर्त्यप्रवर्तयितृत्वे इतरेतराश्रयदोषप्रसङ्गात्। न; अनादित्वादिति चेत्—न; वर्तमानकालवदतीतेष्वपि कालेष्वितरेतराश्रयदोषाविशेषादन्धपरम्परान्यायापत्तेः। अपि च 'प्रवर्तनालक्षणा दोषाः' (न्याय-सू० १।१।१८) इति न्यायवित्समयः। नहि कश्चिददोषप्रयुक्तः स्वार्थे परार्थे वा प्रवर्तमानो दृश्यते। स्वार्थप्रयुक्त एव च सर्वो जनः परार्थेऽपि पवर्तत इत्येवमप्यसामञ्जस्यम्; स्वार्थवत्त्वादीश्वरस्यानीश्वरत्वप्रसङ्गात्। पुरुषविशेषत्वाभ्युपगमाच्चेश्वरस्य, पुरुषस्य चौदासीन्याभ्युपगमादसामञ्जस्यम् ॥ ३७ ॥

## संबन्धानुपपत्तेश्च ॥ ३८॥

पदच्छेद—सम्बन्धानुपपत्तेः, च।

सूत्रार्थ—और प्रेर्य प्रधान आदिके साथ प्रेरक ईश्वरके सम्बन्धकी अनुपपत्ति होनेसे ईश्वर प्रेरक नहीं हो सकता।

* पुनरप्यसामञ्जस्यमेव, न हि प्रधानपुरुषव्यतिरिक्त ईश्वरोऽन्तरेण संबन्धं प्रधानपुरुषयोरीशिता। न तावत्संयोगलक्षणः संबन्धः संभवति; प्रधानपुरुषेश्वराणां सर्वगतत्वान्निरवयवत्वाच्च। नापि समवायलक्षणः संबन्धः; आश्रयाश्रयिभावानिरूपणात्। नाप्यन्यः कश्चित्कार्यगम्यः संबन्धः शक्यते कल्पयितुं, कार्यकारणभावस्यैवाद्याप्यसिद्ध-

---

उत्पन्न करनेवाले ईश्वरमें राग, द्वेष आदि दोषोंके प्रसंग होनेसे हमलोगोंके समान अनीश्वरत्व प्रसक्त होगा। यदि कहो कि प्राणियोंके कर्मोंकी अपेक्षा होनेसे दोष नहीं है, तो यह युक्त नहीं है, क्योंकि कर्म और ईश्वरका प्रवर्त्य और प्रवर्तयितृभाव होनेपर अन्योन्याश्रय दोष प्रसङ्ग होगा। ऐसा नहीं, क्योंकि वह अनादि है, ऐसा यदि कहो तो ठीक नहीं, क्योंकि वर्तमान कालके समान अतीत कालोंमें भी अन्योन्याश्रय दोष समान होनेसे अन्धपरम्परा न्याय प्रसक्त होगा। और 'प्रवर्तनालक्षणा दोषाः' (प्रवृत्तिके हेतुभूत दोष हैं) यह न्यायवेत्ताओंका सिद्धान्त है। कोई भी दोषके विना स्वार्थ अथवा परार्थमें प्रवृत्त हुआ नहीं देखा जाता। स्वार्थमें प्रयुक्त हुआ ही सब लोग परार्थमें भी प्रवृत्त होते हैं, यह भी असामञ्जस्य-असंगत है, कारण कि स्वार्थ युक्त होनेसे ईश्वरमें अनीश्वरत्व प्रसङ्ग होगा। ईश्वरको पुरुषविशेष स्वीकार किया गया है और पुरुषमें औदासीन्य माना गया है यह असंगत है ॥ ३७ ॥

फिर भी असामञ्जस्य ही है, क्योंकि प्रधान और पुरुषसे भिन्न ईश्वर सम्बन्धके विना प्रधान और पुरुषका ईशिता नहीं है, इनका संयोगरूप सम्बन्ध तो नहीं हो सकता, कारण कि प्रधान, पुरुष और ईश्वर सर्वगत और निरवयव हैं, एवं समवायरूप सम्बन्ध भी नहीं हो सकता, क्योंकि आश्रयाश्रयिभावका निरूपण नहीं है। उसी प्रकार कार्यगम्य अन्य कोई सम्बन्ध भी स्वीकार नहीं किया जा सकता, कारण कि अभितक कार्य कारणभाव ही असिद्ध है। यदि कहो कि ब्रह्मवादीके मतमें किस

### सत्यानन्दी-दीपिका

प्रमाणसे ईश्वर निमित्त कारण है। और वैशेषिक आदि 'जगत् सकर्तृकं कार्यत्वात् घटवत्' (जगत् सकर्तृक है, क्योंकि कार्य है जैसे घट) इस प्रकार अनुमान आदि द्वारा कार्य जगत्के प्रति ईश्वरको निमित्तकारण मानते हैं ॥ ३७ ॥

* 'देवात्मशक्तिम्०' (श्वे० १।३) ब्रह्मवादी तो माया और ब्रह्मका अनिवचनीय तादात्म्य सम्बन्ध मानते हैं, इससे कोई दोष नहीं है। और वेदको स्वतः प्रमाण माननेसे मृत्तिका, कुम्हार आदि लौकिक दृष्टान्तोंकी अपेक्षा ही नहीं है ॥ ३८ ॥

त्वात्ब्रह्मवादिनः कथमिति चेत्—न; तस्य तादात्म्यलक्षणसंबन्धोपपत्तेः। अपि चागमबलेन ब्रह्मवादी कारणादिस्वरूपं निरूपयतीति नावश्यं तस्य यथादृष्टमेव सर्वमभ्युपगन्तव्यमितिनियमोऽस्ति, परस्य तु दृष्टान्तबलेन कारणादिस्वरूपं निरूपयतो यथादृष्टमेव सर्वमभ्युपगन्तव्यमित्ययमस्त्यतिशयः। परस्यापि सर्वज्ञप्रणीतागमसद्भावात्समानमागमबलमिति चेत्—न; इतरेतराश्रयत्वप्रसङ्गात्—आगमप्रत्ययात्सर्वज्ञत्वसिद्धिः सर्वज्ञप्रत्ययाच्चागमसिद्धिरिति। तस्मादनुपपन्ना सांख्ययोगवादिनामीश्वरकल्पना। एवमन्यास्वपि वेदबाह्यास्वीश्वरकल्पनासु यथासंभवमसामञ्जस्यं योजयितव्यम् ॥ ३८ ॥

## अधिष्ठानानुपपत्तेश्च ॥ ३९ ॥

पदच्छेद—अधिष्ठानानुपपत्तेः, च।

सूत्रार्थ—और ईश्वर रूपादि हीन प्रधानका प्रेरक न होनेसे निमित्तकारण नहीं हो सकता है।

इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य। स हि परिकल्प्यमानः कुम्भकार इव मृदादीनि प्रधानादीन्यधिष्ठाय प्रवर्तयेत्। न चैवमुपपद्यते। न ह्यप्रत्यक्षं रूपादिहीनं च प्रधानमीश्वरस्याधिष्ठेयं संभवति; मृदादिवैलक्षण्यात् ॥ ३९ ॥

## करणवच्चेन्न भोगादिभ्यः ॥ ४० ॥

पदच्छेद—करणवत्, चेत्, न, भोगादिभ्यः।

सूत्रार्थ—(करणवत्) अप्रत्यक्ष होनेपर जैसे इन्द्रियाँ जीवसे प्रेरित होती हैं, वैसे ही अप्रत्यक्ष प्रधान भी ईश्वरसे प्रेरित हो जायगा, ( चेन्न ) तो यह युक्त नहीं है। ( भोगादिभ्यः ) क्योंकि ऐसा होनेपर जीवके समान ईश्वरको भी भोग आदि प्रसक्त होंगे।

स्यादेतत्—यथा करणग्रामं चक्षुरादिकमप्रत्यक्षं रूपादिहीनं च पुरुषोऽधितिष्ठत्येवं प्रधानमपीश्वरोऽधिष्ठास्यतीति। तथापि नोपपद्यते, भोगादिदर्शनाद्धि करणग्रामस्याधिष्ठितत्वं गम्यते। न चात्र भोगादयो दृश्यन्ते। करणग्रामसाम्ये चाभ्युपगम्यमाने संसारिणा-

---

प्रकार होता है ? तो यह युक्त नहीं, क्योंकि उसके मतमें तादात्म्यरूप सम्बन्ध उपपन्न है। और ब्रह्मवादी तो आगमबलसे कारण आदिका स्वरूप निरूपण करते हैं, इसलिए उसके लिए यह नियम नहीं है कि यथादृष्ट ही अवश्य सबको स्वीकार करना चाहिए। दृष्टान्तबलसे कारण आदिका स्वरूप निरूपण करते हुए पूर्वपक्षीको तो यथादृष्ट ही सब स्वीकार करना चाहिए, यह विशेष है। यदि कहो कि प्रतिपक्षीको भी सर्वज्ञ प्रणीत आगमके सद्भावसे आगमबल समान है, तो यह ठीक नहीं है, क्योंकि आगमज्ञानसे सर्वज्ञत्वसिद्धि और सर्वज्ञत्वके ज्ञानसे आगमसिद्धि, इसप्रकार अन्योन्याश्रय प्रसङ्ग है। इससे सांख्ययोगवादीकी ईश्वर कल्पना अयुक्त है। इसी प्रकार वेद बाह्य अन्य ईश्वर कल्पनाओंमें भी यथा सम्भव असामञ्जस्यकी योजना करनी चाहिए ॥ ३८ ॥

और इससे भी तार्किक परिकल्पित ईश्वरकी अनुपपत्ति है। जैसे कुम्हार मृत्तिका आदिको अधिष्ठितकर प्रवृत्त करता है, वैसे वही परिकल्पित हुआ ( ईश्वर ) प्रधान आदिको अधिष्ठितकर प्रवृत्त करेगा। परन्तु इसप्रकार उपपन्न नहीं होता, क्योंकि अप्रत्यक्ष और रूप आदि हीन प्रधान ईश्वरका अधिष्ठेय नहीं हो सकता, कारण कि वह मृत्तिका आदिसे विलक्षण है ॥ ३९ ॥

ऐसा हो, परन्तु जैसे अप्रत्यक्ष, रूप आदि रहित ( उद्भूत रूप आदि रहित ) नेत्र आदि करण समुदायको पुरुष अधिष्ठित करता है, वैसे ईश्वर प्रधानको भी अधिष्ठित करेगा। उस प्रकार भी उपपन्न नहीं होता, क्योंकि भोगादिके दर्शनसे ही करण समुदायका अधिष्ठितत्व अवगत होता है। परन्तु यहाँ ( ईश्वरमें ) भोग आदि नहीं देखे जाते। इन्द्रिय समुदायके साथ ( प्रधानका ) साम्य स्वीकार किए

मिवेश्वरस्यापि भोगादयः प्रसज्येरन्। अन्यथा वा सूत्रद्वयं व्याख्यायते—'अधिष्ठानानुपपत्तेश्च'-इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य। साधिष्ठानो हि लोके सशरीरो राजा राष्ट्रस्येश्वरो दृश्यते, न निरधिष्ठानः, अतश्च तद्दृष्टान्तवशेनादृष्टमीश्वरं कल्पयितुमिच्छत ईश्वरस्यापि किंचिच्छरीरं करणायतनं वर्णयितव्यं स्यात्, न च तद्वर्णयितुं शक्यते; सृष्ट्युत्तरकालभावित्वाच्छरीरस्य प्राक्सृष्टेस्तदनुपपत्तेः। निरधिष्ठानत्वे चेश्वरस्य प्रवर्तकत्वानुपपत्तिः; एवं लोके दृष्टत्वात्। 'करणवच्चेन्न भोगादिभ्यः'—अथ लोकदर्शनानुसारेणेश्वरस्यापि किंचित्करणानामायतनं शरीरं कामेन कल्प्येत, एवमपि नोपपद्यते। सशरीरत्वे हि सति संसारिवद्भोगादिप्रसङ्गादीश्वरस्याप्यनीश्वरत्वं प्रसज्येत ॥४०॥

## अन्तवत्त्वमसर्वज्ञता वा ॥ ४१ ॥

पदच्छेद—अन्तवत्त्वम्, असर्वज्ञता, वा।

सूत्रार्थ—प्रधान, जीव और अपनी संख्या ( वा ) अथवा परिमाणका निश्चय ईश्वर करता है कि नहीं ? प्रथमपक्षमें ( अन्तवत्त्वम् ) परिच्छिन्न संख्या और परिच्छिन्न परिमाण होनेसे तीनों घटके समान विनाशी होंगे, द्वितीयपक्षमें ( असर्वज्ञता ) ईश्वरमें असर्वज्ञत्व सिद्ध होगा, इससे माहेश्वर सिद्धान्त भ्रान्ति मूलक है।

* इतश्चानुपपत्तिस्तार्किकपरिकल्पितस्येश्वरस्य—स हि सर्वज्ञस्तैरभ्युपगम्यतेऽनन्तश्च। अनन्तं च प्रधानमनन्ताश्च पुरुषा मिथो भिन्ना अभ्युपगम्यन्ते। तत्र सर्वज्ञेनेश्वरेण प्रधानस्य पुरुषाणामात्मनश्चेयत्ता परिच्छिद्येत वा, न वा परिच्छिद्येत। उभयथापि दोषोऽनुषक्त एव। कथम्? पूर्वस्मिंस्तावद्विकल्प इयत्तापरिच्छिन्नत्वात्प्रधानपुरुषेश्व-

---

जानेपर संसारीके समान ईश्वरको भी भोग आदि प्रसक्त होंगे। अथवा इन दो सूत्रोंका अन्य रीतिसे व्याख्यान किया जाता है—'अधिष्ठानानुपपत्तेश्च' इससे तार्किक परिकल्पित ईश्वरकी अनुपपत्ति है, क्योंकि लोकमें अधिष्ठान सहित सशरीर राजा राष्ट्रका ईश्वर देखा जात[illegible] धिष्ठान रहित नहीं। अतः उस दृष्टान्तके बलसे अदृष्ट ईश्वरकी कल्पना करनेकी इच्छा करनेवालेक[illegible] ईश्वरका इन्द्रियोंका आयतन कोई शरीर वर्णयितव्य होगा। परन्तु उसका वर्णन नहीं किया जा सकता, क्योंकि शरीर तो सृष्टिके उत्तर कालभावी है, सृष्टिके पूर्व उसकी अनुपपत्ति है। निरधिष्ठान होनेपर ईश्वर प्रवर्तक नहीं हो सकता, कारण कि लोकमें ऐसा देखा गया है। 'करणवच्चेन्न भोगादिभ्यः' यदि लोक दर्शनके अनुसार ईश्वरका भी इन्द्रियोंका आश्रय कोई शरीर अपनी इच्छासे कल्पना करो, तो इसप्रकार भी उपपन्न नहीं होता, क्योंकि सशरीर होनेपर संसारीके समान भोग आदि प्रसङ्ग होनेसे ईश्वरको भी अनीश्वरत्व प्रसक्त होगा ॥४०॥

इससे भी तार्किक परिकल्पित ईश्वरकी अनुपपत्ति है, क्योंकि वही ईश्वर सर्वज्ञ और अनन्त है, ऐसा वे स्वीकार करते हैं, और प्रधान अनन्त है, पुरुष अनन्त हैं और परस्पर भिन्न हैं, ऐसा स्वीकार करते हैं। उनमें सर्वज्ञ ईश्वरसे प्रधान, पुरुष और अपनी इयत्ता ( संख्या अथवा परिमाण ) जानी जाती है अथवा नहीं जानी जाती ? दोनों प्रकारसे दोष प्रसक्त ही है, क्यों ? पूर्व विकल्पमें तो इयत्ता परिच्छिन्न होनेसे प्रधान, पुरुष और ईश्वरका अन्तवत्त्व अवश्यंभावी है। कारण कि व्यवहार

### सत्यानन्दी-दीपिका

* जिस प्रकार शुष्क तर्कसे ईश्वरमें केवल कर्तृत्व अनुपपन्न है, उसी प्रकार ईश्वरमें नित्यत्व और सर्वज्ञत्व भी अनुपपन्न हैं। 'प्रधानपुरुषेश्वरत्रयम्, अनित्यम्, इयत्तापरिच्छिन्नत्वात् घटवत्।' 'प्रधान, पुरुष और ईश्वर तीनों अनित्य हैं, क्योंकि इयत्तासे परिच्छिन्न हैं जैसे घट।' ॥४१॥

राणामन्तवत्त्वमवश्यंभावि, एवं लोके दृष्टत्वात्। यद्धि लोक इयत्तापरिच्छिन्नं वस्तु पटादि तदन्तवद्दृष्टं, तथा प्रधानपुरुषेश्वरत्रयमपीयत्तापरिच्छिन्नत्वादन्तवत्स्यात्। संख्यापरिमाणं तावत्प्रधानपुरुषेश्वरत्रयरूपेण परिच्छिन्नम्, स्वरूपपरिमाणमपि तद्गतमीश्वरेण परिच्छिद्येतेति। पुरुषगता च महासंख्या। ततश्चेयत्तापरिच्छिन्नानां मध्ये ये संसारिणः संसारान्मुच्यन्ते तेषां संसारोऽन्तवान्, संसारित्वं च तेषामन्तवत्। एवमितरेष्वपि क्रमेण मुच्यमानेषु संसारस्य संसारिणां चान्तवत्त्वं स्यात्। * प्रधानं च सविकारं पुरुषार्थमीश्वरस्याधिष्ठेयं संसारित्वेनाभिमतम्, तच्छून्यतायामीश्वरः किमधितिष्ठेत्? किंविषये वा सर्वज्ञतेश्वरते स्याताम्? प्रधानपुरुषेश्वराणां चैवमन्तवत्त्वे सत्यादिमत्त्वप्रसङ्गः, आद्यन्तवत्त्वे च शून्यवादप्रसङ्गः। अथ मा भूदेष दोष इत्युत्तरो विकल्पोऽभ्युपगम्येत, न प्रधानस्य पुरुषाणामात्मनश्चेयत्तेश्वरेण परिच्छिद्यत इति, तत ईश्वरस्य सर्वज्ञत्वाभ्युपगमहानिरपरो दोषः प्रसज्येत। तस्मादप्यसंगतस्तार्किकपरिगृहीत ईश्वरकारणवादः ॥ ४१ ॥

( ८ उत्पत्त्यसंभवाधिकरणम्। सू० ४२–४५ )

## उत्पत्त्यसंभवात् ॥ ४२ ॥

सूत्रार्थ—वासुदेवसे जीवकी उत्पत्तिका संभव न होनेसे भागवत मत असंगत है।

* येषामप्रकृतिरधिष्ठाता केवलनिमित्तकारणमीश्वरोऽभिमतस्तेषां पक्षः प्रत्याख्यातः। येषां पुनः प्रकृतिश्चाधिष्ठाता चोभयात्मकं कारणमीश्वरोऽभिमतस्तेषां पक्षः प्रत्याख्यायते। ननु श्रुतिसमाश्रयणेनाप्येवंरूप एवेश्वरः प्राङ्निर्धारितः—प्रकृतिश्चाधिष्ठाता

---

में ऐसा देखा जाता है। लोकमें जो इयत्ता परिच्छिन्न पट आदि वस्तु है वह अन्तवान् देखी गई है, इसी प्रकार प्रधान, पुरुष और ईश्वर तीनों भी इयत्ता परिच्छिन्न होनेसे अन्तवान् होंगे। संख्या परिमाण तो प्रधान, पुरुष और ईश्वर त्रयरूपसे परिच्छिन्न हैं। उनमें स्थित स्वरूपपरिमाण भी ईश्वरसे जाना जाता है। पुरुषगत महासंख्या है। उससे इयत्तापरिच्छिन्नोंके मध्यमें जो संसारी संसारसे मुक्त हो जाते हैं, उनका संसार अन्तवान् और उनका संसारित्व अन्तवान् होगा। इसप्रकार क्रमसे अन्योंके भी मुक्त हो जानेपर संसार और संसारियोंका अन्तवत्त्व हो जायगा और विकार सहित प्रधान पुरुषके भोग और मोक्षके लिए ईश्वरका अधिष्ठेय है तथा संसाररूपसे अभिमत है, उसके शून्य होनेपर ईश्वर किसको अधिष्ठित करेगा अथवा किस विषयमें सर्वज्ञत्व और ईश्वरत्व होगा? प्रधान, पुरुष और ईश्वरके इसप्रकार अन्तवत्त्व होनेपर आदिमान् होनेका प्रसङ्ग हो जायगा। एवं आदि और अन्तवाला होनेपर शून्यवाद प्रसङ्ग होगा। यह दोष न हो इसलिए यदि प्रधान, पुरुष और अपनी इयत्ता ईश्वरसे अवगत नहीं होती है, इस द्वितीय विकल्पको स्वीकार किया जाय, तो ईश्वरके सर्वज्ञत्व स्वीकारका त्याग दूसरा दोष प्रसक्त होगा, इससे भी तार्किक परिगृहीत ईश्वर कारणवाद असङ्गत है ॥४१॥

जिनको ईश्वर अप्रकृति—अनुपादान, अधिष्ठाता केवल निमित्त कारणरूपसे अभिमत है, उनके पक्षका निराकरण किया जा चुका है। परन्तु जिनको प्रकृति एवं अधिष्ठाता दोनों प्रकारके कारणरूपसे ईश्वर अभिमत है, अब उनके पक्षका निराकरण किया जाता है। परन्तु श्रुतिके आश्रयसे भी इसप्रकार का ईश्वर प्रकृति और अधिष्ठातारूपसे पूर्वमें निर्धारित किया गया है। श्रुति अनुसारिणी स्मृति प्रमाण

### सत्यानन्दी-दीपिका

* अब ईश्वरको उपादान और निमित्त दोनों कारण माननेवालोंके वेद अविरुद्ध अंशको स्वीकार कर वेदविरुद्ध जीवकी उत्पत्ति अंशका निराकरण करनेके लिए प्रत्युदाहरण संगतिसे इस अधिकरणका आरम्भ है।

चेति। श्रुत्यनुसारिणी च स्मृतिः प्रमाणमिति स्थितिः। तत्कस्य हेतोरेष पक्षः प्रत्याचिख्यासित इति? उच्यते—यद्यप्येवंजातीयकोऽशः समानत्वान्न विसंवादगोचरो भवत्यस्ति-त्वंशान्तरं विसंवादस्थानमित्यतस्तत्प्रत्याख्यानायारम्भः। तत्र भागवता मन्यन्ते—भगवानेवैको वासुदेवो निरञ्जनज्ञानस्वरूपः परमार्थतत्त्वं, स चतुर्धात्मानं प्रविभज्य प्रतिष्ठितः—वासुदेवव्यूहरूपेण, संकर्षणव्यूहरूपेण प्रद्युम्नव्यूहरूपेणानिरुद्धव्यूहरूपेण च। वासुदेवो नाम परमात्मोच्यते। संकर्षणो नाम जीवः। प्रद्युम्नो नाम मनः। अनिरुद्धो नामाहंकारः। तेषां वासुदेवः परा प्रकृतिरितरे संकर्षणादयः कार्यम्। तमित्थंभूतं परमेश्वरं भगवन्तमभिगमनोपादानेज्यास्वाध्याययोगैर्वर्षशतमिष्ट्वा क्षीणक्लेशो भगवन्तमेव प्रतिपद्यते—इति। तत्र यत्तावदुच्येत योऽसौ नारायणः परोऽव्यक्तात्प्रसिद्धः परमात्मा सर्वात्मा स आत्मनात्मानमनेकधाव्यूह्यावस्थित इति—तन्न निराक्रियते; 'स एकधा भवति त्रिधा भवति' (छा० ७।२६।२) इत्यादिश्रुतिभ्यः परमात्मनोऽनेकधाभावस्याधिगतत्वात्। यदपि तस्य भगवतोऽभिगमनादिलक्षणमाराधनमजस्रमनन्यचित्ततयाभिप्रेयते—तदपि न प्रतिषिध्यते;

---

भी है, ऐसी स्थिति है, तो किस हेतुसे इस पक्षके निराकरण करनेकी इच्छा है? कहते हैं—यद्यपि इसप्रकारका अंश समान होनेसे विसंवादका विषय नहीं है, तो भी अन्य अंश विसंवादका स्थान है, इससे उसके निराकरणके लिए यह आरम्भ है। उस विषयमें भागवत मानते हैं—केवल एक भगवान् वासुदेव ही निरञ्जन ज्ञानस्वरूप परमार्थतत्त्व है। वह अपनेको चार प्रकारसे विभक्तकर वासुदेवव्यूहरूपसे, संकर्षणव्यूहरूपसे, प्रद्युम्नव्यूहरूपसे और अनिरुद्धव्यूहरूपसे प्रतिष्ठित है। वासुदेव परमात्मा कहा जाता है, संकर्षण नाम जीव है। प्रद्युम्न नाम मन है और अनिरुद्ध नाम अहङ्कार है। उनमें वासुदेव परा प्रकृति है और अन्य संकर्षण आदि कार्य हैं। इसप्रकारके उस भगवान् परमेश्वरकी अभिगमन, उपादान, इज्या, स्वाध्याय और योग द्वारा सौ वर्ष पूजाकर क्षीण क्लेश होकर जीव भगवान्को ही प्राप्त होता है। उसमें जो यह कहा जाता है कि जो वह नारायण अव्यक्तसे पर प्रसिद्ध परमात्मा सर्वात्मा है वह अपनेसे अपनेको अनेक प्रकारके व्यूहकर अवस्थित है, उसका निराकरण नहीं किया जाता, क्योंकि 'स एकधा भवति'० ( वह एक रूप होता है, तीन रूप होता है ) इत्यादि श्रुतियोंसे परमात्माका अनेक प्रकारका भाव अधिगत होता है, और जो भी उस भगवान्का सदा अनन्य चित्तसे अभिगमन आदि रूप आराधन अभिप्रेत है, उसका भी प्रतिषेध नहीं किया जाता है, कारण कि श्रुति और स्मृतिमें ईश्वर प्रणिधान प्रसिद्ध है। परन्तु जो पुनः यह कहा जाता है—वासुदेवसे संकर्षण

## सत्यानन्दी-दीपिका

* भागवत-पाँचरात्र आगम यहाँ विषय है। वह जीवके उत्पत्तिके अंशमें प्रमाण है कि नहीं? ऐसा सन्देह होनेपर उसका बाधक उपलब्ध न होनेसे वह प्रमाणभूत है। पूर्वपक्षमें उसके आगमके साथ विरोध होनेसे जीवाभिन्न ब्रह्म समन्वयकी असिद्धि फल है। सिद्धान्तमें उस अंशमें उस आगमके अप्रमाण होनेसे विरोध नहीं है, अतः जीवाभिन्न ब्रह्म समन्वयकी सिद्धि फल है। यहाँ व्यूहका अर्थ मूर्ति है। उस परमात्माकी प्राप्तिके साधन इसप्रकार हैं—वाक्, काय और चित्तकी सावधानता पूर्वक देवगृहमें जाना अभिगमन है, पूजा योग्य द्रव्यका संग्रह उपादान है, इज्या-पूजा, स्वाध्याय-अष्टाक्षर आदि मन्त्रका जप, योग-ध्यान आदिसे बहुत वर्ष तक पूजा आदिकर क्षीण क्लेश होकर जीव भगवान्को प्राप्त होता है। 'समाहितः श्रद्धावित्तो भूत्वा' (समाहित और श्रद्धावान् होकर) 'तं यथा यथोपासते' ( जैसे जैसे उसकी उपासना करता है ) इत्यादि श्रुति और 'मत्कर्मकृन्मत्परमः' (गी० ११।५५) (मेरे लिए कर्म करनेवाला है और मेरे ही परायण है ) इत्यादि स्मृतिमें ईश्वर प्रणिधान प्रसिद्ध है, अतः उसका प्रतिषेध नहीं किया जाता।

श्रुतिस्मृत्योरीश्वरप्रणिधानस्यप्रसिद्धत्वात्। * यत्पुनरिदमुच्यते–वासुदेवात्संकर्षण उत्पद्यते,संकर्षणाच्च प्रद्युम्नः, प्रद्युम्नाच्चानिरुद्ध इति, अत्र ब्रूमः–न वासुदेवसंज्ञकात्परमात्मनः संकर्षणसंज्ञकस्य जीवस्योत्पत्तिः संभवति; अनित्यत्वादिदोषप्रसङ्गात्। उत्पत्तिमत्त्वे हि जीवस्यानित्यत्वादयो दोषाः प्रसज्येरन्, ततश्च नैवास्य भगवत्प्राप्तिर्मोक्षः स्यात्; कारणप्राप्तौ कार्यस्य प्रविलयप्रसङ्गात्। प्रतिषेधिष्यति चाचार्यो जीवस्योत्पत्तिम्–'नात्माऽश्रुतेर्नित्यत्वाच्च ताभ्यः' ( ब्र० सू० २।३।१७ ) इति। तस्मादसंगतैषा कल्पना ॥ ४२ ॥

## न च कर्तुः करणम् ॥ ४३ ॥

पदच्छेद—न, च, कर्तुः, करणम्।

सूत्रार्थ—( च ) और ( कर्तुः ) कर्तासे ( करणम् ) करणकी ( न ) उत्पत्ति नहीं देखी जाती, इसलिए जीवसे मनकी उत्पत्ति असंगत है।

इतश्चासंगतैषा कल्पना–यस्मान्न हि लोके कर्तुर्देवदत्तादेः करणं परश्वाद्युत्पद्यमानं दृश्यते। वर्णयन्ति च भागवताः कर्तुर्जीवात्संकर्षणसंज्ञकात्करणं मनः प्रद्युम्नसंज्ञकमुत्पद्यते। कर्तृजाच्च तस्मादनिरुद्धसंज्ञकोऽहङ्कार उत्पद्यत इति। न चैतद्दृष्टान्तमन्तरेणाध्यवसातुं शक्नुमः, न चैवंभूतां श्रुतिमुपलभामहे ॥ ४३ ॥

## विज्ञानादिभावे वा तदप्रतिषेधः ॥ ४४ ॥

पदच्छेद—विज्ञानादिभावे, वा, तदप्रतिषेधः।

सूत्रार्थ—( विज्ञानादिभावे वा ) संकर्षण आदि तीनोंके वासुदेवके समान विज्ञान आदि अथवा भाव ( स्वरूप ) होनेपर भी ( तदप्रतिषेधः ) उत्पत्ति असम्भव दोषका प्रतिषेध नहीं होता।

अथापि स्यान्न चैते संकर्षणादयो जीवादिभावेनाभिप्रेयन्ते; किं तर्हि ? ईश्वरा एवैते सर्वे ज्ञानैश्वर्यशक्तिबलवीर्यतेजोभिरैश्वर्यधर्मैरन्विता अभ्युपगम्यन्ते वासुदेवा एवैते सर्वे

---

उत्पन्न होता है, संकर्षणसे प्रद्युम्न और प्रद्युम्नसे अनिरुद्ध। इसपर हम कहते हैं—वासुदेव संज्ञक परमात्मासे संकर्षण नामक जीवकी उत्पत्ति सम्भव नहीं है, क्योंकि अनित्यत्व आदि दोषोंका प्रसङ्ग है। जीव उत्पत्तिमान् होनेपर निश्चित अनित्यत्व आदि दोष प्रसक्त होंगे, उससे इसका भगवत्प्राप्तिरूप मोक्ष नहीं होगा, क्योंकि कारणकी प्राप्तिमें कार्यका प्रविलय प्रसङ्ग होगा। 'नात्माऽश्रुतेः०' (आत्मा उत्पन्न नहीं होता, कारण कि उत्पत्तिके प्रकरणमें उसकी उत्पत्ति श्रुति नहीं है, अपितु इसके विपरीत श्रुतियोंसे उसकी नित्यता अवगत होती है ) इस सूत्रमें आचार्य जीवकी उत्पत्तिका प्रतिषेध करेंगे। इसलिए यह कल्पना असंगत ही है ॥ ४२ ॥

और इससे भी यह कल्पना असंगत है, क्योंकि लोकमें कर्ता देवदत्त आदिसे कुठार आदि करण उत्पद्यमान नहीं देखे जाते। भागवत वर्णन करते हैं—संकर्षण नामक कर्ता जीवसे प्रद्युम्न संज्ञक करण मन उत्पन्न होता है, कर्तासे उत्पन्न उस ( मन ) से अनिरुद्ध संज्ञक अहंकार उत्पन्न होता है। परन्तु दृष्टान्तके विना इसका निश्चय करनेमें हम समर्थ नहीं हैं, और न इसप्रकारकी हम श्रुति उपलब्ध करते हैं ॥ ४३ ॥

यदि ऐसा हो कि ये संकर्षण आदि जीव आदि भावसे अभिप्रेत नहीं हैं, किन्तु ये सब ज्ञान,

### सत्यानन्दी-दीपिका

* 'एष महानज आत्मा०' ( बृ० ४।४।२० ) (यह महान् अजन्मा आत्मा) इत्यादि श्रुति और 'अजो नित्यः शाश्वतोऽयं पुराणो०' ( गीता० २।२० ) इत्यादि स्मृतिसे आत्मा नित्य अजन्मा सिद्ध होता है। इससे यह आगम अप्रामाणिक है। इसलिए जीवाभिन्न ब्रह्म समन्वय सिद्ध है ॥ ४२ ॥

निर्दोषा निरधिष्ठाना निरवद्याश्चेति, तस्मान्नायं यथावर्णित उत्पत्त्यसंभवो दोषः प्राप्नोतीति। अत्रोच्यते-एवमपि तदप्रतिषेध उत्पत्त्यसंभवस्याप्रतिषेधः, प्राप्नोत्येवायमुत्पत्त्यसंभवो दोषः प्रकारान्तरेणेत्यभिप्रायः। कथम्? यदि तावदयमभिप्रायः—परस्परभिन्ना एवैते वासुदेवादयश्चत्वार ईश्वरास्तुल्यधर्माणो नैषामेकात्मकत्वमस्तीति, ततोऽनेकेश्वरकल्पनानर्थक्यम्; एकेनैवेश्वरेणेश्वरकार्यसिद्धेः। सिद्धान्तहानिश्च; भगवानेवैको वासुदेवः परमार्थतत्त्वमित्यभ्युपगमात्। अथायमभिप्रायः—एकस्यैव भगवत एते चत्वारो व्यूहास्तुल्यधर्माण इति, तथापि तदवस्थ एवोत्पत्त्यसंभवः। नहि वासुदेवात्संकर्षणस्योत्पत्तिः संभवति, संकर्षणाच्च प्रद्युम्नस्य, प्रद्युम्नाच्चानिरुद्धस्य; अतिशयाभावात्। भवितव्यं हि कार्यकारणयोरतिशयेन यथा मृद्घटयोः। न ह्यसत्यतिशये कार्यं कारणमित्यवकल्पते। न च पञ्चरात्रसिद्धान्तिभिर्वासुदेवादिष्वेकस्मिन्सर्वेषु वा ज्ञानैश्वर्यादि तारतम्यकृतः कश्चिद्भेदोऽभ्युपगम्यते। वासुदेवा एव हि सर्वे व्यूहा निर्विशेषा इष्यन्ते। न चैते भगवद्व्यूहाश्चतुःसंख्यायामेवावतिष्ठेरन्; ब्रह्मादिस्तम्बपर्यन्तस्य समस्तस्यैव जगतो भगवद्व्यूहत्वावगमात् ॥४४॥

## विप्रतिषेधाच्च ॥ ४५ ॥

पदच्छेद—विप्रतिषेधात्, च।

सूत्रार्थ—और परस्पर विरुद्ध कथनसे भी यह मत असंगत है।

* विप्रतिषेधश्चास्मिञ्छास्त्रे बहुविध उपलभ्यते-गुणगुणित्वकल्पनादिलक्षणः, ज्ञानैश्वर्यशक्तिबलवीर्यतेजांसि गुणाः, आत्मान एवैते भगवन्तो वासुदेवा इत्यादिदर्शनात्। वेद-

---

ऐश्वर्य, शक्ति, बल, वीर्य और तेज रूप ईश्वर सम्बन्धी धर्मोंसे युक्त ईश्वर ही स्वीकार किये जाते हैं। ये सब निर्दोष, निरधिष्ठान और निरवद्य वासुदेव ही हैं, इससे यथा वर्णित उत्पत्तिका असम्भव दोष प्राप्त नहीं है। इसपर कहते हैं—ऐसा होनेपर भी तदप्रतिषेध—उस उत्पत्तिके असम्भवका अप्रतिषेध है। यह उत्पत्तिका असम्भव दोष अन्य प्रकारसे प्राप्त होता ही है यह अभिप्राय है। किस प्रकार? यदि यह अभिप्राय हो कि परस्पर भिन्न ही ये वासुदेव आदि चार ईश्वर तुल्य धर्मवाले हैं, इनमें एकात्मकत्व नहीं है, तो उससे अनेक ईश्वर कल्पना निष्फल है, क्योंकि एक ही ईश्वरसे ईश्वरकार्य सिद्ध हो जायगा। और एक ही भगवान् वासुदेव परमार्थतत्त्व है, इसप्रकार स्वीकार होनेसे सिद्धान्तकी भी हानि है। यदि यह अभिप्राय हो कि एक ही भगवान्‌के ये चार व्यूह समान धर्मवाले हैं, तथापि उत्पत्तिका असम्भव वैसा ही है, क्योंकि अतिशय-विशेषभेद-वैलक्षण्यके अभावसे वासुदेवसे संकर्षण, संकर्षणसे प्रद्युम्न, और प्रद्युम्नसे अनिरुद्धकी उत्पत्ति सम्भव नहीं है। कार्य कारणमें अतिशय होना ही चाहिए, जैसे मृत्तिका और घटमें है। अतिशयके न होनेपर 'यह कार्य है, यह कारण है' ऐसा नहीं हो सकता। और पञ्चरात्र सिद्धान्ती वासुदेव आदिमेंसे एकमें अथवा सबमें ज्ञान, ऐश्वर्य आदि तारतम्यकृत कोई भेद स्वीकार नहीं करते। वासुदेव ही सब व्यूह निर्विशेष ( समान ) है, ऐसा मानते हैं। परन्तु भगवान्‌के ये व्यूह चार संख्यामें ही अवस्थित न होंगे, क्योंकि ब्रह्मादिसे स्तम्ब पर्यन्त समस्त जगत् ही भगवद् व्यूहरूपसे अवगत होता है ॥४४॥

इस शास्त्रमें गुण-गुणित्व कल्पना आदि रूप अनेक प्रकारका विरोध उपलब्ध होता है, क्योंकि ज्ञान, ऐश्वर्य, शक्ति, बल, वीर्य और तेज भगवान्‌के गुण हैं, वे आत्मा ही हैं भगवान् वासुदेव ही हैं,

### सत्यानन्दी-दीपिका

* इस वक्ष्यमाण हेतुसे भी जीवोत्पत्ति असम्भव है। स्वयं ही गुण और गुणी हो यह विरुद्ध है। आदि पदसे प्रद्युम्न और अनिरुद्ध-मन और अहंकार आत्मासे भिन्न हैं ऐसा कहकर पुनः आत्मा

विप्रतिषेधश्च भवति—चतुर्षु वेदेषु परं श्रेयोऽलब्ध्वा शाण्डिल्य इदं शास्त्रमधिगतवानित्यादिवेदनिन्दादर्शनात्। तस्मादसंगतैषा कल्पनेति सिद्धम् ॥४५॥

इति श्रीमच्छङ्करभगवत्पूज्यपादकृतौ शारीरकमीमांसाभाष्ये द्वितीयाध्यायस्य द्वितीयः पादः समाप्तः ॥२॥

ऐसा देखनेमें आता है। उसी प्रकार वेद विरोध भी है, कारण कि चारों वेदोंमें परम श्रेय न मिलनेके कारण शाण्डिल्यने इस शास्त्रको प्राप्त किया अर्थात् पञ्चरात्रकी शरण ली, इत्यादि वेद निन्दाका दर्शन है, इससे सिद्ध हुआ कि यह कल्पना असंगत ॥४५॥

॥ स्वामी सत्यानन्द सरस्वती कृत शाङ्करभाष्य-भाषानुवादके द्वितीयाध्यायका द्वितीय पाद समाप्त ॥२॥

## सत्यानन्दी-दीपिका

ही हैं, इसप्रकार इस विरुद्ध कथनका भी यहाँ ग्रहण है। और 'एकस्यापि तन्त्राक्षरस्य अध्येता चतुर्वेदिभ्योऽधिकः' ( इस पंचरात्र तन्त्रके एक अक्षरका अध्येता चतुर्वेद वेत्ताओंसे अधिक है ) इस प्रकार वेदकी निन्दा की गई है। अतः यह सिद्ध हुआ कि परस्पर विरुद्ध पौरुषेय कल्पनाओंसे अपौरुषेय वेदान्त समन्वयका विरोध नहीं है ॥४५॥

॥ स्वामी सत्यानन्द सरस्वती कृत 'सत्यानन्दी-दीपिका' के द्वितीयाध्यायका द्वितीय पाद समाप्त ॥२॥

## द्वितीयाध्याये तृतीयः पादः।

[ अत्र पादे पञ्चमहाभूतजीवादिश्रुतीनां विरोधपरिहारः ]

( इस पादमें पञ्च महाभूत और जीव आदि श्रुतियोंमें विरोधका परिहार है )

( १ वियदधिकरणम्। सू० १-७ )

## न वियदश्रुतेः ॥ १ ॥

पदच्छेद—न, वियत्, अश्रुतेः।

सूत्रार्थ—( वियत् ) आकाश ( न ) उत्पन्न नहीं होता, ( अश्रुतेः ) क्योंकि उसकी उत्पत्ति प्रतिपादक श्रुति नहीं है।

* वेदान्तेषु तत्र तत्र भिन्नप्रस्थाना उत्पत्तिश्रुतय उपलभ्यन्ते। केचिदाकाशस्योत्पत्तिमामनन्ति, केचिन्न। तथा केचिद्वायोरुत्पत्तिमामनन्ति, केचिन्न। एवं जीवस्य प्राणानां च।

वेदान्तोंमें तत् तत् स्थलोंपर भिन्न प्रस्थानवाली ( भिन्न प्रकरणस्थ ) उत्पत्ति श्रुतियाँ उपलब्ध होती हैं। कुछ श्रुतिवाक्य आकाशकी उत्पत्ति कहते हैं, कुछ नहीं कहते। उसीप्रकार कुछ श्रुतिवाक्य वायुकी उत्पत्ति कहते हैं, कुछ नहीं कहते। एवं कुछ श्रुतिवाक्य जीव और प्राणोंकी उत्पत्ति कहते हैं

## सत्यानन्दी-दीपिका

* गत पादमें वेदान्तसमन्वयकी स्थापनाके लिए सांख्य आदि मतोंमें भ्रान्ति मूलकता सिद्ध की गई है। अब वेदान्त समन्वयकी स्थितिके लिए भूत, भोक्तृविषयक सृष्टि श्रुतियोंमें परस्पर विरोधका निराकरण करते हैं। जीवकी अनुत्पत्तिके प्रसंगसे आकाशकी भी उत्पत्तिके असंभवकी आशङ्का कर

एवमेव क्रमादिद्वारकोऽपि विप्रतिषेधः श्रुत्यन्तरेषूपलक्ष्यते। विप्रतिषेधाच्च परपक्षाणामनपेक्षितत्वं स्थापितम्, तद्वत्स्वपक्षस्यापि विप्रतिषेधादेवानपेक्षितत्वमाशङ्क्येतेत्यतः सर्ववेदान्तगतसृष्टिश्रुत्यर्थनिर्मलत्वाय परः प्रपञ्च आरभ्यते। तदर्थनिर्मलत्वे च फलं यथोक्ताशङ्कानिवृत्तिरेव। तत्र प्रथमं तावदाकाशमाश्रित्य चिन्त्यते—किमस्याकाशस्योत्पत्तिरस्त्युत नास्तीति ? तत्र तावत्प्रतिपद्यते—'न वियदश्रुतेः' इति। न खल्वाकाशमुत्पद्यते। कस्मात् ? अश्रुतेः। न ह्यस्योत्पत्तिप्रकरणे श्रवणमस्ति। छान्दोग्ये हि 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा० ६।२।१) इति सच्छब्दवाच्यं ब्रह्म प्रकृत्य 'तदैक्षत' 'तत्तेजोऽसृजत' (छा० ६।२।३) इति च पञ्चानां महाभूतानां मध्यमं तेज आदि कृत्वा त्रयाणां तेजोबन्नानामुत्पत्तिः श्राव्यते। श्रुतिश्च नः प्रमाणमतीन्द्रियार्थविज्ञानोत्पत्तौ न चात्र श्रुतिरस्त्याकाशस्योत्पत्तिप्रतिपादिनी, तस्मान्नास्त्याकाशस्योत्पत्तिरिति ॥१॥

## अस्ति तु ॥ २ ॥

पदच्छेद—अस्ति, तु।

सूत्रार्थ—( तु ) शब्द पक्षान्तरके परिग्रह अर्थमें है, ( अस्ति ) छान्दोग्यमें आकाशकी उत्पत्ति प्रतिपादक श्रुतिके न होनेपर भी तैत्तिरीयमें है, इसलिए विरोध वैसा ही है।

---

और कुछ नहीं कहते। इसीप्रकार क्रम आदि द्वारक भी अन्य श्रुतियोंमें विरोध उपलक्षित होता है। और विरोध होनेसे पर पक्षोंका अनपेक्षत्व स्थापन किया गया है, उसीप्रकार स्वपक्षमें भी अनपेक्षत्वकी आशङ्का हो सकती है, इसलिए सर्ववेदान्तगत सृष्टि श्रुतिके अर्थकी निर्मलताके लिए अब आगेका ग्रन्थ आरम्भ किया जाता है। और उसके अर्थके निर्मल होनेपर यथोक्त शङ्काकी निवृत्ति ही फल है। उसमें पहले तो आकाशको आश्रयकर विचार किया जाता है—इस आकाशकी उत्पत्ति है अथवा नहीं है ? उसमें प्रथम 'न वियदश्रुतेः' ऐसा प्राप्त होता है। आकाश उत्पन्न नहीं होता, किससे ? इससे कि श्रुति नहीं है, उसकी उत्पत्तिके प्रकरणमें श्रुति नहीं है, क्योंकि छान्दोग्यमें ही 'सदेव०' (हे सोम्य ! आरम्भमें यह एकमात्र अद्वितीय सत् ही था) इसप्रकार सत् शब्द वाच्य ब्रह्मको प्रस्तुतकर 'तदैक्षत०' (उसने ईक्षण किया, उसने तेज उत्पन्न किया) इसप्रकार पाँच महाभूतोंमें मध्यम तेजको आदि (आरम्भ) कर तेज, जल और अन्न तीनोंकी उत्पत्ति सुनाई जाती है। अतीन्द्रिय अर्थके विज्ञानकी उत्पत्तिमें हमारे मतमें श्रुति प्रमाण है। परन्तु यहाँ आकाशकी उत्पत्ति प्रतिपादक श्रुति नहीं है, इसलिए आकाशकी उत्पत्ति नहीं है ॥ १ ॥

### सत्यानन्दी-दीपिका

उसका परिहार करते हुए प्रथम 'न वियदश्रुतेः' इससे एक देशीके मतको कहते हैं। जैसे परस्पर और पूर्वापर विरोध होनेके कारण पर पक्ष उपेक्ष्य है, वैसे श्रुति पक्ष भी उपेक्ष्य है। इसप्रकारकी शङ्काकी निवृत्तिके लिए दृष्टान्तसंगतिसे यह पाद आरम्भ किया जाता है। तैत्तिरीयक आकाश और वायुकी उत्पत्ति कहते हैं, छान्दोग नहीं कहते। 'सर्व एत आत्मनो व्युच्चरन्ति' ( ये सब आत्मासे निकलते हैं ) 'एतस्माज्जायते प्राणः' ( मुण्ड २।१।३ ) ( इससे प्राण उत्पन्न होते हैं ) इसप्रकार माध्यंदिन और आथर्वणिक जीव और प्राणकी उत्पत्ति कहते हैं। कहीं आकाश पूर्वक सृष्टि है, कहीं तेज पूर्वक सृष्टि है, इसप्रकार क्रमका विरोध है। 'स इमाँल्लोकानसृजत' ( ऐ० १।२ ) ( उसने इन लोकोंको उत्पन्न किया ) इसप्रकार अक्रम है। एवं कहीं सात प्राण, कहीं आठ प्राण, इसप्रकार संख्या पूर्वक विरोध है। इस तरह श्रुतियोंका परस्पर विरोध होनेसे प्रथम आकाशकी उत्पत्ति और अनुत्पत्ति विषयक श्रुतियोंको लेकर विचार किया जाता है। पूर्वपक्षमें आकाशकी उत्पत्ति श्रुति नहीं है, अतः आकाशकी उत्पत्ति नहीं है ॥ १ ॥

तुशब्दः पक्षान्तरपरिग्रहे। मा नामाकाशस्य छान्दोग्ये भूदुत्पत्तिः, श्रुत्यन्तरे त्वस्ति। तैत्तिरीयका हि समामनन्ति—'सत्यं ज्ञानमनन्तं ब्रह्म' इति प्रकृत्य 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै० २।१) इति। ततश्च श्रुत्योर्विप्रतिषेधः—कचित्तेजः-प्रमुखा सृष्टिः, क्वचिदाकाशप्रमुखेति। नन्वेकवाक्यताऽनयोः श्रुत्योर्युक्ता, सत्यं सा युक्ता, नतु सावगन्तुं शक्यते। कुतः? 'तत्तेजोऽसृजत' (छा० ६।२।३) इति सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयेन संबन्धानुपपत्तेः 'तत्तेजोऽसृजत', 'तदाकाशमसृजत' इति। ननु सकृच्छ्रुतस्यापि कर्तुः कर्तव्यद्वयेन संबन्धो दृश्यते—यथा सूपं पक्त्वौदनं पचतीति, एवं तदाकाशं सृष्ट्वा तत्तेजोऽसृजतेति योजयिष्यामि। नैवं युज्यते, प्रथमजत्वं हि छान्दोग्ये तेजसोऽवगम्यते, तैत्तिरीयके चाकाशस्य, न चोभयोः प्रथमजत्वं संभवति। एतेनेतरश्रुत्यक्षरविरोधोऽपि व्याख्यातः। 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै०२।१)इत्यत्रापि तस्मादाकाशः संभूतस्तस्मात्तेजः संभूतमिति सकृच्छ्रुतस्यापादानस्य संभवनस्य च वियत्तेजोभ्यां युगपत्संबन्धानुपपत्तेः। 'वायोरग्निः' (तै० २।१) इति च पृथगाम्नानात्॥२॥

अस्मिन्विप्रतिषेधे कश्चिदाह—

## गौण्यसंभवात् ॥ ३ ॥

**पदच्छेद**—गौणी, असंभवात्।

**सूत्रार्थ**—( गौणी ) आकाशकी उत्पत्ति श्रुति गौणी है, मुख्य नहीं, ( असंभवात् ) क्योंकि आकाशकी उत्पत्तिमें समवायिकारण आदि सामग्रीका अभाव है और व्यापक होनेसे उसमें नित्यत्वका अनुमान होता है। अतः आकाशकी उत्पत्ति नहीं हो सकती।

---

'तु' शब्द अन्य पक्षके ग्रहण करनेमें हैं। आकाशकी उत्पत्ति छान्दोग्यमें मत हो, परन्तु अन्य श्रुतिमें तो है। 'सत्यं ज्ञानमनन्तं ब्रह्म' ऐसा प्रस्तुतकर 'तस्माद्वा०' (इस प्रत्यगभिन्न उस परमात्मासे आकाश उत्पन्न हुआ ) इसप्रकार तैत्तिरीय शाखावाले कहते हैं। इससे 'कहीं तेज प्रमुख सृष्टि है और कहीं आकाश प्रमुख सृष्टि है' इस तरह दो श्रुतियोंमें विरोध है। परन्तु इन श्रुतियोंमें एक वाक्यता युक्त है। सत्य, वह युक्त है, किन्तु वह अवगत नहीं हो सकती। क्योंकि 'तत्तेजो०' (उसने तेज उत्पन्न किया ) इसप्रकार एक वार श्रुत स्रष्टाका 'तत्तेजोऽसृजत' 'तदकाशमसृजत' ( उसने आकाश उत्पन्न किया ) इसप्रकार दो स्रष्टव्योंके साथ सम्बन्ध नहीं हो सकता। परन्तु एक वार श्रुत कर्ताका भी दो कर्तव्योंके साथ सम्बन्ध देखा जाता है, जैसे 'दाल पकाकर चावल ( भात ) पकाता है' वैसे 'उसने आकाशको उत्पन्नकर उसने तेज उत्पन्न किया' ऐसी योजना करूँगा? किन्तु ऐसा युक्त नहीं है, क्योंकि छान्दोग्यमें तेजकी प्रथम उत्पत्ति अवगत होती है और तैत्तिरीयमें आकाशकी, और दोनोंकी प्रथम उत्पत्ति असंभव है, इस विरोध कथनसे अन्य श्रुतिवाक्योंके साथ विरोध भी व्याख्यात हुआ। क्योंकि 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इसमें भी 'उससे आकाश उत्पन्न हुआ' 'उससे तेज उत्पन्न हुआ' इसप्रकार एक वार श्रुत अपादान (पञ्चम्यन्त-तस्मात्) और संभवन (उत्पत्ति) का आकाश और तेजके साथ युगपत् सम्बन्ध नहीं हो सकता और 'वायोरग्निः' (वायुसे अग्नि उत्पन्न होती है ) ऐसी पृथक् ( दूसरी ) श्रुति है॥ २॥

इस विरोधके होनेपर कोई कहता है—

### सत्यानन्दी-दीपिका

❀ 'वायोरग्निः०' इस अन्य श्रुतिमें भी विरोध है, क्योंकि छान्दोग्य श्रुतिमें तो सबसे तेजकी उत्पत्ति और तैत्तिरीय श्रुतिमें वायुसे अग्नि (तेज) की उत्पत्ति कही गई है। इसलिए दोनों श्रुतियोंकी एकवाक्यता नहीं हो सकती॥ २॥

* नास्ति वियत उत्पत्तिरश्रुतेरेव। या त्वितरा वियदुत्पत्तिवादिनी श्रुतिरुदाहृता सा गौणी भवितुमर्हति, कस्मात्? असंभवात्। न ह्याकाशस्योत्पत्तिः संभावयितुं शक्या, श्रीमत्कणभुगभिप्रायानुसारिषु जीवत्सु। ते हि कारणसामग्र्यसंभवादाकाशस्योत्पत्तिं वारयन्ति। समवाय्यसमवायिनिमित्तकारणेभ्यो हि किल सर्वमुत्पद्यमानं समुत्पद्यते। द्रव्यस्य चैकजातीयकमनेकं च द्रव्यं समवायिकारणं भवति। न चाकाशस्यैकजातीयकमनेकं च द्रव्यमारम्भकमस्ति, यस्मिन्समवायिकारणे सति, असमवायिकारणे च तत्संयोगे, आकाश उत्पद्येत। तदभावात्तु तदनुग्रहप्रवृत्तं निमित्तकारणं दूरापेतमेवाकाशस्य भवति। उत्पत्तिमतां च तेजःप्रभृतीनां पूर्वोत्तरकालयोर्विशेषः संभाव्यते—प्रागुत्पत्तेः प्रकाशादिकार्यं न बभूव, पश्चाच्च भवतीति। आकाशस्य पुनर्न पूर्वोत्तरकालयोर्विशेषः संभावयितुं शक्यते। * किं हि प्रागुत्पत्तेरनवकाशमसुषिरमच्छिद्रं बभूवेति शक्यतेऽध्यवसातुम्? पृथिव्यादिवैधर्म्याच्च विभुत्वादिलक्षणादाकाशस्याजत्वसिद्धिः। तस्माद्यथा लोक आकाशं कुरु, आकाशो जात इत्येवंजातीयको गौणः प्रयोगो भवति, यथा च घटाकाशः करकाकाशो गृहाकाश इत्येकस्याप्याकाशस्यैवंजातीयको भेदव्यपदेशो गौणो भवति, वेदेऽपि 'आरण्यानाकाशेष्वालभेरन्' इति एवमुत्पत्तिश्रुतिरपि गौणी द्रष्टव्या ॥ ३ ॥

---

आकाशकी उत्पत्ति नहीं है, क्योंकि श्रुति नहीं है। जो आकाशकी उत्पत्ति प्रतिपादक अन्य श्रुति उदाहृत है वह गौणी होनी युक्त है, क्योंकि असंभव है। श्रीमान् कणादके अभिप्रायका अनुसरण करनेवालोंके जीवित रहनेपर आकाशकी उत्पत्तिकी संभावना नहीं की जा सकती, कारण कि वे कारण सामग्रीके असंभवसे आकाशकी उत्पत्तिका वारण करते हैं। सम्पूर्ण उत्पद्यमान कार्य समवायी, असमवायी और निमित्तकारणोंसे उत्पन्न होता है। एकजातीय अनेक द्रव्य द्रव्यका समवायिकारण होते हैं। परन्तु आकाशके एक प्रकारके अनेक आरम्भक द्रव्य नहीं हैं, जिस समवायिकारणके होने पर और उनके संयोग असमवायिकारणके होनेपर आकाश उत्पन्न हो। उन कारणोंके न होनेसे उनके अनुग्रहसे प्रवृत्त आकाशका निमित्तकारण तो दूर ही रहा। तेजकी उत्पत्तिके पूर्व प्रकाश आदि कार्य नहीं थे उत्पत्तिके पश्चात् होते हैं, इसप्रकार उत्पत्तिमत् तेजः प्रभृतिमें पूर्वोत्तर कालमें विशेषकी संभावना की जा सकती है, किन्तु इसप्रकार आकाशके पूर्वोत्तरकालमें विशेषकी संभावना नहीं की जा सकती। उत्पत्तिके पूर्व अनवकाश, असुषिर और अच्छिद्र था, क्या ऐसा निश्चय किया जा सकता है? पृथिवी आदिसे विरुद्ध धर्म और विभुत्व आदिरूप होनेसे आकाश अज सिद्ध होता है। इसलिए जैसे लोकमें 'आकाश करो' 'आकाश उत्पन्न हुआ' इसप्रकारका गौण प्रयोग होता है, और जैसे घटाकाश, करकाकाश, गृहाकाश इसप्रकारका एक आकाशमें भी भेद व्यपदेश गौण होता है। वेदमें भी 'अरण्यवासी पशुओंका आकाशमें आलभन करे' ऐसा गौण व्यवहार होता है, वैसे आकाशकी उत्पत्ति श्रुति भी गौण समझनी चाहिए ॥ ३ ॥

### सत्यानन्दी-दीपिका

* अध्यायकी समाप्ति पर्यन्त अधिकरणोंमें प्रथम विरोधसे श्रुतिका अप्रामाण्य पूर्वपक्षका फल है। मुख्य सिद्धान्तके साथ श्रुतियोंका अविरोध होपर एकवाक्यता होनेसे ब्रह्ममें समन्वय सिद्ध होता है, ऐसा फल और क्रम है। दो श्रुतियोंका परस्पर विरोध होनेपर 'स्वाध्यायोऽध्येतव्यः' इस अध्ययन विधिसे गृहीत श्रुतियाँ अप्रामाणिक नहीं हो सकतीं, इससे आकाशकी उत्पत्ति असंभव है। इस तर्कसे छान्दोग्य श्रुति मुख्य और तैत्तिरीय श्रुति गौण माननेपर कोई विरोध नहीं होगा। इसप्रकारसे वैशेषिक मतका विवरण करते हैं—'आकाशो नोत्पद्यते सामग्रीशून्यत्वात् आत्मवत्' 'अकाश उत्पन्न नहीं होता, क्योंकि सामग्री नहीं है जैसे आत्मा।'

## शब्दाच्च ॥ ४ ॥

पदच्छेद—शब्दात्, च ।

सूत्रार्थ—और वायुश्चान्तरिक्षं चैतदमृतम्' इत्यादि श्रुतिमें आकाशमें अमृत शब्दका प्रयोग देखा जाता है, अतः आकाशकी उत्पत्ति नहीं होती ।

शब्दः खल्वाकाशस्याजत्वं ख्यापयति । यत आह—'वायुश्चान्तरिक्षं चैतदमृतम्' (बृ० २।३।३) इति । न ह्यमृतस्योत्पत्तिरुपपद्यते । 'आकाशवत्सर्वगतश्च नित्यः' (छा० ३।१४।३) इति चाकाशेन ब्रह्म सर्वगतत्वनित्यत्वाभ्यां धर्माभ्यामुपमिमान आकाशस्यापि तौ धर्मौ सूचयति । न च तादृशस्योत्पत्तिरुपपद्यते । 'स यथानन्तोऽयमाकाश एवमनन्त आत्मा वेदितव्यः' इति चोदाहरणम् । 'आकाशशरीरं ब्रह्म' ( तै० १।६।२ ), 'आकाश आत्मा' (तै० १।७।१) इति च । न ह्याकाशस्योत्पत्तिमत्त्वे ब्रह्मणस्तेन विशेषणं संभवति, नीलेनेवोत्पलस्य । तस्मान्नित्यमेवाकाशेन साधारणं ब्रह्मेति गम्यते ॥ ४ ॥

## स्याच्चैकस्य ब्रह्मशब्दवत् ॥ ५ ॥

पदच्छेद—स्यात्, च, एकस्य, ब्रह्मशब्दवत् ।

सूत्रार्थ—( ब्रह्मशब्दवत् ) जैसे एक ही प्रकरणमें विषय भेदसे 'अन्नं ब्रह्म' यहाँ ब्रह्म शब्द गौण है और 'आनन्दो ब्रह्म' यहाँ मुख्य है, वैसे प्रकृतमें भी विषय भेदसे ( एकस्य ) एक ही 'संभूतः' शब्द गौण और मुख्य ( स्यात् ) होता है ।

ॐ इदं पदोत्तरं सूत्रम् । स्यादेतत्—कथं पुनरेकस्य संभूतशब्दस्य 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' (तै० २।१) इत्यस्मिन्नधिकारे परेषु तेजःप्रभृतिष्वनुवर्तमानस्य मुख्यत्वं संभवत्याकाशे च गौणत्वमिति ? अत उत्तरमुच्यते—स्याच्चैकस्यापि संभूतशब्दस्य

---

आकाश अज है ऐसा श्रुति कहती है, क्योंकि 'वायुश्चान्तरिक्षं०' (वायु और अन्तरिक्ष ये अमृत हैं) ऐसा श्रुति कहती है । अमृतकी उत्पत्ति उपपन्न नहीं होती । 'आकाशवत्सर्वगतश्च०' ( आकाशके समान सर्वगत और नित्य है ) इसप्रकार आकाशसे सर्वगतत्व और नित्यत्व धर्मोंसे ब्रह्मको उपमा देती हुई श्रुति वे धर्म आकाशके भी सूचित करती है । इससे उस प्रकारके सर्वगत और नित्यकी उत्पत्ति उपपन्न नहीं होती । 'स यथा०' ( जैसे यह आकाश अनन्त है वैसे ही आत्मा अनन्त है ऐसा समझना चाहिए ) और 'आकाशशरीरं ब्रह्म' (ब्रह्म आकाश शरीर है) 'आकाश आत्मा०' ( आकाश आत्मा है ) इसप्रकार यह उदाहरण है । जैसे नील उत्पलका विशेषण होता है, वैसे आकाश उत्पत्ति वाला हो तो वह ब्रह्मका विशेषण नहीं हो सकता । इससे यह ज्ञात होता है कि नित्य ही आकाशके तुल्य ब्रह्म है ॥ ४ ॥

यह सूत्र कुछ शङ्काके होनेपर उत्तर रूप है । 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' इस अधिकार (प्रकरण) में अनुवर्तमान एक ही 'संभूतः' शब्द अनन्तरोक्त तेज आदिमें मुख्य और आकाशमें गौण कैसे हो सकता है ? ऐसी शङ्का है । अतः इसका उत्तर कहा जाता है—'संभूतः' शब्द यद्यपि एक है, तो भी विषय विशेषके कारण ब्रह्म शब्दके समान उसका गौण और मुख्य प्रयोग होता है ।

### सत्यानन्दी-दीपिका

* और जैसे वेदमें एक आकाशमें 'आकाशेषु' यह बहुवचन प्रयोग गौण है, वैसे आकाशकी उत्पत्ति प्रतिपादिक श्रुति भी गौण है ॥ ३ ॥

* यदि आकाशकी उत्पत्ति श्रुति गौण मानें तो ब्रह्मके समान आकाश अनादि और अनन्त सिद्ध होनेपर 'एकमेवाद्वितीयम्' इत्यादि अद्वैत प्रतिपादक श्रुतिका बाध होगा 'एक ब्रह्मके विदित होनेपर

विषयविशेषवशाद्गौणो मुख्यश्च प्रयोगो ब्रह्मशब्दवत्। यथैकस्यापि ब्रह्मशब्दस्य 'तपसा ब्रह्म विजिज्ञासस्व, तपो ब्रह्म' ( तै० ३।२ ) इत्यस्मिन्नधिकारेऽन्नादिषु गौणः प्रयोग आनन्दे च मुख्यः। यथा च तपसि ब्रह्मविज्ञानसाधने ब्रह्मशब्दो भक्त्या प्रयुज्यतेऽञ्जसा तु विज्ञेये ब्रह्मणि तद्वत्। कथं पुनरनुत्पत्तौ नभसः 'एकमेवाद्वितीयम्' ( छा० ६।२।१ ) इतीयं प्रतिज्ञा समर्थ्यते? ननु नभसा द्वितीयेन सद्वितीयं ब्रह्म प्राप्नोति। कथं च ब्रह्मणि विदिते सर्वं विदितं स्यादिति? तदुच्यते-एकमेवेति तावत्स्वकार्यापेक्षयोपपद्यते। यथा लोके कश्चित्कुम्भकारकुले पूर्वेद्युर्मृद्दण्डचक्रादीनि चोपलभ्यापरेद्युश्च नानाविधान्यमत्राणि प्रसारितान्युपलभ्य ब्रूयात्-मृदेवैकाकिनी पूर्वेद्युरासीदिति, स च तयावधारणया मृत्कार्यजातमेव पूर्वेद्युर्नासीदित्यभिप्रेयान्न दण्डचक्रादि, तद्वदद्वितीयश्रुतिरधिष्ठात्रन्तरं वारयति। यथा मृदोऽमत्रप्रकृतेः कुम्भकारोऽधिष्ठाता दृश्यते, नैवं ब्रह्मणो जगत्प्रकृतेरन्योऽधिष्ठातास्तीति। * न च नभसापि द्वितीयेन सद्वितीयं ब्रह्म प्रसज्यते। लक्षणान्यत्वनिमित्तं हि नानात्वम्। न च प्रागुत्पत्तेर्ब्रह्मनभसोर्लक्षणान्यत्वमस्ति; क्षीरोदकयोरिव संसृष्टयोर्व्यापित्वामूर्तत्वादिधर्मसामान्यात्। सर्गकाले तु ब्रह्म जगदुत्पादयितुं यतते, स्तिमितमितरत्तिष्ठति, तेनान्यत्वमवसीयते। तथा च 'आकाशशरीरं ब्रह्म' ( तै० १।६।२ ) इत्यादिश्रुतिभ्योऽपि ब्रह्माकाशयोरभेदोपचारसिद्धिः। अत एव च ब्रह्मविज्ञानेन सर्वविज्ञानसिद्धिः। अपि च सर्वं कार्यमुत्पद्यमानमाकाशेनाव्यतिरिक्तदेशकालमेवोत्पद्यते, ब्रह्मणा चाव्यतिरिक्तदेश-

---

जैसे एक ब्रह्म शब्दका भी 'तपसा ब्रह्म०' (तपसे ब्रह्मको जाननेकी इच्छाकर, तप ब्रह्म है) इस अधिकारमें अन्न आदिमें गौण और आनन्दमें मुख्य प्रयोग है। और जैसे ब्रह्मविज्ञानके साधन तपमें ब्रह्मशब्द गौणवृत्तिसे प्रयुक्त है किन्तु मुख्यरूपसे तो विज्ञेय ब्रह्ममें प्रयुक्त है, वैसे यहाँ भी समझना चाहिए। परन्तु आकाशकी उत्पत्ति न होनेपर 'एकमेवा०' (एक ही अद्वितीय है) इस प्रतिज्ञाका किस प्रकार समर्थन होगा? परन्तु दूसरे आकाशसे ब्रह्म सद्वितीय प्राप्त होता है, ब्रह्मके विदित होनेपर सब किस प्रकार विदित होगा? उसको कहते हैं—'एकमेव' यह तो स्वकार्यकी अपेक्षासे उपपन्न होता है। जैसे लोकमें कुम्हारके घरमें पहले दिन मृत्तिका, दण्ड, चक्र आदिको देखकर और दूसरे दिन अनेक प्रकारके फैले हुए पात्रोंको उपलब्धकर कोई यह कहे कि पहले दिन केवल एक मृत्तिका ही थी, वह उस निश्चयसे मृत्तिकाका कार्य समूह ही प्रथम दिन नहीं था, इस अभिप्रायसे कहता है, किन्तु दण्ड, चक्र आदि नहीं थे, इस अभिप्रायसे नहीं। वैसे ही अद्वितीय श्रुति अन्य अधिष्ठाताका निषेध करती है। जैसे घट आदि पात्रोंकी प्रकृति ( उपादानकारण ) मृत्तिकाका कुम्भकार अधिष्ठाता देखा जाता है, वैसे जगत्के उपादान कारण ब्रह्मका अन्य अधिष्ठाता नहीं है। और आकाश द्वितीयसे भी ब्रह्म सद्वितीय है, ऐसा प्रसक्त नहीं होता, क्योंकि लक्षणभेदसे नानात्व है। परन्तु उत्पत्तिके पूर्व ब्रह्म और आकाशमें लक्षणभेद नहीं है, कारण कि क्षीर और उदकके समान संसृष्टोंमें व्यापित्व और अमूर्तत्व धर्म समान हैं। परन्तु सृष्टिकालमें तो ब्रह्म जगत्को उत्पन्न करनेके लिए यत्न करता है और अन्य आकाश निश्चल रहता है, उससे दोनोंका भेद निश्चित होता है। उसी प्रकार 'आकाशशरीरं ब्रह्म' इत्यादि श्रुतियोंसे भी ब्रह्म और आकाशका अभेदोपचार सिद्ध होता है। अतएव ब्रह्मविज्ञानसे सर्वविज्ञानकी सिद्धि होती है, और उत्पद्यमान सब कार्य आकाशसे अव्यतिरिक्त देश कालमें ही उत्पन्न होते हैं, और ब्रह्मसे अभिन्न देश कालमें ही आकाश होता है, अतः ब्रह्म और उसके कार्यके विज्ञान

### सत्यानन्दी-दीपिका

* सब विदित हो जाता है' इस प्रतिज्ञाका बाध होगा, कारण कि ब्रह्मके जाननेपर अन्यका ज्ञान होनेपर भी आकाशका ज्ञान नहीं होगा, क्योंकि वह ब्रह्मके समान पृथक्तत्त्व है। पू०—'तदुच्यते' आदिसे कहते हैं।५।

कालमेवाकाशं भवतीति, अतो ब्रह्मणा तत्कार्येण च विज्ञातेन सह विज्ञातमेवाकाशं भवति। यथा क्षीरपूर्णे घटे कतिचिदब्बिन्दवः प्रक्षिप्ताः सन्तः क्षीरग्रहणेनैव गृहीता भवन्ति, नहि क्षीरग्रहणादब्बिन्दुग्रहणं परिशिष्यते, एवं ब्रह्मणा तत्कार्यैश्चाव्यतिरिक्तदेशकालत्वाद् गृहीतमेव ब्रह्मग्रहणेन नभो भवति। तस्माद्भाक्तं नभसः संभवश्रवणमिति ॥ ५॥

एवं प्राप्त इदमाह—

## प्रतिज्ञाऽहानिरव्यतिरेकाच्छब्देभ्यः ॥ ६ ॥

पदच्छेद—प्रतिज्ञाऽहानिः, अव्यतिरेकात्, शब्देभ्यः ।

सूत्रार्थ—( अव्यतिरेकात् ) उपनिषद् प्रतिपादित ब्रह्मसे सम्पूर्ण वस्तुओंका अभेद होनेसे ( प्रतिज्ञाऽहानिः ) एकके विज्ञानसे सबके विज्ञानकी प्रतिज्ञा बाधित नहीं होती । ( शब्देभ्यः ) 'सदेव सोम्य' 'ऐतदात्म्यमिदं' इसप्रकार कार्य कारणके अभेद प्रतिपादन परक श्रुतियोंसे भी प्रतिज्ञाकी सिद्धि अवगत होती है ।

'येनाश्रुतं श्रुतं भवत्यमतं मतमविज्ञातं विज्ञातम्' (छा० ६।१।३) इति, 'आत्मनि खल्वरे दृष्टे श्रुते मते विज्ञात इदं सर्वं विदितम्' (बृ० ४।५।६) इति, 'कस्मिन्नु भगवो विज्ञाते सर्वमिदं विज्ञातं भवति' (मुण्ड० १।१।३) इति, 'न काचन मद्बहिर्धा विद्यास्ति' इति चैवंरूपाप्रतिवेदान्तं प्रतिज्ञा विज्ञायते। तस्याः प्रतिज्ञाया एवमहानिरनुपरोधः स्यात्, यद्यव्यतिरेकः कृत्स्नस्य वस्तुजातस्य विज्ञेयाद्ब्रह्मणः स्यात्। व्यतिरेके हि सत्येकविज्ञानेन सर्वं विज्ञायत इतीयं प्रतिज्ञा हीयेत। स चाव्यतिरेक एवमुपपद्यते यदि कृत्स्नं वस्तुजातमेकस्माद्ब्रह्मण उत्पद्येत। शब्देभ्यश्च प्रकृतिविकाराव्यतिरेकन्यायेनैव प्रतिज्ञासिद्धिरवगम्यते। तथा हि—'येनाश्रुतं श्रुतं भवति' इति प्रतिज्ञाय मृदादिदृष्टान्तैः कार्यकारणाभेदप्रतिपादनपरैः प्रतिज्ञैषा समर्थ्यते। तत्साधनायैव चोत्तरे शब्दाः 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा० ६।२।१), 'तदैक्षत', 'तत्तेजोऽसृजत' ( छा० ६।२।३ ) इत्येवं कार्यजातं ब्रह्मणः प्रदर्श्याव्यतिरेकं प्रदर्श-

---

होनेके साथ आकाश विज्ञात ही होता है । जैसे दूध पूर्ण घटमें कुछ जल बिन्दु प्रक्षिप्त होते हुए दूधके ग्रहणसे ही गृहीत होते हैं । दूध ग्रहणसे जलबिन्दुका ग्रहण अवशिष्ट नहीं होता, वैसे ब्रह्म और उसके कार्योंके साथ [ आकाशका ] अभिन्न देश काल होनेसे ब्रह्मके ग्रहणसे आकाश गृहीत ही होता है, इसलिए आकाशकी सम्भव श्रुति गौण है ॥ ५ ॥

ऐसा प्राप्त होनेपर यह कहते हैं—

'येनाश्रुतं श्रुतं०' (जिससे अश्रुत श्रुत, अमत मत और अविज्ञात विज्ञात हो जाता है) 'आत्मनि खल्वरे०' ( हे मैत्रेयी ! निश्चय ही आत्माका दर्शन, श्रवण, मनन और विज्ञान हो जानेपर यह सब विदित हो जाता है ) 'कस्मिन्नु भगवो०' ( हे भगवन् ! किसके विज्ञात होनेपर यह सब विज्ञात हो जाता है ) और 'न काचन०' (मुझसे भिन्न और कोई विद्या नहीं है) इसप्रकारकी प्रतिज्ञा प्रत्येक वेदान्तमें ज्ञात होती है । यदि सम्पूर्ण वस्तु समूह विज्ञेय ब्रह्मसे अभिन्न हो तो उस प्रतिज्ञाकी इसप्रकार अहानि-अबाध होगा । भिन्न होनेपर तो 'एकके विज्ञानसे सबका विज्ञान होता है' इस प्रतिज्ञाकी हानि होगी । वह अव्यतिरेक ( अभिन्नत्व ) इसप्रकार उपपन्न होता है—यदि सम्पूर्ण वस्तु समूह एक ब्रह्मसे उत्पन्न हो, और श्रुतियोंसे और 'प्रकृतिविकार-अव्यतिरेक न्यायसे' ही प्रतिज्ञाकी सिद्धि अवगत होती है । जैसे 'येनाश्रुतं श्रुतं भवति' इसप्रकार प्रतिज्ञाकर कार्य और कारणके अभेद प्रतिपादन परक मृत्तिका आदि दृष्टान्तोंसे इस प्रतिज्ञाका समर्थन किया जाता है और उसके सिद्ध करनेके लिए उत्तर-शब्द-श्रुति 'सदेव सोम्य०' ( हे सोम्य ! आरम्भमें यह एकमात्र अद्वितीय सत् ही था ) 'तदैक्षत०'

यन्ति—'ऐतदात्म्यमिदं सर्वम्' ( छा० ६।८।७ ) इत्यारभ्याप्रपाठकपरिसमाप्तेः। * तद्यद्याकाशं न ब्रह्मकार्यं स्यान्न ब्रह्मणि विज्ञात आकाशं विज्ञायेत, ततश्च प्रतिज्ञाहानिः स्यात्। नच प्रतिज्ञाहान्या वेदस्याप्रामाण्यं युक्तं कर्तुम्। तथा हि–प्रतिवेदान्तं ते ते शब्दास्तेन तेन दृष्टान्तेन तामेव प्रतिज्ञां ख्यापयन्ति 'इदं सर्वं यदयमात्मा' ( बृ० २।४।६ ), 'ब्रह्मैवेदममृतं पुरस्तात्' ( मुण्ड २।२।११ ) इत्येवमादयः। तस्माज्ज्वलनादिवदेव गगनमप्युत्पद्यते। यदुक्तमश्रुतेर्न वियदुत्पद्यत इति–तदयुक्तम्; वियदुत्पत्तिविषयश्रुत्यन्तरस्य दर्शितत्वात् 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः' ( तै० २।१ ) इति। सत्यं दर्शितम्; विरुद्धं तु 'तत्तेजोऽसृजत' इत्यनेन श्रुत्यन्तरेण, न; एकवाक्यत्वात्सर्वश्रुतीनाम्। भवत्वेकवाक्यत्वमविरुद्धानाम्; इह तु विरोध उक्तः, सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयसंबन्धासंभवाद् द्वयोश्च प्रथमजत्वासंभवाद्विकल्पासंभवाच्चेति। नैष दोषः–तेजःसर्गस्य तैत्तिरीयके तृतीयत्वश्रवणात् 'तस्माद्वा एतस्मादात्मन आकाशः संभूतः। आकाशाद्वायुः। वायोरग्निः' ( तै० २।१ ) इति। अशक्या हीयं श्रुतिरन्यथा परिणेतुम्। शक्या तु परिणेतुं छान्दोग्यश्रुतिस्तदाकाशं वायुं च सृष्ट्वा 'तत्तेजोऽसृजत' इति। * न हीयं श्रुतिस्तेजोजनिप्रधाना सती श्रुत्यन्तरप्रसिद्धामाकाशस्योत्पत्तिं वारयितुं शक्नोति; एकस्य वाक्यस्य व्यापारद्वयासंभवात्।

---

( उस-सत्ने ईक्षण-संकल्प किया, उसने तेज उत्पन्न किया ) इसप्रकार ब्रह्मसे कार्य समूहकी उत्पत्ति दिखलाकर 'ऐतदात्म्यमिदं सर्वम्' ( एतद्रूप ही यह सब है ) ऐसा आरम्भकर प्रपाठक-अध्यायकी समाप्ति पर्यंन्त अव्यतिरेक (अभेद) दिखलाते हैं। इसलिए यदि आकाश ब्रह्मका कार्य न हो तो ब्रह्मके विज्ञात होनेपर आकाश विज्ञात नहीं होगा और उससे प्रतिज्ञाका बाध होगा। प्रतिज्ञाकी हानिसे वेदका अप्रामाण्य करना युक्त नहीं है, क्योंकि 'इदं सर्वं यदयमात्मा' ( यह सब आत्मा ही है ) 'ब्रह्मैवेदममृतं पुरस्तात्' ( यह अमृत ब्रह्म ही आगे है ) इत्यादि वे वे श्रुतिवाक्य प्रत्येक उपनिषद्में तत्, तत् दृष्टान्तसे उसी प्रतिज्ञाका ज्ञापन करते हैं। इसलिए अग्नि आदिके समान ही आकाश भी उत्पन्न होता है। जो यह कहा गया है कि श्रुतिके न होनेसे आकाश उत्पन्न नहीं होता, वह अयुक्त है। क्योंकि 'तस्माद्वा-एतस्मादात्मन आकाशः संभूतः' इसप्रकार आकाशकी उत्पत्ति विषयक अन्य श्रुति दिखलाई गई है। ठीक, दिखलाई गई है। परन्तु 'तत्तेजोऽसृजत'( उसने तेज उत्पन्न किया ) इस अन्य श्रुतिसे तो वह विरुद्ध है। ऐसा नहीं, कारण कि सर्व श्रुतियोंकी एकवाक्यता है। पू०—अविरुद्ध वाक्योंकी एक वाक्यता भले हो, किन्तु यहाँ तो विरोध कहा गया है। कारण कि एक बार श्रुत स्रष्टाका दो स्रष्टव्योंके साथ सम्बन्धका सम्भव नहीं है, दोनोंकी प्रथमोत्पत्तिका असम्भव और विकल्पका असम्भव है। सि०—यह दोष नहीं है, क्योंकि 'तस्माद्वा एतस्मादात्मन०' ( इस प्रत्यगभिन्न उस आत्मासे आकाश उत्पन्न हुआ, आकाशसे वायु और वायुसे अग्नि ) इसप्रकार तैत्तिरीयकमें तेजकी सृष्टि तीसरी सुनी गई है, अतः यह श्रुति अन्यथा परिणत नहीं की जा सकती है। परन्तु 'तदाकाशं०' 'उसने आकाश और वायुको उत्पन्नकर उसने तेज उत्पन्न किया' इसप्रकार छान्दोग्य श्रुति तो परिणतकी जा सकती है। यह श्रुति तेजकी उत्पत्ति प्रधान होती हुई अन्य श्रुतिमें प्रसिद्ध आकाशकी उत्पत्तिका निवारण करनेमें

## सत्यानन्दी-दीपिका

* सिद्धान्ती—अपौरुषेय वेद वाक्योंमें अप्रामाण्य कल्पना करनेकी अपेक्षा एकवाक्यता द्वारा प्रामाण्य मानना युक्त है। बलवती श्रुतिके साथ दुर्बल श्रुतिकी एकवाक्यता युक्त है। तैत्तिरीय श्रुति प्रबल है, क्योंकि उसमें हेतुवाचक पञ्चमीसे क्रम पूर्वक उत्पत्ति कही गई है। छान्दोग्यमें केवल 'तत्तेजोऽसृजत' तेजकी उत्पत्ति श्रुत है, इसलिए तैत्तिरीय श्रुतिके अनुसार तेजकी उत्पत्ति प्रतिपादक छान्दोग्य श्रुतिको परिणत करना चाहिए, इससे तेजकी उत्पत्ति तीसरे नम्बरमें होगी। इसप्रकार दोनों श्रुतियोंकी एकवाक्यतासे कोई विरोध नहीं है।

स्रष्टा त्वेकोऽपि क्रमेणानेकं स्रष्टव्यं सृजेत्—इत्येकवाक्यत्वकल्पनायां संभवन्त्यां न विरुद्धार्थत्वेन श्रुतिर्हातव्या। न चास्माभिः सकृच्छ्रुतस्य स्रष्टुः स्रष्टव्यद्वयसंबन्धोऽभिप्रेयते; श्रुत्यन्तरवशेन स्रष्टव्यान्तरोपसंग्रहात्। यथा च 'सर्वं खल्विदं ब्रह्म तज्जलान्' (छा० ३।१४।१) इत्यत्र साक्षादेव सर्वस्य वस्तुजातस्य ब्रह्मजत्वं श्रूयमाणं न प्रदेशान्तरविहितं तेजःप्रमुखमुत्पत्तिक्रमं वारयति, एवं तेजसोऽपि ब्रह्मजत्वं श्रूयमाणं न श्रुत्यन्तरविहितं नभःप्रमुखमुत्पत्तिक्रमं वारयितुमर्हति। ननु शमविधानार्थमेतद्वाक्यम्, 'तज्जलानिति शान्त उपासीत' इति श्रुतेः, नैतत्सृष्टिवाक्यम्, तस्मादेतन्न प्रदेशान्तरप्रसिद्धं क्रममुपरोद्धुमर्हतीति 'तत्तेजोऽसृजत' इत्येतत्सृष्टिवाक्यम्, तस्मादत्र यथाश्रुति क्रमो ग्रहीतव्य इति। * नेत्युच्यते—नहि तेजः प्राथम्यानुरोधेन श्रुत्यन्तरप्रसिद्धो वियत्पदार्थः परित्यक्तव्यो भवति, पदार्थधर्मत्वात्क्रमस्य। अपि च 'तत्तेजोऽसृजत' इति नात्र क्रमस्य वाचकः कश्चिच्छब्दोऽस्ति अर्थात्तु क्रमोऽवगम्यते, स च 'वायोरग्निः' इत्यनेन श्रुत्यन्तरप्रसिद्धेन क्रमेण निवार्यते। विकल्पसमुच्चयौ तु वियत्तेजसोः प्रथमजत्वविषयावसंभवान-

---

समर्थ नहीं है, क्योंकि एक वाक्यमें दो व्यापारोंका सम्भव नहीं है। स्रष्टा एक होनेपर भी वह क्रमसे अनेक स्रष्टव्योंको उत्पन्न करे, इसप्रकार एकवाक्यताकी कल्पनाका सम्भव होनेपर विरुद्ध अर्थसे श्रुतिकी हानि नहीं करनी चाहिए। एक वार श्रुत स्रष्टाका दो स्रष्टव्योंके साथ सम्बन्ध हमें भी अभीष्ट नहीं है, क्योंकि अन्य श्रुतिके वशसे अन्य स्रष्टव्यका संग्रह होता है। जैसे 'सर्वं खल्विदं०' (निश्चय यह सब ब्रह्म ही है, यह उसीसे उत्पन्न होनेवाला उसीमें लीन होनेवाला और उसीमें चेष्टा करनेवाला है) इसमें समस्त कार्य समुदायकी ब्रह्मसे साक्षात् उत्पत्ति श्रूयमाण है वह अन्य स्थानोंमें विहित तेज प्रमुख उत्पत्ति क्रमका वारण नहीं करती, वैसे तेजकी भी ब्रह्मसे श्रूयमाण उत्पत्ति अन्य श्रुतिमें विहित आकाश प्रमुख उत्पत्ति क्रमका वारण करनेसे समर्थ नहीं है। पू०—परन्तु 'तज्जलानिति शान्त उपासीत' (उसीसे उत्पन्न होनेवाला, उसीमें लीन होनेवाला, और उसीमें चेष्टा करनेवाला है, अतः शान्त होकर उसकी उपासना करनी चाहिए) इस श्रुतिसे यह वाक्य शमके विधानके लिए है। इसलिए यह सृष्टिवाक्य नहीं है, अत यह अन्य प्रदेशमें प्रसिद्ध क्रमका विरोध नहीं कर सकता। 'तत्तेजोऽसृजत' यह सृष्टि वाक्य है। इससे यहाँ श्रुतिके अनुसार क्रमका ग्रहण करना चाहिए। सि०-नहीं, ऐसा कहते हैं—तेजको प्रथमताके अनुरोधसे अन्य-तैत्तिरीय श्रुति प्रसिद्ध आकाश पदार्थ परित्याग करने योग्य नहीं होता, क्योंकि क्रम पदार्थका धर्म है। और 'तत्तेजोऽसृजत' इस श्रुतिमें क्रम वाचक कोई शब्द नहीं है। परन्तु अर्थतः क्रम अवगत होता है ? तो उसका 'वायोरग्निः' (वायुसे अग्नि) इस अन्य श्रुति प्रसिद्ध

## सत्यानन्दी-दीपिका

* 'सर्वं खल्विदं ब्रह्म तज्जलान्' इस श्रुतिमें सम्पूर्ण जगत्की ब्रह्मसे उत्पत्ति माननेपर भी जैसे 'तत्तेजोऽसृजत' ऐसा कहनेसे कोई विरोध नहीं है, वैसे क्रम बोधक तैत्तिरीय श्रुतिके साथ छान्दोग्य श्रुतिका विरोध नहीं होना चाहिए। पू०—'तज्जलान्' यह श्रुति तो 'यत्परः शब्दः स शब्दार्थः' (जो शब्द जिसके लिए होता है वही शब्दका अर्थ होता है) इस न्यायके अनुसार शम परक है सृष्टि परक नहीं। इससे छान्दोग्य श्रुतिमें प्रसिद्ध सृष्टि क्रमका बाध नहीं हो सकता, क्योंकि 'तत्तेजोऽसृजत' यह सृष्टिवाक्य है, अतः श्रुतिके अनुसार तेजकी प्रथमता स्वीकार करनी चाहिए।

* आकाश और तेजके प्रथमोत्पत्ति विषयक और समुच्चय (गौके दक्षिण और वाम शृङ्गके समान एक साथ उत्पन्न होना) न सम्भव है और न स्वीकार किया गया है, क्योंकि वस्तुमें विकल्प नहीं होता और समुच्चयमें कोई प्रमाण नहीं है। समुच्चय होनेमें 'वाय्योरग्निः' इस श्रौत क्रमका बाध होगा, अतः दोनों श्रुतियोंमें विरोध नहीं है।

गस्य। यावदयमात्मा संसारी भवति, यावदस्य सम्यग्दर्शनेन संसारित्वं न निवर्तते, तावदस्य बुद्ध्या संयोगो न शाम्यति। यावदेव चायं बुद्ध्युपाधिसंबन्धस्तावज्जीवस्य जीवत्वं संसारित्वं च। परमार्थतस्तु न जीवो नाम बुद्ध्युपाधिसंबन्धपरिकल्पितस्वरूपव्यतिरेकेणास्ति। नहि नित्यमुक्तस्वरूपात्सर्वज्ञादीश्वरादन्यश्चेतनो धातुर्द्वितीयो वेदान्तार्थनिरूपणायामुपलभ्यते। 'नान्योऽतोऽस्ति द्रष्टा श्रोता मन्ता विज्ञाता' ( बृह०३।७।२३), 'नान्यदतोऽस्ति द्रष्टृ श्रोतृ मन्तृ विज्ञातृ' ( छा० ६।८।७ ) 'तत्त्वमसि' ( छा० ६।१।६ ), 'अहं ब्रह्मास्मि' ( बृह०१।४।७ ) इत्यादिश्रुतिशतेभ्यः। कथं पुनरवगम्यते यावदात्मभावी बुद्धिसंयोग इति? तद्दर्शनादित्याह। तथा हि शास्त्रं दर्शयति–'योऽयं विज्ञानमयः प्राणेषु हृद्यन्तर्ज्योतिः पुरुषः स समानः सन्नुभौ लोकावनुसंचरति ध्यायतीव लेलायतीव' ( बृह० ।३।७ ) इत्यादि। तत्र विज्ञानमय इति बुद्धिमय इत्येतदुक्तं भवति, प्रदेशान्तरे 'विज्ञानमयो मनोमयः प्राणमयश्चक्षुर्मयः श्रोत्रमयः' इति विज्ञानमयस्य मन आदिभिः सह पाठात्। बुद्धिमयत्वं च तद्गुणसारत्वमेवाभिप्रेयते। यथा लोके स्त्रीमयो देवदत्त इति स्त्रीरागादिप्रधानोऽभिधीयते, तद्वत्। 'स समानः सन्नुभौ लोकावनुसंचरति' इति च लोकान्तरगमनेऽप्यवियोगं बुद्ध्या दर्शयति। केन समानः? तयैव बुद्ध्येति गम्यते, संनिधानात्। तच्च दर्शयति- 'ध्यायतीव लेलायतीव' (बृह० ५।३।८ ) इति। एतदुक्तं भवति–नायं स्वतो ध्यायति, नापि चलति, ध्यायन्त्यां बुद्धौ ध्यायतीव, चलन्त्यां बुद्धौ चलतीवेति। अपि च मिथ्याज्ञानपुरःसरोऽयमात्मनो बुद्ध्युपाधिसंबन्धः। न च मिथ्याज्ञानस्य सम्यग्ज्ञा-

---

पूर्वमें कही हुई यह दोष प्राप्तिकी शङ्का नहीं करनी चाहिए, किससे? इससे कि बुद्धिका संयोग यावदात्मभावी है। जबतक यह आत्मा संसारी है, जबतक इसका तत्त्वज्ञानसे संसारित्व निवृत्त नहीं होता, तबतक इसका बुद्धिके साथ सम्बन्ध निवृत्त नहीं होता। जबतक यह बुद्धिरूप उपाधिका सम्बन्ध है तब तक जीवमें जीवत्व और संसारित्व हैं। वास्तवमें तो बुद्धि उपाधिके सम्बन्धसे परिकल्पित स्वरूपसे व्यतिरिक्त जीव नाम है ही नहीं, क्योंकि 'नान्योऽतो०' (इससे अन्य द्रष्टा, श्रोता, मन्ता और विज्ञाता नहीं है ) 'नान्यदतो०' (इससे अन्य द्रष्टा, श्रोता, मन्ता और विज्ञाता नहीं है) 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादि सैकड़ों श्रुतियोंसे नित्य मुक्त स्वरूप सर्वज्ञ ईश्वरसे अन्य द्वितीय चेतन तत्त्व वेदान्त अर्थका निरूपण करनेपर उपलब्ध नहीं होता। परन्तु बुद्धिका संयोग यावदात्मभावी है, यह कैसे जाना जाता है? इसके उत्तरमें 'वह श्रुतिमें प्रतिपादित है' ऐसा सूत्रकारने कहा है। जैसे कि 'योऽयं विज्ञानमयः०' (जो यह प्राणोंमें विज्ञानमय है बुद्धिमें ज्योतिःस्वरूप पुरुष, वह समान–बुद्धिके सदृश हुआ इस लोक और परलोक में संचार करता है, [बुद्धि वृत्तिके अनुसार ] मानो ध्यान करता है। [प्राणवृत्ति होकर] मानों अत्यर्थ चेष्टा करता है ) इत्यादि शास्त्र दिखलाता है। इसमें 'विज्ञानमयः' इस पदसे 'बुद्धिमय' यह उक्त होता है, क्योंकि अन्य स्थलमें 'विज्ञानमयो०' (विज्ञानमय, मनोमय, प्राणमय, चक्षुर्मय, श्रोत्रमय ) इस प्रकार विज्ञानमयका मन आदिके साथ पाठ है। बुद्धिमयत्वसे तद्गुणसारत्व ही अभिप्रेत है। जैसे लोकमें स्त्रीमें राग आदिकी प्रधानतासे 'देवदत्त स्त्रीमय है' कहा जाता है। 'स समानः०' (वह बुद्धि समान होकर दोनों लोकोंमें संचरण करता है) यह श्रुति लोकान्तर गमन करनेमें आत्माका बुद्धिके साथ अवियोग प्रतिपादित करती है। किसके समान? सान्निध्यसे उस बुद्धिके समान ऐसा ज्ञात होता है। उस (समानत्व)को 'ध्यायतीव लेलायतीव' (ध्यान करता-सा प्रतीत होता है, चलता-सा प्रतीत होता है ) यह श्रुति दिखलाती है। तात्पर्य यह है कि यह आत्मा स्वतः न ध्यान करता है और न चलता ही है। परन्तु बुद्धिके ध्यानस्थ होनेपर वह ध्यान करता-सा प्रतीत होता है और बुद्धिके चलनेपर वह चलता-सा ज्ञात होता है। आत्माका यह बुद्धिरूप उपाधिके साथ सम्बन्ध मिथ्याज्ञान पुरः सर है। मिथ्याज्ञानकी निवृत्ति यथार्थज्ञानके विना नहीं होती। इसलिए जबतक

नाद्न्यत्र निवृत्तिरस्तीत्यतो यावद्ब्रह्मात्मतानवबोधस्तावदयं बुद्ध्युपाधिसंबन्धो न शाम्यति। दर्शयति च 'वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्। तमेव विदित्वाऽतिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय ॥' ( श्वेता० ३।८ ) इति ॥ ३० ॥

ननु सुषुप्तप्रलययोर्न शक्यते बुद्धिसम्बन्ध आत्मनोऽभ्युपगन्तुम्। 'सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति' ( छा० ६।८।१ ) इति वचनात्। कृत्स्नविकारप्रलयाभ्युपगमाच्च। तत्कथं यावदात्मभावित्वं बुद्धिसंबन्धस्येति ? अत्रोच्यते—

पुंस्त्वादिवत्त्वस्य सतोऽभिव्यक्तियोगात् ॥ ३१ ॥

पदच्छेद— पुंस्त्वादिवत्, तु, अस्य, सतः, अभिव्यक्तियोगात्।

सूत्रार्थ—( पुंस्त्वादिवत् ) जैसे बाल्यावस्थामें विद्यमान ही पुंस्त्व आदि यौवनमें विकसित होते हैं, वैसे ( सतः ) सुषुप्ति अवस्थामें सूक्ष्मरूपसे विद्यमान ( अस्य ) बुद्धि संयोग जाग्रत् आदि अवस्थामें (अभिव्यक्तियोगात्) अभिव्यक्त होता है। इसलिए बुद्धि सम्बन्ध यावदात्मभावी है।

❀ यथा लोके पुंस्त्वादीनि बीजात्मना विद्यमानान्येव बाल्यादिष्वनुपलभ्यमानान्यविद्यमानवदभिप्रेयमाणानि यौवनादिष्वाविर्भवन्ति नाविद्यमानान्युत्पद्यन्ते, षण्डादीनामपि तदुत्पत्तिप्रसङ्गात्—एवमयमपि बुद्धिसंबन्धः शक्त्यात्मना विद्यमान एव सुषुप्तप्रलययोः पुनः प्रबोधप्रसवयोराविर्भवति। एवं ह्येतद्युज्यते, न ह्याकस्मिकी कस्यचिदुत्पत्तिः संभवति, अतिप्रसङ्गात्। दर्शयति च सुषुप्तादुत्थानमविद्यात्मकबीजसद्भावकारितम्—'सति संपद्य न विदुः सति संपद्यामह इति', 'त इह व्याघ्रो वा सिंहो वा' (छा० ६।९।३) इत्यादिना। तस्मात्सिद्धमेतद्यावदात्मभावी बुद्ध्याद्युपाधिसंबन्ध इति ॥ ३१ ॥

---

ब्रह्मात्माका अज्ञान है तबतक यह बुद्धिरूप उपाधि सम्बन्ध निवृत्त नहीं होता। ऐसा 'वेदाहमेतं०' ( मैं इस अज्ञानातीत प्रकाशस्वरूप महान् पुरुषको जानता हूँ। उसे ही जानकर मृत्युको पार करता है इसके सिवा परमपद प्राप्तिका कोई अन्य मार्ग नहीं है ) यह श्रुति भी दिखलाती है ॥ ३० ॥

सुषुप्ति और प्रलयमें आत्माका बुद्धिके साथ सम्बन्ध स्वीकार नहीं किया जा सकता, क्योंकि 'सता सोम्य०' ( हे सोम्य ! सुषुप्तिमें यह सत् ( परब्रह्म ) के साथ सम्पन्न हो जाता है यह अपने स्वरूपको प्राप्त हो जाता है ) ऐसा श्रुतिवचन है। और सम्पूर्ण विकारका प्रलय स्वीकार किया गया है, तो बुद्धि सम्बन्ध यावदात्मभावी कैसे है ? इसपर कहते हैं—

जैसे लोकमें पुंस्त्व आदि बीजरूपसे विद्यमान ही बाल्य आदिमें अनुपलब्ध एवं अविद्यमानके समान अभिप्रेत होनेपर भी यौवन आदिमें आविर्भूत होते हैं, अविद्यमान उत्पन्न नहीं होते, क्योंकि षण्ड ( नपुंसक ) आदिमें भी उसकी उत्पत्तिका प्रसंग हो जायगा, वैसे यह बुद्धि सम्बन्ध भी सुषुप्ति और प्रलयमें शक्तिरूपसे विद्यमान ही पुनः प्रबोध ( जाग्रत् ) और प्रसव ( सृष्टिकाल ) में आविर्भूत होता है, क्योंकि यह ऐसा ही युक्त-संगत है। किसीकी आकस्मिक ( बिना कारण ) उत्पत्ति नहीं हो सकती, कारण कि अतिप्रसंग हो जायगा। और "सति संपद्य०' (सुषुप्तिमें यह सम्पूर्ण प्रजा सत्को प्राप्त होकर यह नहीं जानती कि हम सत् ( ब्रह्म ) को प्राप्त हो गयी )इससे 'त इह०'(वे इस लोकमें बाघ या सिंह जो सुषुप्तिके पूर्व होते हैं, वे ही पुनः होते हैं ) इत्यादिसे श्रुति अविद्यात्मक बीजके सद्भावसे किया हुआ सुषुप्तिसे उत्थान दिखलाती है। इससे यह सिद्ध हुआ कि बुद्धि आदिरूप उपाधिका सम्बन्ध यावदात्मभावी है ॥ ३१ ॥

### सत्यानन्दी-दीपिका

❀ यदि बुद्धिका सम्बन्ध यावदात्मभावी मानें तो सुषुप्तिमें सम्बन्धके होनेपर ब्रह्मसंपत्ति नहीं होगी और प्रलयमें होनेपर प्रलय न होगा। परन्तु स्थूल और सूक्ष्मरूपसे सम्बन्ध विद्यमान है ॥३१॥

## नित्योपलब्ध्यनुपलब्धिप्रसङ्गोऽन्यतरनियमो वाऽन्यथा ॥ ३२ ॥

पदच्छेद—नित्योपलब्ध्यनुपलब्धिप्रसङ्गः, अन्यतरनियमः, वा, अन्यथा ।

सूत्रार्थ—अन्तःकरणका अस्तित्व अवश्य मानना चाहिए । ( अन्यथा ) यदि उसे न मानें तो ( नित्योपलब्ध्यनुपलब्धिप्रसङ्गः ) आत्मा, इन्द्रिय आदि साधन विद्यमान होनेसे नित्योपलब्धिका प्रसङ्ग होगा । यदि साधन होते हुए भी अनुपलब्धि मानें तो नित्यानुपलब्धि प्रसङ्ग आ जायगा । ( वा ) अथवा ( अन्यतरनियमः ) आत्मा वा इन्द्रियका प्रतिबन्ध मानना होगा, तो वह भी ठीक नहीं है, क्योंकि आत्मा अविक्रिय है और इन्द्रियोंकी भी अकस्मात् शक्तिका प्रतिबन्ध नहीं हो सकता है, इसलिए उपलब्धिके सामान्य कारण अन्तःकरणको अवश्य मानना चाहिए ।

❀ तच्चात्मन उपाधिभूतमन्तःकरणं मनोबुद्धिर्विज्ञानं चित्तमिति चानेकधा तत्रतत्राभिलप्यते । क्वचिच्च वृत्तिविभागेन संशयादिवृत्तिकं मन इत्युच्यते, निश्चयादिवृत्तिकं बुद्धिरिति । तच्चैवंभूतमन्तःकरणमवश्यमस्तीत्यभ्युपगन्तव्यम् । अन्यथा ह्यनभ्युपगम्यमाने तस्मिन्नित्योपलब्ध्यनुपलब्धिप्रसङ्गः स्यात् । आत्मेन्द्रियविषयाणामुपलब्धिसाधनानां संनिधाने सति नित्यमेवोपलब्धिः प्रसज्येत । अथ सत्यपि हेतुसमवधाने फलाभावस्ततो नित्यमेवानुपलब्धिः प्रसज्येत । न चैवं दृश्यते । अथवाऽन्यतरस्यात्मन इन्द्रियस्य वा शक्तिप्रतिबन्धोऽभ्युपगन्तव्यः । न चात्मनः शक्तिप्रतिबन्धः संभवति, अविक्रियत्वात् । नापीन्द्रियस्य, नहि तस्य पूर्वोत्तरयोः क्षणयोरप्रतिबद्धशक्तिकस्य सतोऽकस्माच्छक्तिः प्रतिबध्येत । तस्माद्यस्यावधानानवधानाभ्यामुपलब्ध्यनुपलब्धी भवतस्तन्मनः । तथा च श्रुतिः—'अन्यत्रमना अभूवं नादर्शमन्यत्रमना अभूवं नाश्रौषम्' ( बृ० १।५।३ ) इति, 'मनसा ह्येव पश्यति मनसा शृणोति' ( बृह० १।५।३ ) इति । कामादयश्चास्य वृत्तय इति दर्शयति

---

आत्माका उपाधिभूत वह अन्तःकरण भिन्न भिन्न स्थलों पर मन, बुद्धि, विज्ञान और चित्त इस तरह अनेक प्रकारसे कहा जाता है । कहीं वृत्तिविभागसे संशय आदि वृत्तिवालेको मन कहते हैं, और निश्चय आदि वृत्तिवालेको बुद्धि कहते हैं । इसप्रकारका वह अन्तःकरण अवश्य है, यह स्वीकार करना चाहिए । अन्यथा—उसके स्वीकार न किये जानेपर नित्योपलब्धि अथवा नित्य अनुपलब्धिका प्रसङ्ग होगा । उपलब्धिके साधन भूत आत्मा, इन्द्रिय और विषयके सन्निधान होनेपर नित्य ही उपलब्धि प्रसक्त होगी । यदि हेतुके संनिधान होनेपर भी फलका अभाव है, तो नित्य ही अनुपलब्धि प्रसक्त होगी । परन्तु ऐसा देखा नहीं जाता । अथवा आत्मा वा इन्द्रिय दोनोंमें से एककी शक्तिका प्रतिबन्ध स्वीकार करना चाहिए । आत्माकी शक्तिका प्रतिबन्ध तो संभव नहीं है, क्योंकि वह अविक्रिय है । इन्द्रियका भी शक्ति प्रतिबन्ध संभव नहीं है, क्योंकि पूर्व और उत्तर क्षणमें अप्रतिबद्ध शक्ति वालेकी शक्ति अकस्मात् प्रतिबद्ध नहीं हो सकती, इसलिए जिसकी सावधानी और असावधानीसे उपलब्धि और अनुपलब्धि होती हैं वह मन है । तथा 'अन्यत्र मना०' ( अन्यत्र मन था, अतः मैंने नहीं देखा, अन्यत्र मन था, इससे नहीं सुना, इसप्रकार मनसे ही देखता है, मनसे सुनता है ) यह

### सत्यानन्दी-दीपिका

❀ आत्माकी बुद्धिरूप उपाधिके सद्भावमें अनेक प्रमाण हैं—'चेतसा वेदितव्यः' ( शुद्ध चित्तसे जानना चाहिए ) 'चित्तं च चेतयितव्यं च' ( प्र० ४।८ ) ( चित्त और चित्तका विषय ) 'मनसैवानुद्रष्टव्यम्' ( मनसे ही देखना चाहिए ) 'यस्तु विज्ञानवान्भवति' ( कठ० १।३।६ ) ( परन्तु जो बुद्धिरूप सारथि युक्त होता है ) 'मनसस्तु परा बुद्धिः' ( कठ० १।३।१० ) ( मनसे बुद्धि पर है ) इत्यादि श्रुतियोंसे अन्तःकरण चित्त, मन, विज्ञान, बुद्धि अनेक नामोंसे प्रतिपादित है । इन्द्रिय और विषय आदिके होनेपर भी कदाचित् विषयोपलब्धि होती है कदाचित् नहीं होती इसका कारण केवल

'कामः संकल्पो विचिकित्सा श्रद्धाऽश्रद्धा धृतिरधृतिर्ह्रीर्धीर्भीरित्येतत्सर्वं मन एव' ( बृह० १।५।३ ) इति । तस्माद्युक्तमेतत् 'तद्गुणसारत्वात्तद्व्यपदेशः' इति ॥ ३२ ॥

( १४ कर्त्रधिकरणम् । सू० ३३-३९ )

## कर्ता शास्त्रार्थवत्त्वात् ॥ ३३ ॥

पदच्छेद—कर्ता, शास्त्रार्थवत्त्वात् ।

सूत्रार्थ—( कर्ता ) आत्मा ही कर्ता है बुद्धि नहीं, ( शास्त्रार्थवत्त्वात् ) क्योंकि ऐसा माननेसे विधि आदि शास्त्र सार्थक होता है ।

* तद्गुणसारत्वाधिकारेणैवापरोऽपि जीवधर्मः प्रपञ्च्यते । कर्ता चायं जीवः स्यात् । कस्मात् ? शास्त्रार्थवत्त्वात् । एवं 'यजेत', 'जुहुयात्', 'दद्यात्' इत्येवंविधं विधिशास्त्रमर्थवद्भवति । अन्यथा तदनर्थकं स्यात् । तद्धि कर्तुः सतः कर्तव्यविशेषमुपदिशति । न चाऽसति कर्तृत्वे तदुपपद्येत । तथेदमपि शास्त्रमर्थवद्भवति 'एष हि द्रष्टा श्रोता मन्ता बोद्धा कर्ता विज्ञानात्मा पुरुषः' ( प्र० ४।९ ) इति ॥ ३३ ॥

## विहारोपदेशात् ॥ ३४ ॥

सूत्रार्थ—जीवकर्ता है, क्योंकि उसके विषयमें विहारका उपदेश है ।

इतश्च जीवस्य कर्तृत्वम्, यज्जीवप्रक्रियायां संध्ये स्थाने विहारमुपदिशति—'स ईयतेऽमृतो यत्र कामम्' (बृह० ४।३।१२) । इति, 'स्वे शरीरे यथाकामं परिवर्तते' (बृह० २।१।१८) इति च ॥ ३४ ॥

---

श्रुति है । 'कामः संकल्पः०' ( काम, संकल्प, संशय, श्रद्धा, अश्रद्धा, धृति, अधृति, लज्जा, प्रज्ञा, भय यह सब मन ही है ) यह श्रुति कामादि मनकी वृत्तियाँ हैं, ऐसा दिखलाती है । इससे 'तद्गुणसारत्वात्तद्व्यपदेशः' यह युक्त है । ॥ ३२ ॥

तद्गुणसारत्वके प्रकरणसे ही जीवके अन्य धर्मका भी विस्तारसे विचार किया जाता है । यह जीव कर्ता होना चाहिए, क्योंकि इससे शास्त्र अर्थवान् ( सार्थक ) होता है । इसप्रकार 'यजेत' ( याग करे ) 'जुहुयात्' ( होम करे ) 'दद्याद्' ( दान करे ) इसप्रकारका विधि शास्त्र प्रयोजनवाला होता है, अन्यथा वह निरर्थक होगा, क्योंकि वह शास्त्र कर्ताके होनेपर कर्तव्य विशेषका उपदेश करता है । कर्ताके न होनेपर वह उपपन्न नहीं होगा । इसप्रकार 'एष हि द्रष्टा०' ( यही आत्मा द्रष्टा, श्रोता, मन्ता, बोद्धा, कर्ता और विज्ञानरूप है ) यह शास्त्र भी सार्थक होता है ॥ ३३ ॥

इससे भी जीव कर्ता है, क्योंकि 'स ईयते०' (वह अकेला विचरनेवाला अमृत जीव जहाँ इच्छा होती है वहाँ चला जाता है ) और 'स्वे शरीरे०' ( उसी प्रकार प्राणोंको ग्रहण कर वह अपने शरीरमें यथेष्ट विचरता है ) इसप्रकार श्रुति जीवकी प्रक्रियामें स्वप्नावस्थामें विहारका उपदेश करती है ॥ ३४ ॥

### सत्यानन्दी-दीपिका

मन ही है, अतएव यह कथन युक्त ही है कि बुद्धिके गुणोंकी प्रधानतासे आत्मामें अणुत्व, संसारित्व आदि व्यवहार होते हैं स्वतः नहीं ॥ ३२ ॥

* गत अधिकरणमें आत्मामें अणुत्वको अध्यस्त कहकर वास्तविक महत्त्वकी स्थापना की गई है। अब इस प्रसंगमें आत्माके कर्तृत्व धर्मका विचार किया जाता है कि यह नित्य चिद्रूप महान् आत्मा कर्ता है कि नहीं ? 'असङ्गो ह्ययं पुरुषः' इस असङ्गत्व प्रतिपादक श्रुति और 'यजेत' इस विधि श्रुतिका परस्पर विरोध होनेसे संशय होता है, परन्तु सिद्धान्तमें 'तद्गुणसारत्वसे' आत्मामें कर्तृत्व औपाधिक है। उससे विधि-निषेध शास्त्र, बन्ध-मोक्ष शास्त्र सार्थक होता है और 'शास्त्रफलं प्रयोक्तरि' ( विधि-याग

## उपादानात् ॥३५॥

सूत्रार्थ—जीव कर्ता है, क्योंकि श्रुतिमें इसके द्वारा इन्द्रियोंका ग्रहण कहा गया है।

इतश्चास्य कर्तृत्वम्, यज्जीवप्रक्रियायामेव करणानामुपादानं संकीर्तयति—'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' ( बृह० २।१।१७) इति, 'प्राणान्गृहीत्वा' ( बृह० २।१।१८ ) इति च ॥ ३५ ॥

## व्यपदेशाच्च क्रियायां न चेन्निर्देशविपर्ययः ॥३६॥

पदच्छेद—व्यपदेशात्, च, क्रियायाम्, न, चेत्, निर्देशविपर्ययः।

सूत्रार्थ—( च ) और ( व्यपदेशात् ) 'विज्ञानं यज्ञं तनुते' यहाँ विज्ञान शब्द वाच्य जीव ( क्रियायाम् ) लौकिक आदि क्रियाका कर्ता कहा गया है, ( न चेत् ) यदि विज्ञान शब्द जीव परक न मानकर बुद्धि परक मानें तो ( निर्देशविपर्ययः ) निर्देश विपर्यय होगा अर्थात् बुद्धिके करण होनेसे तद्वाचक विज्ञान पदमें प्रथमापेक्षा 'विज्ञानेन' इस प्रकार तृतीया होगी।

इतश्च जीवस्य कर्तृत्वम्, यदस्य लौकिकीषु वैदिकीषु च क्रियासु कर्तृत्वं व्यपदिशति शास्त्रम्—'विज्ञानं यज्ञं तनुते कर्माणि तनुतेऽपि च' (तै० २।५।१) इति। ननु विज्ञानशब्दो बुद्धौ समधिगतः, कथमनेन जीवस्य कर्तृत्वं सूच्यत इति? नेत्युच्यते। जीवस्यैवैष निर्देशो न बुद्धेः। न चेज्जीवस्य स्यान्निर्देशविपर्ययः स्यात्, विज्ञानेनेत्येवं निरदेक्ष्यत्। तथा ह्यन्यत्र बुद्धिविवक्षायां विज्ञानशब्दस्य करणविभक्तिनिर्देशो दृश्यते 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' (बृह० २।१।१७) इति। इह तु 'विज्ञानं यज्ञं तनुते' (तै० २।५।१) इति कर्तृसामानाधिकरण्यनिर्देशाद्बुद्धिव्यतिरिक्तस्यैवात्मनः कर्तृत्वं सूच्यत इत्यदोषः ॥३६॥

अत्राह—यदि बुद्धिव्यतिरिक्तो जीवः कर्ता स्यात्स स्वतन्त्रः सन्प्रियं हितं चैवात्मनो नियमेन संपादयेन्न विपरीतम्। विपरीतमपि तु संपादयन्नुपलभ्यते। न च स्वतन्त्रस्यात्मन ईदृशी प्रवृत्तिरनियमेनोपपद्यत इति, अत उत्तरं पठति—

---

इससे भी जीव कर्ता है, क्योंकि 'तदेषां' ( वह बुद्धि द्वारा इन वाग् आदि इन्द्रियोंकी शक्तिको ग्रहणकर सोता है ) और 'प्राणान्गृहीत्वा०' ( उसी प्रकार यह प्राणोंको ग्रहणकर अपने शरीरमें यथेष्ट विचरता है ) इस प्रकार श्रुति जीवके प्रकरणमें ही इन्द्रियोंका ग्रहण वर्णन करती है ॥ ३५ ॥

और इससे भी जीव कर्ता है, क्योंकि 'विज्ञानं यज्ञं तनुते०' ( विज्ञान-जीव यज्ञका विस्तार करता है और कर्मोंका भी विस्तार करता है ) इस प्रकार यह श्रुति जीवका लौकिक और वैदिक क्रियाओंमें कर्तृत्व व्यपदेश करती है। परन्तु विज्ञान शब्द तो बुद्धिमें निश्चित है, तो फिर उससे जीव कर्ता है, यह किस प्रकार सूचित किया जाता है? नहीं, ऐसा कहते हैं—यह जीवका ही निर्देश है बुद्धिका नहीं। यदि यह निर्देश जीवका न हो तो निर्देश विपर्यय होगा 'विज्ञानेन' ( विज्ञानसे ) ऐसा निर्देश होगा। इस प्रकार 'तदेषां' ( बुद्धि द्वारा इन्द्रियोंकी शक्तिको ग्रहण कर वह सोता है ) इस तरह अन्य श्रुतिमें विज्ञानशब्दसे बुद्धिकी विवक्षामें विज्ञानशब्दका करण विभक्तिसे निर्देश देखा जाता है। किन्तु यहाँ तो 'विज्ञानं यज्ञं तनुते' इस प्रकार कर्ताके सामानाधिकरण्य निर्देशसे बुद्धिसे व्यतिरिक्त आत्माका ही कर्तृत्व सूचित होता है, अतः दोष नहीं है ॥ ३६ ॥

इस प्रकार कहते हैं—यदि बुद्धिसे भिन्न जीव कर्ता हो तो वह स्वतन्त्र होता हुआ अपना प्रिय और हित नियमसे संपादन करेगा विपरीत नहीं, किन्तु विपरीत भी संपादन करता हुआ उपलब्ध होता

### सत्यानन्दी-दीपिका

आदिसे उत्पन्न स्वर्ग आदि फल यजमानको प्राप्त होता है। इस जैमिनि न्यायसे भी भोक्ता आत्मा ही कर्ता सिद्ध होता है बुद्धि नहीं। पूर्वपक्षमें श्रुतियोंका विरोध है और सिद्धान्तमें उनका अविरोध है ॥३३॥

## उपलब्धिवदनियमः ॥ ३७ ॥

पदच्छेद—उपलब्धिवत्, अनियमः ।

सूत्रार्थ—( उपलब्धिवत् ) जैसे उपलब्धिमें स्वतन्त्र होता हुआ भी इष्ट और अनिष्ट उपलब्ध करता है, वैसे ( अनियमः ) इष्ट और अनिष्टका भी अनियमसे संपादन करता है ।

*यथाऽयमात्मोपलब्धिं प्रति स्वतन्त्रोऽप्यनियमेनेष्टमनिष्टं चोपलभत एवमनियमेनैवेष्टमनिष्टं च संपादयिष्यति । उपलब्धावप्यस्वातन्त्र्यमुपलब्धिहेतूपादानोपलम्भादिति चेत्—न, विषयप्रकल्पनामात्रप्रयोजनत्वादुपलब्धिहेतूनाम्, उपलब्धौ त्वनन्यापेक्षत्वमात्मनश्चैतन्ययोगात् । अपि चार्थक्रियायामपि नात्यन्तमात्मनः स्वातन्त्र्यमस्ति, देशकालनिमित्तविशेषापेक्षत्वात् । न च सहायापेक्षस्य कर्तुः कर्तृत्वं निवर्तते । भवति ह्येधोदकाद्यपेक्षस्यापि पक्तुः पक्तृत्वम् । सहकारिवैचित्र्याच्चेष्टानिष्टार्थक्रियायामनियमेन प्रवृत्तिरात्मनो न विरुध्यते ॥३७॥

## शक्तिविपर्ययात् ॥ ३८ ॥

सूत्रार्थ—बुद्धिको कर्त्री मानें तो करणशक्तिका विपर्यय होगा ।

इतश्च विज्ञानव्यतिरिक्तो जीवः कर्ता भवितुमर्हति । यदि पुनर्विज्ञानशब्दवाच्या बुद्धिरेव कर्त्री स्यात्ततः शक्तिविपर्ययः स्यात् । करणशक्तिर्बुद्धेर्हीयेत कर्तृशक्तिश्चापद्येत ।

---

है । स्वतन्त्र आत्माकी अनियमसे ऐसी प्रवृत्ति उपपन्न नहीं होती, अतः उत्तर कहते हैं—

जैसे यह आत्मा उपलब्धिके प्रति स्वतन्त्र होता हुआ भी अनियमसे इष्ट और अनिष्ट उपलब्ध करता है, वैसे अनियमसे ही इष्ट और अनिष्टका संपादन करेगा । यदि कहो कि उपलब्धिमें भी आत्मा स्वतन्त्र नहीं है, क्योंकि उपलब्धिके हेतुका उपादान ( ग्रहण ) उपलब्ध है, तो यह ठीक नहीं है, क्योंकि उपलब्धिके हेतुओंका प्रयोजन केवल विषयकी कल्पना मात्र है । उपलब्धिमें तो आत्माको अन्यकी अपेक्षा नहीं है, कारण कि चैतन्यका योग है । और अर्थ-क्रियामें भी आत्माको अत्यन्त स्वतन्त्रता नहीं है, क्योंकि देश-काल और निमित्तविशेषकी अपेक्षा है । सहकारीकी अपेक्षा करनेवाले कर्ताका कर्तृत्व निवृत्त नहीं होता, क्योंकि काष्ठ, जल आदिकी अपेक्षा करनेवाले पाचकमें भी पाककर्तृत्व व्यवहार होता है । सहकारीके वैचित्र्यसे ही इष्ट और अनिष्ट अर्थ क्रियामें नियमके विना आत्माकी प्रवृत्ति विरुद्ध नहीं है ॥ ३७ ॥

इससे भी विज्ञानसे भिन्न जीव कर्ता हो सकता है । पुनः यदि विज्ञान शब्द वाच्य बुद्धि ही कर्त्री होगी तो उससे शक्तिका विपर्यय होगा—बुद्धिकी करण शक्तिका नाश होगा और उसको कर्तृशक्ति प्रसक्त होगी । और बुद्धिमें कर्तृशक्तिके होनेपर उसमें ही अहंप्रत्यय विषयता स्वीकार करनी पड़ेगी,

### सत्यानन्दी-दीपिका

* यदि जीव स्वतन्त्र है तो सर्वदा इष्टका संपादन करेगा, अन्यथा वह कर्ता ही नहीं होगा, क्योंकि 'स्वतन्त्रः कर्ता' ( पा० सू० १।४।५४ ) कर्ता स्वतन्त्र होता है । परन्तु जीवके स्वतन्त्र होनेपर भी कारककी विचित्रतासे उसकी प्रवृत्ति अनियमित है । यदि आत्मा विषय सम्बन्धके लिए करणोंकी अपेक्षा करता है तो वह स्वतन्त्र कैसे है ? केवल स्वभिन्नकी अपेक्षा न करनेका नाम स्वतन्त्रता प्रसक्त होगी, इससे स्वभिन्न कारकोंका प्रयोजक होकर जो स्वयं कारकोंसे प्रेरित न हो वह स्वतन्त्र है । इस प्रकार स्वतन्त्र होता हुआ भी जीव इष्ट साधनताकी भ्रान्तिसे अनिष्ट साधनका भी अनुष्ठान करता है, अतः अनियमित प्रवृत्ति और स्वतन्त्रता दोनों जीवमें अविरुद्ध हैं ॥ ३७ ॥

सत्यां च बुद्धेः कर्तृशक्तौ तस्या एवाहंप्रत्ययविषयत्वमभ्युपगन्तव्यम्, अहङ्कारपूर्विकाया एव प्रवृत्तेः सर्वत्र दर्शनात्। अहं गच्छाम्यहमागच्छाम्यहं भुञ्जेऽहं पिबामीति च। तस्याश्च कर्तृशक्तियुक्तायाः सर्वार्थकारि करणमन्यत्कल्पयितव्यम्। शक्तोऽपि हि सन्कर्ता करणमुपादाय क्रियासु प्रवर्तमानो दृश्यत इति। ततश्च संज्ञामात्रे विवादः स्यात्, न वस्तुभेदः कश्चित्, करणव्यतिरिक्तस्य कर्तृत्वाभ्युपगमात् ॥ ३८ ॥

## समाध्यभावाच्च ॥ ३९ ॥

पदच्छेद—समाध्यभावात्, च।

सूत्रार्थ—और आत्माके कर्ता न होनेपर वेदान्तमें प्रतिपादित ब्रह्मके साक्षात्कारका साधनभूत समाधिका अभाव हो जायगा, अतः आत्मा कर्ता है।

योऽप्ययमौपनिषदात्मप्रतिपत्तिप्रयोजनः समाधिरुपदिष्टो वेदान्तेषु—'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' (बृह० २।४।५), 'ओमित्येवं ध्यायथ आत्मानम्' (मुण्ड० २।२।६) इत्येवंलक्षणः, सोऽप्यसत्यात्मनः कर्तृत्वे नोपपद्येत। तस्मादप्यस्य कर्तृत्वसिद्धिः ॥ ३९ ॥

( १५ तक्षाधिकरणम्। सू० ४० )

## यथा च तक्षोभयथा ॥ ४० ॥

पदच्छेद—यथा, च, तक्षः, उभयथा।

सूत्रार्थ—( च ) परन्तु ( यथा ) जैसे लोकमें ( तक्षः ) बढई ( उभयथा ) वसुला आदि करणोंकी अपेक्षा कर्ता होकर दुःखी होता है और उनकी अपेक्षा न कर स्वरूपसे अकर्ता एवं सुखी होता है, वैसे आत्मा भी बुद्धि आदि करणोंकी अपेक्षा कर्ता, संसारी है, उनकी अपेक्षा न कर स्वरूपसे अकर्ता एवं परमानन्दघन ही है।

एवं तावच्छास्त्रार्थवत्त्वादिभिर्हेतुभिः कर्तृत्वं शारीरस्य प्रदर्शितम्, तत्पुनः स्वाभाविकं वा स्यादुपाधिनिमित्तं वेति चिन्त्यते। तत्रैतैरेव शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकं कर्तृत्वम्, अपवादहेत्वभावादिति। एवं प्राप्ते ब्रूमः—न स्वाभाविकं कर्तृत्वमात्मनः संभवति, अनिर्मोक्षप्रसङ्गात्। कर्तृत्वस्वभावत्वे ह्यात्मनो न कर्तृत्वान्निर्मोक्षः

---

क्योंकि 'मैं जाता हूँ' 'मैं आता हूँ' 'मैं खाता हूँ' 'मैं पान करता हूँ' इस प्रकार अहंकार पूर्वक ही सर्वत्र प्रवृत्ति देखनेमें आती है। कर्तृशक्ति युक्त उसको सर्वार्थकारी अन्यकरणकी कल्पना करनी चाहिए। कर्ता समर्थ होता हुआ भी करणका ग्रहणकर क्रियाओंमें प्रवृत्त होता हुआ देखा जाता है। उससे केवल नाममें विवाद है वस्तुमें कोई भेद नहीं है, क्योंकि करणसे व्यतिरिक्त कर्ता स्वीकार किया गया है ॥३८॥

'आत्मा वा अरे०' ( हे मैत्रेयी ! आत्मा दर्शन करनेके योग्य है, अतः उसका श्रवण करना चाहिए, मनन करना चाहिए, निदिध्यासन करना चाहिए, अन्वेषण करना चाहिए, उसकी विशेषरूपसे जिज्ञासा करनी चाहिए ) और 'ओमित्येवं०' ( ओम्, इस प्रकार उस आत्माका ध्यान करो ) इस प्रकारकी जो यह औपनिषद आत्मप्रतिपत्तिरूप प्रयोजनवाली समाधि-निदिध्यासन वेदान्तवाक्योंमें उपदिष्ट है वह भी आत्माके कर्ता न होनेपर उपपन्न नहीं होगी। इससे भी आत्मा कर्ता सिद्ध होता है ॥३९॥

इसप्रकार शास्त्रार्थवत्त्व आदि हेतुओंसे जीवात्माका कर्तृत्व दिखलाया जा चुका है। किन्तु वह स्वाभाविक है अथवा उपाधि निमित्तक है, इसपर विचार किया जाता है। उस विचारमें इन शास्त्रार्थवत्त्व आदि हेतुओंसे स्वाभाविक कर्तृत्व है, क्योंकि उसका अपवादक कोई हेतु नहीं है। सिद्धान्ती—ऐसा प्राप्त होनेपर हम कहते हैं—आत्मामें स्वाभाविक कर्तृत्व संभव नहीं है, क्योंकि

संभवति, अग्नेरिवौष्ण्यात्। नच कर्तृत्वादनिर्मुक्तस्यास्ति पुरुषार्थसिद्धिः, कर्तृत्वस्य दुःखरूपत्वात्। ननु स्थितायामपि कर्तृत्वशक्तौ कर्तृत्वकार्यपरिहारात्पुरुषार्थः सेत्स्यति, तत्परिहारश्च निमित्तपरिहारात्। यथाऽग्नेर्दहनशक्तियुक्तस्यापि काष्ठवियोगाद्दहनकार्याभावस्तद्वत्। न, निमित्तानामपि शक्तिलक्षणेन संबन्धेन संबद्धानामत्यन्तपरिहारासंभवात्। ननु मोक्षसाधनविधानान्मोक्षः सेत्स्यति—न, साधनायत्तस्यानित्यत्वात्। अपि च नित्यशुद्धबुद्धमुक्तात्मप्रतिपादनान्मोक्षसिद्धिरभिमता। तादृगात्मप्रतिपादनं च न स्वाभाविके कर्तृत्वेऽवकल्पेत्। तस्मादुपाधिधर्माध्यासेनैवात्मनः कर्तृत्वं न स्वाभाविकम्। तथा च श्रुतिः—'ध्यायतीव लेलायतीव' (बृह० ४।३।७) इति। 'आत्मेन्द्रियमनोयुक्तं भोक्तेत्याहुर्मनीषिणः' (कठ० ३।४) इति चोपाधिसंपृक्तस्यैवात्मनो भोक्तृत्वादिविशेषलाभं दर्शयति। ❀ नहि विवेकिनां परस्मादन्यो जीवो नाम कर्ता भोक्ता वा विद्यते, 'नान्योऽतोऽस्ति द्रष्टा' ( बृह० ४।३।२३ ) इत्यादिश्रवणात्। पर एव तर्हि संसारी कर्ता भोक्ता च प्रसज्येत, परस्मादन्यश्चेच्चितिमाञ्जीवः कर्ता बुद्ध्यादिसंघातव्यतिरिक्तो न स्यात्—न, अविद्याप्रत्युपस्थापितत्वात्कर्तृत्वभोक्तृत्वयोः। तथा च शास्त्रम्—'यत्र हि द्वैतमिव भवति तदितर इतरं पश्यति' (बृह० २।४।१४) इत्यविद्यावस्थायां कर्तृत्वभोक्तृत्वे दर्शयित्वा विद्यावस्थायां ते एव कर्तृत्वभोक्तृत्वे निवारयति—'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' ( बृह० २।४।१४) इति। तथा स्वप्नजागरितयोरात्मन उपाधिसंपर्ककृतं श्रमं श्येनस्येवाकाशे विपरिपततः श्रावयित्वा तदभावं सुषुप्तौ प्राज्ञेनात्मना संपरिष्वक्तस्य श्रावयति—'तद्वा अस्यैतदाप्त-

---

ऐसा मानने पर आत्माका मोक्षाभाव प्रसंग होगा। आत्माका कर्तृत्व स्वाभाविक होनेपर जैसे अग्निका औष्ण्यसे मोक्ष नहीं होता, वैसे ही आत्माका कर्तृत्वसे मोक्ष नहीं हो सकता। कर्तृत्वसे मुक्त न हुएके पुरुषार्थकी सिद्धि नहीं होती, क्योंकि कर्तृत्व दुःखरूप है। परन्तु कर्तृत्व शक्तिकी स्थिति होनेपर भी कर्तृत्व कार्यके परिहारसे पुरुषार्थ सिद्ध हो जायगा और उसका परिहार कारणके परिहारसे हो जायगा। जैसे दाहशक्ति युक्त अग्निमें काष्ठ वियोगसे दहन कार्यका अभाव है, वैसे यहाँ भी समझना चाहिए। परन्तु यह ठीक नहीं है, क्योंकि शक्तिरूप सम्बन्धसे सम्बद्ध निमित्तोंका अत्यन्त परिहार नहीं हो सकता। परन्तु मोक्ष साधनके विधानसे मोक्ष सिद्ध हो जायगा ? नहीं, क्योंकि जो साधनके अधीन है वह अनित्य है, और नित्य शुद्ध बुद्ध मुक्त आत्माके प्रतिपादनसे मोक्ष सिद्धि अभिमत है, उसप्रकार का आत्मप्रतिपादन स्वाभाविक कर्तृत्वमें नहीं हो सकता, इसलिए उपाधि धर्मके अध्याससे ही आत्मामें कर्तृत्व है स्वाभाविक नहीं है। जैसे कि 'ध्यायतीव०' ( मानो ध्यान करता है, मानो चलता है ) यह श्रुति है। और 'आत्मेन्द्रियमनोयुक्तं०' ( शरीर, इन्द्रिय और मनसे युक्तको विवेकी लोग भोक्ता-संसारी कहते हैं ) इसप्रकार श्रुति उपाधि सम्बद्ध आत्मामें ही भोक्तृत्व आदि विशेष लाभ दिखलाती है। क्योंकि 'नान्योऽतोऽस्ति द्रष्टा' ( उससे अन्य द्रष्टा नहीं है ) इत्यादि श्रुतिसे विवेकियोंकी दृष्टिमें परब्रह्मसे अन्य कर्ता भोक्ता नामका जीव नहीं है। तो इससे परमात्मा ही संसारी, कर्ता, भोक्ता है ऐसा प्रसक्त होगा। चेतन युक्त कर्ता जीव यदि परमात्मासे अन्य हो तो बुद्धि आदि संघातसे व्यतिरिक्त न होगा, ऐसा नहीं, क्योंकि कर्तृत्व, भोक्तृत्व अविद्यासे प्रत्युपस्थापित है, तथा 'यत्र हि द्वैतमिव०' ( जिस अवस्थामें द्वैत-सा होता है वहीं अन्य अन्यको देखता है ) इसप्रकार अविद्या अवस्थामें कर्तृत्व, भोक्तृत्व दिखलाकर 'यत्र त्वस्य०' ( किन्तु जहाँ इसके लिए सब आत्मा ही हो गया है वहाँ किसके द्वारा किसे देखे ) इसप्रकार विद्या अवस्थामें कर्तृत्व, भोक्तृत्वका श्रुति निवारण करती है। उसी प्रकार स्वप्न और जागरित अवस्थामें आकाशमें उड़नेवाले श्येनके श्रमके समान आत्माका उपाधिके सम्पर्कसे उत्पन्न हुए श्रमका श्रवण कराकर श्रुति सुषुप्तिमें प्राज्ञ आत्माके साथ सम्यक् ऐक्य प्राप्त हुएका श्रमाभाव श्रवण कराती है—'तद्वा०' ( इस ज्योतिः स्वरूप आत्माका आप्त-

कासमात्मकाममकामं रूपं शोकान्तरम्' ( बृह० ४।३।२१ ) इत्यारभ्य 'एषास्य परमा गतिरेषास्य परमा संपदेषोऽस्य परमो लोक एषोऽस्य परम आनन्दः' ( बृह० ४।३।३२ ) इत्युपसंहारात्। तदेतदाहाचार्यः—'यथा च तक्षोभयथा' इति। त्वर्थं चायं चः पठितः। नैवं मन्तव्यं-स्वाभाविकमेवात्मनः कर्तृत्वमग्नेरिवौष्ण्यमिति। यथा तु तक्षा लोके वास्यादिकरणहस्तः कर्ता दुःखी भवति, स एव स्वगृहं प्राप्तो विमुक्तवास्यादिकरणः स्वस्थो निर्वृतो निर्व्यापारः सुखी भवत्येवमविद्याप्रत्युपस्थापितद्वैतसंपृक्त आत्मा स्वप्नजागरितावस्थयोः कर्ता दुःखी भवति, स तच्छ्रमापनुत्तये स्वमात्मानं परं ब्रह्म प्रविश्य विमुक्तकार्यकरण-संघातोऽकर्ता सुखी भवति संप्रसादावस्थायाम्। तथा मुक्त्यवस्थायामप्यविद्याध्वान्तं विद्याप्रदीपेन विधूयात्मैव केवलो निर्वृतः सुखी भवति। तक्षदृष्टान्तश्चैतावतांऽशेन द्रष्टव्यः। तक्षा हि विशिष्टेषु तक्षणादिव्यापारेष्वपेक्ष्यैव प्रतिनियतानि करणानि वास्यादीनि कर्ता भवति, स्वशरीरेण त्वकर्तैव। एवमयमात्मा सर्वव्यापारेष्वपेक्ष्यैव मन आदीनि करणानि कर्ता भवति, स्वात्मना त्वकर्तैवेति। न त्वात्मनस्तक्ष्ण इवावयवाः सन्ति यैर्हस्तादिभिरिव वास्यादीनि तक्षा मन आदीनि करणान्यात्मोपाददीत न्यस्येद्वा। * यत्तूक्तम्-शास्त्रार्थवत्त्वादिभिर्हेतुभिः स्वाभाविकमात्मनः कर्तृत्वमिति, तन्न, विधिशास्त्रं तावद्यथाप्राप्तं कर्तृत्वमुपादाय कर्तव्यविशेषमुपदिशति, न कर्तृत्व-मात्मनः प्रतिपादयति। नच स्वाभाविकमस्य कर्तृत्वमस्ति, ब्रह्मात्मत्वोपदेशादित्य-वोचाम, तस्मादविद्याकृतं कर्तृत्वमुपादाय विधिशास्त्रं प्रवर्तिष्यते। 'कर्ता विज्ञानात्मा

---

काम, आत्मकाम, अकाम और शोक शून्य स्वरूप है ) ऐसा आरम्भकर 'एषास्य०' (यह इस पुरुषकी परगति है, यह इसकी परम सम्पत्ति है, यह इसका परम लोक है, यह इसका परम आनन्द है ) ऐसा उपसंहार है। इससे आचार्यने 'यथा च तक्षोभयथा' यह कहा है। सूत्रस्थ यह 'च' शब्द 'तु' अर्थमें पठित है। और ऐसा नहीं मानना चाहिए कि अग्निकी उष्णताके समान आत्माका कर्तृत्व स्वाभाविक है। परन्तु जैसे लोकमें वसुला आदि करण युक्त हाथ वाला तक्ष [ बढ़ई ] कर्ता होकर दुःखी होता है, वही अपने घर जाकर वसुला आदि करणोंसे विमुक्त हुआ स्वस्थ, शान्त, व्यापार शून्य और सुखी होता है, वैसे ही अविद्यासे प्रत्युपस्थापित द्वैतसे सम्बद्ध आत्मा स्वप्न और जागरित अवस्थाओंमें कर्ता होकर दुःखी होता है, वह आत्मा उस श्रमको निवृत्त करनेके लिए स्वस्वरूप परब्रह्ममें प्रवेशकर कार्य-करण संघातसे मुक्त होता हुआ सुषुप्ति अवस्थामें अकर्ता होकर सुखी होता है। उसी प्रकार मुक्ति अवस्थामें भी अविद्या अन्धकारको विद्या प्रदीपसे निवृत्तकर आत्मा ही केवल शान्त और सुखी होता है। तक्ष दृष्टान्त इतने अंशमें समझना चाहिए। तक्ष ही तक्षण [ छीलना ] आदि विशिष्ट व्यापारोंसे प्रतिनियत वसुला आदि करणोंकी अपेक्षासे ही कर्ता होता है, अपने शरीरसे तो अकर्ता ही है; वैसे यह आत्मा समस्त व्यापारोंमें मन आदि करणोंकी अपेक्षासे ही कर्ता होता है, अपने स्वरूपसे तो अकर्ता ही है। तक्षके समान आत्माके अवयव नहीं हैं जिससे कि जैसे तक्ष हस्त आदि द्वारा वसुला आदिका ग्रहण और त्याग करता है, वैसे आत्मा भी मन आदि करणोंका ग्रहण करे अथवा त्याग करे। जो यह कहा गया है कि शास्त्रार्थवत्त्व आदि हेतुओंसे आत्माका स्वाभाविक कर्तृत्व है, वह युक्त नहीं है, क्योंकि विधि शास्त्र तो यथाप्राप्त [ लोक प्रसिद्ध ] कर्तृत्वको लेकर कर्तव्य विशेषका उपदेश करता है, आत्मामें कर्तृत्वका प्रतिपादन नहीं करता। आत्माका कर्तृत्व स्वाभाविक नहीं है, क्योंकि उसमें ब्रह्मात्मत्वका उपदेश है, ऐसा हम कह चुके हैं। इसलिए अविद्या-

सत्यानन्दी-दीपिका

* 'स्वर्गकामो यजेत' इत्यादि विधि शास्त्र कर्ताके विना अनुपपन्न होता हुआ अपनी सार्थकता के लिए आत्मा में स्वाभाविक कर्तृत्व सिद्ध करता है। इसका समाधान 'तन्न' आदिसे कहते हैं।

पुरुषः' इत्येवंजातीयकमपि शास्त्रमनुवादरूपत्वाद्यथाप्राप्तमेवाविद्याकृतं कर्तृत्वमनुवदिष्यति। एतेन विहारोपादाने परिहृते, तयोरप्यनुवादरूपत्वात्। ननु संध्ये स्थाने प्रसुप्तेषु करणेषु स्वे शरीरे यथाकामं परिवर्तत इति विहार उपदिश्यमानः केवलस्यात्मनः कर्तृत्वमावहति। तथोपादानेऽपि 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' ( बृह० २।१।१७ ) इति करणेषु कर्मकरणविभक्ती श्रूयमाणे केवलस्यात्मनः कर्तृत्वं गमयत इति। अत्रोच्यते—न तावत्संध्ये स्थानेऽत्यन्तमात्मनः करणविरमणमस्ति, 'सधीः स्वप्नो भूत्वेमं लोकमतिक्रामति' ( बृह० ४।३।७ ) इति। तत्रापि धीसंबन्धश्रवणात्। तथा च स्मरन्ति—'इन्द्रियाणामुपरमे मनोऽनुपरतं यदि। सेवते विषयानेव तद्विद्यात्स्वप्नदर्शनम्॥' इति। 'कामादयश्च मनसो वृत्तयः' इति श्रुतिः। ताश्च स्वप्ने दृश्यन्ते, तस्मात्समना एव स्वप्ने विहरति। * विहारोऽपि च तत्रत्यो वासनामय एव ननु पारमार्थिकोऽस्ति। तथा च श्रुतिरिवाकारानुबद्धमेव स्वप्नव्यापारं वर्णयति—'उतेव स्त्रीभिः सह मोदमानो जक्षदुतेवापि भयानि पश्यन्' ( बृह० ४।३।१३ ) इति। लौकिका अपि तथैव स्वप्नं कथयन्ति—आरुक्षमिव गिरिशृङ्गम्, अद्राक्षमिव वनराजिमिति। तथोपादानेऽपि यद्यपि करणेषु कर्मकरणविभक्तिनिर्देशः, तथापि तत्संपृक्तस्यैवात्मनः कर्तृत्वं द्रष्टव्यम्, केवले कर्तृत्वासंभवस्य

---

कृत कर्तृत्वको लेकर विधि शास्त्र प्रवृत्त होगा। 'कर्ता विज्ञानात्मा पुरुषः' इसप्रकारका शास्त्र भी अनुवादरूप होनेसे यथाप्राप्त अविद्याकृत कर्तृत्वका ही अनुवाद करेगा। इससे विहार और उपादानका परिहार हुआ, क्योंकि वे भी अनुवादरूप हैं। परन्तु स्वप्नावस्थामें करणोंके प्रसुप्त होनेपर अपने शरीरमें यथेष्ट परिवर्तन करता है, इसप्रकार उपदेश किया हुआ विहार केवल आत्मामें कर्तृत्व को सिद्ध करता है, एवं उपादानमें भी 'तदेषां प्राणानां०' [ वह बुद्धिसे इन इन्द्रियोंकी शक्तिको ग्रहण कर लेता है ] इसप्रकार करणोंमें श्रूयमाण कर्म और करण विभक्ति केवल आत्माका कर्तृत्व ज्ञात कराती है। इसपर कहते हैं—स्वप्नावस्थामें आत्माका करणोंसे अत्यन्त विराम नहीं है, क्योंकि 'सधीः स्वप्नो०' ( बुद्धि सहित स्वप्न होकर इस लोकका अतिक्रमण करता है ) इसप्रकार स्वप्नमें भी बुद्धिके साथ सम्बन्धका श्रवण है। जैसे कि 'इन्द्रियाणामुपरमे०' ( इन्द्रियोंके उपरत होनेपर यदि मन उपरत न होकर विषयोंका सेवन करता है तो उसको स्वप्नदर्शन समझना चाहिए ) ऐसी स्मृति भी है, 'कामादयश्च मनसो वृत्तयः' ( काम आदि मनकी वृत्तियाँ हैं ) ऐसी श्रुति है। वे वृत्तियाँ स्वप्नमें देखी जाती हैं, इसलिए आत्मा स्वप्नमें मन सहित ही विहार करता है। और स्वप्नावस्थाका विहार भी वासनामय ही है पारमार्थिक नहीं है। इसप्रकार 'उतेव स्त्रीभिः०' ( स्त्रियोंके साथ आनन्द मानता हुआ, मित्रोंके साथ हँसता हुआ तथा व्याघ्र आदिसे भय देखता हुआ रहता है ) यह श्रुति 'इव' से अनुबद्ध ही स्वप्न व्यापारका वर्णन करती है। लोग भी उसी प्रकार स्वप्नका वर्णन करते हैं—मानो मैं गिरिके शिखरपर चढा, मानों मैंने वनपंक्ति देखी'। वैसे ही उपादानमें भी यद्यपि करणोंमें कर्म

सत्यानन्दी-दीपिका

* जैसे 'योधा युध्यन्ते योधैः राजा युध्यते' यहाँ पहले योधाओंमें कर्तृत्वकी विवक्षासे प्रथमा-कर्तृविभक्ति है, पुनः उनमें करणत्वकी विवक्षासे 'योधैः' तृतीया विभक्ति है। वैसे ही 'विज्ञानं यज्ञं तनुते' यहाँ कर्तृत्व विवक्षामें 'विज्ञान' पदमें प्रथमा है और 'तदेषां प्राणानां विज्ञानेन विज्ञानमादाय' यहाँ करणत्वकी विवक्षासे विज्ञानपदसे तृतीया विभक्ति है, पूर्वमें विज्ञान जीव है, ऐसा अङ्गीकार कर 'विज्ञानं यज्ञं तनुते' यह श्रुति कही गई है। अब उस श्रुतिसे उपाधि रहित आत्मामें कर्तृत्व प्राप्त होने पर यहाँ विज्ञानशब्द बुद्धिवाचक है, अतः उसमें कर्तृत्व है। आत्मामें तो बुद्धि उपाधिसे कर्तृत्व है स्वतः नहीं। 'स एष वाचः०' ( चित्तसे देवताका ध्यान कर वाणी द्वारा मन्त्र आदि उच्चारण किये जाते हैं और मन्त्रोंसे यज्ञ सम्पन्न होता है, इसप्रकार चित्त और वाणीका पूर्वोत्तरभाव ही यज्ञ है )।

दर्शितत्वात्। भवति च लोकेऽनेकप्रकारा विवक्षा—योधा युध्यन्ते, योधै राजा युध्यत इति। अपि चास्मिन्नुपादाने करणव्यापारोपरममात्रं विवक्ष्यते, न स्वातन्त्र्यं कस्यचिदबुद्धिपूर्वकस्यापि स्वापे करणव्यापारोपरमस्य दृष्टत्वात्। यस्त्वयं व्यपदेशो दर्शितः—'विज्ञानं यज्ञं तनुते' इति, स बुद्धेरेव कर्तृत्वं प्रापयति, विज्ञानशब्दस्य तत्र प्रसिद्धत्वात्, मनोनन्तरं पाठाच्च। 'तस्य श्रद्धैव शिरः' (तै० २।४) इति च विज्ञानमयस्यात्मनः श्रद्धाद्यवयवत्वसंकीर्तनात्, श्रद्धादीनां च बुद्धिधर्मत्वप्रसिद्धेः, 'विज्ञानं देवाः सर्वे ब्रह्म ज्येष्ठमुपासते' (तै० २।५।१) इति च वाक्यशेषात्, ज्येष्ठत्वस्य च प्रथमजत्वस्य बुद्धौ प्रसिद्धत्वात्। 'स एष वाचश्चित्तस्योत्तरोत्तरक्रमो यद्यज्ञः' इति च श्रुत्यन्तरे यज्ञस्य वाग्बुद्धिसाध्यत्वावधारणात्। नच बुद्धेः शक्तिविपर्ययः करणानां कर्तृत्वाभ्युपगमे भवति, सर्वकारकाणामेव स्वस्वव्यापारेषु कर्तृत्वस्यावश्यंभावित्वात्। उपलब्ध्यपेक्षं त्वेषां करणत्वम्, सा चात्मनः। नच तस्यामप्यस्य कर्तृत्वमस्ति, नित्योपलब्धिस्वरूपत्वात्। अहङ्कारपूर्वकमपि कर्तृत्वं नोपलब्धुर्भवितुमर्हति, अहङ्कारस्याप्युपलभ्यमानत्वात्। न चैवं सति करणान्तरकल्पनाप्रसङ्गः, बुद्धेः करणत्वाभ्युपगमात्। समाध्यभावस्तु शास्त्रार्थवत्त्वेनैव परिहृतः, यथाप्राप्तमेव कर्तृत्वमुपादाय समाधिविधानात्। तस्मात्कर्तृत्वमप्यात्मन उपाधिनिमित्तमेवेति स्थितम् ॥४०॥

---

विभक्ति और करण विभक्तिका निर्देश है, तो भी उनसे सम्बधित आत्माका ही कर्तृत्व समझना चाहिए, क्योंकि केवल आत्मामें कर्तृत्वका असंभव दिखलाया गया है। 'योधा युद्ध करते हैं योधाओं द्वारा राजा युद्ध करता है' इसतरह लोकमें अनेक प्रकारकी विवक्षा होती है और इस उपादानमें करणके व्यापारका विराममात्र विवक्षित है, किसीका स्वातन्त्र्य विवक्षित नहीं है, क्योंकि स्वप्नमें अबुद्धिपूर्वक भी करणका व्यापार उपरम देखा जाता है। 'विज्ञानं यज्ञं तनुते' (विज्ञान यज्ञका विस्तार करता है) यह जो व्यपदेश दिखलाया गया है, वह बुद्धिमें कर्तृत्व प्राप्त कराता है, क्योंकि विज्ञानशब्द उसमें प्रसिद्ध है और मनके अनन्तर उसका पाठ है। 'तस्य श्रद्धैव शिरः' (उसका श्रद्धा ही शिर है) विज्ञानमय आत्माके श्रद्धा आदि अवयव कहे गये हैं और श्रद्धा आदि बुद्धिके धर्मरूपसे प्रसिद्ध हैं। तथा 'विज्ञानं देवाः'० (सब देव विज्ञानको ब्रह्मरूपसे, ज्येष्ठरूपसे उपासना करते हैं) ऐसा वाक्यशेष है। ज्येष्ठत्व और प्रथमजत्व बुद्धिमें प्रसिद्ध हैं, क्योंकि 'स वा एष०' (जो वाणी और चित्तका उत्तरोत्तर क्रम है, वही यह यज्ञ है) इसप्रकार अन्य श्रुतिमें यज्ञ वाणी और बुद्धिसे साध्य अवधारित होता है। करणोंमें कर्तृत्व स्वीकार करनेपर बुद्धिकी शक्तिका विपर्यय नहीं होता, क्योंकि सब कारकोंका अपने अपने व्यापारमें कर्तृत्व अवश्यंभावी है। परन्तु उन करणोंमें करणत्व उपलब्धिकी अपेक्षासे है और वह उपलब्धि आत्माकी है। उसमें इसका कर्तृत्व नहीं है, क्योंकि वह नित्य उपलब्धि स्वरूप है। अहङ्कार पूर्वक कर्तृत्व भी उपलब्धाका नहीं हो सकता, क्योंकि अहङ्कार भी उपलभ्यमान है। ऐसा होनेपर अन्य करणकी कल्पनाका प्रसङ्ग भी नहीं है, क्योंकि बुद्धिको करणरूपसे स्वीकृत किया गया है। समाधिके अभावका तो शास्त्रार्थवत्त्वसे ही परिहार किया जा चुका है, क्योंकि यथा प्राप्त कर्तृत्वको लेकर ही समाधि (निदिध्यासितव्यः) का विधान है। इससे यह सिद्ध हुआ कि आत्मामें कर्तृत्व भी उपाधि निमित्तक ही है ॥ ४० ॥

## सत्यानन्दी-दीपिका

* अखण्ड साक्षी चैतन्य बुद्धि वृत्तियोंसे भिन्न होता हुआ विषयावच्छिन्नरूपसे उत्पन्न होता है, विषयावच्छिन्न चैतन्यकी उपलब्धिमें बुद्धि आदि करण हैं, इसलिए बुद्धि उपहित आत्मामें कर्तृत्व है, केवल आत्मामें नहीं। इस प्रकार बुद्धि विशिष्ट आत्मामें कर्तृत्व माननेसे विशेषणीभूत जड़ बुद्धिमें

( १६ परायत्ताधिकरणम् । सू० ४१-४२ )

## परात्तु तच्छ्रुतेः ॥ ४१ ॥

पदच्छेद—परात्, तु, तच्छ्रुतेः ।

सूत्रार्थ—( तु ) शब्द शङ्काकी निवृत्तिके लिए है, जीवका कर्तृत्व आदि स्वभावतः नहीं है, (परात्) परमात्मासे प्राप्त होता है, (तच्छ्रुतेः) क्योंकि 'एष ह्येव' इत्यादि श्रुतिमें ऐसा प्रतिपादित है ।

यदिदमविद्यावस्थायामुपाधिनिबन्धनं कर्तृत्वं जीवस्याभिहितम्, तत्किमनपेक्ष्येश्वरं भवत्याहोस्विदीश्वरापेक्षमिति भवति विचारणा । तत्र प्राप्तं तावत्–नेश्वरमपेक्षते जीवः कर्तृत्व इति । कस्मात् ? अपेक्षाप्रयोजनाभावात् । अयं हि जीवः स्वयमेव रागद्वेषादिदोषप्रयुक्तः कारकान्तरसामग्रीसंपन्नः कर्तृत्वमनुभवितुं शक्नोति । तस्य किमीश्वरः करिष्यति ? नच लोके प्रसिद्धिरस्ति कृष्यादिकासु क्रियास्वनडुहादिवदीश्वरोऽपरोऽपेक्षितव्य इति । क्लेशात्मकेन च कर्तृत्वेन जन्तून्संसृजत ईश्वरस्य नैर्घृण्यं प्रसज्येत, विषमफलं चैषां कर्तृत्वं विदधतो वैषम्यम् । ननु 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' ( ब्र० २।१।३४ ) इत्युक्तम् । सत्यमुक्तम् , सति त्वीश्वरस्य सापेक्षत्वसंभवे । सापेक्षत्वं चेश्वरस्य संभवति सतोर्जन्तूनां धर्माधर्मयोः, तयोश्च सद्भावः सति जीवस्य कर्तृत्वे । तदेव चेत्कर्तृत्वमीश्वरापेक्षं स्यात्किविषयमीश्वरस्य सापेक्षत्वमुच्येत ? अकृताभ्यागमश्चैवं जीवस्य प्रसज्येत । तस्मात्स्वत एवास्य कर्तृत्वमिति । * एतां प्राप्तिं तु-

---

अविद्या अवस्थामें जो यह उपाधि निमित्तक जीवमें कर्तृत्व कहा गया है, क्या वह ईश्वरकी अपेक्षाके विना होता है अथवा ईश्वरकी अपेक्षासे होता है, इस प्रकार विचार होता है । इसमें पूर्वपक्ष प्राप्त होता है—जीव अपने कर्तृत्वमें ईश्वरकी अपेक्षा नहीं करता, किससे ? इससे कि अपेक्षाका प्रयोजन नहीं है । यह जीव स्वयं ही राग, द्वेष आदि दोषोंसे प्रयुक्त होता हुआ कारक सामग्रीसे सम्पन्न होकर कर्तृत्व अनुभव करनेमें समर्थ होता है । उसका ईश्वर क्या करेगा ? लोकमें ऐसी प्रसिद्धि नहीं है कि कृषि आदि क्रियाओंमें अनडुह (बैल) आदिके समान ईश्वर अपेक्षितव्य है । क्लेशात्मक कर्तृत्वसे जन्तुओंको उत्पन्न करनेवाले ईश्वरमें नैर्घृण्य प्रसक्त होगा और इन प्राणियोंके विषम फलवाले कर्तृत्वको उत्पन्न करनेवाले ईश्वरमें वैषम्य प्रसक्त होगा । परन्तु यह कहा जा चुका है कि 'वैषम्यनैर्घृण्ये न सापेक्षत्वात्' (प्राणियोंके कर्मकी अपेक्षासे ईश्वरमें वैषम्य और नैर्घृण्य नहीं है) ठीक, ऐसा कहा जा चुका है । परन्तु ईश्वरमें सापेक्षत्व होनेपर ही यह उपपन्न होगा । प्राणियोंके धर्माधर्म होनेपर ईश्वरमें सापेक्षत्व संभव है। जीवका कर्तृत्व होनेपर उनका ( धर्म और अधर्मका ) सद्भाव है । यदि वही कर्तृत्व ईश्वरकी अपेक्षासे हो तो ईश्वरका सापेक्षत्व किस विषयका कहा जायगा । ऐसा होनेपर जीवको अकृताभ्यागम प्रसक्त

### सत्यानन्दी-दीपिका

करणत्वकी उपपत्ति हो सकती है, अतः अन्य करणकी कल्पना युक्त नहीं है । हाँ, जो केवल बुद्धिको कर्त्री मानते हैं, उनको तो अन्य करणकी कल्पना दुर्वार है । अतः आत्मामें औपाधिक कर्तृत्वको लेकर विधि आदि शास्त्र प्रवृत्त होते हैं । इसलिए 'असङ्गत्व' प्रतिपादक श्रुतियोंके साथ विधिद्वारा कर्तृत्व प्रतिपादक श्रुतियोंका कोई विरोध नहीं है । पूर्वपक्षमें आत्माका स्वाभाविक कर्तृत्व है, सिद्धान्तमें औपाधिक कर्तृत्व है ॥ ४० ॥

* जैसे चन्दन आदि सामग्रीके होनेपर धर्मके अभावमें सुखके अभावका यद्यपि ज्ञान नहीं होता, तो भी 'पुण्यो वै पुण्येन कर्मणा भवति' ( बृह० ३।२।१३ ) (यह पुरुष पुण्य कर्मसे पुण्यशाली होता है ) इत्यादि शास्त्र प्रमाणसे सुखके प्रति धर्ममें हेतुता सिद्ध होती है, वैसे शास्त्रबलसे ईश्वर भी कारयिता सिद्ध होता है ॥ ४१ ॥

शब्देन व्यावर्त्य प्रतिजानीते—'परात्' इति । अविद्यावस्थायां कार्यकरणसंघाताविवेकदर्शिनो जीवस्याविद्यातिमिरान्धस्य सतः परस्मादात्मनः कर्माध्यक्षात्सर्वभूताधिवासात्साक्षिणश्चेतयितुरीश्वरात्तदनुज्ञया कर्तृत्वभोक्तृत्वलक्षणस्य संसारस्य सिद्धिः, तदनुग्रहहेतुकेनैव च विज्ञानेन मोक्षसिद्धिर्भवितुमर्हति । कुतः ? तच्छ्रुतेः । यद्यपि दोषप्रयुक्तः सामग्रीसंपन्नश्च जीवः, यद्यपि च लोके कृष्यादिषु कर्मसु नेश्वरकारणत्वं प्रसिद्धम्, तथापि सर्वास्वेव प्रवृत्तिष्वीश्वरो हेतुकर्तेति श्रुतेरवसीयते । तथा हि श्रुतिर्भवति—'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते । एष ह्येवासाधु कर्म कारयति तं यमधो निनीषते ॥' (कौषी० ३।८) इति । 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति' इति चैवंजातीयका ॥ ४१ ॥

नन्वेवमीश्वरस्य कारयितृत्वे सति वैषम्यनैर्घृण्ये स्यातामकृताभ्यागमश्च जीवस्येति, नेत्युच्यते—

**कृतप्रयत्नापेक्षस्तु विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ॥४२॥**

पदच्छेद—कृतप्रयत्नापेक्षः, तु, विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ।

सूत्रार्थ—( तु ) शब्द पूर्वपक्षकी व्यावृत्तिके लिए है, ( विहितप्रतिषिद्धावैयर्थ्यादिभ्यः ) वेदमें विहित और प्रतिषिद्ध कर्म व्यर्थ आदि न हों, इसलिए ईश्वर अपने कारयितृत्वमें ( कृतप्रयत्नापेक्षः ) जीव कृत प्रयत्नकी अपेक्षा करता है ।

तुशब्दश्चोदितदोषव्यावर्तनार्थः । कृतो यः प्रयत्नो जीवस्य धर्माधर्मलक्षणस्तदपेक्ष एवैनमीश्वरः कारयति । ततश्चैते चोदिता दोषा न प्रसज्यन्ते । जीवकृतधर्माधर्मवैषम्यापेक्ष एव तत्तत्फलानि विषमं विभजेत्पर्जन्यवदीश्वरो निमित्तत्वमात्रेण । यथा लोके नानाविधानां गुच्छगुल्मादीनां व्रीहियवादीनां चासाधारणेभ्यः स्वस्वबीजेभ्यो जायमानानां साधारणं निमित्तं भवति पर्जन्यः । न ह्यसति पर्जन्ये रसपुष्पपलाशादिवैषम्यं तेषां जायते,

---

होगा, इससे जीवका स्वतः ही कर्तृत्व है । इस पूर्वपक्षकी प्राप्तिको 'तु' शब्दसे निराकरण कर सूत्रकार प्रतिज्ञा करते हैं—'परात्' इत्यादि । अविद्यावस्थामें कार्य-करण संघातके साथ अभेददर्शी और अविद्यारूप अन्धकारसे अन्ध होते हुए जीवके कर्तृत्व, भोक्तृत्वरूप संसारकी सिद्धि कर्मोंके अध्यक्ष, सम्पूर्ण भूतोंके अधिष्ठान साक्षी, चेतयिता परमात्मा ईश्वरसे उसकी अनुज्ञाद्वारा है, उसके अनुग्रह हेतुक विज्ञानसे मोक्ष सिद्धि हो सकती है, किससे ? इससे कि उसकी श्रुति है। यद्यपि राग आदि दोषोंसे प्रयुक्त एवं सामग्री सम्पन्न जीव है। यद्यपि लोकमें कृषि आदि कर्मोंमें ईश्वर कारणरूपसे प्रसिद्ध नहीं है, तो भी सम्पूर्ण प्रवृत्तियोंमें ईश्वर हेतु कर्ता ( प्रयोजककर्ता ) है, ऐसा श्रुतिसे निश्चित होता है । जैसे कि 'एष ह्येव०' ( यही जिसको ऊपर ले जाना चाहता है उससे साधु कर्म कराता है और जिसको नीचे ले जाना चाहता है उससे यही अशुभ कर्म कराता है ) और 'य आत्मनि०' ( जो आत्मामें रहकर आत्माका नियमन करता है ) इस प्रकारकी श्रुतियाँ हैं ॥४१॥

परन्तु इस प्रकार ईश्वरको कारयितृत्व होनेपर वैषम्य और नैर्घृण्य प्रसक्त होंगे और जीवको अकृताभ्यागम प्रसक्त होगा । नहीं, ऐसा कहते हैं—

'तु' शब्द शङ्कित दोषोंकी व्यावृत्तिके लिए है । जीवसे किया गया जो धर्माधर्मरूप प्रयत्न है उसकी अपेक्षा करनेवाला ईश्वर उसको कराता है, उससे वे शङ्कित दोष प्रसक्त नहीं होते । जीवकृत धर्माधर्मके वैषम्यकी अपेक्षा करनेवाला ही ईश्वर मेघके समान केवल निमित्तरूपसे तत्, तत् फलोंको विषमरूपसे विभक्त करता है । जैसे लोकमें अपने-अपने असाधारण बीजोंसे जायमान अनेक प्रकारके गुच्छ, गुल्म ( छोटी लताएँ ) व्रीहि, यव आदिके प्रति साधारण कारण पर्जन्य होता है । पर्जन्यके न होनेपर उनमें रस, पुष्प, फल, पत्र आदिका वैषम्य उत्पन्न नहीं होता है । और अपने-अपने बीजोंके न

नाप्यसत्सु स्वस्वबीजेषु, एवं जीवकृतप्रयत्नापेक्ष ईश्वरस्त्वेषां शुभाशुभं विदध्यादिति श्लिष्यते। ननु कृतप्रयत्नापेक्षत्वमेव जीवस्य परायत्ते कर्तृत्वे नोपपद्यते, नैष दोषः। परायत्तेऽपि हि कर्तृत्वे करोत्येव जीवः, कुर्वन्तं हि तमीश्वरः कारयति। अपि च पूर्वप्रयत्नमपेक्ष्येदानीं कारयति, पूर्वतरं च प्रयत्नमपेक्ष्य पूर्वमकारयदित्यनादित्वात्संसारस्येत्यनवद्यम्। * कथं पुनरवगम्यते कृतप्रयत्नापेक्ष ईश्वर इति? 'विहितप्रतिषिद्धावैयर्थ्यादिभ्य' इत्याह। एवं हि 'स्वर्गकामो यजेत' 'ब्राह्मणो न हन्तव्यः' इत्येवंजातीयकस्य विहितस्य प्रतिषिद्धस्य चावैयर्थ्यं भवति, अन्यथा तदनर्थकं स्यात्, ईश्वर एव विधिप्रतिषेधयोर्नियुज्येत्, अत्यन्तपरतन्त्रत्वाज्जीवस्य। तथा विहितकारिणमप्यनर्थेन संसृजेत्प्रतिषिद्धकारिणमप्यर्थेन, ततश्च प्रामाण्यं वेदस्यास्तमियात्। ईश्वरस्य चात्यन्तानपेक्षत्वे लौकिकस्यापि पुरुषकारस्य वैयर्थ्यम्, तथा देशकालनिमित्तानाम्, पूर्वोक्तदोषप्रसङ्गश्चेत्येवंजातीयकं दोषजातमादिग्रहणेन दर्शयति ॥४२॥

( १७ अंशाधिकरणम् । सू० ४३-५३ )

## अंशो नानाव्यपदेशादन्यथा चापि दाशकितवादित्वमधीयत एके ॥४३॥

पदच्छेद—अंशः, नानाव्यपदेशात्, अन्यथा, च, अपि, दाशकितवादित्वम्, अधीयते, एके।

सूत्रार्थ—( अंशः ) जीव ईश्वरका कल्पित अंश है, ( नानाव्यपदेशात् ) क्योंकि 'य आत्मनि तिष्ठन्' इत्यादि श्रुतिमें दोनोंका भेद व्यपदेश है, ( अन्यथा चापि ) और उसी प्रकार अन्यथा-अभेदका भी व्यपदेश है, कारण कि ( एके ) एक शाखावाले (दाशकितवादित्वम्) 'ब्रह्म दाशा' इसप्रकार ब्रह्ममें दाशकितवत्व आदिका ( अधीयते ) पाठ करते हैं।

* जीवेश्वरयोरुपकार्योपकारकभाव उक्तः। स च संबद्धयोरेव लोके दृष्टो यथा

---

होनेपर भी वैषम्य उत्पन्न नहीं होता, वैसे ही जीव कृत प्रयत्नकी अपेक्षा करनेवाला ईश्वर उनके शुभ और अशुभका विधान करे, यह युक्त है। परन्तु जीवका परमेश्वर अधीन कर्तृत्व होनेपर ईश्वरमें जीवकृत प्रयत्नकी अपेक्षा उपपन्न नहीं होती। यह दोष नहीं है, क्योंकि ईश्वरसे प्राप्त कर्तृत्व होनेपर भी जीव करता ही है, करते हुए उसको ईश्वर कराता है। और पूर्व प्रयत्नकी अपेक्षाकर इस समय उसे कराता है, और पूर्वतर प्रयत्नकी अपेक्षाकर पूर्वमें कराया, इस प्रकार संसारके अनादि होनेसे दोष नहीं है। परन्तु यह कैसे अवगत हो कि ईश्वर जीव कृत प्रयत्नकी अपेक्षा करनेवाला है? 'विहितप्रतिषिद्धावैयर्थ्यादिभ्यः' ऐसा कहा है। ऐसा होनेपर 'स्वर्गकामो यजेत' ( स्वर्गकी कामना करनेवाला याग करे ) 'ब्राह्मणो न हन्तव्यः' ( ब्राह्मणका हनन नहीं करना चाहिए ) इसप्रकारके विहित और प्रतिषिद्ध व्यर्थ नहीं होते, अन्यथा वे निरर्थक हो जायँगे, ईश्वर ही विधि और प्रतिषेधमें नियुक्त करे, क्योंकि जीव अत्यन्त परतन्त्र है। वैसे [ वेद ] विहित कर्म करनेवालेका अनर्थके साथ और प्रतिषिद्ध करनेवालेका अर्थके साथ सम्बन्ध होने लग जायगा तो उसे वेदका प्रामाण्य अस्त हो जायगा। ईश्वरकी अत्यन्त अनपेक्षा होनेपर लौकिक पुरुषार्थ भी व्यर्थ हो जायगा, वैसे ही देश, काल और निमित्तोंके पूर्वोक्त दोष प्रसङ्ग इसप्रकारके दोष समुदाय आदिके ग्रहणसे दिखलाते हैं ॥४२॥

जीव और ईश्वरका उपकार्य-उपकारक भाव कहा गया, और लोकमें वह सम्बद्धोंका ही देखा

### सत्यानन्दी-दीपिका

❀ जीवोंको न किये कर्मोंका फल भी भोगना पड़ेगा। ईश्वरमें वैषम्य और नैर्घृण्य दोष प्रसक्त होगा, इसलिए जीवकृत शुभाशुभ कर्मोंकी अपेक्षा करनेवाले ईश्वर में कारयितृत्व होनेसे 'एष ह्येव साधुकर्म कारयति' इत्यादि श्रुतिका 'स्वर्गकामो यजेत' 'ब्राह्मणो न हन्तव्यः' इत्यादि विधि-प्रतिषेध श्रुतियोंके साथ कोई विरोध नहीं है ॥४२॥

स्वामिभृत्ययोर्यथा वाग्निविस्फुलिङ्गयोः। ततश्च जीवेश्वरयोरप्युपकार्योपकारकभावाभ्युपगमात्किं स्वामिभृत्यवत्संबन्ध आहोस्विदग्निविस्फुलिङ्गवदित्यस्यां विचिकित्सायामनियमो वा प्राप्नोति। अथवा स्वामिभृत्यप्रकारेष्वेवेशित्रीशितव्यभावस्य प्रसिद्धत्वात्तद्विध एव संबन्ध इति प्राप्नोति। अतो ब्रवीति-अंश इति। जीव ईश्वरस्यांशो भवितुमर्हति, यथाऽग्नेर्विस्फुलिङ्गः। अंश इवांशः, न हि निरवयवस्य मुख्योंऽशः संभवति। कस्मात्पुनर्निरवयवत्वात्स एव न भवति? नानाव्यपदेशात्। 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' ( छा० ८।७।१ ) 'एतमेव विदित्वा मुनिर्भवति', 'य आत्मनि तिष्ठन्नात्मानमन्तरो यमयति' इति चैवंजातीयको भेदनिर्देशो नासति भेदे युज्यते। ननु चायं नानाव्यपदेशः सुतरां स्वामिभृत्यसारूप्ये युज्यते इत्यत आह—अन्यथा चापीति। नच नानाव्यपदेशादेव केवलादंशत्वप्रतिपत्तिः। किं तर्हि? अन्यथा चापि व्यपदेशो भवत्यनानात्वस्य प्रतिपादकः। तथा हि—एके शाखिनो दाशकितवादिभावं ब्रह्मण आमनन्त्याथर्वणिका ब्रह्मसूक्ते—'ब्रह्म दाशा ब्रह्म दासा ब्रह्मैवेमे कितवाः' इत्यादिना। दाशा य एते कैवर्ताः प्रसिद्धाः, ये चामी दासाः स्वामिष्वात्मानमुपक्षपयन्ति, ये चान्ये कितवा द्यूतकृतस्ते सर्वे ब्रह्मैवेति हीनजन्तूदाहरणेन सर्वेषामेव नामरूपकृतकार्यकरणसंघातप्रविष्टानां जीवानां ब्रह्मत्वमाह। तथान्यत्रापि ब्रह्मप्रक्रियायामेवायमर्थः प्रपञ्च्यते—'त्वं स्त्री त्वं पुमानसि त्वं कुमार उत वा कुमारी। त्वं जीर्णो दण्डेन वञ्चसि त्वं जातो भवसि विश्वतोमुखः' ( श्वे० ४।३ )

---

जाता है, जैसे स्वामी और सेवकका अथवा जैसे अग्नि और विस्फुलिङ्गका। उससे जीव और ईश्वरका भी उपकार्योपकारकभाव स्वीकार होनेसे क्या वह स्वामी और सेवकके समान है अथवा अग्नि और विस्फुलिङ्गके समान है? इसप्रकार संशय होनेपर अनियम प्राप्त होता है। अथवा स्वामी और सेवकके प्रकारोंमें जिस प्रकारका ईशितृ और ईशितव्यभाव प्रसिद्ध है उसी प्रकारका ही सम्बन्ध प्राप्त होता है। इससे कहते हैं—'अंशः' इत्यादि। जीव ईश्वरका अंश हो सकता है, जैसे अग्निका विस्फुलिङ्ग। अंशके समान अंश है, कारण कि निरवयवका मुख्य अंश संभव नहीं है। परन्तु निरवयव होनेसे परमात्मा ही जीव क्यों नहीं होता है? 'नानाव्यपदेशात्' ( भेदका व्यपदेश है ) 'सोऽन्वेष्टव्यः०' ( उसका अन्वेषण करना चाहिए और उसकी विशेष जिज्ञासा करनी चाहिए ) 'एतमेव०' ( उसीको जानकर मुनि होता है ) 'य आत्मनि०' ( जो आत्माके अन्तर रहकर आत्माका नियमन करता है ) इसप्रकारका भेदनिर्देश भेद न होनेपर नहीं घटता। परन्तु यह भेदव्यपदेश स्वामी और सेवकके सादृश्यसे सुतरां घट सकता है। इसपर कहते हैं—'अन्यथा चापि' अन्य प्रकारसे भी। केवल भेदव्यपदेशसे ही अंशत्व ज्ञान नहीं होता, किन्तु अन्य प्रकारसे भी अभेद प्रतिपादक व्यपदेश है। जैसे एक आथर्वण शाखावाले 'ब्रह्मदाशा०' ( ब्रह्म ही दाश-धीवर हैं, ब्रह्म ही दास हैं ब्रह्म ही ये कितव-जुआरी हैं ) इत्यादिसे ब्रह्मसूक्तमें ब्रह्मके दाश और कितव आदि भावका कथन करते हैं। दाश-जो ये कैवर्तरूपसे प्रसिद्ध हैं। और ये जो दास हैं—स्वामीके लिए अपनेको उपक्षय करते हैं। और जो अन्य कितव-द्यूत करनेवाले हैं, वे सब ब्रह्म ही हैं। इसप्रकार हीन जन्तुओंके उदाहरणसे नाम-रूपकृत कार्यकरण संघातमें प्रविष्ट सभी जीवोंको ब्रह्म कहा है। इसी प्रकार अन्यत्र ब्रह्म प्रकरणमें भी यही अर्थ विस्तृत किया जाता है—'त्वं स्त्री०' ( तू स्त्री है, तू पुरुष है, तू कुमार है अथवा कुमारी है और

सत्यानन्दी-दीपिका

* आत्मामें नित्यत्व, अकर्तृत्व आदि कहकर अब उसका ब्रह्मके साथ अभेद सिद्ध करते हैं, इसप्रकार हेतुहेतुमद्भाव संगतिसे इस अधिकरणका आरम्भ है। पूर्वपक्षमें प्रत्यक्से अभिन्न ब्रह्म असिद्ध है और सिद्धान्तमें सिद्ध है, इसप्रकार दोनोंमें भेद है॥ ४३॥

इति। 'सर्वाणि रूपाणि विचित्य धीरो नामानि कृत्वाऽभिवदन्यदास्ते' इति च। 'नान्योऽतोऽस्ति द्रष्टा' ( बृह० ३।७।२३ ) इत्यादिश्रुतिभ्यश्चास्यार्थस्य सिद्धिः। चैतन्यं चाविशिष्टं जीवेश्वरयोर्यथाऽग्निविस्फुलिङ्गयोरौष्ण्यम्। अतो भेदाभेदावगमाभ्यामंशत्वावगमः ॥ ४३ ॥

कुतश्चांशत्वावगमः ?—

## मन्त्रवर्णाच्च ॥ ४४ ॥

पदच्छेद—मन्त्रवर्णात्, च।

सूत्रार्थ—और 'पादोऽस्य सर्वा भूतानि०' इस मन्त्रसे जीवमें अंशत्व अवगम होता है।

* मन्त्रवर्णश्चैतमर्थमवगमयति—'तावानस्य महिमा ततो ज्यायांश्च पूरुषः। पादोऽस्य सर्वा भूतानि त्रिपादस्यामृतं दिवि ॥' ( छा० ३।१२।६ ) इति। अत्र भूतशब्देन जीवप्रधानानि स्थावरजङ्गमानि निर्दिशति, 'अहिंसन्सर्वभूतान्यन्यत्र तीर्थेभ्यः' इति प्रयोगात्। अंशः पादो भाग इत्यनर्थान्तरम्। तस्मादप्यंशत्वावगमः ॥ ४४ ॥

कुतश्चांशत्वावगमः ?—

## अपि च स्मर्यते ॥ ४५ ॥

पदच्छेद—अपि, च, स्मर्यते।

सूत्रार्थ—(अपिच) और (स्मर्यते) 'ममैवांशो०' इस स्मृतिमें भी जीव ईश्वरका अंश कहा गया है।

* ईश्वरगीतास्वपि चेश्वरांशत्वं जीवस्य स्मर्यते—'ममैवांशो जीवलोके जीवभूतः सनातनः' (गी० १५।७) इति। तस्मादप्यंशत्वावगमः। यत्तूक्तम्—स्वामिभृत्यादिष्वेवेशित्रीशितव्यभावो

---

तू ही वृद्ध होकर दण्डके सहारे चलता है, तू ही [ प्रपञ्चरूपसे ] उत्पन्न होकर अनेकरूप हो जाता है ) और 'सर्वाणि रूपाणि०' (सब रूपोंका निर्माणकर नाम रखकर शब्द व्यवहार करता हुआ रहता है) 'नान्यो०' ( उससे अन्य द्रष्टा नहीं है ) इत्यादि श्रुतियोंसे उसी अर्थकी सिद्धि होती है। जैसे अग्नि और विस्फुलिङ्गोंका औष्ण्य समान है, वैसे जीव और ईश्वरका चैतन्य समान है। अतः भेद और अभेदके अवगमसे अंशत्वका अवगम होता है ॥ ४३ ॥

जीवमें अंशत्वका अवगम किससे होता है ?

'तावानस्य०' ( उतनी ही इस ( गायत्र्याख्य ब्रह्म ) की महिमा है, तथा इससे भी निर्विकार पुरुष उत्कृष्ट है। सम्पूर्ण भूत इसका एक पाद हैं और इसका त्रिपाद अमृत, प्रकाशमय स्वात्मामें स्थित है ) यह मन्त्रवर्ण उसी अर्थका अवगम कराता है। यहाँ श्रुति भूतशब्दसे जीवप्रधान स्थावर और जङ्गमोंका निर्देश करती है, क्योंकि 'अहिंसन्०' ( तीर्थों-शास्त्रोक्त कर्मोंसे अन्यत्र सब भूतोंकी अहिंसा करता हुआ ) ऐसा प्रयोग है। अंश, पाद, भाग इनका अन्य अर्थ नहीं है अर्थात् एकार्थवाची शब्द हैं। इससे भी जीवमें अंशत्वका अवगम होता है ॥ ४४ ॥

और जीवमें अंशत्वका अवगम किससे होता है ?

'ममैवांशो०' (इस जीव लोक (देह) में यह सनातन जीवात्मा मेरा अंश है) इसप्रकार भगवद्-

### सत्यानन्दी-दीपिका

'तावानस्य०' इस मन्त्रमें भूतशब्दसे 'भवन्तीति भूतानि' इस व्युत्पत्तिसे कार्यमात्रका ग्रहण है, क्योंकि 'अहिंसन् सर्वभूतान्यन्यत्र' इस मन्त्रमें भूतशब्द प्राणीमात्रका वाचक है। यद्यपि 'पादोऽस्य सर्वा भूतानि' इस मन्त्रमें भूतोंको पाद शब्दसे निर्देश किया गया है, तो भी कोई विरोध नहीं है, क्योंकि अंश, पाद, भाग एकार्थवाची शब्द हैं, इसलिए जीव ईश्वरका अंश है ॥ ४४ ॥

* अविद्यासे कल्पित भेदको लेकर जीव ईश्वरका अंशांशिभाव है। इसप्रकार शास्त्र

विशेषिताश्चैते 'सप्त वै शीर्षण्याः प्राणाः' इत्यत्र। ननु 'प्राणा गुहाशया निहिताः सप्त सप्त' ( मुण्ड०२।१।८ ) इति वीप्सा श्रूयते, सा सप्तभ्योऽतिरिक्तान्प्राणान्गमयतीति। नैष दोषः, पुरुषभेदाभिप्रायेयं वीप्सा प्रतिपुरुषं सप्त सप्त प्राणा इति, न तत्त्वभेदाभिप्राया सप्त सप्तान्येऽन्ये प्राणा इति। नन्वष्टत्वादिकापि संख्या प्राणेषूदाहृता, कथं सप्तैव स्युः ? सत्यमुदाहृता, विरोधात्त्वन्यतमा संख्याऽध्यवसातव्या। तत्र स्तोककल्पनानुरोधात्सप्तसंख्याध्यवसानम्। वृत्तिभेदापेक्षं च संख्यान्तरश्रवणमिति मन्यते ॥५॥

अत्रोच्यते—

हस्तादयस्तु स्थितेऽतो नैवम् ॥ ६ ॥

पदच्छेद—हस्तादयः, तु, स्थिते, अतः, न, एवम्।

सूत्रार्थ—( तु ) पूर्वपक्ष निरासार्थ है, ( हस्तादयः ) 'हस्तौ वै ग्रहः' इत्यादि श्रुतिमें हाथ आदि भी अधिक प्राण प्रतिपादित हैं, ( स्थिते ) इससे सातसे अधिक प्राणोंके होनेपर ( अतः ) इस कारण ( नैवम् ) सात ही प्राण नहीं हो सकते।

हस्तादयस्त्वपरे सप्तभ्योऽतिरिक्ताः प्राणाः श्रूयन्ते—'हस्तौ वै ग्रहः स कर्मणाऽतिग्रहेण गृहीतो हस्ताभ्यां हि कर्म करोति' ( बृह० ३।२।८ ) इत्येवमाद्यासु श्रुतिषु। स्थिते च सप्तत्वातिरेके सप्तत्वमन्तर्भावाच्छक्यते संभावयितुम्। हीनाधिकसंख्याविप्रतिपत्तौ ह्यधिका संख्या संग्राह्या भवति, तस्यां हीनाऽन्तर्भवति, नतु हीनायामधिका। अतश्च नैवं मन्तव्यं स्तोककल्पनानुरोधात्सप्तैव प्राणाः स्युरिति। उत्तरसंख्यानुरोधात्त्वेकादशैव ते प्राणाः स्युः। तथा चोदाहृता श्रुतिः—'दशेमे पुरुषे प्राणा आत्मैकादशः' ( बृह०

---

ये विशेषित हैं। परन्तु 'प्राणा गुहाशया निहिताः०' ( हृदयमें स्थित प्राण अपने स्थानमें सात-सात स्थापित हैं ) इसप्रकार वीप्सा सुनी जाती है, वह सातसे अधिक प्राणोंका बोध कराती है। यह दोष नहीं है, क्योंकि यह वीप्सा प्रत्येक पुरुषमें सात सात प्राण हैं, इसप्रकार पुरुष भेदके अभिप्रायसे है। सात सात अन्य अन्य प्राण हैं, इस तरह तत्त्वभेदके अभिप्रायसे नहीं है। परन्तु आठ आदि संख्या भी प्राणोंमें उदाहृत है, तो पुनः सात ही किस प्रकार होंगे ? यह ठीक है, उदाहृत है। परन्तु संख्या विषयक श्रुति विरोध होनेसे किसी एक संख्याका निश्चय करना चाहिए। उसमें अल्प कल्पनाके अनुसार सात संख्याका निश्चय है, और अन्य संख्याका श्रवण ( प्राणोंकी ) वृत्ति भेदकी अपेक्षासे ही है, ऐसा मानते हैं ॥ ५ ॥

सिद्धान्ती—इस पर कहते हैं—

परन्तु 'हस्तौ वै ग्रहः०' ( हस्त ही ग्रह हैं, वे कर्मरूप अतिग्रहसे गृहीत हैं, क्योंकि प्राणी हस्तोंसे ही कर्म करता है ) इत्यादि श्रुतियोंमें अन्य हस्त आदि सातोंसे अतिरिक्त प्राण सुने जाते हैं। प्राण सातसे अतिरिक्त निश्चित होनेपर उनमें सातके अन्तर्भावकी संभावना की जा सकती है, क्योंकि न्यून और अधिक संख्याकी विप्रतिपत्ति होनेपर अधिक संख्या ही ग्राह्य होती है, कारण कि उसमें न्यूनका अन्तर्भाव होता है, परन्तु न्यूनमें अधिक संख्याका अन्तर्भाव नहीं होता। इससे अल्प कल्पनाके अनुसार सात ही प्राण होंगे, ऐसा नहीं मानना चाहिए। किन्तु उत्तर संख्याके अनुरोधसे तो एकादश ही वे प्राण होंगे जैसे कि 'दशेमे पुरुषे०' ( देहमें ये दस प्राण हैं और मन एकादश है ) इस प्रकार श्रुति

सत्यानन्दी-दीपिका

और दसवीं नाभि, इसप्रकार दस प्राण हैं। पांच ज्ञानेन्द्रिय, पांच कर्मेन्द्रिय और मन यह एकादश हैं। ये बुद्धिके साथ मिलकर बारह प्राण होते हैं और अहंकारके साथ तेरह हैं। इसप्रकार प्राणोंकी संख्या विषयक श्रुतियोंका परस्पर विरोध है ॥ ५ ॥

३।१।४ ) इति। आत्मशब्देन चात्रान्तःकरणं परिगृह्यते, करणाधिकारात्। नन्वेकादशत्वादप्यधिके द्वादशत्रयोदशत्वे उदाहृते। सत्यमुदाहृते, न त्वेकादशभ्यः कार्यजातेभ्योऽधिकं कार्यजातमस्ति यदर्थमधिकं करणं कल्प्येत। शब्दस्पर्शरूपरसगन्धविषयाः पञ्च बुद्धिभेदास्तदर्थानि पञ्च बुद्धीन्द्रियाणि। वचनादानविहरणोत्सर्गानन्दाः पञ्च कर्मभेदास्तदर्थानि च पञ्च कर्मेन्द्रियाणि। सर्वार्थविषयं त्रैकाल्यवृत्ति मनस्त्वेकमनेकवृत्तिकम्, तदेव वृत्तिभेदात् क्वचिद्भिन्नवद्व्यपदिश्यते—'मनो बुद्धिरहंकारश्चित्तं च' इति। तथा च श्रुतिः कामाद्या नानाविधा वृत्तीरनुक्रम्याह—'एतत्सर्वं मन एव' (बृह० १।५।३) इति। * अपि च सप्तैव शीर्षण्यान्प्राणानभिमन्यमानस्य चत्वार एव प्राणा अभिमताः स्युः। स्थानभेदाद्ध्येते चत्वारः सन्तः सप्त गण्यन्ते—'द्वे श्रोत्रे द्वे चक्षुषी द्वे नासिके एका वाक्' इति। न च तावतामेव वृत्तिभेदा इतरे प्राणा इति शक्यते वक्तुं, हस्तादिवृत्तीनामत्यन्तविजातीयत्वात्। तथा 'नव वै पुरुषे प्राणा नाभिर्दशमी' इत्यत्रापि देहच्छिद्रभेदाभिप्रायेणैव दश प्राणा उच्यन्ते, न प्राणतत्त्वभेदाभिप्रायेण, 'नाभिर्दशमीति' वचनात्। नहि नाभिर्नाम कश्चित्प्राणः प्रसिद्धोऽस्ति। मुख्यस्य तु प्राणस्य भवति नाभिरप्येकं विशेषायतनमित्यतो नाभिर्दशमीत्युच्यते। क्वचिदुपासनार्थं कतिचित्प्राणा गण्यन्ते, क्वचित्प्रदर्शनार्थम्। तदेवं विचित्रे प्राणेयत्ताम्नाने सति क्व किंपरमाम्नानमिति विवेक्तव्यम्। कार्यजातवशात्त्वेकादशत्वाम्नानं प्राणविषयं प्रमाणमिति स्थितम्। इयमपरा सूत्रद्वययोजना—सप्तैव प्राणाः

---

उदाहृत है। यहाँ आत्मशब्दसे अन्तःकरणका ग्रहण किया जाता है, क्योंकि करणका प्रकरण है। परन्तु एकादशसे अधिक द्वादश, त्रयोदश उदाहृत हैं? ठीक उदाहृत हैं। परन्तु एकादश कार्य समुदायसे अधिक कार्य नहीं है, जिसके लिए अधिक करणकी कल्पनाकी जाय। शब्द, स्पर्श, रूप, रस और गन्ध विषयक पाँच प्रकारकी बुद्धि है, उसके लिए पाँच ज्ञानेन्द्रिय हैं। वचन, आदान-ग्रहण, विहरण (चलना) उत्सर्ग (मलादिका त्याग) आनन्द (विषय जन्य-सुख अनुभव) ये पाँच कर्मके भेद हैं, उनके लिए पाँच कर्मेन्द्रिय हैं। सब पदार्थोंको विषय करनेवाला, तथा त्रिकाल विषयक वृत्तिवाला मन एक है और वह अनेक वृत्तियोंवाला है। उसका ही 'मनोबुद्धिरहंकारश्चित्तं च' (मन, बुद्धि, अहङ्कार और चित्त) इस प्रकार वृत्तिके भेदसे कहींपर भिन्नके समान व्यपदेश किया जाता है। उसी प्रकार श्रुति अनेक प्रकारकी काम आदि वृत्तियोंका अनुक्रम कर कहती है—'एतत्सर्वं मन एव०' (यह सब मन ही है)। और सात ही शीर्षण्य प्राणोंके माननेवालेको चार ही प्राण अभिमत होंगे, ये चार होते हुए स्थानभेदसे सात गिने जाते हैं (दो श्रोत्र, दो नेत्र, दो नासिका, एक वाणी) तब अन्य प्राण उनके वृत्तिभेद हैं, ऐसा नहीं कहा जा सकता, क्योंकि हस्त आदिकी वृत्तियाँ अत्यन्त विजातीय हैं। इसप्रकार 'नव वै पुरुषे०' (देहमें नौ ही प्राण हैं और दसवीं नाभि है) यहाँ भी देहके छिद्र भेदके अभिप्रायसे दस प्राण कहे जाते हैं, प्राणतत्त्वके भेदके अभिप्रायसे नहीं, कारण कि 'नाभि दसवीं है' ऐसा वचन है। नाभि नामका कोई प्राण प्रसिद्ध नहीं है, किन्तु मुख्य प्राणका नाभि भी एक विशेष स्थान है, अतः 'नाभि दसवीं' ऐसा कहा जाता है। कहीं उपासनाके लिए कई प्राण गिने जाते हैं और कहीं प्रदर्शनके लिए। इसप्रकार प्राणोंकी संख्याविषयक भिन्न-भिन्न श्रुतियोंके होनेपर किस स्थलमें किस अर्थ विषयक यह श्रुति है, ऐसा विचार करना चाहिए। कार्य-समुदायके बलसे प्राण विषयक एकादशत्व

### सत्यानन्दी-दीपिका

* हस्त आदिकी अदान आदि वृत्तियाँ श्रोत्र आदिसे अत्यन्त विलक्षण हैं। यदि वे श्रोत्र आदिकी वृत्ति हों, तो अन्ध, बधिर आदिसे आदान-प्रदान आदि नहीं होंगे। इसलिए 'सप्त प्राणाः प्रभवन्ति' यह उपासनाके लिए है और 'अष्टौ ग्रहाः' यह उपलक्षणार्थ है, कारण कि पायु, उपस्थ

स्युर्यतः सप्तानामेव गतिः श्रूयते 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' ( बृह० ४।४।२ ) इत्यत्र। ननु सर्वशब्दोऽप्यत्र पठ्यते, तत्कथं सप्तानामेव गतिः प्रतिज्ञायत इति ? विशेषितत्वादित्याह—सप्तैव हि प्राणाश्चक्षुरादयस्त्वक्पर्यन्ता विशेषिता इह प्रकृताः 'स यत्रैष चाक्षुषः पुरुषः पराङ्पर्यावर्ततेऽथारूपज्ञो भवति' (बृह० ४।४।१) 'एकीभवति न पश्यतीत्याहुः' (बृह० ४।४।२) इत्येवमादिनाऽनुक्रमणेन। प्रकृतगामी च सर्वशब्दो भवति–यथा सर्वे ब्राह्मणा भोजयितव्या इति, ये निमन्त्रिताः प्रकृता ब्राह्मणास्त एव सर्वशब्देनोच्यन्ते नान्ये। एवमिहापि ये प्रकृताः सप्त प्राणास्त एव सर्वशब्देनोच्यन्ते, नान्य इति। नन्वत्र विज्ञानमष्टममनुक्रान्तम्, कथं सप्तानामेवानुक्रमणम् ? नैष दोषः, मनोविज्ञानयोस्तत्त्वाभेदाद्वृत्तिभेदेऽपि सप्तत्वोपपत्तेः। तस्मात्सप्तैव प्राणा इति। * एवं प्राप्ते ब्रूम—हस्तादयस्त्वपरे सप्तभ्योऽतिरिक्ताः प्राणाः प्रतीयन्ते—'हस्तौ वै ग्रहः' ( बृह० ३।२।८ ) इत्यादिश्रुतिषु। ग्रहत्वं च बन्धनभावः, गृह्यते बध्यते क्षेत्रज्ञोऽनेन ग्रहसंज्ञकेन बन्धनेनेति, स च क्षेत्रज्ञो नैकस्मिन्नेव शरीरे बध्यते, शरीरान्तरेष्वपि तुल्यत्वाद्बन्धनस्य। तस्माच्छरीरान्तरसंचारीदं ग्रहसंज्ञकं बन्धनमित्यर्थादुक्तं भवति। तथा च स्मृतिः—'पुर्यष्टकेन लिङ्गेन प्राणाद्येन स युज्यते। तेन बद्धस्य वै बन्धो मोक्षो मुक्तस्य तेन च ॥' इति प्राङ्मोक्षाद्ग्रहसंज्ञकेनानेन बन्धनेनावियोगं दर्शयति। आथर्वणे च विषयेन्द्रिया-

---

प्रतिपादक श्रुति प्रमाण है, यह निश्चित होता है। दोनों सूत्रोंकी यह दूसरी योजना है—प्राण सात ही होंगे, क्योंकि 'तमुत्क्रामन्तं०' ( उस जीवके शरीरसे उत्क्रमण करनेपर उसके अनन्तर ही प्राण उत्क्रमण करता है, प्राणके पीछे उत्क्रमण करनेपर अनन्तर सम्पूर्ण प्राण (इन्द्रियवर्ग) उत्क्रमण करते हैं) इस श्रुतिमें सातकी गति सुनी जाती है। परन्तु इस श्रुतिमें सर्व शब्द भी पठित है, तो सातकी ही गतिकी किस प्रकार प्रतिज्ञा की जाती है? विशेषित होनेसे, ऐसा कहते हैं, क्योंकि 'स यत्रैष०' (जिस समय यह चाक्षुष पुरुष सर्व ओरसे व्यावृत्त होता है, उस समय मुमूर्षु रूपज्ञान हीन हो जाता है) (चक्षु इन्द्रिय लिङ्गात्मासे एक रूप हो जाती है, तो लोग 'नहीं देखता' ऐसा कहते हैं) इत्यादि अनुक्रमणसे चक्षु आदिसे त्वक् पर्यन्त सात ही विशेषित प्राण यहाँ प्रकृत हैं। 'सर्वे प्राणाः' यहाँपर सर्वशब्द प्रकृतगामी होता है अर्थात् सात इन्द्रियोंको विषय करता है। जैसे "सब ब्राह्मणोंको भोजन कराना चाहिए" यहाँ जो निमन्त्रित प्रकृत ब्राह्मण हैं वे ही सर्व शब्दसे कहे जाते हैं अन्य नहीं। वैसे ही यहाँ भी जो प्रकृत सात प्राण हैं वे ही सर्वशब्दसे कहे जाते हैं अन्य नहीं, परन्तु यहाँ आठवें विज्ञानका अनुक्रमण भी है, तो सातका ही अनुक्रमण कैसे कहते हो ? यह दोष नहीं है, क्योंकि मन और विज्ञानका अभेद होनेसे वृत्ति भेद होनेपर भी सप्तत्वकी उपपत्ति होती है, इसलिए सात ही प्राण हैं। ऐसा प्राप्त होनेपर हम कहते हैं—'हस्तौ वै ग्रहः' ( हस्त ही ग्रह है ) इत्यादि श्रुतियोंमें दूसरे हस्त आदि सातसे अतिरिक्त प्राण प्रतीत होते हैं, ग्रहत्वसे बन्धनभाव ग्रहीत होता है। क्षेत्रज्ञ-जीव इस ग्रह नामक बन्धनसे बांधा जाता है और वह क्षेत्रज्ञ एक ही शरीरमें नहीं बाँधा जाता है, क्योंकि अन्य शरीरोंमें भी बन्धन तुल्य है, इससे यह ग्रह संज्ञक बन्धन अन्य शरीरमें संचारशील है, ऐसा अर्थसे उक्त होता है। जैसे कि 'पुर्यष्टकेन लिङ्गेन०' ( वह प्राण आदि पुर्यष्टक लिङ्गसे युक्त होते हैं। उससे बद्धका बन्धन और उससे मुक्तका मोक्ष होता है ) यह स्मृति मोक्षके पूर्व इस ग्रह संज्ञक बन्धनसे अवियोग

### सत्यानन्दी-दीपिका

और पाद ये भी समानरूपसे बंधक हैं। अतः एकादश कार्य हैं, तदनुसार 'दशेमे पुरुषे प्राणा आत्मैकादशः' यह एकादश इन्द्रिय प्रतिपादक श्रुति प्रमाण है।

* 'वागादिपञ्च श्रवणादिपञ्च प्राणादिपञ्चाभ्रमुखानि पञ्च।
बुद्ध्याद्यविद्यापि च कामकर्मणी पुर्यष्टकं सूक्ष्मशरीरमाहुः ॥' ( वि० चू० )

नुक्रमणे 'चक्षुश्च द्रष्टव्यं च' इत्यत्र तुल्यवद्धस्तादीनीन्द्रियाणि सविषयाण्यनुक्रामति—'हस्तौ चादातव्यं चोपस्थश्चानन्दयितव्यं च पायुश्च विसर्जयितव्यं च पादौ च गन्तव्यं च' ( प्र० ४।८ ) इति । तथा 'दशेमे पुरुषे प्राणा आत्मैकादशस्ते यदाऽस्माच्छरीरान्मर्त्यादुत्क्रामन्त्यथ रोदयन्ति' ( बृह० ३।९।४ ) इत्येकादशानां प्राणानामुत्क्रान्तिं दर्शयति । ❀ सर्वशब्दोऽपि च प्राणशब्देन संबध्यमानोऽशेषान्प्राणानभिदधानो न प्रकरणवशेन सप्तस्वेवावस्थापयितुं शक्यते, प्रकरणाच्छब्दस्य बलीयस्त्वात्। सर्वे ब्राह्मणा भोजयितव्या इत्यत्रापि सर्वेषामेवावनिवर्तिनां ब्राह्मणानां ग्रहणं न्याय्यम्, सर्वशब्दसामर्थ्यात्। सर्वभोजनासंभवात्तु तत्र निमन्त्रितमात्रविषया सर्वशब्दस्य वृत्तिराश्रिता, इह तु न किंचित्सर्वशब्दार्थसङ्कोचने कारणमस्ति । तस्मात्सर्वशब्देनात्राशेषाणां प्राणनां परिग्रहः । प्रदर्शनार्थं च सप्तानामनुक्रमणमित्यनवद्यम् । तस्मादेकादशैव प्राणाः—शब्दतः कार्यतश्चेति सिद्धम् ॥६॥

( ३ प्राणाणुत्वाधिकरणम् । सू० ७ )

## अणवश्च ॥ ७ ॥

पदच्छेद—अणवः, च ।

सूत्रार्थ—और प्राण (इन्द्रियाँ) अणु सूक्ष्म हैं, क्योंकि वे इन्द्रियोंसे अग्राह्य हैं ।

❀ अधुना प्राणानामेव स्वभावान्तरमभ्युच्चिनोति । अणवश्चैते प्रकृताः प्राणाः प्रति-

---

दिखलाती है, और आथर्वणमें विषय और इन्द्रियके अनुक्रमणमें 'चक्षुश्च द्रष्टव्यं च' ( चक्षु और द्रष्टव्य ) इसमें समानरूपसे सविषय हस्त आदि इन्द्रियोंको 'हस्तौ चादतव्यं०' ( हस्त और ग्रहण करनेयोग्य वस्तु, उपस्थ और आनन्दयितव्य, पायु और विसर्जनीय, पाद और गन्तव्य स्थान ) इस प्रकार गिनाते हैं । इसप्रकार 'दशेमे पुरुषे०' ( देहमें ये दश प्राण हैं और मन ग्यारहवाँ है ये जिस समय इस मर्त्य शरीरसे उत्क्रमण करते हैं उस समय अपने सम्बन्धियोंको रोदन कराते हैं इसलिए रुद्र कहलाते हैं ) यह श्रुति एकादश प्राणोंकी उत्क्रान्ति दिखलाती है । सर्व शब्द भी प्राणशब्दके साथ सम्बन्धित होता हुआ अशेष प्राणोंका अभिधान करता हुआ प्रकरणके बलसे सातमें ही अवस्थापित नहीं किया जा सकता, क्योंकि प्रकरणसे श्रुति बलवती है । 'सब ब्राह्मणोंको भोजन कराना चाहिए' यहाँपर भी पृथिवीपर रहनेवाले समस्त ब्राह्मणोंका ही ग्रहण न्याय है, कारण कि सर्व शब्दकी सामर्थ्य है । परन्तु सबके भोजनका संभव न होनेसे वहाँ सर्वशब्दकी वृत्ति निमन्त्रित ब्राह्मणमात्र विषयक ग्रहण की जाती है । परन्तु यहाँ तो सर्वशब्दके अर्थके संकोचमें कोई भी कारण नहीं है, इसलिए यहाँ सर्वशब्दसे समस्त प्राणोंका परिग्रह है और प्रदर्शनके लिए सातोंका अनुक्रमण है, यह भी दोषरहित है, अतः शब्द ( श्रुति ) से और कार्यसे एकादश ही प्राण हैं, यह सिद्ध हुआ ॥ ६ ॥

अब सूत्रकार प्राणोंके-इन्द्रियोंके ही अन्य स्वभावका समुच्चय कहते हैं । ये प्रकृत प्राण अणु

### सत्यानन्दी-दीपिका

(वागादि पाँच-कर्मेन्द्रियाँ, श्रवणादि पाँच-ज्ञानेन्द्रियाँ, प्राण, अपान, उदान, व्यान और समान ये पाँच प्राण, आकाश आदि पाँच सूक्ष्मभूत, अन्तःकरणचतुष्टय, अविद्या, काम और कर्म इनको पुर्यष्टक अथवा लिङ्गशरीर कहते हैं, क्योंकि आत्माके ज्ञापक हैं) मरण समय ये सब जीवके साथ रहते हैं जबतक जीव इनसे मुक्त नहीं होता तबतक उसका मोक्ष नहीं होता है ।

❀ इसप्रकार संख्या विषयक श्रुतियोंका परस्पर विरोध न होनेपर एकादश इन्द्रियोंके कारणभूत ब्रह्ममें श्रुतियोंका समन्वय सिद्ध है ॥ ६ ॥

❀ 'प्राणाः सर्वे अनन्ताः' (सब प्राण अनन्त हैं) यह श्रुति इन्द्रियोंको विभु कहती है । सांख्य-

पत्तव्याः। अणुत्वं चैषां सौक्ष्म्यपरिच्छेदौ न परमाणुतुल्यत्वम्, कृत्स्नदेहव्यापिकार्यानुपपत्तिप्रसङ्गात्। सूक्ष्मा एते प्राणाः, स्थूलाश्चेत्स्युर्मरणकाले शरीरान्निर्गच्छन्तो बिलादहिरिवोपलभ्येरन्म्रियमाणस्य पार्श्वस्थैः। परिच्छिन्नाश्चैते प्राणाः, सर्वगताश्चेत्स्युरुत्क्रान्तिगत्यागतिश्रुतिव्याकोपः स्यात्। तद्गुणसारत्वं च जीवस्य न सिध्येत्। सर्वगतानामपि वृत्तिलाभः शरीरदेशे स्यादिति चेत्—न, वृत्तिमात्रस्य करणत्वोपपत्तेः। यदेव ह्युपलब्धिसाधनं वृत्तिरन्यद्वा तस्यैव नः करणत्वम्, संज्ञामात्रे विवाद इति करणानां व्यापित्वकल्पना निरर्थिका। तस्मात्सूक्ष्माः परिच्छिन्नाश्च प्राणा इत्यध्यवस्यामः ॥ ७ ॥

( ४ प्राणश्रैष्ठ्याधिकरणम्। सू० ८ )

श्रेष्ठश्च ॥ ८ ॥

पदच्छेद—श्रेष्ठः, च।

सूत्रार्थ—और मुख्य प्राण भी इन्द्रियोंके समान ब्रह्मसे उत्पन्न होता है।

मुख्यश्च प्राण इतरप्राणवद्ब्रह्मविकार इत्यतिदिशति। तच्चाविशेषेणैव सर्वप्राणानां ब्रह्मविकारत्वमाख्यातम्, 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' ( मुण्ड० २।१।३ ) इति सेन्द्रियमनोव्यतिरेकेण प्राणस्योत्पत्तिश्रवणात्। 'स प्राणमसृजत' (प्र० ६।४) इत्यादिश्रवणेभ्यश्च। किमर्थः पुनरतिदेशः? अधिकाशङ्काऽपाकरणार्थः। नासदासीये हि ब्रह्मप्रधाने सूक्ते

---

समझने चाहिए। इन प्राणोंकी अणुता-सूक्ष्मता और परिच्छिन्नता है, परमाणु तुल्यता नहीं है, क्योंकि ऐसा माननेपर समस्त देह व्यापी कार्यकी अनुपपत्तिका प्रसङ्ग होगा। ये प्राण सूक्ष्म हैं, यदि स्थूल होते, तो मरण कालमें बिलसे निकले हुए सर्पके समान म्रियमाण पुरुषके शरीरसे निकलते हुए वे पार्श्वस्थ लोगोंसे उपलब्ध होते और ये प्राण परिच्छिन्न हैं। यदि सर्वगत हों, तो उत्क्रान्ति, गति और आगति श्रुतिका विरोध होगा और जीवमें अन्तःकरण गुण प्रधानत्व सिद्ध नहीं होगा। यदि कहो कि सर्वगतोंका भी शरीर प्रदेशमें वृत्तिलाभ हो जायगा, तो यह युक्त नहीं है, क्योंकि वृत्तिमात्रमें करणत्व हो सकता है। वृत्ति हो अथवा अन्य हो जो उपलब्धिका साधन है वही हमारे मतमें करण है। संज्ञामात्रमें विवाद है, अतः करणोंमें व्यापित्व कल्पना निरर्थक है, इससे हम ऐसा निश्चय करते हैं कि इन्द्रिय सूक्ष्म और परिच्छिन्न हैं ॥ ७ ॥

मुख्य प्राण भी अन्य प्राणोंके समान ब्रह्मका विकार है, इस प्रकार सूत्रकार अतिदेश करते हैं। वह ब्रह्मविकारत्व सब प्राणोंका समानरूपसे ही कहा गया है। 'एतस्माज्जायते०' ( इससे प्राण, मन और सब इन्द्रियाँ उत्पन्न होती हैं ) और 'स प्राणमसृजत' ( उसके प्राणको उत्पन्न किया ) इत्यादि श्रुतियोंसे भी इन्द्रिय सहित मनसे अतिरिक्त प्राणकी उत्पत्तिका श्रवण होता है। तो पुनः यह

सत्यानन्दी-दीपिका

मतमें अहङ्कार जगत् व्यापी है, अतः इन्द्रियाँ उसका कार्य होनेसे वे भी व्यापक सिद्ध होती हैं, किन्तु तत् तत् देहमें उनकी अभिव्यक्तिरूप प्रदेश वृत्तियाँ हैं। विभु होनेसे इन्द्रियोंकी उत्क्रान्ति आदि नहीं होते, इसप्रकार आक्षेप संगतिसे सांख्योंका पूर्वपक्ष है। इसप्रकार प्राणके परिमाणविषयक सन्देह होनेपर सिद्धान्त कहते हैं—इन्द्रियाँ सूक्ष्म हैं विभु नहीं, क्योंकि अनुद्भूतरूप और स्पर्शवाली हैं। यदि इन्द्रियाँ व्यापक हों, तो दूर और समीपस्थ सब पदार्थोंका ज्ञान प्रसक्त होगा और उत्क्रान्ति आदि प्रतिपादक श्रुतियोंका बाध होगा। यदि बुद्धि व्यापक हो तो आत्मामें बुद्धिरूप उपाधिसे 'एषोऽणुरात्मा' इस प्रकार अणुत्व सिद्ध नहीं होगा और जीवमें 'तद्गुणसारत्व' न्यायका बाध होगा। इसलिए 'प्राणाः सर्वे अनन्ताः' इस प्रकार श्रुतिसे इन्द्रियोंमें प्रतिपादित अनन्तत्व उपासनाके लिए है, अतः उसका उत्क्रान्ति आदि श्रुतिके साथ कोई विरोध नहीं है ॥ ७ ॥

मन्त्रवर्णो भवति 'न मृत्युरासीदमृतं न तर्हि न रात्र्या अह्न आसीत्प्रकेतः । आनीदवातं स्वधया तदेकं तस्माद्धान्यन्न परः किंचनास' (ऋ० सं० ८।७।१७ ) इति । आनीदिति प्राणकर्मोपादानात्प्रागुत्पत्तेः सन्तमिव प्राणं सूचयति । तस्मादजः प्राण इति जायते कस्यचिन्मतिः । तामतिदेशेनापनुदति । आनीच्छब्दोऽपि न प्रागुत्पत्तेः प्राणसद्भावं सूचयति, अवातमिति विशेषणात्, 'अप्राणो ह्यमनाः शुभ्रः' इति च मूलप्रकृतेः प्राणादिसमस्तविशेषरहितत्वस्य दर्शितत्वात् । तस्मात्कारणसद्भावप्रदर्शनार्थ एवायमानीच्छब्द इति । * श्रेष्ठ इति च मुख्यं प्राणमभिदधाति, 'प्राणो वाव ज्येष्ठश्च श्रेष्ठश्च' (छा० ५।१।१) इति श्रुतिनिर्देशात् । ज्येष्ठश्च प्राणः, शुक्रनिषेककालादारभ्य तस्य वृत्तिलाभात् । न चेत्तस्य तदानीं वृत्तिलाभः स्याद्योनौ निषिक्तं शुक्रं पूयेत, न संभवेद्वा । श्रोत्रादीनां तु कर्णशष्कुल्यादिस्थानविभागनिष्पत्तौ वृत्तिलाभान्न ज्येष्ठत्वम् । श्रेष्ठश्च प्राणः, गुणाधिक्यात्, 'न वै शक्ष्यामस्त्वदृते जीवितुम्' (बृह० ६।१।१३) इति श्रुतेः ॥८॥

( ५ वायुक्रियाधिकरणम् सू० ९-१२ )

## न वायुक्रिये पृथगुपदेशात् ॥ ९ ॥

**पदच्छेद**—न, वायुक्रिये, पृथगुपदेशात् ।

**सूत्रार्थ**—( न वायुक्रिये ) मुख्य प्राण न वायु है और न इन्द्रियोंका व्यापार, किन्तु वायु विशेष है । ( पृथगुपदेशात् ) क्योंकि 'स वायुना ज्योतिषा' 'एतस्माज्जायते प्राणः' इत्यादि श्रुतिमें उसका पृथक् उपदेश है ।

* स पुनर्मुख्यः प्राणः किंस्वरूप इतीदानीं जिज्ञास्यते । तत्र प्राप्तं तावत्—श्रुतेर्वायुः

---

अतिदेश किस लिए है? अधिक शङ्काके परिहारके लिए है । क्योंकि नासदासीय नामक ब्रह्म प्रधान सूक्तमें 'न मृत्युरासीदमृतं' ( महाप्रलयकालमें मृत्यु नहीं थी और अमृत भी नहीं था, रात्रि तथा दिवसके चिह्न भूत चन्द्र और सूर्य नहीं थे, स्वधाके साथ अर्थात् पितृदेव भी नहीं था, वह अकेला व्यापार रहित [ ब्रह्म ] था, उससे पर अन्य कुछ नहीं था ) यह मन्त्रवर्ण है । 'आनीत्' ( वह चेष्टा युक्त है ) यह शब्द प्राणकर्मका ग्रहण होनेसे उत्पत्तिके पूर्व प्राणको विद्यमानकी भाँति सूचित करता है इससे प्राण उत्पत्ति रहित है, इस प्रकार किसीकी बुद्धि उत्पन्न हो सकती है, उसका अतिदेशसे निराकरण करते हैं । 'आनीत्' शब्द भी उत्पत्तिके पूर्व प्राणके सद्भावको सूचित नहीं करता, क्योंकि 'अवातम्' ( वात रहित ) यह विशेषण है और 'अप्राणो०' ( वह अप्राण, मन रहित और शुद्ध है ) इस प्रकार मूलप्रकृति प्राण आदि समस्त विशेषोंसे रहित दिखलाई गई है । इसलिए यह 'आनीत्' शब्द कारणके सद्भाव प्रदर्शनके लिए ही है । 'प्राणो वा०' (प्राण ही ज्येष्ठ और श्रेष्ठ है ) इस श्रुतिके निर्देशसे 'श्रेष्ठ' यह शब्द मुख्य प्राणका अभिधान करता है । प्राण ज्येष्ठ है, क्योंकि वीर्य निषेककाल (गर्भाधान काल) से लेकर उसका वृत्तिलाभ होता है । यदि उस समय उसका वृत्तिलाभ न हो तो गर्भाशयमें निषिक्त शुक्र दूषित हो जाता अथवा उसका संभव न होता । श्रोत्र आदि तो ज्येष्ठ नहीं है, क्योंकि कर्ण-शष्कुलि आदि स्थान विभाग निष्पन्न होनेपर उनका वृत्तिलाभ होता है, और गुणोंके आधिक्यसे प्राण श्रेष्ठ है, क्योंकि 'न वै०' (तुम्हारे विना हम जीवित रहनेमें समर्थ नहीं हैं) ऐसी श्रुति है ॥८॥

उस मुख्य प्राणका क्या स्वरूप है, इसप्रकारकी अब जिज्ञासा होती है । श्रुतिसे ऐसा प्राप्त

### सत्यानन्दी-दीपिका

* वाणी आदिके जीवनका हेतुत्व प्राणका गुण है, इस गुणके आधिक्यसे प्राण श्रेष्ठ है । इसप्रकार 'आनीत्' इस श्रुतिके साथ विरोध न होनेसे प्राणोत्पत्ति श्रुतिका ब्रह्ममें समन्वय है । अतः मुख्य प्राण भी अन्य इन्द्रियोंके समान ब्रह्मसे उत्पन्न होता है ॥ ८॥

प्राण इति । एवं हि श्रूयते—'यः प्राणः स वायुः स एष वायुः पञ्चविधः प्राणोऽपानो व्यान उदानः समानः' इति । अथवा तन्त्रान्तरीयाभिप्रायात्समस्तकरणवृत्तिः प्राण इति प्राप्तम् । एवं हि तन्त्रान्तरीया आचक्षते—'सामान्या करणवृत्तिः प्राणाद्या वायवः पञ्चे' ति । अत्रोच्यते-न वायुः प्राणो नापि करणव्यापारः । कुतः ? पृथगुपदेशात् । वायोस्तावत्प्राणस्य पृथगुपदेशो भवति—'प्राण एव ब्रह्मणश्चतुर्थः पादः स वायुना ज्योतिषा भाति च तपति च' (छान्दो० ३।१८।४ ) इति । नहि वायुरेव सन् वायोः पृथगुपदिश्येत । तथा करणवृत्तेरपि पृथगुपदेशो भवति, वागादीनि करणान्यनुक्रम्य तत्र तत्र पृथक्प्राणस्यानुक्रमणात्, वृत्तिवृत्तिमतोश्चाभेदात् । नहि करणव्यापार एव सन् करणेभ्यः पृथगुपदिश्येत । ❀ तथा 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च । खं वायुः' ( मु० २।१।३ ) इत्येवमादयोऽपि वायोः करणेभ्यश्च प्राणस्य पृथगुपदेशा अनुसर्तव्याः । नच समस्तानां करणानामेका वृत्तिः

---

होता है कि प्राण वायु है, क्योंकि 'यः प्राणः स वायुः०' ( जो प्राण है वह वायु है वह वायु प्राण, अपान, व्यान, उदान और समान भेदसे पाँच प्रकारका है ) ऐसी श्रुति है । अथवा अन्य ( सांख्य ) शास्त्रके अभिप्रायसे प्राण समस्त करणोंकी वृत्ति है, ऐसा प्राप्त होता है । क्योंकि 'इन्द्रियोंकी सामान्य वृत्ति प्राण आदि पाँच वायु है' अन्य तन्त्रवाले ऐसा कहते हैं । इसपर कहते हैं—प्राण वायु नहीं है और उसी प्रकार करणोंका व्यापार भी नहीं है । किससे ? इससे कि उसका पृथगुपदेश है । 'प्राण एव०' ( प्राण ही मनोमय ब्रह्मका चतुर्थपाद है, वह वायुरूप ज्योतिसे प्रकाशित होता और तपता है ) इसप्रकार प्राणका वायुसे पृथक् उपदेश है । प्राण वायु होता हुआ वायुसे पृथक् उपदिष्ट नहीं होना चाहिए । इसीप्रकार प्राणका इन्द्रिय व्यापारसे भी पृथक् उपदेश है, कारण कि वाणी आदि इन्द्रियोंका अनुक्रम कर तत्-तत् प्रकरणमें प्राणका पृथक् अनुक्रम है और वृत्ति और वृत्तिमान्‌का अभेद है, करणोंका व्यापार होता हुआ उसका करणोंसे पृथक् उपदेश नहीं होना चाहिए । उसीप्रकार 'एतस्माज्जायते०' ( इससे प्राण, मन तथा सब इन्द्रियाँ, आकाश और वायु उत्पन्न होते हैं ) इत्यादि श्रुतियोंका जिनमें प्राणका वायु और इन्द्रियोंसे पृथक् उपदेश है उनका भी अनुसरण करना चाहिए । समस्त

## सत्यानन्दी-दीपिका

❀ इन्द्रियोंका विचार कर उनके व्यापारसे प्राणको पृथक् करनेके लिए प्राणकी उत्पत्तिका अतिदेश किया गया है । अब प्राणकी उत्पत्तिके अनन्तर प्रसंग संगतिसे उसके स्वरूपका विचार किया जाता है । क्या मुख्य प्राण वायुमात्र है वा इन्द्रियोंका साधारण व्यापार है अथवा अन्य तत्त्व है ? इसप्रकार वायु और प्राणमें भेद और अभेद श्रुतियोंका परस्पर विरोध होनेसे संशय होनेपर 'तत्र' इत्यादिसे पूर्वपक्ष दिखलाते हैं । सिद्धान्ती—'अत्रोच्यते' इत्यादिसे कहते हैं । किञ्च मनोमय ब्रह्मके वाक्, प्राण, नेत्र और श्रोत्र ये चार पाद श्रुतिमें कहे गये हैं । प्राण अधिदैविक वायुद्वारा अभिव्यक्त होकर अपने व्यापार करनेमें समर्थ होता है, इसलिए श्रुतियोंमें प्राण और वागादि इन्द्रियोंके परस्पर संवादरूप लिङ्गसे और पृथक् उत्पत्तिरूप लिङ्गसे प्राण इन्द्रिय और उनके व्यापारसे पृथक् है ।

❀ प्राण प्रत्येक इन्द्रियका व्यापार है अथवा समुदायका ? प्रथम पक्ष युक्त नहीं है, क्योंकि जो व्यापार नेत्र इन्द्रियसे साध्य है वह श्रोत्र इन्द्रियसे साध्य नहीं है । नेत्रका व्यापार रूप आदिका ग्रहण है, श्रोत्रका व्यापार शब्द ग्रहण है । प्रत्येक इन्द्रियका भिन्न-भिन्न व्यापार है । इनमें किसीका भी प्राणन व्यापार नहीं है । द्वितीय पक्ष भी ठीक नहीं है, क्योंकि उस समुदायमेंसे एक, दो, तीन अथवा चार इन्द्रियोंके न होनेसे प्राणन कार्य नहीं होगा । अतः प्राणन व्यापार श्रोत्र आदिके श्रवण आदि व्यापारसे अत्यन्त भिन्न है ।

संभवति, प्रत्येकमेकैकवृत्तित्वात्समुदायस्य चाकारकत्वात्। ननु पञ्जरचालनन्यायेनैतद्भविष्यति–यथैकपञ्जरवर्तिन एकादशपक्षिणः प्रत्येकं प्रतिनियतव्यापाराः सन्तः संभूयैकं पञ्जरं चालयन्ति, एवमेकशरीरवर्तिन एकादश प्राणाः प्रत्येकं प्रतिनियतवृत्तयः सन्तः संभूयैकां प्राणाख्यां वृत्तिं प्रतिलप्स्यन्त इति। नेत्युच्यते–युक्तं तत्र प्रत्येकवृत्तिभिरवान्तरव्यापारैः पञ्जरचालनानुरूपैरेवोपेताः पक्षिणः संभूयैकं पञ्जरं चालयेयुरिति, तथा दृष्टत्वात्। इह तु श्रवणाद्यवान्तरव्यापारोपेताः प्राणा न संभूय प्राण्युरिति युक्तम्, प्रमाणाभावात्, अत्यन्तविजातीयत्वाच्च श्रवणादिभ्यः प्राणनस्य। * तथा प्राणस्य श्रेष्ठत्वाद्युद्घोषणं, गुणभावोपगमश्च तं प्रति वागादीनाम्, न करणवृत्तिमात्रे प्राणेऽवकल्पते। तस्मादन्यो वायुक्रियाभ्यां प्राणः। कथं तर्हीयं श्रुतिः 'यः प्राणः स वायुः' इति? उच्यते–वायुरेवायमध्यात्ममापन्नः पञ्चव्यूहो विशेषात्मनावतिष्ठमानः प्राणो नाम भण्यते, न तत्त्वान्तरं नापि वायुमात्रम्। अतश्चोभे अपि भेदाभेदश्रुती न विरुध्येते ॥ ९ ॥

स्यादेतत्–प्राणोऽपि तर्हि जीववदस्मिञ्शरीरे स्वातन्त्र्यं प्राप्नोति, श्रेष्ठत्वाद्गुणभावोपगमाच्च तं प्रति वागादीनामिन्द्रियाणाम्। तथा ह्यनेकविधा विभूतिः प्राणस्य श्राव्यते–'सुप्तेषु वागादिषु प्राण एवैको हि जागर्ति प्राण एको मृत्युनाऽनाप्तः' प्राणः संवर्गो वागादीन्संवृङ्क्ते प्राण इतरान्प्राणान्रक्षति मातेव पुत्रान्' इति। तस्मात्प्राणस्यापि जीववत्स्वातन्त्र्यप्रसङ्गः। तं परिहरति–

---

करणोंकी एक वृत्ति नहीं हो सकती, क्योंकि प्रत्येक इन्द्रियकी पृथक् एक एक वृत्ति है और समुदाय कारक नहीं है। परन्तु पञ्जर चालन न्यायसे यह हो जायगा–जैसे एक पिंजरामें वर्तमान एकादश पक्षी प्रत्येक प्रतिनियत व्यापारवाले होते हुए भी मिलकर एक पिंजराको चलाते हैं, वैसे ही एक शरीरवर्ती एकादश प्राण प्रत्येक प्रतिनियत व्यापारवाले होते हुए भी मिलकर एक प्राण नामक वृत्तिको प्राप्त करेंगे। नहीं, ऐसा कहते हैं—प्रत्येकमें रहनेवाले पिंजरा संचालनके अनुरूप अवान्तर व्यापारोंसे युक्त पक्षी मिलकर एक पिंजराको हिलावें उसमें तो यह युक्त है, क्योंकि वैसा देखानेमें आता है। यहाँ तो श्रवण आदि अवान्तर व्यापारोंसे युक्त इन्द्रियाँ मिलकर प्राणन व्यापार करें यह युक्त नहीं है, कारण कि प्रमाण नहीं है और प्राणन व्यापार श्रवण आदिसे अत्यन्त विलक्षण है। इसीप्रकार प्राणमें श्रेष्ठत्व आदि उद्घोष और उसके प्रति वाक् आदिका गुणभाव स्वीकार यह करणवृत्तिमात्र प्राणमें नहीं हो सकता, इसलिए प्राण वायु और इन्द्रियोंके व्यापारसे भिन्न है। तो 'यः प्राणः स वायुः' ( जो प्राण है वह वायु है ) यह श्रुति कैसे उपपन्न होगी? कहते हैं—यह वायु ही अध्यात्मभावापन्न पाँच प्रकारका होकर विशेषरूपसे अवस्थित होता हुआ प्राण नामसे कहा जाता है, वह न अन्य तत्त्व है और न वायुमात्र है, इसलिए भेद श्रुति और अभेद श्रुति दोनों भी विरुद्ध नहीं हैं ॥ ९ ॥

ऐसा हो, परन्तु तब प्राणको भी इस शरीरमें जीवके समान स्वातन्त्र्य प्राप्त होता है, क्योंकि वह श्रेष्ठ है और वाणी आदि इन्द्रियाँ उसके अङ्गरूपसे स्वीकार हैं। इसीप्रकार 'सुप्तेषु०' ( वाक् आदि इन्द्रियोंके सुप्त होनेपर अकेला प्राण ही जागता है, अकेला प्राण ही मृत्युसे व्याप्त नहीं होता, वाक् आदिका अपनेमें संहरण करता है, अतः प्राण संवर्ग है, जैसे माता पुत्रोंकी रक्षा करती है, वैसे प्राण अन्य प्राणों-इन्द्रियोंकी रक्षा करता है ) इसप्रकार प्राणकी अनेक प्रकारकी विभूति सुनी जाती है। इसलिए प्राणमें भी जीवके समान स्वातन्त्र्य प्रसंग है। उसका परिहार करते हैं—

## सत्यानन्दी–दीपिका

* यदि प्राणको इन्द्रियोंका व्यापार मानें, तो वाणी आदि ही प्रधान होंगे, तब श्रुतिगत प्राण और इन्द्रिय संवादसे विरोध होगा, इसलिए प्राण वायु और इन्द्रियोंके व्यापारसे भिन्न है, अतः देहमें प्राप्त प्राण आदि पाँच भेदवाला विकाररूपसे स्थित वायु ही प्राण है, यह अभेद श्रुतिका भाव है ॥९॥

## चक्षुरादिवत्तु तत्सहशिष्टयादिभ्यः ॥ १० ॥

पदच्छेद—चक्षुरादिवत्, तु, तत्सहशिष्टयादिभ्यः।

सूत्रार्थ—( तु ) शब्द पूर्वपक्षकी व्यावृत्तिके लिए है। प्राण जीवात्माके समान स्वतन्त्र नहीं है, किन्तु ( चक्षुरादिवत् ) चक्षु आदिके समान पराधीन है, क्योंकि प्राणोंके संवाद प्रकरणमें ( तत्सहशिष्टयादिभ्यः ) चक्षु आदिके साथ प्राणका उपदेश है और उसमें अचेतनत्व आदिका प्रतिपादन है।

* तुशब्दः प्राणस्य जीववत्स्वातन्त्र्यं व्यावर्तयति। यथा चक्षुरादीनि राजप्रकृतिवज्जीवस्य कर्तृत्वं भोक्तृत्वं च प्रत्युपकरणानि न स्वतन्त्राणि, तथा मुख्योऽपि प्राणो राजमन्त्रिवज्जीवस्य सर्वार्थकरत्वेनोपकरणभूतो न स्वतन्त्रः। कुतः? तत्सहशिष्टयादिभ्यः। तैश्चक्षुरादिभिः सहैव प्राणः शिष्यते प्राणसंवादादिषु। समानधर्मणां च सह शासनं युक्तं बृहद्रथंतरादिवत्। आदिशब्देन संहतत्वाचेतनत्वादीन्प्राणस्य स्वातन्त्र्यनिराकरणहेतून्दर्शयति ॥ १० ॥

स्यादेतत्—यदि चक्षुरादिवत्प्राणस्य जीवं प्रति करणभावोऽभ्युपगम्येत, विषयान्तरं रूपादिवत्प्रसज्येत। रूपाद्यालोचनादिभिर्वृत्तिभिर्यथास्वं चक्षुरादीनां जीवं प्रति करणभावो भवति। अपि चैकादशैव कार्यजातानि रूपालोचनादीनि परिगणितानि यदर्थमेकादश प्राणाः संगृहीताः, नतु द्वादशमपरं कार्यजातमधिगम्यते यदर्थमयं द्वादशः प्राणः प्रतिज्ञायेतेति। अत उत्तरं पठति—

## अकरणत्वाच्च न दोषस्तथा हि दर्शयति ॥ ११ ॥

पदच्छेद—अकरणत्वात्, च, न, दोषः, तथा, हि, दर्शयति।

---

'तु' शब्द जीवके समान प्राणकी स्वतन्त्रताकी व्यावृत्ति करता है। जैसे चक्षु आदि इन्द्रियाँ राजसेवकके समान जीवके कर्तृत्व, भोक्तृत्वके प्रति उपकरण हैं स्वतन्त्र नहीं हैं, वैसे ही मुख्य प्राण भी राजमन्त्रीके समान जीवका सर्वार्थ साधक होनेसे उपकरण भूत है स्वतन्त्र नहीं है। किससे? इससे कि उनके साथ इनका उपदेश आदि है। प्राणसंवाद आदिमें उन चक्षु आदिके साथ ही प्राणका शासन ( उपदेश ) किया जाता है और समान धर्मवालोंका बृहत् ( बृहदादित्ये प्रोतम् छा० २।१४।१ ) रथान्तर ( रथन्तरमग्नौ प्रोतम् छा० २।१२।१ ) आदिके समान एक साथ शासन युक्त है। भगवान् सूत्रकार सूत्रस्थ आदि शब्दसे संहतत्व, अचेतनत्व आदि प्राणके स्वातन्त्र्य निवारक हेतुओंको दिखलाते हैं ॥ १० ॥

ऐसा हो, यदि प्राणका नेत्र आदिके समान जीवके प्रति करणभाव स्वीकार किया जाय, तो उसके भी रूप आदिके समान अन्य विषय प्रसक्त होगा। रूप आदिके आलोचन आदि अपनी वृत्तियों द्वारा चक्षु आदिका जीवके प्रति करणभाव होता है। और रूप अलोचन आदि एकादश कार्य समुदायकी ही गणना की गई है, जिनके लिए एकादश इन्द्रियोंका संग्रह किया गया है, किन्तु बारहवाँ अन्य कार्य समुदाय अधिगत नहीं होता, जिसके लिए इस बारहवें प्राणकी प्रतिज्ञाकी जाय। अतः इसका उत्तर कहते हैं—

### सत्यानन्दी-दीपिका

* यदि प्राणको इन्द्रियोंका व्यापार न मानें, तो वह जीवके समान इस शरीरमें स्वतन्त्र कर्ता, भोक्ता होगा? 'प्राणो न भोक्ता भोगोपकरणत्वात्, चक्षुरादिवत्' ( प्राण भोक्ता नहीं है, क्योंकि भोगका साधन है जैसे चक्षु आदि ) जैसे बृहत् और रथान्तर नामवाले सामविशेषका सर्वत्र साथ प्रयोग है अथवा सामत्व होनेके कारण दोनोंमें सादृश्य होनेसे साथ पाठ है, वैसे ही उपकरण रूपसे प्राणका इन्द्रियोंके साथ सादृश्य होनेसे उनके साथ पाठ है। 'प्राणो न भोक्ता सावयवत्वात् जड़त्वात् भौतिकत्वाच्च देहवद्' ( प्राण भोक्ता नहीं है, क्योंकि वह देहके समान सावयव, जड़ और भौतिक है ) इसलिए प्राण इन्द्रियोंके समान उपकरण होनेसे इस शरीरमें स्वतन्त्र भोक्ता नहीं है ॥१०॥

सूत्रार्थ—( अकरणत्वाच्च ) प्राणको ज्ञानमें करण न होनेसे ( न दोषः ) चक्षु आदिके समान अन्य विषय प्रसङ्गका दोष नहीं है, ( ही ) क्योंकि ( तथा ) उसीप्रकार 'तान्वरिष्ठः' इत्यादि श्रुति शरीर और इन्द्रियोंका धारणरूप कार्य प्राणमें ( दर्शयति ) दिखलाती है।

क्ष न तावद्विषयान्तरप्रसङ्गो दोषः, अकरणत्वात्प्राणस्य। नहि चक्षुरादिवत्प्राणस्य विषयपरिच्छेदेन करणत्वमभ्युपगम्यते। न चास्यैतावता कार्याभाव एव। कस्मात्? तथा हि श्रुतिः प्राणान्तरेष्वसंभाव्यमानं मुख्यप्राणस्य वैशेषिकं कार्यं दर्शयति प्राणसंवादादिषु—'अथ ह प्राणा अहंश्रेयसि व्यूदिरे' इत्युपक्रम्य 'यस्मिन्व उत्क्रान्ते शरीरं पापिष्ठतरमिव दृश्यते स वः श्रेष्ठः' (छा० ५।१।६,७) इति चोपन्यस्य प्रत्येकं वागाद्युत्क्रमणेन तद्वृत्तिमात्रहीनं यथापूर्वं जीवनं दर्शयित्वा, प्राणोच्चिक्रमिषायां वागादिशैथिल्यापत्तिं शरीरपातप्रसङ्गं च दर्शयन्ती श्रुतिः प्राणनिमित्तां शरीरेन्द्रियस्थितिं दर्शयति। 'तान्वरिष्ठः प्राण उवाच मा मोहमापद्यथाहमेवैतत्पञ्चधात्मानं प्रविभज्यैतद्बाणमवष्टभ्य विधारयामि' इति चैतमेवार्थं श्रुतिराह—'प्राणेन रक्षन्नवरं कुलायम्' ( बृह० ४।३।१२ ) इति च सुप्तेषु चक्षुरादिषु प्राणनिमित्तां शरीररक्षां दर्शयति। 'यस्मात्कस्माच्चाङ्गात्प्राण उत्क्रामति तदेव तच्छुष्यति' (बृह० १।३।१९)। 'तेन यदश्नाति यत्पिबति तेनेतरान्प्राणानवति' इति च प्राणनिमित्तां शरीरेन्द्रियपुष्टिं दर्शयति। 'कस्मिन्न्वहमुत्क्रान्त उत्क्रान्तो भविष्यामि कस्मिन्वा प्रतिष्ठिते प्रतिष्ठास्यामि' इति, 'स प्राणमसृजत' इति च प्राणनिमित्ते जीवस्योत्क्रान्तिप्रतिष्ठे दर्शयति ॥ ११ ॥

---

यहाँ अन्य विषय प्रसङ्गदोष नहीं है, क्योंकि प्राण अकरण है। प्राणका चक्षु आदिके समान विषय परिच्छेद-निश्चयसे करणत्व स्वीकार नहीं किया जाता। इतने मात्रसे इसका कार्यभाव नहीं है, क्योंकि श्रुति अन्य प्राणोंमें न होनेवाला मुख्य प्राणका विशेषकार्य प्राणसंवाद आदिमें दिखलाती है—'अथ ह प्राणा०' ( अनन्तर प्राणोंने अपनी श्रेष्ठताके लिए विवाद किया ) इसप्रकार आरम्भकर 'यस्मिन् व०' (प्रजापति—तुममेंसे जिसके उत्क्रान्त होनेपर शरीर अत्यन्त पापिष्ठ-सा दिखाई देने लगे वही तुममें श्रेष्ठ है ) ऐसा उपन्यास कर प्रत्येक वाक् आदिके उत्क्रमणसे केवल उसकी वृत्तिमात्र हीन पूर्वके समान जीवन दिखलाकर प्राणके उत्क्रमणकी इच्छा होनेपर वाक् आदिकी शैथल्यप्राप्ति और शरीरपात प्रसङ्गको दिखलाती हुई श्रुति प्राण निमित्तक शरीर और इन्द्रियोंकी स्थिति दिखलाती है। 'तान्वरिष्ठः प्राण उवाच०' ( उनसे मुख्यप्राणने कहा—मोहको मत प्राप्त हो, मैं ही अपनेको पाँच प्रकारसे विभक्तकर इस कार्य-करण संघातरूप शरीरको अवलम्बन कर धारण करता हूँ ) यह श्रुति भी इसी अर्थको कहती है। 'प्राणेन०' (इस निकृष्ट शरीर नामक गृहकी प्राणसे रक्षा करता हुआ) इसप्रकार यह श्रुति [ सुषुप्तिमें ] चक्षु आदिके सुप्त होनेपर प्राण निमित्तक शरीरकी रक्षा दिखलाती है। 'यस्मात्कस्माच्चाङ्गात्०' ( जिस किसी अङ्गसे प्राण उत्क्रमण करता है, वह ( रस ) उसी जगह सूख जाता है ) और 'तेन यदश्नाति०' ( उस प्राणद्वारा जीव जो खाता है और जो पीता है उससे अन्य प्राणोंका रक्षण करता है ) इसप्रकार श्रुति प्राण निमित्तक शरीर और इन्द्रियोंकी पुष्टि दिखलाती है। 'कस्मिन्न्वहमुत्क्रान्त०' ( किसके देहसे उत्क्रान्त होनेपर मैं उत्क्रान्त होऊँगा और किसके देहमें प्रतिष्ठित होनेपर मैं प्रतिष्ठित होऊँगा ) यह विचार कर 'स प्राणमसृजत०' ( उसने प्राणको उत्पन्न किया ) इसप्रकार श्रुति जीवकी उत्क्रान्ति और प्रतिष्ठा प्राण निमित्तक दिखलाती है ॥ ११ ॥

## सत्यानन्दी-दीपिका

क्ष 'यद्योगकरणं तत् सविषयं दृष्टम्' इस व्याप्तिका शरीरमें व्यभिचार है, क्योंकि शरीर एवं इन्द्रियोंका धारण और उत्क्रमण आदि प्राणके असाधारण कार्य हैं, अतः प्राणके निर्विषय होनेपर भी शरीर आदिके समान उसमें उपकरणत्व अवश्यंभावी है ॥ ११ ॥

## पञ्चवृत्तिर्मनोवद्व्यपदिश्यते ॥ १२ ॥

पदच्छेद—पञ्चवृत्तिः, मनोवत्, व्यपदिश्यते ।

सूत्रार्थ—प्राणको 'प्राणोऽपानो०' इत्यादि श्रुतिसे ( मनोवत् ) मनके समान ( पञ्चवृत्तिः ) पाँच वृत्तिवाला ( व्यपदिश्यते ) कहा जाता है ।

* इतश्चास्ति मुख्यस्य प्राणस्य वैशेषिकं कार्यम्, यत्कारणं पञ्चवृत्तिरयं व्यपदिश्यते श्रुतिषु—'प्राणोऽपानो व्यान उदानः समानः' ( बृह० १।५।३ ) इति । वृत्तिभेदश्चायं कार्यभेदापेक्षः । प्राणः प्राग्वृत्तिरुच्छ्वासादिकर्मा, अपानोऽर्वाग्वृत्तिर्निश्वासादिकर्मा, व्यानस्तयोः संधौ वर्तमानो वीर्यवत्कर्महेतुः, उदान ऊर्ध्ववृत्तिरुत्क्रान्त्यादिहेतुः, समानः समं सर्वेष्वङ्गेषु योऽन्नरसान्नयतीति, एवं पञ्चवृत्तिः प्राणो मनोवत् । यथा मनसः पञ्च वृत्तय एवं प्राणस्यापीत्यर्थः । श्रोत्रादिनिमित्ताः शब्दादिविषया मनसः पञ्च वृत्तयः प्रसिद्धाः, नतु कामः संकल्प इत्याद्याः परिपठिताः परिगृह्येरन्, पञ्चसंख्यातिरेकात् । नन्वत्रापि श्रोत्रादिनिरपेक्षा भूतभविष्यदादिविषयाऽपरा मनसो वृत्तिरस्तीति समानः पञ्चसंख्यातिरेकः । एवं तर्हि 'परमतमप्रतिषिद्धमनुमतं भवति' इति न्यायादिहापि योगशास्त्रप्रसिद्धा मनसः पञ्च वृत्तयः परिगृह्यन्ते—'प्रमाणविपर्ययविकल्पनिद्रास्मृतयः' ( पात० योग० सू० १।१।६ ) नाम । बहुवृत्तित्वमात्रेण वा मनः प्राणस्य निदर्शनमिति द्रष्टव्यम् । जीवोपकरणत्वमपि प्राणस्य पञ्चवृत्तित्वान्मनोवदिति योजयितव्यम् ॥१२॥

---

और इस हेतुसे भी मुख्यप्राणका विशेष कार्य है, क्योंकि 'प्राणोऽपानो०' ( प्राण, अपान, व्यान, उदान और समान ) इस प्रकार श्रुतियोंमें यह प्राण पाँच वृत्तिवाला कहा जाता है । प्राण-प्राग्वृत्ति-जिसका व्यापार बाहर उच्छ्वास आदि देहधारण कर्म है । अपान-अवगवृत्ति-जिसका व्यापार भीतर आकर्षण और निश्वास कर्म है । व्यान-इन दोनोंकी सन्धिमें वर्तमान होता हुआ वीर्यवान् कर्मका हेतु है । उदान ऊर्ध्व वृत्तिवाला और उत्क्रान्ति आदि (गति, आगति) का हेतु है । जो सब अङ्गोंमें समानरूपसे अन्नरसोंको ले जाता है वह समान है, इसप्रकार कार्यभेदकी अपेक्षा यह वृत्तिभेद है । ऐसे मनके समान प्राण भी पाँच वृत्तिवाला है । जैसे मनकी पाँच वृत्तियाँ है, वैसे प्राणकी भी पाँच वृत्तियाँ हैं, यह अर्थ है । श्रोत्र आदि निमित्तसे शब्द आदि विषयक मनकी पाँच-वृत्तियाँ प्रसिद्ध हैं । परन्तु 'कामः संकल्पः' इत्यादि श्रुतिमें पठित काम, संकल्प आदि वृत्तियोंका यहाँ ग्रहण नहीं करना चाहिए, क्योंकि उनके ग्रहणसे पाँच संख्यासे अधिक हो जायंगी । परन्तु यहाँ भी श्रोत्र आदि निरपेक्ष भूत और भविष्यत् आदि विषयक अन्य भी मनकी वृत्तियाँ हैं, इसप्रकार पाँच संख्यासे अधिकता समान है, यदि ऐसा हो तो 'पर मतसे अविरुद्ध अनुमत होता है' इस न्यायसे यहाँ भी योगशास्त्रमें प्रसिद्ध मनकी पाँच वृत्तियोंका ग्रहण किया जाता है—'प्रमाण०' (प्रमाण-प्रमिति, विपर्यय ( भ्रम ) विकल्प ( शशविषाणादिज्ञान ) निद्रा और स्मृति ) अथवा अनेक वृत्तिवाला होनेसे मन प्राणका दृष्टान्त है, ऐसा समझना चाहिए । अथवा 'प्राण भी जीवका उपकरण है पाँच वृत्तिवाला होनेसे मनके समान' ऐसी योजना करनी चाहिए ॥ १२ ॥

### सत्यानन्दी-दीपिका

* काम आदि वृत्तिके समान शब्द आदि विषयक मनकी वृत्तिरूप ज्ञानमें पञ्चत्व संख्याका नियम नहीं है, इससे प्राण और मनका उपमानोपमेय भाव नहीं हो सकता, इस अरुचिसे 'नन्वत्रापि' इत्यादिसे अन्य पक्षका ग्रहण किया गया है । 'प्रमाण०' यह उपमान योगमतको मानकर कहा गया है । परन्तु सिद्धान्तमें भ्रम और निद्रा ये अविद्याकी वृत्ति हैं मनकी नहीं । इस अरुचिसे सिद्धान्ती 'बहु-

( ६ श्रेष्ठाणुत्वाधिकरणम् । सू० १३ )

## अणुश्च ॥ १३ ॥

पदच्छेद—अणुः, च ।

सूत्रार्थ—मुख्य प्राण अणु-सूक्ष्म और परिच्छिन्न है ।

* अणुश्चायं मुख्यः प्राणः प्रत्येतव्यः, इतरप्राणवत् । अणुत्वं चेहापि सौक्ष्म्यपरिच्छेदौ, न परमाणुतुल्यत्वम्, पञ्चभिर्वृत्तिभिः कृत्स्नशरीरव्यापित्वात्, सूक्ष्मः प्राणः उत्क्रान्तौ पार्श्वस्थेनानुपलभ्यमानत्वात् परिच्छिन्नश्चोत्क्रान्तिगत्यागतिश्रुतिभ्यः । ननु विभुत्वमपि प्राणस्य समाम्नायते—'समः प्लुषिणा समो मशकेन समो नागेन सम एभिस्त्रिभिर्लोकैः समोऽनेन सर्वेण' ( बृह० १।३।२२ ) इत्येवमादिप्रदेशेषु । तदुच्यते—आधिदैविकेन समष्टिव्यष्टिरूपेण हैरण्यगर्भेण प्राणात्मनैवैतद्विभुत्वमाम्नायते, नाध्यात्मिकेन । अपि च समः प्लुषिणेत्यादिना साम्यवचनेन प्रतिप्राणिवर्तिनः प्राणस्य परिच्छेद एव प्रदर्श्यते तस्माददोषः ॥१३॥

( ७ ज्योतिराद्यधिकरणम् । सू० १४-१६ )

## ज्योतिराद्यधिष्ठानं तु तदामननात् ॥ १४ ॥

पदच्छेद—ज्योतिराद्यधिष्ठानम्, तु, तदामननात् ।

सूत्रार्थ—(तु) शब्द पूर्वपक्षके निरासार्थ है, (ज्योतिराद्यधिष्ठानम्) चक्षु आदि इन्द्रियोंकी आदित्य आदि देवताके अधीन चेष्टा होती है, ( तदामननात्) क्योंकि 'अग्निर्वाग्भूत्वा' इत्यादि श्रुतियाँ है ।

* ते पुनः प्रकृताः प्राणाः किं स्वमहिम्नैव स्वस्मै स्वस्मै कार्याय प्रभवन्त्याहोस्विद्देवताधिष्ठिताः प्रभवन्तीति विचार्यते—तत्र प्राप्तं तावत्—यथा स्वकार्यशक्तियोगात्स्वमहिम्नैव

---

और यह मुख्य प्राण अन्य प्राणोंके समान अणु-सूक्ष्म समझना चाहिए, यहाँ भी अणुत्व सूक्ष्म और परिच्छिन्न है, परमाणु तुल्य नहीं है । प्राण सूक्ष्म है, क्योंकि पाँच वृत्तियोंद्वारा सम्पूर्ण शरीरमें व्याप्त और उत्क्रान्तिके समयमें पार्श्वस्थ लोगोंसे उपलब्ध नहीं होता । परिच्छिन्न भी है, क्योंकि उत्क्रान्ति, गति और आगतिकी श्रुतियाँ हैं । परन्तु 'समः प्लुषिणा०' (पूतिका (मच्छरसे सूक्ष्म जन्तु) के समान, मच्छरके समान, हाथीके समान, इन तीन लोकोंके समान और इस सबके समान ) इत्यादि स्थलोंमें प्राणकी विभुत्व प्रतिपादिक श्रुति है । सिद्धान्ती—उसपर कहते हैं—आधिदैविक समष्टि-व्यष्टिरूप हिरण्यगर्भकी प्राणरूपसे ही यह विभुत्व श्रुति है, आध्यात्मिकरूपसे नहीं । और 'पूतिकाके समान' इत्यादि साम्य-वचनसे प्रत्येक प्राणीमें वर्ती प्राणको परिच्छिन्न ही दिखलाया जाता है, इसलिए दोष नहीं है ॥१३॥

क्या वे प्रकृत प्राण अपनी महिमासे ही अपने अपने कार्यके लिए समर्थ होते हैं, अथवा

### सत्यानन्दी-दीपिका

वृत्तित्वमात्रेण' आदिसे अपना मत अभिव्यक्त करते हैं । इस प्रकार प्राण और वायुकी भेद और अभेद श्रुतियोंमें कोई विरोध नहीं है ॥ १२ ॥

* गत अधिकरणमें प्राणकी उत्पत्ति और स्वरूप कहकर अब परिमाणको अतिदेशसे कहते हैं—'अणवश्च' इस सूत्रमें और 'प्राणाः सर्वे अनन्ताः' इस श्रुतिमें उपासनाके लिए इन्द्रियोंमें अनन्तता प्रतिपादित है और यहाँ प्राणका विभुत्व आधिदैविक है, इससे यहाँ पुनरुक्ति नहीं है । टीकाकार कहते हैं कि वहाँ प्रसङ्गसे सांख्यके आक्षेपका निराकरण है और यहाँ श्रुति विरोधका परिहार है, अतः पुनरुक्ति नहीं है । इसलिए सूक्ष्म और परिच्छिन्न श्रुतियोंका विभुत्व श्रुतिसे विरोध न होनेसे ब्रह्ममें समन्वय है ॥ १३ ॥

* गत अधिकरणमें प्राणमें आध्यात्मिक और आधिदैविक विभागसे अणुत्व और विभुत्वकी

प्राणाः प्रवर्तेरन्निति । अपि च देवताधिष्ठितानां प्राणानां प्रवृत्तावभ्युपगम्यमानायां तासामेवाधिष्ठात्रीणां देवतानां भोक्तृत्वप्रसङ्गाच्छारीरस्य भोक्तृत्वं प्रलीयेत, अतः स्वमहिम्नैवैषां प्रवृत्तिरिति । एवं प्राप्त इदमुच्यते-'ज्योतिराद्यधिष्ठानं तु' इति। तुशब्देन पूर्वपक्षो व्यावर्त्यते । ज्योतिरादिभिरग्न्याद्यभिमानिनीभिर्देवताभिरधिष्ठितं वागादि करणजातं स्वकार्येषु प्रवर्तत इति प्रतिजानीते। हेतुं व्याचष्टे—तदामननादिति। तथाह्यामनन्ति—'अग्निर्वाग्भूत्वा मुखं प्राविशत्' ( ऐत० २।४ ) इत्यादि । अग्नेश्चायं वाग्भावो मुखप्रवेशश्च देवतात्मनाऽधिष्ठातृत्वमङ्गीकृत्योच्यते । नहि देवतासंबन्धं प्रत्याख्यायाग्नेर्वाचि मुखे वा कश्चिद्विशेषसंबन्धो दृश्यते । तथा 'वायुः प्राणो भूत्वा नासिके प्राविशत्' (ऐत० २।४) इत्येवमाद्यपि योजयितव्यम् । ❀तथाऽन्यत्रापि 'वागेव ब्रह्मणश्चतुर्थः पादः सोऽग्निना ज्योतिषा भाति च तपति च' ( छा० ३।१८।३ ) इत्येवमादिना वागादीनामग्न्यादिज्योतिष्ट्वादिवचनेनैतमेवार्थं द्रढयति । 'स वै वाचमेव प्रथमामत्यवहत्सा यदा मृत्युमत्यमुच्यत सोऽग्निरभवत्'

---

देवतासे अधिष्ठित होते हुए समर्थ होते हैं ? इसपर विचार किया जाता है । पूर्वपक्षी—अपनी कार्यशक्तिके योगसे अपनी महिमासे ही प्राण अपने कार्यमें प्रवृत्त होने चाहिए, क्योंकि देवतासे अधिष्ठित प्राणोंकी प्रवृत्ति स्वीकार करनेपर उन अधिष्ठातृ देवताओंको ही भोक्तृत्व प्रसंग होनेसे शरीरका भोक्तृत्व लुप्त हो जायगा, अतः अपनी महिमासे ही इनकी प्रवृत्ति है, ऐसा यहाँ प्राप्त होता है । सिद्धान्ती—ऐसा प्राप्त होनेपर यह कहा जाता है—'ज्योतिराद्यधिष्ठानं तु' 'तु' शब्दसे पूर्वपक्षकी व्यावृत्ति की जाती है । ज्योति आदिसे-अग्नि आदि अभिमानी देवताओंसे अधिष्ठित वाणी आदि करण समुदाय अपने कार्यमें प्रवृत्त होता है, ऐसी प्रतिज्ञा करते हैं । हेतुका व्याख्यान करते हैं—'तदामननात्' इसीप्रकार 'अग्निर्वाग्भूत्वा०' ( अग्नि वाक् होकर मुखमें प्रविष्ट हुई ) इत्यादि श्रुतियाँ हैं । अग्निका यह वाक्भाव और मुख प्रवेश देवतारूपसे अधिष्ठातृत्व अङ्गीकारकर कहा जाता है, क्योंकि देवतासम्बन्धका निराकरणकर अग्निका वाणी अथवा मुखमें कोई विशेष सम्बन्ध दिखाई नहीं देता । इसी प्रकार 'वायुः प्राणो भूत्वा०' (वायु प्राण होकर नासिकामें प्रविष्ट हुआ) इत्यादिकी भी योजना करनी चाहिए । इसीप्रकार अन्यत्र भी 'वागेव०' ( वाणी ही ब्रह्मका चतुर्थ पाद है, वह अग्निरूप ज्योतिसे दीप्त होता है और अपना कार्य करता है ) इत्यादिसे वाक् आदि-अग्नि आदि ज्योति हैं, आदि वचनसे इसी अर्थको श्रुति दृढ करती है । 'स ह वै०' ( उस प्रसिद्ध प्राणने उद्गीथ कर्ममें प्रधान वाग्देवताको मृत्यु ( अनृत वदन आदि ) से पार पहुँचाया । वह वाक् जब मृत्युसे मुक्त हुई तब वह अग्नि हो

## सत्यानन्दी-दीपिका

व्यवस्था की गई है । अब प्रसंगसंगतिसे आध्यात्मिक प्राणोंकी स्वकार्यमें प्रवृत्ति अधिदैविक देवताके अधीन है अथवा नहीं ? ऐसा सन्देह होता है, क्योंकि 'वाचा हि नामान्यभिवदति चक्षुषा रूपाणि पश्यति' (वाणीसे नामोंका उच्चारण करता है और चक्षुसे रूप देखता है) इसप्रकार अन्वय-व्यतिरेक युक्त तृतीया श्रुतिसे वाग् आदिकी स्वतन्त्र प्रवृत्तिका निषेध है, और 'अग्निर्वाग्भूत्वा' इत्यादि श्रुति अचेतन अग्नि आदिका उपादान कारण कहती है । परन्तु अग्नि आदि उनके अधिष्ठातृ देवता हैं, ऐसा नहीं कहती । किञ्च जीव अधिष्ठाता विद्यमान है, और अनेक देवताओंके अधिष्ठाता होनेपर परस्पर विरोधसे कोई भी कार्य नहीं हो सकेगा । इसलिए इन्द्रियाँ अपने कार्यमें स्वतन्त्र प्रवृत्त होती हैं । सिद्धान्ती—'एवं प्राप्त इदमुच्यते' आदिसे सिद्धान्त कहते हैं ।

❀ 'मृतस्याग्निं वागप्येति वातं प्राणः चक्षुरादित्यम्' (मृत पुरुषकी वाणी अग्निमें, प्राण वायुमें और चक्षु आदित्यमें लीन होते हैं) इत्यादि श्रुति भी अग्नि आदि और वाक् आदिका अधिष्ठात्रधिष्ठेय-

(बृह० १।३।१२) इति चैवमादिना वागादीनामग्न्यादिभावापत्तिवचनेनैतमेवार्थं द्योतयति। सर्वत्र चाध्यात्माधिदैवताविभागेन वागाद्यग्न्याद्यनुक्रमणमनयैव प्रत्यासत्त्या भवति। स्मृतावपि—'वागध्यात्ममिति प्राहुर्ब्राह्मणास्तत्त्वदर्शिनः। वक्तव्यमधिभूतं तु वह्निस्तत्राधिदैवतम्।' इत्यादिना वागादीनामग्न्यादिदेवताधिष्ठितत्वं सप्रपञ्चं दर्शितम्। यदुक्तम्—स्वकार्यशक्तियोगात्स्वमहिम्नैव प्राणाः प्रवर्तेरन्निति, तदयुक्तम्, शक्तानामपि शकटादीनामनडुहाद्यधिष्ठितानां प्रवृत्तिदर्शनात्। उभयथोपपत्तौ चागमाद्वागादीनां देवताधिष्ठितत्वमेव निश्चीयते ॥ १४ ॥

यदप्युक्तम्—देवतानामेवाधिष्ठात्रीणां भोक्तृत्वप्रसङ्गो न शारीरस्येति, तत्परिह्रियते—

## प्राणवता शब्दात् ॥१५॥

पदच्छेद—प्राणवता, शब्दात्।

सूत्रार्थ—( प्राणवता ) प्राणवान् जीवके साथ इन्द्रियोंका स्वस्वामिभाव सम्बन्ध है, अतः वही भोक्ता है, ( शब्दात् ) क्योंकि इसमें 'स चाक्षुषः पुरुषो' इत्यादि श्रुति है।

* सतीष्वपि प्राणानामधिष्ठात्रीषु देवतासु प्राणवता कार्यकरणसंघातस्वामिना शारीरेणैवैषां प्राणानां संबन्धः श्रुतेरवगम्यते। तथा हि श्रुतिः—'अथ यत्रैतदाकाशमनुविषण्णं चक्षुः स चाक्षुषः पुरुषो दर्शनाय चक्षुरथ यो वेदेदं जिघ्राणीति स आत्मा गन्धाय घ्राणम्' (छा० ८।१२।४) इत्येवंजातीयका शारीरेणैव प्राणानां संबन्धं श्रावयति। अपि चानेकत्वात्प्रति-

---

गई ) इत्यादिसे श्रुति वाक् आदिमें अग्नि आदि भावकी प्राप्ति वचनसे इसी अर्थको सूचित करती है। और सर्वत्र अध्यात्म और अधिदैवत विभागसे वाणी आदि और अग्नि आदि अनुक्रमण इस प्रत्यासत्ति-सम्बन्धसे होता है। स्मृतिमें भी 'वागध्यात्ममिति०' ( तत्त्वदर्शी ब्राह्मण वाणीको आध्यात्म कहते हैं, वक्तव्यको अधिभूत और उसमें अग्निको अधिदैवत कहते हैं ) इत्यादिसे वाक् आदि अग्नि आदि देवताओंसे अधिष्ठित हैं, ऐसा विस्तार पूर्वक दिखलाया गया है। जो यह कहा गया है कि प्राण अपनी कार्यशक्तिके योगसे अपनी ही महिमासे प्रवृत्त होंगे, यह अयुक्त है, क्योंकि रथ आदि समर्थ होनेपर भी बैल आदिसे अधिष्ठित होकर उनमें प्रवृत्ति देखी जाती है। दोनों प्रकारसे उपपत्ति होनेपर भी आगमसे वाणी आदिमें देवता अधिष्ठितत्व निश्चित होता है ॥ १४ ॥

जो यह कहा गया है कि अधिष्ठातृ देवताओंको भोक्तृत्व प्रसंग होगा और जीवको नहीं, उसका परिहार किया जाता है—

प्राणोंके अधिष्ठातृ देवताओंके होनेपर भी प्राणवान् कार्यकरण संघातके स्वामी जीवसे ही इन प्राणोंका सम्बन्ध श्रुतिसे अवगत होता है। जैसे कि 'अथ यत्रैतद०' ( जिसमें यह चक्षु कृष्णतारासे उपलक्षित आकाश अनुगत है वह चाक्षुष पुरुष है, उसे रूप ग्रहणके लिए नेत्रेन्द्रिय है, जो ऐसा जानता है कि मैं इसे सूँघूँ वह आत्मा है, उसे गन्ध ग्रहणके लिए घ्राण है ) इसप्रकारकी श्रुति

### सत्यानन्दी-दीपिका

भाव सम्बन्ध दिखलाती है। रथ आदिकी बैल आदिसे अधिष्ठित होनेपर प्रवृत्ति देखी जाती है और दूध आदि अधिष्ठित न होते हुए भी दधि आदि रूपसे प्रवृत्त होते देखे जाते हैं। यद्यपि इस तरह दोनों प्रकारसे प्रवृत्तिका संभव है, तो भी वाणी आदि श्रुति प्रमाणसे अग्नि आदि देवताओंसे अधिष्ठित होकर ही अपने कार्यमें प्रवृत्त होते हैं ॥ १४ ॥

* 'जिस मैंने रूपको देखा वही मैं श्रवण करता हूँ' इत्यादि प्रतिसंधानसे इस शरीरमें एक ही जीवात्मा भोक्ता सिद्ध होता है। इसप्रकारका अनुसंधान अनेक भोक्ता माननेपर सिद्ध नहीं हो सकता, इसलिए इस शरीरमें अनेक देवता भोक्ता नहीं हो सकते ॥ १५ ॥

करणमधिष्ठात्रीणां देवतानां न भोक्तृत्वमस्मिञ्शरीरेऽवकल्पते। एको ह्ययमस्मिञ्शरीरे शारीरो भोक्ता प्रतिसंधानादिसंभवादवगम्यते ॥ १५ ॥

## तस्य च नित्यत्वात् ॥१६॥

पदच्छेद—तस्य, च, नित्यत्वात् ।

सूत्रार्थ—( च ) और ( तस्य ) जीवके स्वकर्मोपार्जित शरीरमें कर्तृत्व और भोक्तृत्व द्वारा ( नित्यत्वात् ) नित्य होनेसे देवताओंमें भोक्तृत्व नहीं है ।

* तस्य च शारीरस्यास्मिञ्शरीरे भोक्तृत्वेन नित्यत्वं पुण्यपापोपलेपसंभवात्सुखदुःखोपभोगसंभवाच्च, न देवतानाम्। ता हि परस्मिन्नैश्वर्ये पदेऽवतिष्ठमाना न हीनेऽस्मिञ्शरीरे भोक्तृत्वं प्रतिलब्धुमर्हन्ति। श्रुतिश्च भवति—'पुण्यमेवामुं गच्छति न ह वै देवान्पापं गच्छति' (बृह० १।५।२०) इति। शारीरेणैव च नित्यः प्राणानां संबन्ध उत्क्रान्त्यादिषु तदनुवृत्तिदर्शनात् 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति प्राणमनूत्क्रामन्तं सर्वे प्राणा अनुत्क्रामन्ति' ( बृह० ४।४।२ ) इत्यादिश्रुतिभ्यः। तस्मात्सतीष्वपि करणानां नियन्त्रीषु देवतासु न शारीरस्य भोक्तृत्वमपगच्छति। करणपक्षस्यैव हि देवता, न भोक्तृपक्षस्येति ॥ १६ ॥

( ८ इन्द्रियाधिकरणम्। सू० १७-१९ )

## त इन्द्रियाणि तद्व्यपदेशादन्यत्र श्रेष्ठात् ॥१७॥

पदच्छेद—ते, इन्द्रियाणि, तद्व्यपदेशात्, अन्यत्र, श्रेष्ठात् ।

सूत्रार्थ—( श्रेष्ठात् ) मुख्यप्राणसे ( अन्यत्र ) अन्य (ते) वागादि (इन्द्रियाणि) इन्द्रिय शब्दसे कहे जाते हैं, (तद्व्यपदेशात्) क्योंकि 'एतस्माज्जायते प्राणः' इत्यादि श्रुतिसे उसका भेदसे व्यपदेश है ।

मुख्यश्चैक इतरे चैकादश प्राणा अनुक्रान्ताः। तत्रेदमपरं संदिह्यते—किं मुख्यस्यैव

---

जीवात्माके साथ ही प्राणोंका सम्बन्ध श्रवण कराती है। और प्रत्येक करणमें अधिष्ठातृ देवताओंके अनेक होनेसे उनका इस शरीरमें भोक्तृत्व नहीं हो सकता, क्योंकि इस शरीरमें यह एक ही जीवात्मा प्रतिसंधान आदिके संभवसे भोक्ता अवगत होता है ॥ १५ ॥

और वह जीव इस शरीरमें भोक्तारूपसे नित्य है, क्योंकि उसमें पुण्य पापके सम्बन्धका संभव है और सुख, दुःखके उपभोगका संभव है, किन्तु देवताओंमें नहीं, कारणकि वे परम ऐश्वर्य पदपर अवतिष्ठमान होते हुए इस दूषित शरीरमें भोक्तृत्व प्राप्त करनेके लिए योग्य नहीं हैं 'पुण्यमेवामु०' ( प्राजापत्य पदमें स्थित देवताओंको पुण्यही प्राप्त होता है पाप प्राप्त नहीं होता ) यह श्रुति है। और जीवात्माके साथ प्राणोंका नित्य सम्बन्ध है, क्योंकि 'तमुत्क्रामन्तं०' ( उसके उत्क्रान्त होनेके अनन्तर प्राण उत्क्रमण करता है, प्राणके उत्क्रान्त होनेके अनन्तर उसके पीछे सब प्राण उत्क्रमण करते हैं) इत्यादि श्रुतियोंसे उत्क्रान्ति आदिमें उनकी अनुवृत्ति देखी जाती है। इसलिए इन्द्रियोंके नियामक देवताओंके होने पर भी जीवका भोक्तृत्व हटता नहीं, क्योंकि करणपक्षके ही देवता हैं भोक्तृपक्षके नहीं हैं ॥ १६ ॥

और मुख्य प्राण एक और अन्य एकादश प्राण अनुक्रान्त हैं। उन एकादश प्राणोंके विषयमें

### सत्यानन्दी-दीपिका

* अदृष्टद्वारा जीव इन्द्रियोंका अधिष्ठाता है, इसलिए रथ स्वामीके समान भोक्ता है, देवता तो प्रकाशके समान इन्द्रियोंके उपकारक होनेसे सारथीके समान अधिष्ठाता हैं, इससे देवता करणपक्षके हैं और जीव भोक्तृपक्षका है। 'चक्षुषा हि रूपाणि पश्यति' यह श्रुति साधनमात्रका प्रतिपादन करती है, इसलिए इन श्रुतियोंका 'अग्निर्वाग्भूत्वा' इत्यादि देवताधिष्ठात्री श्रुतिके साथ विरोध नहीं है ॥ १६ ॥

प्राणस्य वृत्तिभेदा इतरे प्राणा आहोस्वित्तत्त्वान्तराणीति । किं तावत्प्राप्तम् ? मुख्यस्यैवेतरे वृत्तिभेदा इति । कुतः ? श्रुतेः । तथा हि श्रुतिर्मुख्यमितरांश्च प्राणान्संनिधाप्य मुख्यात्मतामितरेषां ख्यापयति—'हन्ताऽस्यैव सर्वे रूपमसामेति त एतस्यैव सर्वे रूपमभवन्' (बृह० १।५।२१) इति । प्राणैकशब्दत्वाच्चैकत्वाध्यवसायः । इतरथा ह्यन्याय्यमनेकार्थत्वं प्राणशब्दस्य प्रसज्येत, एकत्र वा मुख्यत्वमितरत्र वा लाक्षणिकत्वमापद्येत । तस्माद्यथैकस्यैव प्राणस्य प्राणाद्याः पञ्च वृत्तय एवं वागाद्या अप्येकादशेति । एवं प्राप्ते ब्रूमः—तत्त्वान्तराण्येव प्राणाद्वागादीनीति । कुतः ? व्यपदेशभेदात् । कोऽयं व्यपदेशभेदः ? ते प्रकृताः प्राणाः, श्रेष्ठं वर्जयित्वाऽवशिष्टा एकादशेन्द्रियाणीत्युच्यन्ते । श्रुतावेवं व्यपदेशदर्शनात् । 'एतस्माज्जायते प्राणो मनः सर्वेन्द्रियाणि च' ( मु० २।१।३ ) इति ह्येवंजातीयकेषु प्रदेशेषु पृथक्प्राणो व्यपदिश्यते, पृथक्चेन्द्रियाणि । ननु मनसोऽप्येवं सति वर्जनमिन्द्रियत्वेन प्राणवत्स्यात्, 'मनः सर्वेन्द्रियाणि च' इति पृथग्व्यपदेशदर्शनात् । सत्यमेतत्—स्मृतौ त्वेकादशेन्द्रियाणीति मनोऽपीन्द्रियत्वेन श्रोत्रादिवत्संगृह्यते, प्राणस्य त्विन्द्रियत्वं न श्रुतौ स्मृतौ वा प्रसिद्धमस्ति । व्यपदेशभेदश्चायं तत्त्वभेदपक्ष उपपद्यते । तत्त्वैकत्वे तु स एवैकः सन्प्राण इन्द्रियव्यपदेशं लभते न लभते चेति विप्रतिषिद्धम् । तस्मात्तत्त्वान्तरभूता मुख्यादितरे ॥ १७ ॥

कुतश्च तत्त्वान्तरभूताः ?

## भेदश्रुतेः ॥ १८ ॥

सूत्रार्थ—'अथ हेममासन्यं प्राणमूचुः' इत्यादि श्रुतिमें प्राणका इन्द्रियोंसे पृथक् श्रवण है, अतः वागादि इन्द्रियाँ प्राणसे पृथक् तत्त्व हैं ।

---

यह दूसरा सन्देह किया जाता है कि क्या अन्य प्राण मुख्यप्राणके ही वृत्तिभेद हैं अथवा अन्य तत्त्व हैं ? तो क्या प्राप्त हुआ ? पूर्वपक्षी—अन्य प्राण मुख्यप्राणके ही वृत्तिभेद हैं, किससे ? श्रुतिसे । जैसे कि 'हन्तास्यैव०' ( अच्छा, हम सब इसी प्राणके रूप हो जायँ—ऐसा निश्चयकर वे वागादि सब इसीके रूप हो गये ) यह श्रुति मुख्य और अन्य प्राणोंको एक दूसरेके समीप स्थापित कर अन्य प्राणोंका मुख्यप्राणरूपत्व स्थापन करती है । इस प्रकार उन सबको उद्देश्य कर 'प्राण' इस एक शब्दका प्रयोग होनेसे उनके एकत्वका निश्चय होता है । अन्यथा प्राणशब्दको अनेकार्थत्व अन्याय ( वाक्यभेद ) प्रसक्त होगा अथवा एकमें मुख्यत्व और अन्यमें लाक्षणिकत्व प्रसक्त होगा । इसलिए जैसे एक ही प्राणकी प्राण आदि पाँच वृत्तियाँ हैं वैसे ही वाक् आदि एकादश भी प्राणकी ही वृत्तियाँ हैं । सिद्धान्ती—ऐसा प्राप्त होनेपर हम कहते हैं—वाक् आदि मुख्यप्राणसे अन्य ही तत्त्व हैं । किससे ? व्यपदेशके भेदसे । यह व्यपदेश भेद क्या है ? श्रेष्ठको ( प्राणको ) छोड़कर वे अवशिष्ट प्रकृत प्राण एकादश इन्द्रियाँ हैं, ऐसे कहे जाते हैं, क्योंकि श्रुतिमें ही ऐसा व्यपदेश भेद देखा जाता है । 'एतस्माज्जायते प्राणो०' ( उससे प्राण, मन और सब इन्द्रियाँ उत्पन्न होती हैं ) इस प्रकारके श्रुतिवाक्योंमें प्राणका पृथक् व्यपदेश किया जाता है और इन्द्रियोंका पृथक् । परन्तु ऐसा होनेपर मन भी प्राणके समान इन्द्रिय नहीं होना चाहिए । क्योंकि 'मनः सर्वेन्द्रियाणि च' इस प्रकार पृथक् व्यपदेश देखनेमें आता है । यह ठीक है, किन्तु स्मृतिमें तो 'एकादशेन्द्रियाणि' इससे मनका भी श्रोत्र आदिके समान इन्द्रियरूपसे संग्रह किया जाता है । परन्तु प्राण इन्द्रिय है, ऐसा श्रुति और स्मृतिमें प्रसिद्ध नहीं है । यह व्यपदेशभेद तत्त्वभेद पक्षमें उपपन्न होता है । तत्त्व ( पदार्थ ) के एक होनेपर तो 'वह प्राण एक होता हुआ इन्द्रिय व्यपदेशको प्राप्त होता है नहीं होता है' ऐसा विरुद्ध है । इसलिए अन्य-वागादि इन्द्रियाँ मुख्यप्राणसे अन्य तत्त्वभूत हैं ॥ १७ ॥ और वागादि इन्द्रिय तत्त्वान्तरभूत क्यों हैं ?

भोगसद्भावं दर्शयति–'स सोमलोके विभूतिमनुभूय पुनरावर्तते (प्र० ५।४) इति। तथान्यदपि श्रुत्यन्तरम् 'अथ ये शतं पितॄणां जितलोकानामानन्दाः स एको गन्धर्वलोके आनन्दोऽथ ये शतं गन्धर्वलोक आनन्दाः स एकः कर्मदेवानामानन्दो ये कर्मणा देवत्वमभिसंपद्यन्ते' ( बृह० ४।३।३३ ) इतीष्टादिकारिणां देवैः सह संवसतां भोगप्राप्तिं दर्शयति। एवं भाक्तत्वादन्नभाववचनस्येष्टादिकारिणोऽत्र जीवा रंहन्तीति प्रतीयते। तस्माद्रंहति संपरिष्वक्त इति युक्तमेवोक्तम् ॥ ७ ॥

( २ कृतात्ययाधिकरणम्। सू० ८-११ )

## कृतात्ययेऽनुशयवान्दृष्टस्मृतिभ्यां यथेतमनेवं च ॥ ८ ॥

पदच्छेद—कृतात्यये, अनुशयवान्, दृष्टस्मृतिभ्याम्, यथेतम्, अनेवम्, च।

सूत्रार्थ—( कृतात्यये ) कर्मोंके उपभोगके अनन्तर ( अनुशयवान् ) उन कर्मोंसे अतिरिक्त कर्म युक्त होकर जीव इस लोकमें आता है, ( दृष्टस्मृतिभ्याम् ) क्योंकि 'तद्य इह रमणीयचरणा' और 'प्रेत्य कर्मफलमनुभूय' इत्यादि श्रुति और स्मृति हैं। और ( यथेतम् ) जिस धूम आदि मार्गसे वे गये थे उससे अथवा (अनेवम् च) उससे विपरीत वक्ष्यमाण अभ्र आदि मार्गद्वारा इस लोकमें आते हैं।

* इष्टादिकारिणां धूमादिना वर्त्मना चन्द्रमण्डलमधिरूढानां भुक्तभोगानां ततः प्रत्यवरोह आम्नायते–'तस्मिन्यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतम्' ( छा० ५।१०।५ ) इत्यारभ्य यावत् 'रमणीयचरणा ब्राह्मणादियोनिमापद्यन्ते कपूयचरणाः श्वादियोनि' मिति। तत्रेदं विचार्यते—किं निरनुशया भुक्तकृत्स्नकर्माणोऽवरोहन्त्याहोस्वित्सानुशया इति। किं तावत्प्राप्तम्? निरनुशया इति, कुतः? यावत्संपातमिति विशेषणात्। संपातशब्देनात्र कर्माशय उच्यते—संपतन्त्यनेनास्माल्लोकादमुं लोकं फलोपभोगायेति।

---

गुणवादसे कहा गया है। यहाँ पञ्चाग्नि विद्याका ही विधान करना अभीष्ट है, क्योंकि वाक्यका तात्पर्य ऐसा ही अवगत होता है। जैसे कि 'स सोमलोके०' ( सोम लोकमें विभूतिका अनुभवकर वह पुनः लौट आता है ) यह दूसरी श्रुति चन्द्रमण्डलमें भोगका सद्भाव दिखलाती है। उसीप्रकार 'अथ ये शतं०' ( जो पितृलोकको जीतनेवाले पितरोंके सौ आनन्द हैं वह गन्धर्व लोकका एक आनन्द है, तथा जो गन्धर्व लोकके सौ आनन्द हैं, वह कर्म देवोंका, जो कि कर्मोंके द्वारा देवत्वको प्राप्त होते हैं, एक आनन्द है ) वह दूसरी श्रुति भी देवोंके साथ वास करनेवाले इष्ट आदि कारियोंकी भोग प्राप्ति दिखलाती है। इसप्रकार अन्नभाव वचन गौण होनेसे यहाँ इष्ट आदि कारी जीव जाते हैं, ऐसा प्रतीत होता है। इसलिए 'रंहति संपरिष्वक्तः' ( जीव परिवेष्टित जाता है ) यह ठीक ही कहा गया है ॥ ७ ॥

धूम आदि मार्गद्वारा चन्द्रमण्डलमें आरूढ इष्ट आदि कारी भुक्त भोगियोंका वहाँसे प्रत्यावरोहण श्रुतिमें कहा गया है—'तस्मिन्यावत्०' ( वहाँ कर्मोंका क्षय होनेतक रहकर वे पुनः इसी मार्गसे जिस प्रकार गये थे उसी प्रकार लौटते हैं ) यहाँसे आरम्भकर 'रमणीय आचरणवाले ब्राह्मण आदि योनिको प्राप्त होते हैं और पाप आचरणवाले श्वान आदि योनिको प्राप्त होते हैं' यहाँ तक। उसमें यह विचार किया जाता है कि जिन्होंने सम्पूर्ण कर्मोंका उपभोग कर लिया है, वे अनुशय ( कर्म ) रहित अवरोहण करते हैं अथवा अनुशय सहित? तब क्या प्राप्त होता है? पूर्वपक्षी—अनुशय रहित अवरोहण करते हैं, किससे? इससे कि 'यावत्संपातम्' (संपात पर्यन्त) ऐसा विशेषण है। यहाँ संपातशब्दसे कर्माशय कहा जाता है, क्योंकि इस लोकसे उस लोकमें कर्मफलके उपभोगके लिए इस कर्मसे जाते

### सत्यानन्दी-दीपिका

* अब गतिके अनन्तर होनेवाली आगतिका 'कृतात्यये' इत्यादिसे निरूपण किया जाता है। जो यह कहा गया है कि जलसे परिवेष्टित होकर जीव जाता है, वह युक्त नहीं है, क्योंकि स्वर्गसे अव-

यावत्संपातमुषित्वेति च कृत्स्नस्य तस्य कृतस्य तत्रैव भुक्ततां दर्शयति। 'तेषां यदा तत्पर्यवैति' ( बृह० ६।२।१६ ) इति च श्रुत्यन्तरेणैष एवार्थः प्रदर्श्यते। स्यादेतत्—यावदमुष्मिंल्लोक उपभोक्तव्यं कर्म तावदुपभङ्क्त इति कल्पयिष्यामीति। नैवं कल्पयितुं शक्यते, यत्किंचेत्यन्यत्र परामर्शात्। 'प्राप्यान्तं कर्मणस्तस्य यत्किंचेह करोत्ययम्। तस्माल्लोकात्पुनरेत्यस्मै लोकाय कर्मणे' ( बृह० ४।४।६ ) इति ह्यपरा श्रुतिर्यत्किंचेत्यविशेषपरामर्शेन कृत्स्नस्येह कृतस्य कर्मणस्तत्र क्षयिततां दर्शयति। * अपि च प्रायणमनारब्धफलस्य कर्मणोऽभिव्यञ्जकम्। प्राक्प्रायणादारब्धफलेन कर्मणा प्रतिबद्धस्याभिव्यक्त्यनुपपत्तेः। तच्चाविशेषाद्यावत्किंचिदनारब्धफलं तस्य सर्वस्याभिव्यञ्जकम्। नहि साधारणे निमित्ते नैमित्तिकमसाधारणं भवितुमर्हति, न ह्यविशिष्टे प्रदीपसंनिधौ घटोऽभिव्यज्यते न पट इत्युपपद्यते। तस्मान्निरनुशया अवरोहन्तीत्येवं प्राप्ते ब्रूमः—कृतात्ययेऽनुशयवानिति। येन कर्मवृन्देन चन्द्रमसमारूढाः फलोपभोगाय तस्मिन्नुपभोगेन क्षयिते तेषां यदम्मयं शरीरं चन्द्रमस्युपभोगायारब्धं तदुपभोगक्षयदर्शनशोकाग्निसंपर्कात्प्रविलीयते। सवितृकिरणसंपर्कादिव हिमकरकाः हुतभुगर्चिःसंपर्कादिव च घृतकाठिन्यम्। ततः कृता-

---

हैं। 'यावत्संपातमुषित्वा' ( संपात पर्यन्त रहकर ) यह श्रुति उसके सम्पूर्ण कृत कर्मोंकी वहीं भुक्तता दिखलाती है। 'तेषां यदा०' ( जब उनके कर्म क्षीण हो जाते हैं तो वे इस आकाशको ही प्राप्त होते हैं ) इस अन्य श्रुतिसे भी यही अर्थ दिखलाया जाता है। ऐसा हो, परन्तु जब तक उस लोकमें उपभोग योग्य कर्म हैं तब तक जीव उनका उपभोग करेगा, मैं ऐसी कल्पना करूँगा। तो ऐसी कल्पना नहीं की जा सकती, क्योंकि 'यत्किञ्च०' ( जो कुछ ) ऐसा अन्यत्र परामर्श है। 'प्राप्यान्तं०' ( इस लोकमें यह जो कुछ करता है, उस कर्मका फल प्राप्त कर उस लोकसे कर्म करनेके लिए पुनः इस लोकमें आ जाता है ) यह दूसरी श्रुति 'यत्किञ्च' इस अविशेष (सम्पूर्ण) परामर्शसे यहाँ किये गये समस्त कर्मोंका वहाँ क्षयित्व दिखलाती है, और मरण भी अनारब्ध फलवाले कर्मोंका अभिव्यञ्जक है, क्योंकि मरणसे पूर्व आरब्ध फलवाले कर्मसे प्रतिबद्ध कर्मकी फलके लिए अभिव्यक्ति नहीं हो सकती। और विशेष न होनेसे वह मरण जिस किस कर्मका फल आरम्भ नहीं हुआ है उस समस्त कर्मोंका अभिव्यञ्जक है, कारणकि साधारण निमित्तके होनेपर नैमित्तिक असाधारण नहीं हो सकता। प्रदीपकी अविशिष्ट ( सामान्य ) संनिधिमें घट अभिव्यक्त होता और पट नहीं, यह उपपन्न नहीं है। इससे जीव अनुशय रहित अवरोहण करते हैं।

सिद्धान्ती—ऐसा प्राप्त होनेपर हम कहते हैं—'कृतात्ययेऽनुशयवान्' ( कर्मके क्षय होनेपर अनुशयवान् ) जिस कर्म समूहसे फलके उपभोगके लिए चन्द्रमण्डलमें आरूढ हुए उस कर्म समुदायका उपभोगद्वारा क्षय होनेपर उनका उपभोगके लिए चन्द्र-मण्डलमें जो जलमय शरीर आरब्ध हुआ है, वह उपभोगके क्षयदर्शनसे उत्पन्न शोकाग्निके सम्पर्कसे विलीन हो जाता है। जैसे सूर्य किरणोंके सम्पर्कसे हिम और करक, जैसे अग्निकी ज्वालाओंके सम्पर्कसे घृतका काठिन्य विलीन हो जाता है। इसलिए 'कृतात्यये०' किये गये इष्ट आदि कर्मफलके उपभोगसे उपक्षय होनेपर अनुशय सहित जीव

## सत्यानन्दी-दीपिका

रोहण करनेवालोंके कर्मका अभाव होनेसे तत्सम्बन्धित जलका भी अभाव है, इस प्रकार आक्षेपसंगतिसे पूर्वपक्ष है।

* इसलिए स्वर्ग आदि लोकोंमें सम्पूर्ण कर्मोंके उपभोगद्वारा क्षय होनेपर अनुशय रहित केवल आचरणद्वारा इस लोकमें जीवोंका अवरोहण होता है। इससे आगति अनियमित सिद्ध होती है। पूर्वपक्षमें कर्मका अभाव होनेसे वैराग्यकी दृढता भी नहीं हो सकती। सिद्धान्तमें कर्मकी सत्ता होनेसे आगतिमें नियम है, इससे वैराग्यकी दृढता है।

त्यये कृतस्येष्टादेः कर्मणः फलोपभोगेनोपक्षये सति सानुशया एवेममवरोहन्ति। केन हेतुना? दृष्टस्मृतिभ्यामित्याह। तथा हि प्रत्यक्षा श्रुतिः सानुशयानामवरोहं दर्शयति–'तद्य इह रमणीयचरणा अभ्याशो ह यत्ते रमणीयां योनिमापद्येरन्ब्राह्मणयोनिं वा क्षत्रिययोनिं वा वैश्ययोनिं वाऽथ य इह कपूयचरणा अभ्याशो ह यत्ते कपूयां योनिमापद्येरञ्श्वयोनिं वा सूकरयोनिं वा चण्डालयोनिं वा' ( छा० ५।१०।७ ) इति चरणशब्देनानुशयः सूच्यत इति वर्णयिष्यति। * दृष्टश्चायं जन्मनैव प्रतिप्राण्युच्चावचरूप उपभोगः प्रविभज्यमान आकस्मिकत्वासंभवादनुशयसद्भावं सूचयति, अभ्युदयप्रत्यवाययोः सुकृतदुष्कृतहेतुत्वस्य सामान्यतः शास्त्रेणावगमितत्वात्। स्मृतिरपि 'वर्णा आश्रमाश्च स्वकर्मनिष्ठाः प्रेत्य कर्मफलमनुभूय ततः शेषेण विशिष्टदेशजातिकुलरूपायुः श्रुतवृत्तवित्तसुखमेधसो जन्म प्रतिपद्यन्ते' इति सानुशयानामेवावरोहं दर्शयति। कः पुनरनुशयो नामेति? केचित्तावदाहुः—स्वर्गार्थस्य कर्मणो भुक्तफलस्यावशेषः कश्चिदनुशयो नाम, भाण्डानुसारिस्नेहवत्। यथाहि स्नेहभाण्डं रिच्यमानं न सर्वात्मना रिच्यते भाण्डानुसार्येव कश्चित्स्नेहशेषोऽवतिष्ठते तथाऽनुशयोऽपीति। ननु कार्यविरोधित्वाददृष्टस्य न भुक्तफलस्यावशेषावस्थानं न्याय्यम्। नायं दोषः, नहि सर्वात्मना भुक्तफलत्वं कर्मणः प्रतिजानीमहे। ननु निरवशेषकर्मफलोपभोगाय चन्द्रमण्डलमारूढः। बाढम्, तथापि स्वल्पकर्मावशेषमात्रेण तत्रावस्थातुं न लभ्यते। यथा किल

---

ही इस लोकमें अवरोहण करते हैं। किस हेतुसे? दृष्ट-श्रुति और स्मृतिसे, ऐसा कहते हैं। जैसे कि 'तद्य इह०' ( उन अनुशयी जीवोंमें जो यहाँ पुण्यकर्मवाले होते हैं वे शीघ्र ही उत्तम योनिको प्राप्त होते हैं। वे ब्राह्मणयोनि, क्षत्रिययोनि अथवा वैश्ययोनि प्राप्त करते हैं तथा जो अशुभ आचरण ( पाप कर्म ) वाले होते हैं वे तत्काल अशुभ योनिको प्राप्त होते हैं। वे श्वानयोनि, सूकरयोनि अथवा चण्डालयोनि प्राप्त करते हैं ) यह प्रत्यक्ष श्रुति अनुशय सहित जीवोंका अवरोहण दिखलाती है। यहाँ चरणशब्दसे अनुशय ( कर्म ) सूचित होता है, ऐसा वर्णन करेंगे। और जन्मसे ही प्रत्येक प्राणीमें भिन्न भिन्न रूपसे विभक्त हुआ यह उपभोग देखा गया है, वह आकस्मिकत्वके असंभवसे अनुशयके सद्भावको सूचित करता है, क्योंकि अभ्युदय और प्रत्यवाय ( हानि, दुःख ) के सुकृत और दुष्कृत हेतु हैं यह सामान्य रीतिसे शास्त्रद्वारा अवगत होता है। 'वर्णा आश्रमाश्च०' ( वर्ण और आश्रमवाले, अपने कर्ममें निष्ठा रखनेवाले मरणानन्तर कर्मफलका अनुभव कर उससे शेष कर्म द्वारा-अनुशय नामक कर्म द्वारा विशिष्ट देश, जाति, कुल, रूप, आयु, ज्ञान, आचार, वित्त, सुख और मेधावाले होकर जन्म प्राप्त करते हैं ) यह स्मृति भी अनुशय सहित जीवोंका अवरोहण दिखलाती है। परन्तु वह अनुशय क्या है? कोई तो भाण्डाके अनुसारी स्नेह-तैल आदिके समान स्वर्गके लिए किया गया कर्म जिसका फल भोग लिया गया है, उसका कुछ अवशेष अनुशय है। जैसे तैलका भाण्डा खाली होता हुआ सर्वात्मना खाली नहीं होता, भाण्डाके अनुसारी कुछ अवशिष्ट स्नेह रह जाता है, वैसे अनुशय भी जीवके साथ अवस्थित रहता है, ऐसा कहते हैं। परन्तु कार्य-फल विरोधी होनेसे भुक्त फल अदृष्टकी अवशेष अवस्थिति न्याय-युक्त नहीं है। यह दोष नहीं है, क्योंकि कर्म सर्वात्मना भुक्त फल है, हम ऐसी प्रतिज्ञा नहीं करते। परन्तु सम्पूर्ण कर्मफलोपभोगके लिए जीव चन्द्रमण्डलमें आरूढ हुआ है, ठीक, हुआ है, तो भी स्वल्प कर्मके अवशेषसे वहाँ अवस्थिति प्राप्त नहीं

## सत्यानन्दी-दीपिका

* सूत्रस्थ 'दृष्ट' शब्दका श्रुतार्थ कहकर अब उसका 'दृष्टश्च' इत्यादिसे अन्य अर्थ कहते हैं। 'पुण्यो वै पुण्येन कर्मणा भवति पापः पापेन' ( पुण्य कर्मसे सुखी और पाप कर्मसे दुःखी होता है ) इत्यादि शास्त्रसे सुख और दुःखके हेतु धर्म और अधर्म ज्ञात होते हैं। इससे 'जन्मारभ्यदृष्टो भोगः'

कश्चित्सेवकः सकलैः सेवोपकरणै राजकुलमुपसृप्तश्चिरप्रवासात्परिक्षीणबहूपकरणश्छत्रपादुकादिमात्रावशेषो न राजकुलेऽवस्थातुं शक्नोति। एवमनुशयमात्रपरिग्रहो न चन्द्रमण्डलेऽवस्थातुं शक्नोतीति। न चैतद्युक्तमिव, नहि स्वर्गार्थस्य कर्मणो भुक्तफलस्यावशेषानुवृत्तिरुपपद्यते, कार्यविरोधित्वादित्युक्तम्। नन्वेतदप्युक्तम्—न स्वर्गफलस्य कर्मणो निखिलस्य भुक्तफलत्वं भविष्यतीति। तदेतदपेशलम्-स्वर्गार्थं किल कर्म स्वर्गस्थस्यैव स्वर्गफलं निखिलं न जनयति स्वर्गच्युतस्यापि कंचित्फललेशं जनयतीति। न शब्दप्रमाणकानामीदृशी कल्पनाऽवकल्पते, स्नेहभाण्डे तु स्नेहलेशानुवृत्तिर्दृष्टत्वादुपपद्यते। तथा सेवकस्योपकरणलेशानुवृत्तिश्च दृश्यते, नत्विह तथा स्वर्गफलस्य कर्मणो लेशानुवृत्तिर्दृश्यते, नापि कल्पयितुं शक्यते, स्वर्गफलत्वशास्त्रविरोधात्। * अवश्यं चैतदेवं विज्ञेयम्। न स्वर्गफलस्येष्टादेः कर्मणो भाण्डानुसारिस्नेहवदेकदेशोऽनुवर्तमानोऽनुशय इति। यदि हि येन सुकृतेन कर्मणेष्टादिना स्वर्गमन्वभूवंस्तस्यैव कश्चिदेकदेशोऽनुशयः कल्प्येत, ततो रमणीय एवैकोऽनुशयः स्यान्न विपरीतः। तत्रेयमनुशयविभागश्रुतिरुपरुध्येत्—'तद्य इह रमणीयचरणा अथ य इह कपूयचरणाः' (छा० ५।१०।७) इति। तस्मादामुष्मिकफले कर्मजात

---

कर सकता। जैसे कोई एक सेवक सेवाके सम्पूर्ण उपकरणोंसे राजकुलमें जाय वहाँ उसके बहुत-से उपकरण चिरप्रवाससे नष्ट हो जाँय और छत्र पादुका शेष रह जाँय तो वह राजकुलमें अवस्थित होनेके लिए समर्थ नहीं होता। उसी प्रकार अनुशय मात्र परिग्रहवाला चन्द्रमण्डलमें अवस्थित नहीं हो सकता। परन्तु यह युक्त-सा प्रतीत नहीं होता, क्योंकि स्वर्गके लिए किया गया कर्म जो भुक्त फल है, उसके अवशेषकी अनुवृत्ति फलकी विरोधी होनेसे उपपन्न नहीं होती, ऐसा कहा गया है। परन्तु यह भी कहा गया है कि स्वर्ग फलवाला समस्त कर्म भुक्त फल नहीं होता। यह भी अयुक्त है कि स्वर्गके लिए किया गया कर्म स्वर्गस्थको ही सम्पूर्ण स्वर्गफल उत्पन्न नहीं करता, किन्तु स्वर्गसे च्युत हुएको भी कुछ फल लेश उत्पन्न करता है। परन्तु श्रुति प्रमाण माननेवालोंके लिए ऐसी कल्पना नहीं हो सकती। स्नेहभाण्डामें तो स्नेहलेशकी अनुवृत्ति देखनेमें आनेसे कल्पना युक्त है, और उसीप्रकार सेवकमें भी उपकरण लेशकी अनुवृत्ति देखनेमें आती है। परन्तु उसी प्रकार यहाँ तो स्वर्ग फलवाले कर्मके लेशकी अनुवृत्ति नहीं देखी जाती, और उसकी कल्पना भी नहीं की जा सकती, कारण कि स्वर्ग फल प्रतिपादक शास्त्रसे विरोध होता है। अवश्य ही यह इसीप्रकार जाननेयोग्य है—स्वर्गफलवाले इष्ट आदि कर्मका भाण्डानुसारी स्नेहके समान अनुवर्तमान एक देश अनुशय नहीं है, यदि जिस इष्ट आदि सुकृत कर्म द्वारा जीवने स्वर्गका अनुभव किया उसका ही कोई एक देश अनुशय कल्पना करें तो केवल एक 'रमणीय' ही अनुशय होगा, उससे विपरीत-'कपूय' नहीं होगा। तब 'तद्य इह रमणीयचरणा अथ य इह कपूयचरणाः' यह अनुशय विभागकी श्रुति बाधित हो जायगी। इसलिए परलोकमें फल देनेवाले सब कर्मोंके उपभुक्त हो

## सत्यानन्दी-दीपिका

कर्महेतुकः, भोगत्वात्, स्वर्गभोगवत्' ( जन्मसे लेकर देखा गया भोग कर्म हेतुक है, भोग होनेसे स्वर्गभोगके समान ) इसप्रकार अनुमानसे भी अनुशय सिद्ध होता है। विपक्षमें भोगके हेतु कर्मके न होनेसे भोगोंमें दृष्ट वैलक्षण्य आकस्मिक होगा, इसलिए अनुशय अवश्य मानना चाहिए।

* अब भगवान् भाष्यकार 'तस्मात्' इत्यादिसे स्वाभिमत अनुशयको कहते हैं। 'जीवमनुशेतेइत्यनुशयः' स्वर्गमें फल देनेवाले कर्मोंको फलोपभोगसे समाप्तकर उनसे भिन्न इस लोकमें फल देनेवाले जो कर्म समुदाय है वह अनुशय है।' उसके साथ ही जीव अवरोहण करता है। जन्मके आरम्भसे ही

उपभुक्तेऽवशिष्टमैहिकफलं कर्मान्तरजातमनुशयस्तद्वन्तोऽवरोहन्तीति। यदुक्तम्—यत्किंचेत्यविशेषपरामर्शात्सर्वस्येह कृतस्य कर्मणः फलोपभोगेनान्तं प्राप्य निरनुशया अवरोहन्तीति—नैतदेवम्, अनुशयसद्भावस्यावगमितत्वात्। यत्किंचिदिह कृतमामुष्मिकफलं कर्मारब्धभोगं तत्सर्वं फलोपभोगेन क्षपयित्वेति गम्यते। यदप्युक्तम्—प्रायणमविशेषादनारब्धफलं कृत्स्नमेव कर्माभिव्यनक्ति, तत्र केनचित्कर्मणाऽमुष्मिंल्लोके फलमारभ्यते केनचिदस्मिन्नित्ययं विभागो न संभवतीति—तदप्यनुशयसद्भावप्रतिपादनेनैव प्रत्युक्तम्। अपि च केन हेतुना प्रायणमनारब्धफलस्य कर्मणोऽभिव्यञ्जकं प्रतिज्ञायत इति वक्तव्यम्। आरब्धफलेन कर्मणा प्रतिबद्धस्येतरस्य वृत्त्युद्भवानुपपत्तेस्तदुपशमात्प्रायणकाले वृत्त्युद्भवो भवतीति यद्युच्येत, ततो वक्तव्यम्—यथैव तर्हि प्राक्प्रायणादारब्धफलेन कर्मणा प्रतिबद्धस्येतरस्य वृत्त्युद्भवानुपपत्तिरित्येवं प्रायणकालेऽपि विरुद्धफलस्यानेकस्य कर्मणो युगपत्फलारम्भासंभवाद्बलवता प्रतिबद्धस्य दुर्बलस्य वृत्त्युद्भवानुपपत्तिरिति। न ह्यनारब्धफलत्वसामान्येन जात्यन्तरोपभोग्यफलमप्यनेकं कर्मैकस्मिन्प्रायणे युगपदभिव्यक्तं सदेकां जातिमारभत इति शक्यं वक्तुम्, प्रतिनियतफलत्वविरोधात्। नापि कस्यचित्कर्मणः प्रायणेऽभिव्यक्तिः कस्यचिदुच्छेद इति शक्यते वक्तुम्, ऐकान्तिकफलत्वविरोधात्। नहि प्रायश्चित्तादिभिर्हेतुभिर्विना कर्मणामुच्छेदः संभाव्यते।

---

जानेपर इस लोकमें फल देनेवाले अवशिष्ट जो अन्य कर्म समुदाय वह अनुशय है उस कर्मवाले अवरोहण करते हैं। जो यह कहा गया है कि 'यत्किञ्च' इस अविशेषके परामर्शसे यहाँ किये गये सब कर्मोंका फलोपभोगसे अन्त प्राप्तकर अनुशय रहित होकर अवरोहण करते हैं, यह ऐसा नहीं है, क्योंकि अनुशयका सद्भाव अवगमित है। जो कुछ यहाँ आमुष्मिक ( परलोक ) फलवाला कर्म किया गया है और आरब्ध भोगवाला कर्म है उन सबका फलके उपभोगसे क्षपणकर, ऐसा अर्थ अवगत होता है। और जो यह कहा गया है कि मरण अविशेष-समानरूपसे अनारब्ध फलवाले सभी कर्मोंको अभिव्यक्ति करता है, तब किसी एक कर्मसे परलोकमें फल आरम्भ किया जाता है, और किसी कर्मसे इस लोकमें, यह विभाग असंभव है। उसका भी अनुशय सद्भावके प्रतिपादनसे निराकरण किया गया है, और मरण अनारब्ध फलवाले कर्मका अभिव्यञ्जक है, ऐसी प्रतिज्ञा किस हेतुसे की जाती है, यह कहना चाहिए। यदि कहो कि जिसका फल आरब्ध हो गया है ऐसे कर्मसे प्रतिबद्ध अन्य कर्मकी वृत्ति (फल) का उद्भव अनुपपन्न होनेसे उसके शान्त होनेपर मरणकालमें वृत्तिका उद्भव होता है, तो उसपर कहना चाहिए—तब तो जैसे मरणके पूर्व जिसका फल आरब्ध है ऐसे कर्मसे प्रतिबद्ध अन्य कर्मके वृत्त्युद्भवकी अनुपपत्ति है, वैसे ही मरणकालमें भी विरुद्ध फलवाले अनेक कर्मोंमें युगपत् फलका आरम्भ असंभव होनेसे बलवान् कर्मसे प्रतिबद्ध दुर्बलके वृत्त्युद्भवको अनुपपत्ति है, अन्य जातिमें उपभोग्य फलवाले अनेक कर्म भी एक मरणकालमें युगपत् अभिव्यक्त होते हुए अनारब्ध फलत्व सामान्य धर्मसे एक जातिका आरम्भ करें, ऐसा नहीं कहा जा सकता, क्योंकि प्रतिनियत फलत्वका विरोध है अर्थात् प्रत्येक कर्मका भिन्न-भिन्न फल है उससे विरोध है, और मरणकालमें किसी एक कर्मकी अभिव्यक्ति हो और किसी कर्मका उच्छेद, ऐसा भी नहीं कहा जा सकता, कारण कि ऐकान्तिक फलत्वका विरोध है। प्रायश्चित् आदि हेतुओंके विना कर्मोंका उच्छेद संभाव्य नहीं है। 'कदाचित्सुकृतं कर्म०' ( किसी समय संसारमें

## सत्यानन्दी-दीपिका

विलक्षण भोग देखनेमें आता है, इस प्रत्यक्ष लिङ्गसे अनुगृहीत ऐहिक अनुशय कर्म विशेष प्रतिपादक 'तद्य इह रमणीयचरणाः, कपूयचरणाः' इस श्रुतिके साथ विरोध होनेसे 'यत्किञ्च' और 'यावत्संपातम्' ये सामान्य शब्द केवल परलोक विषयक कर्मको कहते हैं, ऐसा संकोच करना युक्त है। मरण भी सभी कर्मोंका अभिव्यञ्जक नहीं है, क्योंकि 'रमणीयचरणाः, कपूयचरणाः' इस अनुशय प्रतिपादक श्रुतिके साथ विरोध होता है।

* स्मृतिरपि विरुद्धफलेन कर्मणा प्रतिबद्धस्य कर्मान्तरस्य चिरमवस्थानं दर्शयति—'कदाचित्सुकृतं कर्म कूटस्थमिह तिष्ठति । मज्जमानस्य संसारे यावद्दुःखाद्विमुच्यते' इत्येवंजातीयका । यदि च कृत्स्नमनारब्धफलं कर्मैकस्मिन्प्रायणेऽभिव्यक्तं सदेकां जातिमारभेत, ततः स्वर्गनरकतिर्यग्योनिष्वधिकारानवगमाद्धर्माधर्मानुत्पत्तौ निमित्ताभावान्नोत्तरा जातिरुपपद्येत । ब्रह्महत्यादीनां चैकैकस्य कर्मणोऽनेकजन्मनिमित्तत्वं स्मर्यमाणमुपरुध्येत । नच धर्माधर्मयोः स्वरूपफलसाधनादिसमधिगमे शास्त्रादतिरिक्तं कारणं शक्यं संभावयितुम् । नच दृष्टफलस्य कर्मणः कारीर्यादेः प्रायणमभिव्यञ्जकं संभवतीत्यव्यापिकाऽपीयं प्रायणस्याभिव्यञ्जकत्वकल्पना । प्रदीपोपन्यासोऽपि कर्मबलाबलप्रदर्शनेनैव प्रतिनीतः । स्थूलसूक्ष्मरूपाभिव्यक्त्यनभिव्यक्तिवच्चेदं द्रष्टव्यम् । यथाहि प्रदीपः समानेऽपि संनिधाने स्थूलं रूपमभिव्यनक्ति न सूक्ष्मम् । एवं प्रायणं समानेऽप्यनारब्धफलस्य कर्मजातस्य प्राप्तावसरत्वे बलवतः कर्मणो वृत्तिमुद्भावयति, न दुर्बलस्येति । तस्माच्छ्रुतिस्मृतिन्यायविरोधादश्लिष्टोऽयमशेषकर्माभिव्यक्त्यभ्युपगमः । * शेषकर्मसद्भावेऽनिर्मोक्षप्रसङ्ग इत्ययमप्यस्थाने संभ्रमः, सम्यग्दर्शनादशेषकर्मक्षय-

---

मग्न हुए पुरुषका सुकृत कर्म तब तक कूटस्थ रहता है जब तक वह दुःखसे विमुक्त होता है ) इस प्रकारकी स्मृति भी विरुद्ध फलवाले कर्मसे प्रतिबद्ध अन्य कर्मकी चिर अवस्थिति दिखलाती है । यदि अनारब्धफलवाले सब कर्म एक मरण समयमें अभिव्यक्त होते हुए एक जाति-जन्म उत्पन्न करें, तो स्वर्ग, नरक, सर्पादि योनियोंमें अधिकारके अप्राप्त होनेसे धर्म और अधर्मकी उत्पत्ति न होनेपर निमित्तके अभावसे उत्तर जन्म उपपन्न नहीं होगा । और ब्रह्महत्या आदि एक-एक कर्म अनेक जन्मका निमित्त है यह स्मृति वाक्य बाधित हो जायगा । धर्म और अधर्मके स्वरूप, फल, साधन आदिके ज्ञानके लिए शास्त्रसे भिन्न कारणकी संभावना नहीं की जा सकती । मरण दृष्टफलवाले कारीर्यादि कर्मका अभिव्यञ्जक नहीं हो सकता और मरणमें यह अभिव्यञ्जकत्व कल्पना अव्यापक भी है । प्रदीपके उपन्यासका भी कर्मके बलाबलके प्रदर्शनसे ही निराकरण किया गया है । स्थूल और सूक्ष्म रूपकी अभिव्यक्ति और अनभिव्यक्तिके समान इसे जानना चाहिए । जैसे सन्निधिके समान होनेपर भी प्रदीप स्थूलरूपको अभिव्यक्त करता है सूक्ष्मको नहीं, अनारब्ध फलवाले कर्म समुदायको समान अवसर प्राप्त होनेपर भी मरण बलवान् कर्मकी वृत्ति (व्यापार) का उद्भव करता है दुर्बलके वृत्तिका नहीं । इसलिए श्रुति ( रमणीयचरणाः ) स्मृति ( ततः शेषेण ) और न्याय ( प्रबलप्रतिबन्धात् ) के विरोध होनेसे अशेष कर्मकी अभिव्यक्तिका यह स्वीकार असम्बद्ध-अयुक्त है । शेषकर्मके सद्भाव होनेपर मोक्षाभाव प्रसङ्ग होगा, यह संभ्रम भी अनवसर है, क्योंकि सम्यग्दर्शनसे समस्त कर्मक्षय होता है, ऐसी श्रुति है ।

## सत्यानन्दी-दीपिका

* मरण समानरूपसे सभी कर्मोंको अभिव्यक्त करता है, इसमें 'यदि' इत्यादिसे अन्य दोष कहते हैं ।

"श्वसूकरखरोष्ट्राणां गोजाविमृगपक्षिणाम् । चण्डालपुल्कसानां च ब्रह्महा योनिमृच्छति ॥"

( ब्रह्मघ्न श्वान, सूकर, गर्दभ, ऊँठ, बैल, बकरी-भेड़, मृग, पक्षी, चण्डाल और पुल्कस ( जूँ ) की योनिको प्राप्त करता है ) इत्यादि स्मृतिसे विरोध होनेके कारण सब कर्म एक जन्म उत्पन्न नहीं कर सकते । अनेक कर्म एक जन्म देते हैं अथवा ब्रह्महत्यादि एक कर्म अनेक जन्मोंको देता है, इस विषयमें तो केवल शास्त्र ही प्रमाण है ।

* शेष कर्मोंके अस्तित्वसे मोक्ष नहीं होगा, इसलिए यावत् कर्मोंद्वारा फलोपभोगके लिए एक जन्म स्वीकार करना चाहिए, उसके समाप्त होनेपर स्वतः ही मुक्ति सिद्ध होगी, यह ऐक भविक कथन अनवसर है, क्योंकि 'क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' ( ब्रह्मात्माका साक्षात्कार होनेपर उस

श्रुतेः। तस्मात्स्थितमेतदेवानुशयवन्तोऽवरोहन्तीति। ते चावरोहन्तो यथेतमनेवं चावरोहन्ति। यथेतमिति यथागतमित्यर्थः। अनेवमिति तद्विपर्ययेणेत्यर्थः। धूमाकाशयोः पितृयाणेऽध्वन्युपात्तयोरवरोहे संकीर्तनाद्यथेतंशब्दाच्च यथागतमिति प्रतीयते। रात्र्याद्यसंकीर्तनादभ्राद्युपसंख्यानाच्च विपर्ययोऽपि प्रतीयते ॥ ८ ॥

**चरणादिति चेन्नोपलक्षणार्थेति कार्ष्णाजिनिः ॥९॥**

पदच्छेद—चरणात्, इति, चेत्, न, उपलक्षणार्था, इति, कार्ष्णाजिनिः।

सूत्रार्थ—(चरणात्) 'रमणीयचरणाः' इत्यादि श्रुति चरण-चारित्र्यसे योनिकी प्राप्ति कहती है, अनुशयसे नहीं ( इति चेन्न ) ऐसा यदि कहो तो युक्त नहीं है, क्योंकि ( कार्ष्णाजिनिः ) कार्ष्णाजिनि आचार्य चरणश्रुतिको ( उपलक्षणार्थेति ) अनुशयका उपलक्षणार्थ मानते हैं।

* अथापि स्यात्—या श्रुतिरनुशयसद्भावप्रतिपादनायोदाहृता-'तद्य इह रमणीयचरणाः' ( छा० ५।१०।७ ) इति, सा खलु चरणाद्योन्यापत्तिं दर्शयति, नानुशयात्। अन्यच्चरणमन्योऽनुशयः। चरणं चारित्रमाचारः शीलमित्यनर्थान्तरम्। अनुशयस्तु भुक्तफलात्कर्मणोऽतिरिक्तं कर्माभिप्रेतम्। श्रुतिश्च कर्मचरणे भेदेन व्यपदिशति-'यथाकारी यथाचारी तथा भवति' (बृह० ४।४।५ ) इति, 'यान्यनवद्यानि कर्माणि तानि सेवितव्यानि नो इतराणि,

---

इससे यह सिद्ध हुआ कि अनुशय सहित ही जीव अवरोहण करते हैं। वे अवरोहण करनेवाले जिस मार्गसे गये थे उससे और उससे विपरीत मार्गसे अवरोहण करते हैं। 'यथेतम्' जैसे गये थे वैसे, ऐसा अर्थ है, 'अनेवम्' उसके विपर्ययसे ऐसा अर्थ है, धूम और आकाश जो पितृयाण मार्गसे गृहीत हैं, उनका अवरोहणमें कथन होनेसे और 'यथेतम्' इस शब्दसे जैसे गये थे वैसे, ऐसा प्रतीत होता है। रात्रि आदिका संकीर्तन न होनेसे और अभ्र आदिका ग्रहण होनेसे विपर्यय भी प्रतीत होता है ॥ ८ ॥

यह भी हो—'तद्य इह रमणीयचरणाः' इसप्रकार यह जो श्रुति अनुशयके सद्भावके प्रतिपादनके लिए उदाहृत है, वह चरणसे योनिकी प्राप्तिको दिखलाती है, अनुशयसे नहीं। चरण भिन्न है और अनुशय भिन्न है। चरण, चारित्र, आचार और शील ये एकार्थक पर्याय शब्द हैं। अनुशय तो भुक्तफल कर्मसे भिन्न कर्म अभिप्रेत है और 'यथाकारी यथाचारी तथा भवति' ( जैसा कर्म और जैसा आचरण करता है वैसा ही वह होता है ) और 'यान्यनवद्यानि०' (जो अनिन्द्य कर्म उन्हींका

सत्यानन्दी-दीपिका

ब्रह्मवित्के कर्म क्षीण हो जाते हैं ) 'ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' ( भ० गी० ४।३७ ) (वैसे ही ज्ञानरूप अग्नि सम्पूर्ण कर्मोंको भस्ममयकर देती है) इत्यादि श्रुति और स्मृति तत्त्वज्ञानसे यावत् कर्मोंका क्षय कहती हैं। इसलिए अज्ञानी जीव अनुशय सहित लौटते हैं। लौटनेका मार्ग इस प्रकार है—'तस्मिन्यावत्संपातमुषित्वाथैतमेवाध्वानं पुनर्निवर्तन्ते' ( छा० ५।१०।५,६,७ ) (चन्द्रमण्डलमें कर्मोंके क्षय होनेतक रहकर वे पुनः इसी मार्गसे जिस प्रकार गये थे उसी प्रकार लौटते हैं। वे पहले आकाशको प्राप्त होते हैं और आकाशसे वायुको, वायु होकर वे धूम होते हैं और धूम होकर अभ्र ( वाष्प ) होते हैं, वह अभ्र होकर मेघ होता है, मेघ होकर बरसता है, तब वे जीव इसलोकमें धान, जौ, ओषधि, वनस्पति, तिल और उड़द आदि होकर उत्पन्न होते हैं। इसप्रकार यह निष्क्रमण निश्चय ही अत्यन्त कष्टप्रद है। उस अन्नको जो-जो भक्षण करता है और जो-जो वीर्य सेचन करता है, तद्रूप ही वह अनुशयी जीव हो जाता है। उन अनुशयी जीवोंमें जो पुण्यशाली होते हैं वे शीघ्र ही उत्तम योनिको प्राप्त होते हैं ) ॥ ८ ॥

* "अद्रोहः सर्वभूतेषु कर्मणा मनसा गिरा। अनुग्रहश्च ज्ञानं च शीलमेतद्विदुर्बुधाः ॥"

यान्यस्माकँ सुचरितानि तानि त्वयोपास्यानि' ( तै० १।११।२ ) इति च । तस्माच्चरणाद्योन्यापत्तिश्रुतेर्नानुशयसिद्धिरिति चेत्। नैष दोषः। यतोऽनुशयोपलक्षणार्थैवैषा चरणश्रुतिरिति कार्ष्णाजिनिराचार्यो मन्यते ॥ ९ ॥

## आनर्थक्यमिति चेन्न तदपेक्षत्वात् ॥१०॥

पदच्छेद—आनर्थक्यम्, इति, चेत्, न, तदपेक्षत्वात् ।

सूत्रार्थ—चरणश्रुति अपने मुख्य अर्थका त्यागकर अनुशयको कहेगी तो चरणश्रुतिमें ( अनार्थक्यम् ) आनर्थक्य प्रसक्त होगा, ( इति चेन्न ) ऐसा यदि कहो तो ठीक नहीं है, ( तदपेक्षत्वात् ) क्योंकि कर्मोंको आचारकी अपेक्षा है, अतः चरणश्रुति सार्थक है ।

स्यादेतत्—कस्मात्पुनश्चरणशब्देन श्रौतं शीलं विहाय लाक्षणिकोऽनुशयः प्रत्याय्यते ? ननु शीलस्यैव श्रौतस्य विहितप्रतिषिद्धस्य साध्वसाधुरूपस्य शुभाशुभयोन्यापत्तिः फलं भविष्यति। अवश्यं च शीलस्यापि किंचित्फलमभ्युपगन्तव्यम्। अन्यथा ह्यानर्थक्यमेव शीलस्य प्रसज्येतेति चेत्—नैष दोषः। कुतः ? तदपेक्षत्वात्। इष्टादि हि कर्मजातं चरणापेक्षम्। नहि सदाचारहीनः कश्चिदधिकृतः स्यात्, 'आचारहीनं न पुनन्ति वेदाः' इत्यादिस्मृतिभ्यः। पुरुषार्थत्वेऽप्याचारस्य नानर्थक्यम्। इष्टादौ हि कर्मजाते फलमारभमाणे तदपेक्ष एवाचारस्तत्रैव कंचिदतिशयमारप्स्यते। कर्म च सर्वार्थकारीति श्रुतिस्मृतिप्रसिद्धिः। तस्मात्कर्मैव शीलोपलक्षितमनुशयभूतं योन्यापत्तौ कारणमिति कार्ष्णाजिनेर्मतम्। नहि कर्मणि संभवति शीलाद्योन्यापत्तिर्युक्ता। नहि पद्भ्यां पलायितुं पारयमाणो जानुभ्यां रंहितुमर्हतीति ॥ १० ॥

---

सेवन करना चाहिए दूसरोंका नहीं। हम गुरुजनोंके जो शुभ आचरण हैं तुझे उन्हींका सेवन करना चाहिए ) इसकार श्रुति कर्म और चरणका भेदसे व्यपदेश करती है। इसलिए चरणसे योनिकी प्राप्तिकी प्रतिपादक श्रुतिसे अनुशयकी सिद्धि नहीं होती, ऐसा यदि कहो, तो यह दोष नहीं हैं, क्योंकि यह चरण श्रुति अनुशयके उपलक्षणके लिए है, ऐसा कार्ष्णाजिनि आचार्य मानते हैं ॥ ८ ॥

यह हो; परन्तु चरण शब्दसे श्रुति प्रतिपादित शीलका त्याग कर लाक्षणिक अनुशयकी प्रतीति किस प्रकार की जाती है ? परन्तु श्रौत विहित वा प्रतिषिद्ध, साधु अथवा असाधुरूप शीलका ही शुभाशुभ योनिकी प्राप्ति रूप फल होगा। शीलका भी अवश्य कुछ फल स्वीकार करना चाहिए अन्यथा शीलमें आनर्थक्य ही प्रसक्त होगा ? ऐसा यदि कहो तो यह दोष नहीं है। किससे ? इससे कि उसकी अपेक्षा है। इष्ट आदि कर्म समुदायको चरणकी अपेक्षा है। 'आचारहीनं न पुनन्ति वेदाः' (अचार हीनको वेद—यज्ञादि कर्म पवित्र नहीं करते ) इत्यादि स्मृतियोंसे सदाचार हीन कोई अधिकृत नहीं होता। पुरुषार्थत्व-पुरुषसंस्कारत्वमें भी आचार अनर्थक नहीं है। क्योंकि इष्ट आदि कर्मसमुदायके फलके आरम्भ करनेपर उनकी अपेक्षा रखनेवाला आचार उनमें ही कुछ अतिशय-विशेष आरम्भ करता है। कर्म तो सर्व अर्थ करनेवाला है ऐसी श्रुति और स्मृतिमें प्रसिद्धि है। इसलिए कर्म ही शीलसे उपलक्षित अनुशयरूप होकर जन्मकी प्राप्तिमें कारण है, यह कार्ष्णाजिनिका मत है। और

### सत्यानन्दी—दीपिका

(सब भूतोंमें कर्म, मन और वाणीसे अद्रोह, अनुग्रह और ज्ञानको पण्डित लोग शील जानते-कहते हैं ) इसप्रकार स्मृतिमें भी अद्रोह आदि आचार कहा गया है। शास्त्रका अर्थ ज्ञानरूप शील सब कर्मोंका अङ्ग कहा गया है उसका बोधक चरणपद है, वह अपने अङ्गी श्रौत आदि कर्मोंका उपलक्षक है। कर्मकी उत्तरावस्था ही तो धर्माधर्मरूप अपूर्व है।' इसप्रकार कर्म-चरणमें लक्षणासे तद्-भिन्न अपूर्व नामक अनुशयकी सिद्धि होती है। यह आचार्य कार्ष्णाजिनिका मत है ॥ ९ ॥

## सुकृतदुष्कृते एवेति तु बादरिः ॥ ११ ॥

पदच्छेद—सुकृतदुष्कृते, एव, इति, तु, बादरिः ।

सूत्रार्थ—( तु ) परन्तु चरणशब्दका अर्थ तो ( सुकृतदुष्कृते एव ) सुकृत और दुष्कृत ही है, ( इति ) ऐसा ( बादरिः ) बादरि आचार्यका मत है ।

॥ बादरिस्त्वाचार्यः सुकृतदुष्कृते एव चरणशब्देन प्रत्याय्येते इति मन्यते। चरणमनुष्ठानं कर्मेत्यनर्थान्तरम् । तथा हि अविशेषेण कर्ममात्रे चरतिः प्रयुज्यमानो दृश्यते। यो हीष्टादिलक्षणं पुण्यं कर्म करोति तं लौकिका आचक्षते—धर्मं चरत्येष महात्मेति । आचारोऽपि च धर्मविशेष एव । भेदव्यपदेशस्तु कर्मचरणयोर्ब्राह्मणपरिव्राजकन्यायेनाप्युपपद्यते । तस्माद्रमणीयचरणाः प्रशस्तकर्माणः, कपूयचरणा निन्दितकर्माण इति निर्णयः ॥ ११ ॥

### ( ३ अनिष्टादिकार्यधिकरणम् । सू० १२-२१ )

## अनिष्टादिकारिणामपि च श्रुतम् ॥ १२ ॥

पदच्छेद—अनिष्टादिकारिणाम्, अपि, च, श्रुतम् ।

सूत्रार्थ—( अनिष्टादिकारिणामपि ) 'ये वै के चास्माल्लोकात्प्रयन्ति' इत्यादि श्रुतिसे अनिष्ट आदि कर्म करनेवालोंका भी ( श्रुतम् ) चन्द्रलोक गमन श्रुत है ।

॥ इष्टादिकारिणश्चन्द्रमसं गच्छन्तीत्युक्तम् । ये त्वितरेऽनिष्टादिकारिणस्तेऽपि किं

---

कर्मके सम्भव होनेपर शीलसे जन्म प्राप्ति युक्त नहीं है । पैरोंसे पलायन करनेमें समर्थ हुआ पुरुष घुटनोंसे पलायन नहीं करता है ॥ १० ॥

परन्तु चरणशब्दसे सुकृत और दुष्कृत ही प्रतीत होते हैं, ऐसा बादरि आचार्य मानते हैं । चरण, अनुष्ठान और कर्म ये एकार्थवाची शब्द हैं । जैसे कि 'चर्' धातु अविशेषरूपसे कर्ममात्रमें प्रयुक्त हुआ देखा जाता है । इससे जो इष्ट आदिरूप पुण्य कर्म करता है उसको लोग ऐसा कहते हैं कि यह महात्मा धर्मका आचरण करता है और आचार भी धर्म विशेष है । कर्म और चरणमें भेदव्यपदेश तो 'ब्राह्मणपरिव्राजक'—न्यायसे भी उपपन्न होता है । इसलिए 'रमणीयचरणाः' प्रशस्त कर्मवाले और 'कपूयचरणाः' निन्दित कर्मवाले, ऐसा निर्णय है ॥ ११ ॥

इष्ट आदि कर्म करनेवाले चन्द्रलोकमें जाते हैं, ऐसा कहा गया है । परन्तु इनसे भिन्न जो

### सत्यानन्दी-दीपिका

* यद्यपि अक्रोध आदिरूप शील जो साधारण धर्म है वह यज्ञ आदि विशेष कर्मसे भिन्न है, तो भी चरण शब्द और आचारशब्द मुख्यरूपसे कर्मवाची हैं, शीलवाची नहीं, अतः यहाँ लक्षणाका अवसर नहीं है । यह आचार्य बादरिका मत ही मुख्य सिद्धान्त है । यदि कर्म ही आचार है, तो 'यथाकारी यथाचारी' यह भेदव्यपदेश क्यों है ? यह तो 'ब्राह्मणपरिव्राजक' न्यायसे समझना चाहिए । जहाँ सामान्यवाची शब्दका विशेषार्थ पदकी संनिधिसे अन्य अर्थ प्राप्त होता है वहाँ यह न्याय प्राप्त होता है । अतः प्रकृतमें कर्म और चरणका परस्पर अभेद होनेपर भी इसी न्यायसे किसी प्रकार भेद कथन होता है, वहाँ कर्म सामान्यवाची 'यथाकारी' शब्दसे 'यान्यनवद्यानि कर्माणि' इसका ग्रहण है और 'यथाकारी' उपपद रहित 'यथा आचारी' शब्दसे 'अस्माकं तु सुचरितानि' इसका ग्रहण है, इससे सदाचार भासता है । इसप्रकार पुण्य और पापरूप कर्म ही अनुशय है, उससे आगति अवश्यंभावी है । इसके अनुसन्धान करनेसे वैराग्य होनेपर ब्रह्मज्ञानकी प्राप्तिके साधनोंमें प्रवृत्ति होती है ॥ ११ ॥

॥ इसप्रकार इष्ट आदि कारियोंकी गति और आगतिके विचारसे वैराग्यका निरूपणकर अब

चन्द्रमसं गच्छन्त्युत न गच्छन्तीति चिन्त्यते। तत्र तावदाहुः—इष्टादिकारिण एव चन्द्रमसं गच्छन्तीत्येतन्न। कस्मात्? यतोऽनिष्टादिकारिणामपि चन्द्रमण्डलं गन्तव्यत्वेन श्रुतम्। तथा ह्यविशेषेण कौषीतकिनः समामनन्ति—'ये वै के चास्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्ति' ( कौषी० १।२ ) इति। देहारम्भोऽपि च पुनर्जायमानानां नान्तरेण चन्द्रप्राप्तिमवकल्पते, पञ्चम्यामाहुतावित्याहुतिसंख्यानियमात्। तस्मात्सर्व एव चन्द्रमसमासीदेयुः। इष्टादिकारिणामितरेषां च समानगतित्वं न युक्तमिति चेत्—न, इतरेषां चन्द्रमण्डले भोगाभावात्॥ १२॥

## संयमने त्वनुभूयेतरेषामारोहावरोहौ तद्गतिदर्शनात्॥ १३॥

पदच्छेद—संयमने, तु, अनुभूय, इतरेषाम्, आरोहावरोहौ, तद्गतिदर्शनात्।

सूत्रार्थ—( तु ) पूर्वपक्षकी निवृत्तिके लिए है। ( संयमने ) यमालयमें ( अनुभूय ) यमयातनाका अनुभवकर इस लोकमें लौटते हैं, इसप्रकार ( इतरेषाम् ) अनिष्ट आदि कारियोंके ( आरोहावरोहौ ) आरोह और अवरोह होते हैं, ( तद्गतिदर्शनात् ) क्योंकि 'अयं लोको नास्ति' इत्यादि श्रुतिमें उनकी गतिका दर्शन होता है।

तुशब्दः पक्षं व्यावर्तयति। नैतदस्ति—सर्वे चन्द्रमसं गच्छन्तीति। एतत् कस्मात्? यतो भोगायैव चन्द्रारोहणं न निष्प्रयोजनम्। नापि प्रत्यवरोहायैव—यथा कश्चिद्वृक्षमारोहति पुष्पफलोपादानायैव, न निष्प्रयोजनं, नापि पतनायैव। भोगश्चानिष्टादिकारिणां चन्द्रमसि

---

अनिष्ट आदि कर्म करनेवाले हैं, क्या वे भी चन्द्रलोकमें जाते हैं अथवा नहीं जाते, इसपर विचार किया जाता है। इस विषयमें पूर्वपक्षी कहते हैं—इष्ट आदि कर्म करनेवाले ही चन्द्रलोकमें जाते हैं, ऐसा कोई नियम नहीं है, किससे? इससे कि अनिष्ट आदि कर्म करनेवालोंका भी चन्द्रलोकमें गन्तव्यरूपसे श्रवण होता है। जैसे कि कौषीतकी शाखावाले अविशेषरूपसे 'ये वै के०' ( जो कोई इस लोकसे प्रायण करते हैं वे सब चन्द्रमण्डलमें ही जाते हैं ) ऐसा कहते हैं। पुनर्जन्म पानेवालोंकी देहोत्पत्ति भी चन्द्रलोक प्राप्तिके विना नहीं हो सकती, क्योंकि 'पञ्चम्यामाहुतौ' ( पाँचवीं आहुतिमें ) इसप्रकार आहुति संख्याका नियम है, इसलिए सभी चन्द्रलोकको प्राप्त होने चाहिए। यदि कहो कि इष्ट आदि कारी और इनसे अन्योंकी समान गति युक्त नहीं है, तो यह युक्त नहीं है, क्योंकि अन्योंके चन्द्रमण्डलमें भोगका अभाव है॥ १२॥

'तु' शब्द पूर्वपक्षकी व्यावृत्ति करता है। यह नियम नहीं है कि सब चन्द्रमण्डलमें जाते हैं। यह किससे? इससे कि भोगके लिए ही चन्द्रमण्डलमें आरोहण होता है निष्प्रयोजन नहीं, और केवल लौटनेके लिए भी नहीं। जैसे कोई पुष्प और फलोंके ग्रहण करनेके लिए ही वृक्षपर चढता है न निष्प्रयोजन और न पतनके लिए ही, और यह कहा गया है कि अनिष्ट आदि कारियोंका चन्द्र-

### सत्यानन्दी-दीपिका

अनिष्ट आदि कारियोंकी गति और आगतिके विचारसे 'अनिष्टादि०' इत्यादि सूत्रद्वारा वैराग्यका निरूपण करते हैं। 'ये वै के०' यह कौषीतकी श्रुति समानरूपसे सबका चन्द्रलोक गमन कहती है। 'वैवस्वतं सङ्गमनं जनानाम्' ( यमलोक पापीजनोंका गम्यस्थान है ) इससे तो अनिष्ट आदि कारियोंको चन्द्रलोकका दर्शन भी प्राप्त नहीं होता। अतः 'ये त्वितरे' आदिसे संशय करते हैं। पूर्वपक्षमें पुण्यवान्‌की ही चन्द्रलोकमें गति है, यह नियम न होनेसे पुण्य व्यर्थ है और पापसे वैराग्यका अदृढफलत्व है। सिद्धान्तमें अनिष्टकारियोंको चन्द्रलोक-दर्शन भी नहीं होता, अतः पुण्यका अर्थवत्त्व और वैराग्यका दृढफलत्व है॥ १२॥

नास्तीत्युक्तम्। तस्मादिष्टादिकारिण एव चन्द्रमसमारोहन्ति, नेतरे। ते तु संयमनं यमालयमवगाह्य स्वदुष्कृतानुरूपा यामीर्यातना अनुभूय पुनरेवेमं लोकं प्रत्यवरोहन्ति। एवंभूतौ तेषामारोहावरोहौ भवतः। कुतः ? तद्‌गतिदर्शनात्। तथाहि यमवचनस्वरूपा श्रुतिः प्रयतामनिष्टादिकारिणां यमवश्यतां दर्शयति—'न सांपरायः प्रतिभाति बालं प्रमाद्यन्तं वित्तमोहेन मूढम्। अयं लोको नास्ति पर इति मानी पुनः पुनर्वशमापद्यते मे' (कठ० २।६) इति। 'वैवस्वतं संगमनं जनानाम्' इत्येवंजातीयकं च बह्वेव यमवश्यताप्राप्तिलिङ्गं भवति ॥१३॥

## स्मरन्ति च ॥ १४ ॥

पदच्छेद—स्मरन्ति, च।

सूत्रार्थ—और स्मृतिकार भी ऐसा ही कहते हैं।

अपि च मनुव्यासप्रभृतयः शिष्टाः संयमने पुरे यमायत्तं कपूयकर्मविपाकं स्मरन्ति नाचिकेतोपाख्यानादिषु ॥ १४ ॥

## अपि च सप्त ॥ १५ ॥

पदच्छेद—अपि, च, सप्त।

सूत्रार्थ—( अपि च ) और भी पौराणिक लोग ( सप्त ) रौरव आदि सात नरक पाप कर्म फलके उपभोगकी भूमि कहते हैं।

* अपि च सप्त नरका रौरवप्रमुखा दुष्कृतफलोपभोगभूमित्वेन स्मर्यन्ते पौराणिकैः, ताननिष्टादिकारिणः प्राप्नुवन्ति। कुतस्ते चन्द्रं प्राप्नुयुरित्यभिप्रायः ॥ १५ ॥

---

मण्डलमें भोग नहीं है। इसलिए इष्ट आदि कारी ही चन्द्रमण्डलमें आरोहण करते हैं अन्य नहीं। वे अनिष्ट आदि कारी तो संयमन-यमालयमें प्रवेशकर अपने दुष्कृतोंके अनुसार यमको यातनाका अनुभवकर फिर भी इस लोकमें लौटते हैं। इसप्रकार उनका आरोह और अवरोह होता है। किससे ? उनकी गतिके दर्शन होनेसे। जैसे कि 'न सांपरायः प्रतिभाति०' ( वित्त मोहसे मूढ, प्रमाद करनेवाले उस अज्ञको परलोकका साधन नहीं सूझता। स्त्री, पुत्र आदि विशिष्ट यह लोक है, परलोक नहीं है, ऐसा माननेवाला पुरुष बारम्बार मेरे वशको प्राप्त होता है ) इसप्रकार यमवचन रूप श्रुति मरकर जानेवाले अनिष्ट आदि कारियोंको यमकी अधीनता दिखलाती है। और 'वैवस्वतं संगमनं जनानाम्' ( यमलोक पापीजनोंका गम्य स्थान है ) इसप्रकारके भी बहुत ही यमकी अधीनताकी प्राप्तिके लिङ्ग बोधक श्रुति वाक्य हैं॥ १३ ॥

और मनु, व्यास आदि शिष्टोंने संयमन-यमलोकमें पापकर्मोंका विपाक यमके अधीन है, इसप्रकार नाचिकेतोपाख्यान आदिमें स्मरण किया है ॥ १४ ॥

और रौरव प्रमुख सात नरक पाप फलके उपभोगकी भूमिरूपसे पौराणिक लोग स्मरण करते हैं। उनको अनिष्ट आदि कारी प्राप्त करते हैं। वे चन्द्रलोकको कैसे प्राप्त करें ? ऐसा अभिप्राय है ॥१५॥

### सत्यानन्दी-दीपिका

* रौरव, महारौरव, वह्नि, वैतरणी, कुम्भी, तामिस्रा और अन्धतामिस्रा इसप्रकार सात मुख्य नरक हैं। जिनका विस्तार पूर्वक वर्णन पुराणोंमें है।

'कूटसाक्षी तथाऽसम्यक्पक्षपातेन यो वदेत्। यश्चान्यदनृतं वक्ति स नरो याति रौरवम् ॥

भ्रूणहा पुरहर्ता च गोघ्नश्च मुनिसत्तमाः ! यान्ति ते नरके घोरे यश्चोच्छ्वासनिरोधकः ॥'

( जो झूठी साक्षी दे, तथा पक्षपातसे ठीक-ठीक न बोले और भी जो मिथ्या बोलता हो, वह मनुष्य रौरवमें जाता है। भ्रूणहत्या करनेवाला, ग्रामका हरण करनेवाला, गोघ्न और जो उच्छ्वासका

ननु विरुद्धमिदम्—यमायत्ता यातनाः पापकर्माणोऽनुभवन्तीति। यावता तेषु रौरवादिष्वन्ये चित्रगुप्तादयो नानाधिष्ठातारः स्मर्यन्त इति। नेत्याह—

## तत्रापि च तद्व्यापारादविरोधः ॥ १६ ॥

पदच्छेद—तत्र, अपि, च, तद्व्यापारात्, अविरोधः।

सूत्रार्थ—( तत्रापि ) उन रौरव आदि नरकोंमें भी ( तद्व्यापारात् ) यम प्रयुक्त शासन होनेसे ( अविरोधः ) विरोध नहीं है।

तेष्वपि तसमु नरकेषु तस्यैव यमस्याधिष्ठातृत्वव्यापाराभ्युपगमादविरोधः। यमप्रयुक्ता एव हि ते चित्रगुप्तादयोऽधिष्ठातारः स्मर्यन्ते ॥ १६ ॥

## विद्याकर्मणोरिति तु प्रकृतत्वात् ॥ १७ ॥

पदच्छेद—विद्याकर्मणोः, इति, तु, प्रकृतत्वात्।

सूत्रार्थ—(तु) शब्द शङ्का निवृत्त्यर्थ है। 'अथैतयोः पथोर्न' इत्यादि श्रुतिमें 'एतयोः' शब्दसे ( विद्याकर्मणोः ) विद्या और कर्मका ग्रहण होता है, ( प्रकृतत्वात् ) क्योंकि वे ही देवयान और पितृयाणरूपसे प्रकृत हैं।

पञ्चाग्निविद्यायाम् 'वेत्थ यथाऽसौ लोको न संपूर्यते' ( छा० ५।३।३ ) इत्यस्य प्रश्नस्य प्रतिवचनावसरे श्रूयते—'अथैतयोः पथोर्न कतरेणचन तानीमानि क्षुद्राण्यसकृदावर्तीनि भूतानि भवन्ति। जायस्व म्रियस्वेत्येतत्तृतीयं स्थानं तेनासौ लोको न संपूर्यते' ( छा० ५।१०।८ ) इति। तत्रैतयोः पथोरिति विद्याकर्मणोरित्येतत्। कस्मात्? प्रकृतत्वात्। विद्याकर्मणी हि देवयानपितृयाणयोः पथोः प्रतिपत्तौ प्रकृते। 'तद्य इत्थं विदुः' (छा० ५।१०।१) इति विद्या, तया प्रतिपत्तव्यो देवयानः पन्थाः प्रकीर्तितः। 'इष्टापूर्ते दत्तम्' ( छा० ५।१०।३ ) इति कर्म, तेन प्रतिपत्तव्यः पितृयाणः पन्थाः प्रकीर्तितः। तत्प्रक्रियायाम्—अथैतयोः पथोर्न कतरेणचन'

---

परन्तु यह विरुद्ध है कि पापकर्म करनेवाले यमके अधीन यातनाका अनुभव करते हैं, क्योंकि उन रौरव आदि नरकोंमें अन्य चित्रगुप्त आदि अनेक अधिष्ठाता स्मरण किये जाते हैं। नहीं, ऐसा कहते हैं—

उन सात नरकोंमें भी उस यमके ही अधिष्ठातृरूपसे व्यापार स्वीकृत है, अतः विरोध नहीं है, क्योंकि वे चित्रगुप्त आदि यमसे प्रयुक्त ही अधिष्ठातृरूपसे स्मरण किये जाते हैं ॥ १६ ॥

पञ्चाग्नि विद्यामें 'वेत्थ यथाऽसौ०' ( प्रवाहण—यह लोक जिस कारण पूर्ण नहीं होता, क्या वह तू जानता है ? ) इस प्रश्नके प्रतिवचन-उत्तरके अवसरमें 'अथैतयोः पथोर्न०' ( जो इन—अर्चि और धूममेंसे किसी एक मार्गद्वारा नहीं जाते। वे ये क्षुद्र और बारम्बार आने-जानेवाले प्राणी होते हैं। 'उत्पन्न होओ और मरो' यही उनका तृतीय स्थान होता है। इसी कारण यह लोक नहीं भरता ) ऐसी श्रुति है। उसमें 'एतयोः पथोः' ( उन दोनों मार्गोंके-विद्या और कर्मके ) यह अभिप्राय है, किससे ? इससे कि वे प्रकृत हैं। विद्या और कर्म ही देवयान और पितृयाण मार्गकी प्राप्तिमें प्रकृत हैं, 'तद्य इत्थं विदुः' (वे जो कि इसप्रकार जानते हैं) यह विद्या है, उससे प्राप्तव्य देवयान मार्ग कहा गया है 'इष्टापूर्ते दत्तम्' ( इष्ट, पूर्त और दत्त) यह कर्म है, उससे प्राप्तव्य पितृयाण मार्ग कहा गया है। उसके प्रकरणमें 'अथैतयोः पथोः०' ( इन दोनों मार्गोंमें किसी एक भी मार्गसे नहीं ) इसप्रकार श्रुत

### सत्यानन्दी-दीपिका

निरोधक है, हे मुनिश्रेष्ठ ! वे घोर नरकमें जाते हैं ) इस प्रकार अनिष्ट आदि कर्म करनेवाले इन नरकोंको प्राप्त होते हैं ॥ १५ ॥

इति श्रुतम्। एतदुक्तं भवति–ये न विद्यासाधनेन देवयाने पथ्यधिकृताः, नापि कर्मणा पितृयाणे, तेषामेष क्षुद्रजन्तुलक्षणोऽसकृदावर्ती तृतीयः पन्था भवतीति। तस्मादपि नानिष्टादिकारिभिश्चन्द्रमाः प्राप्यते। स्यादेतत्–तेऽपि चन्द्रबिम्बमारुह्य ततोऽवरुह्य क्षुद्रजन्तुत्वं प्रतिपत्स्यन्त इति। तदपि नास्ति, आरोहानर्थक्यात्। अपि च सर्वेषु प्रयत्सु चन्द्रलोकं प्राप्नुवत्स्वसौ लोकः प्रयद्भिः संपूर्येतेत्यतः प्रश्नविरुद्धं प्रतिवचनं प्रसज्येत। तथाहि प्रतिवचनं दातव्यं यथाऽसौ लोको न संपूर्यते। अवरोहाभ्युपगमादसंपूर्णोपपत्तिरिति चेत्–न, अश्रुतत्वात्। सत्यमवरोहादप्यसंपूरणमुपपद्यते, श्रुतिस्तु तृतीयस्थानसंकीर्तनेनासंपूरणं दर्शयति–'एतत्तृतीयं स्थानं तेनासौ लोको न संपूर्यते' (छा० ५।१०।८) इति, तेनानारोहादेवासंपूरणमिति युक्तम्, अवरोहस्येष्टादिकारिष्वप्यविशिष्टत्वे सति तृतीयस्थानोक्त्यानर्थक्यप्रसङ्गात्। तुशब्दस्तु शाखान्तरीयवाक्यप्रभवामशेषगमनाशङ्कामुच्छिनत्ति। एवं सत्यधिकृतापेक्षः शाखान्तरीयेवाक्ये सर्वशब्दोऽवतिष्ठते–ये वै केचिदधिकृता अस्माल्लोकात्प्रयन्ति चन्द्रमसमेव ते सर्वे गच्छन्तीति ॥ १७ ॥

यत्पुनरुक्तम्—देहलाभोपपत्तये सर्वे चन्द्रमसं गन्तुमर्हन्ति, पञ्चम्यामाहुतावित्याहुतिसंख्यानियमादिति, तत्प्रत्युच्यते—

## न तृतीये तथोपलब्धेः ॥१८॥

पदच्छेद—न, तृतीये, तथा, उपलब्धेः।

सूत्रार्थ—( तृतीये ) तृतीय मार्गमें प्रविष्ट पापी लोगोंको देह प्राप्तिके लिए आहुति संख्याका नियम (न) नहीं है, (तथोपलब्धेः) क्योंकि 'जायस्व म्रियस्व' इत्यादि श्रुतिमें वैसा ही उपलब्ध होता है।

* न तृतीये स्थाने देहलाभाय पञ्चसंख्यानियम आहुतीनामादर्तव्यः। कुतः ? तथोपलब्धेः। तथाह्यन्तरेणैवाहुतिसंख्यानियमं वर्णितेन प्रकारेण तृतीयस्थानप्राप्तिरुपलभ्यते–

---

है। तात्पर्य यह है–जो विद्यासाधनद्वारा देवयान मार्गमें अधिकृत नहीं हैं और न कर्मद्वारा पितृयाण मार्गमें अधिकृत हैं, उनको ही यह क्षुद्र जन्तुरूप बारम्बार आवृत्तिरूप तृतीय मार्ग होता है। इससे भी अनिष्ट आदि कारियोंद्वारा चन्द्रलोक प्राप्त नहीं किया जाता। परन्तु यह हो कि वे भी चन्द्रलोकमें आरूढ होकर उससे अवरोहण कर क्षुद्रजन्तुत्वको प्राप्त होंगे। वह भी नहीं है, क्योंकि ऐसा होनेमें आरोहण अनर्थक है, और सब मरकर जानेवाले चन्द्रलोकको प्राप्त होनेपर तो यह लोक मरकर जानेवालोंसे भर जायगा, उससे प्रश्नके विरुद्ध उत्तर प्रसक्त होगा। वैसे ही उत्तर देना चाहिए जैसे यह लोक नहीं भरता। यदि कहो कि अवरोहके स्वीकार करनेसे असम्पूर्णताकी उपपत्ति हो जायगी, तो यह युक्त नहीं है, क्योंकि अश्रुत है। यह ठीक है कि अवरोहसे असम्पूर्णता उपपन्न होती है। परन्तु 'एतत्तृतीयं स्थानम्०' ( यह तृतीय स्थान है उससे यह लोक नहीं भरता ) यह श्रुति तो तृतीय स्थानके कथनसे असम्पूर्णता दिखलाती है। उस अनारोहसे ही असम्पूर्ण है, यह युक्त है। क्योंकि इष्ट आदि कारियोंका भी अवरोह समान होनेपर तृतीय स्थानकी उक्तिमें आनर्थक्य प्रसङ्ग होगा। 'तु' शब्द तो अन्य शाखाके वाक्यसे उत्पन्न हुई सबके गमनकी आशङ्काका उच्छेद करता है। ऐसा होनेपर 'ये वै केचिदधिकृता' (जो कोई अधिकृत हुए इस लोकसे प्रायण करते हैं वे सब चन्द्रलोक जाते हैं ) इसप्रकार अन्य शाखाके वाक्यमें सर्व शब्द चन्द्रलोकमें अधिकृतकी अपेक्षासे अवस्थित है ॥ १७ ॥

जो पुनः यह कहा गया है कि देह लाभ उपपत्तिके लिए सब चन्द्रलोकमें जा सकते हैं, क्योंकि 'पांचवीं आहुतिमें' ऐसा आहुति संख्याका नियम है। उसके प्रति कहा जाता है—

तृतीय मार्गमें देहलाभके लिए आहुतिकी पांच संख्याका नियम आदरणीय नहीं है। किससे ?

'जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम्' ( छा० ५।१०।८ ) इति । अपि च 'पञ्चम्यामाहुतावापः पुरुषवचसो भवन्ति' (छा० ५।३।३ ) इति मनुष्यशरीरहेतुत्वेनाहुतिसंख्या संकीर्त्यते, न कीटपतङ्गादिशरीरहेतुत्वेन, पुरुषशब्दस्य मनुष्यजातिवचनत्वात् । अपि च पञ्चम्यामाहुतावपां पुरुषवचस्त्वमुपदिश्यते, नापञ्चम्यामाहुतौ पुरुषवचस्त्वं प्रतिषिध्यते, वाक्यस्य द्व्यर्थतादोषात् । तत्र येषामारोहावरोहौ संभवतस्तेषां पञ्चम्यामाहुतौ देह उद्भविष्यति, अन्येषां तु विनैवाहुतिसंख्यया भूतान्तरोपसृष्टाभिरद्भिर्देह आरप्स्यते ॥ १८ ॥

## स्मर्यतेऽपि च लोके ॥ १९ ॥

पदच्छेद—स्मर्यते, अपि, च, लोके ।

सूत्रार्थ—(च) और (लोके) लोकमें (अपि) भी इसप्रकार (स्मर्यते) स्मरण किया जाता है ।

अपि च स्मर्यते लोके-द्रोणधृष्टद्युम्नप्रभृतीनां सीताद्रौपदीप्रभृतीनां चायोनिजत्वम् । तत्र द्रोणादीनां योषिद्विषयैकाहुतिर्नास्ति । धृष्टद्युम्नादीनां तु योषित्पुरुषविषये द्वे अप्याहुती न स्तः । यथा च तत्राहुतिसंख्यानियमानादरो भवत्येवमन्यत्रापि भविष्यति । बलाकाप्यन्तरेणैव रेतःसेकं गर्भं धत्त इति लोकरूढिः ॥१९॥

---

इससे कि वैसे ही उपलब्धि होती है । जैसे कि 'जायस्व म्रियस्वेत्येतत्तृतीयं स्थानम्' इसप्रकार आहुति संख्या नियमके विना ही वर्णित प्रकारसे तृतीय स्थानकी प्राप्ति उपलब्ध होती है । और 'पञ्चम्यामाहुतावपः०' (पाँचवीं आहुतिमें अप् ( जल ) पुरुष संज्ञक होता है ) यह मनुष्य शरीरके हेतुरूपसे आहुति संख्या कही गई है । कीट, पतङ्ग आदि शरीरके हेतुरूपसे नहीं, क्योंकि पुरुष शब्द मनुष्य जाति वाचक है, और पाँचवीं आहुतिमें जल पुरुष संज्ञक होता है, ऐसा उपदेश किया जाता है, किन्तु पाँचवीं आहुतिके न होनेपर जल पुरुष संज्ञक नहीं होता, ऐसा प्रतिषेध नहीं किया जाता, क्योंकि ऐसा होनेसे वाक्यमें दो अर्थ होनेका दोष होगा । उस ( चन्द्रमण्डल ) में जिनका आरोह, अवरोह संभव है उनका शरीर पाँचवीं आहुतिमें उत्पन्न होगा । अन्योंका शरीर तो आहुति संख्या के विना ही अन्य भूतोंसे सम्बद्ध जलसे आरम्भ होगा ॥ १८ ॥

और लोक ( महाभारत आदि ) में भी द्रोण, धृष्टद्युम्न आदि तथा सीता, द्रौपदी आदिका अयोनिजत्व स्मरण किया जाता है । उनमेंसे द्रोण आदिकी स्त्री विषयक एक आहुति नहीं है और धृष्टद्युम्न आदिकी तो स्त्री और पुरुष विषयक दो आहुति नहीं हैं । जैसे उनमें आहुति संख्या नियमका आदर नहीं है, वैसे अन्यत्र ( अनिष्ट आदि कारीकी देहोत्पत्तिमें ) भी होगा । बलाका भी शुक्रसिंचनके विना ही गर्भ धारण करती है । इसप्रकार लोक प्रसिद्धि है ॥ १९ ॥

## सत्यानन्दी-दीपिका

ॐ 'पञ्चम्यामाहुतावापः पुरुष वचसो भवन्ति' (पाँचवीं आहुतिमें जल पुरुष संज्ञक होता है) यह विधि और पाँचवीं आहुतिके विना जल पुरुष संज्ञक नहीं होता यह निषेध, इसप्रकार एकवाक्यके दो अर्थ माननेसे वाक्य भेद होता है । इसलिए पाँचवीं आहुतिमें जल पुरुष संज्ञक होता है, इसमें तात्पर्य है । मनुष्य देहमात्रकी उत्पत्तिमें भी आहुति संख्याका नियम नहीं है । यह आहुति संख्याका नियम तो चन्द्रलोकमें जाने और लौटने वालोंके लिए है । चन्द्रलोकमें पञ्चाग्नि विद्या और इष्ट आदि कर्म रहित भी नहीं जाते, वे विशेष कर्मके बलसे मनुष्य शरीर त्यागके अनन्तर भी मनुष्य शरीर ग्रहण करते हैं, उनका देह भी आहुति संख्या नियमके विना ही अन्य भूतोंसे सम्बन्धित जलसे आरम्भ होता है ॥ १८ ॥

## दर्शनाच्च ॥ २० ॥

पदच्छेद—दर्शनात्, च ।

सूत्रार्थ—क्योंकि लोकमें ऐसा ही देखनेमें आता है ।

अपि च चतुर्विधे भूतग्रामे जरायुजाण्डजस्वेदजोद्भिज्जलक्षणे स्वेदजोद्भिज्जयोरन्तरेणैव ग्राम्यधर्मसुत्पत्तिदर्शनादाहुतिसंख्यानादरो भवति । एवमन्यत्रापि भविष्यति २०

ननु तेषां खल्वेषां भूतानां त्रीण्येव बीजानि भवन्ति 'आण्डजं जीवजमुद्भिज्जम्' ( छा० ६।३।१ ) इत्यत्र त्रिविध एव भूतग्रामः श्रूयते, कथं चतुर्विधत्वं भूतग्रामस्य प्रतिज्ञातमिति ? अत्रोच्यते—

## तृतीयशब्दावरोधः संशोकजस्य ॥ २१ ॥

पदच्छेद—तृतीयशब्दावरोधः, संशोकजस्य ।

सूत्रार्थ—( संशोकजस्य ) संशोकज-स्वेदज प्राणियोंका ( तृतीयशब्दावरोधः ) तृतीयशब्दसे उद्भिज्जशब्दसे उपसंग्रह होनेसे विरोध नहीं है ।

* 'आण्डजं जीवजमुद्भिज्जम्' ( छा० ६।३।१ ) इत्यत्र तृतीयेनोद्भिज्जशब्देनैव स्वेदजोपसंग्रहः कृतः प्रत्येतव्यः, उभयोरपि स्वेदजोद्भिज्जयोर्भूम्युदकोद्भेदप्रभवत्वस्य तुल्यत्वात् । स्थावरोद्भेदात्तु विलक्षणो जङ्गमोद्भेद इत्यन्यत्र स्वेदजोद्भिज्जयोर्भेदवाद इत्यविरोधः ॥ २१ ॥

( ४ साभाव्यापत्त्यधिकरणम् । सू० २२ )

## साभाव्यापत्तिरुपपत्तेः ॥ २२ ॥

पदच्छेद—साभाव्यापत्तिः, उपपत्तेः ।

सूत्रार्थ—इस लोकमें लौटते समय उन जीवोंको ( साभाव्याप्तिः ) आकाश आदिसे साम्यकी प्राप्ति होती है, ( उपपत्तेः ) क्योंकि ऐसा ही उपपन्न होता है ।

* इष्टादिकारिणश्चन्द्रमसमारुह्य तस्मिन्यावत्संपातमुषित्वा ततः सानुशया अवरोह-

---

और चार प्रकारके भूत समूहमें जरायुज, आण्डज, स्वेदज, और उद्भिज्जरूपमें से स्वेदज और उद्भिज्जमें ग्राम्य धर्म (स्त्री पुरुष संपर्क) के बिना ही उत्पत्ति देखनेसे आहुति संख्याका आदर नहीं है, उसी प्रकार अन्यत्र ( अनिष्ट आदि कारीकी देहोत्पत्तिमें ) भी होगा ॥ २० ॥

परन्तु 'तेषां खल्वेषां०' ( उन पक्षी आदि प्रसिद्ध प्राणियोंके तीन ही बीज होते हैं—आण्डज, जीवज ( जरायुज ) और उद्भिज्ज ) इस श्रुतिमें तीन प्रकारका ही भूत समुदाय सुना जाता है, तो फिर यहाँ भूत समुदाय चार प्रकारका है, ऐसी प्रतिज्ञा किस प्रकार की गई है ? इसपर कहते हैं—

'आण्डजं जीवजमुद्भिज्जम्०' (आण्डज-पक्षी आदि, जीवज-मनुष्य आदि और उद्भिज्ज-वृक्षादि) इसमें तृतीय उद्भिज्जशब्दसे ही स्वेदजका उपसंग्रह किया गया समझना चाहिए, क्योंकि स्वेदज और उद्भिज्ज इन दोनोंमें भी भूमि और उदकका भेदन कर उत्पन्न होना तुल्य है । स्थावरके उद्भेदसे तो जङ्गमका उद्भेद विलक्षण है । इसप्रकार स्वेदज और उद्भिज्जका भेदवाद अन्यत्र [ वर्णित ] है, इसलिए विरोध नहीं है ॥ २१ ॥

### सत्यानन्दी-दीपिका

* स्वेदज और उद्भिज्जका भेद कथन तो 'आण्डजानि च जारुजानि च स्वेदजानि च उद्भिज्जानि च' ( ऐत० ५।३ ) ( आण्डज, जरायुज, स्वेदज और उद्भिज्ज ) इस ऐतरेय श्रुतिमें स्पष्ट है । इसलिए छान्दोग्य और ऐतरेय श्रुति प्रतिपादित तीन तथा चार संख्यामें कोई विरोध नहीं है । चतुर्विध भूतोंका विचार प्रसंगसे किया गया है, इसलिए यह सिद्ध हुआ कि अनिष्ट आदि कारियोंकी चन्द्रलोकप्राप्ति नहीं होती ॥ २१ ॥

न्तीत्युक्तम्। अथावरोहप्रकारः परीक्ष्यते। तत्रेयमवरोहश्रुतिर्भवति–'अथैतमेवाध्वानं पुनर्निवर्तन्ते यथेतमाकाशमाकाशाद्वायुं वायुर्भूत्वा धूमो भवति धूमो भूत्वाऽभ्रं भवत्यभ्रं भूत्वा मेघो भवति मेघो भूत्वा प्रवर्षति' ( छा० ५।१०।५ ) इति। तत्र संशयः–किमाकाशादिस्वरूपमेवावरोहन्तः प्रतिपद्यन्ते किं वाकाशादिसाम्यमिति। तत्र प्राप्तं तावत्–आकाशादिस्वरूपमेव प्रतिपद्यन्त इति। कुतः ? एवं हि श्रुतिर्भवति। इतरथा लक्षणा स्यात्। श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या न लक्षणा। तथा च 'वायुर्भूत्वा धूमो भवति' इत्येवमादीन्यक्षराणि तत्तत्स्वरूपोपपत्तावाञ्जस्येनावकल्पन्ते। तस्मादाकाशादिस्वरूपप्रतिपत्तिरिति। * एवं प्राप्ते ब्रूमः–आकाशादिसाम्यं प्रतिपद्यन्त इति। चन्द्रमण्डले यदम्मयं शरीरमुपभोगार्थमारब्धं तदुपभोगक्षये सति प्रविलीयमानं सूक्ष्ममाकाशसमं भवति, ततो वायोर्वशमेति, ततो धूमादिभिः संपृच्यत इति। तदेतदुच्यते–'यथेतमाकाशमाकाशाद्वायुम्' ( छा० ५।१०।५ ) इत्येवमादिना। कुत एतत् ? उपपत्तेः। एवं ह्येतदुपपद्यते। नह्यन्यस्यान्यभावो मुख्य उपपद्यते। आकाशस्वरूपप्रतिपत्तौ च वाय्वादिक्रमेणावरोहो नोपपद्यते। विभुत्वाच्चाकाशेन नित्यसंबद्धत्वान्न तत्सादृश्यापत्तेर-

यह कहा गया है कि इष्ट आदि कारी चन्द्रलोकमें आरोहणकर वहाँपर कर्मफलोपभोग पर्यन्त रहकर वहाँसे अनुशय सहित अवरोहण करते हैं। अब अवरोह प्रकारकी परीक्षा की जाती है। वहाँ 'अथैतमेवाध्वानं०' ( कर्मफल भोगानन्तर पुनः इसी मार्गसे जिस प्रकार गये थे उसीप्रकार लौटते हैं। वे पहले आकाशको प्राप्त होते हैं और आकाशसे वायुको, वायु होकर वह धूम होता है और धूम होकर अभ्र होता है, अभ्र होकर मेघ होता है, मेघ होकर बरसता है ) यह अवरोह श्रुति है। उसमें संशय होता है—क्या अवरोहण करनेवाले आकाश आदि स्वरूपको ही प्राप्त होते हैं, अथवा आकाश आदिके साम्यको ? उसमें आकाश आदि स्वरूपको ही प्राप्त होते हैं, ऐसा प्राप्त होता है। किससे ? इससे कि ऐसी ही श्रुति है। अन्यथा लक्षणा होगी। श्रुति और लक्षणाके संशयमें श्रुतिका ग्रहण उचित है लक्षणाका नहीं। उसीप्रकार 'वायुर्भूत्वा धूमो भवति' ( वायु होकर धूम होता है ) इत्यादि अक्षर भी तत् तत् स्वरूपकी प्राप्तिमें अनायास ही उपपन्न होते हैं, इससे आकाश आदि स्वरूपकी प्राप्ति है। सि०—ऐसा प्राप्त होनेपर हम कहते हैं—आकाश आदिके सादृश्यको प्राप्त होते हैं। चन्द्रमण्डलमें जो जलमय शरीर उपभोगके लिए आरम्भ हुआ था वह उपभोगके क्षय होनेपर प्रविलीन होता हुआ आकाशके समान सूक्ष्म होता है, अनन्तर वायुके वश-अधीन होता है उसके पश्चात् धूम आदिसे सम्बद्ध होता है। वह 'यथेतमकाशम्' ( जिस प्रकार गये थे उसीप्रकार लौटते हैं प्रथम आकाशको प्राप्त होते हैं, आकाशसे वायुको प्राप्त होते हैं ) इत्यादि श्रुतिसे कहा जाता है। यह किससे ? उपपत्तिसे। यह ऐसा ही उपपन्न होता है। अन्यका अन्यभाव मुख्य उपपन्न नहीं होता, और आकाश स्वरूपकी प्राप्ति होनेपर वायु आदि क्रमसे अवरोह उपपन्न नहीं होता। आकाशके विभु होनेसे और उसके साथ नित्य सम्बद्ध होनेसे आकाशके सादृश्य प्राप्तिसे भिन्न उसका सम्बन्ध नहीं

## सत्यानन्दी-दीपिका

* पूर्वमें 'तृतीयं स्थानम्' इस स्थान शब्दको दो मार्गके उपक्रम सामर्थ्यसे तृतीय मार्गका उपलक्षक कहा गया है। परन्तु यहाँ ऐसी श्रुति नहीं है। इसप्रकार प्रत्युदाहरण संगतिसे पूर्वपक्ष है।

* 'समानो भावो रूपं येषां ते सभावास्तेषां भावः साभाव्यं सारूप्यं-सादृश्यम्।' समान एक सा भाव-धर्म है जिनका वे समाव हैं उनका भाव साभाव्य-सादृश्य है, क्योंकि उसकी उपपत्ति है यह सूत्रका व्युत्पत्तिलभ्य अर्थ है, उसको आगे स्पष्ट करते हैं। 'यथेतमकाशमाकाशाद्वायुम्' चन्द्र मण्डलमें फलोपभोगके अनन्तर वह अनुशयी जीव आकाश तुल्य सूक्ष्म होता है, अनन्तर पिण्डीकृत

न्यस्तत्संबन्धो घटते। श्रुत्यसंभवे च लक्षणाश्रयणं न्याय्यमेव। अत आकाशादितुल्यतापत्तिरेवात्राकाशादिभाव इत्युपचर्यते ॥ २२ ॥

( ५ नातिचिराधिकरणम्। सू० २३ )

## नातिचिरेण विशेषात् ॥ २३ ॥

पदच्छेद—न, अतिचिरेण, विशेषात्।

सूत्रार्थ—जीव ( नातिचिरेण ) स्वल्पकाल ही आकाश आदिके साथ समानरूपसे रहकर वृष्टिद्वारा पृथिवीमें प्रवेश करता है, ( विशेषात् ) क्योंकि 'अतो वै दुर्निष्प्रपतरम्' इत्यादि श्रुतिमें विशेष देखनेमें आता है।

* तत्राकाशादिप्रतिपत्तौ प्राग्व्रीह्यादिप्रतिपत्तेर्भवति विशयः-किं दीर्घं दीर्घं कालं पूर्वपूर्वसादृश्येनावस्थायोत्तरोत्तरसादृश्यं गच्छन्त्युताल्पमल्पमिति। तत्रानियमः, नियमकारिणः शास्त्रस्याभावादिति। एवं प्राप्त इदमाह-नातिचिरेणेति। अल्पमल्पं कालमाकाशादिभावेनावस्थाय वर्षधाराभिः सहेमां भुवमापतन्ति। कुत एतत्? विशेषदर्शनात्। तथाहि व्रीह्यादिभावापत्तेरनन्तरं विशिनष्टि—'अतो वै खलु दुर्निष्प्रपतरम्' ( छा० ५।१०।६ ) इति। तकार एकश्छान्दस्यां प्रक्रियायां लुप्तो मन्तव्यः। दुर्निष्प्रपततरं दुर्निष्क्रमतरं दुःखतरमस्माद्व्रीह्यादिभावान्निःसरणं भवतीत्यर्थः। तदत्र दुःखं निष्प्रपतनं प्रदर्शयन्पूर्वेषु सुखं निष्प्रपतनं दर्शयति। सुखदुःखताविशेषश्चायं निष्प्रपतनस्य कालाल्पत्वदीर्घत्वनिमित्तः। तस्मिन्नवधौ शरीरानिष्पत्तेरुपभोगासंभवात्। तस्माद्व्रीह्यादिभावापत्तेः प्रागल्पेनैव कालेनावरोहः स्यादिति ॥२३॥

---

घटता है। और श्रुतिके असंभवमें लक्षणाका आश्रयण उचित ही है। अतः आकाश आदि सादृश्य प्राप्ति ही यहाँ आकाश आदि भाव है, ऐसा उपचार किया जाता है ॥२२॥

यहाँ व्रीहि आदि भावकी प्राप्तिके पूर्व आकाश आदिकी प्राप्तिमें संशय होता है, क्या दीर्घ-दीर्घ काल पूर्व-पूर्व सादृश्यसे अवस्थित होकर उत्तरोत्तर सादृश्यको प्राप्त होते हैं अथवा अल्प-अल्प काल? उसमें नियम नहीं है, क्योंकि नियम करनेवाला शास्त्र नहीं है। ऐसा प्राप्त होनेपर यह कहते हैं—'नातिचिरेण' अल्प-अल्प काल आकाश आदिरूपसे अवस्थित होकर वृष्टि धाराओंके साथ इस पृथिवीपर आ गिरते हैं। यह किससे? विशेषदर्शनसे। जैसे कि व्रीहि आदि भाव प्राप्तिके अनन्तर 'अतो वै खलु०' ( इस प्रकार यह निष्क्रमण निश्चय ही अत्यन्त कष्ट प्रद है ) इस प्रकार विशेष कहते हैं। इसमें एक 'त' छान्दस प्रक्रियामें लुप्त हुआ समझना चाहिए। दुर्निष्प्रपततर-दुर्निष्क्रमतर इस व्रीहि आदि भावसे निःसरण दुःखतर होता है, ऐसा अर्थ है। यहाँ वह वचन दुःख पूर्वक निःसरण दिखलाता हुआ पूर्वभावोंमें सुख पूर्वक निःसरण दिखलाता है। निष्क्रमणमें सुखत्व और दुःखत्वका यह विशेष कालके अल्पत्व और दीर्घत्व निमित्तक है, क्योंकि उस अवधिमें शरीरकी निष्पत्ति-उत्पत्ति न होनेसे उपभोग का असंभव है। इसलिए व्रीहि आदि भाव प्राप्तिसे पूर्व अल्पकालमें ही अवरोहण होना चाहिए ॥२३॥

### सत्यानन्दी-दीपिका

अतिसूक्ष्म लिङ्गोपहित होकर वायु द्वारा इतस्तत होता हुआ वायु सम होकर फिर धूमरूप होता है, वहाँसे अभ्ररूप पुनः मेघरूप होकर वृष्टिद्वारा पृथिवीपर आकर व्रीहि, यव आदिरूप होता है, यह श्रुति का सिद्धान्त अर्थ है। अवरोहमें विविध भूत साम्य होनेका अनुसंधान करनेसे वैराग्य होता है ॥२२॥

* अनुशयी जीवका आकाश आदिसे सादृश्य कहकर अब विलम्ब और अविलम्ब गतिके विषयमें विचार करते हैं। पूर्वपक्षमें अधिक काल आकाश आदि सादृश्यसे जीव रहता है, सिद्धान्तमें अल्प-अल्प काल, 'अतो वै खलु' इस श्रुतिमें विशेषरूपसे कहा गया है कि व्रीहि आदि भावमें आनेपर

शयानः शक्यते पुरीतति शेत इति वक्तुम्। प्राकारपरिक्षिप्तेऽपि पुरे वर्तमानः प्राकारे वर्तत इत्युच्यते। हृदयाकाशस्य च ब्रह्मत्वं समधिगतम्—'दहर उत्तरेभ्यः' (ब्र० सू० १।३।१४) इत्यत्र। तथा नाडीपुरीतत्समुच्चयोऽपि—'ताभिः प्रत्यवसृप्य पुरीतति शेते' (बृह० २।१।१९) इत्येकवाक्योपादानादवगम्यते। सत्प्राज्ञयोश्च प्रसिद्धमेव ब्रह्मत्वम्। एवमेतासु श्रुतिषु त्रीण्येव सुषुप्तिस्थानानि संकीर्तितानि—नाड्यः पुरीतद्ब्रह्म चेति। तत्रापि द्वारमात्रं नाड्यः पुरीतच्च, ब्रह्मैव त्वेकमनपायि सुषुप्तिस्थानम्। अपि च नाड्यः पुरीतद्वा जीवस्योपाध्याधार एव भवति, तत्रास्य करणानि वर्तन्त इति। न ह्युपाधिसंबन्धमन्तरेण स्वत एव जीवस्याधारः कश्चित्संभवति, ब्रह्माव्यतिरेकेण स्वमहिमप्रतिष्ठितत्वात्। ब्रह्माधारत्वमप्यस्य सुषुप्ते नैवाधाराधेयभेदाभिप्रायेणोच्यते, कथं तर्हि? तादात्म्याभिप्रायेण। यत आह—सता सोम्य तदा संपन्नो भवति स्वमपीतो भवति' ( छा० ६।८।१ ) इति। स्वशब्देनात्माभिलप्यते, स्वरूपमापन्नः सुप्तो भवतीत्यर्थः। अपि च न कदाचिज्जीवस्य ब्रह्मणा संपत्तिर्नास्ति, स्वरूपस्यानपायित्वात्। स्वप्नजागरितयोस्तूपाधिसंपर्कवशात्पररूपापत्तिमिवापेक्ष्य तदुपशमात्सुषुप्तेः स्वरूपापत्तिर्विवक्ष्यते 'स्वमपीतो भवति' इति, अतश्च सुप्तावस्थायां कदाचित्सता संपद्यते कदाचिन्न संपद्यत इत्ययुक्तम्। अपि च स्थानविकल्पाभ्युपगमेऽपि विशेषविज्ञानोपशमलक्षणं तावत्सुषुप्तं न क्वचिद्विशिष्यते। तत्र सति संपन्नस्तावत्तदेकत्वान्न विजानातीति युक्तम्, 'तत्केन कं विजानीयात्' (बृह० २।४।१४ ) इति श्रुतेः। नाडीषु पुरीतति च शयानस्य न किंचिदविज्ञाने कारणं शक्यं विज्ञातुम्, भेदविषयत्वात्, 'यत्र वा अन्यदिव स्यात्तत्रान्योऽन्यत्पश्येत्' ( बृ० ४।३।३१ ) इति श्रुतेः। ननु भेदविषयस्याप्यतिदूरादिकारण-

---

शयन करता है ऐसा कहा जा सकता है। कोटसे घिरे हुए नगरमें रहता हुआ कोटमें रहता है ऐसा कहा जाता है, और 'दहर उत्तरेभ्यः' इसमें हृदयाकाशको ब्रह्मत्व निश्चित किया गया है। तथा 'ताभिः प्रत्यवसृप्य' ( नाड़ियों द्वारा प्रवेशकर पुरीतत्‌में सोता है ) इस श्रुतिसे नाड़ी और पुरीतत्‌का समुच्चय भी एक वाक्यके उपादानसे अवगत होता है। सत् और प्राज्ञ ब्रह्म है, यह प्रसिद्ध है। इसप्रकार इन श्रुतियोंमें नाड़ी, पुरीतत् और ब्रह्म ये तीन ही सुषुप्ति स्थान कहे गये हैं। उनमें भी नाड़ी और पुरीतत् द्वारमात्र हैं, एक अविनाशी ब्रह्म ही सुषुप्तिका स्थान है, और नाड़ियाँ अथवा पुरीतत् जीवकी उपाधिका आधार ही है, क्यों उनमें इसके करण रहते हैं। उपाधि सम्बन्धके बिना जीवका स्वतः ही कोई आधार नहीं हो सकता, क्योंकि जीव ब्रह्मसे अभिन्न होनेसे स्वमहिमामें प्रतिष्ठित है, इस जीवका सुषुप्तिमें ब्रह्माधारत्व भी आधार और आधेयके भेदके अभिप्रायसे नहीं कहा जाता है, किन्तु तादात्म्यके अभिप्राय से। क्योंकि 'सता सोम्य०' (उस समय हे सोम्य? यह सत्‌के साथ सम्पन्न हो जाता है—यह अपने स्वरूपको प्राप्त हो जाता है ) यह श्रुति ऐसा कहती है। स्वशब्दसे आत्मा कहा जाता है सोया हुआ अपने स्वरूपको प्राप्त होता है, यह अर्थ है, और कदाचित् भी जीवकी ब्रह्मके साथ संपत्ति न हो ऐसा नहीं है, क्योंकि उसका स्वरूप अविनाशी है। स्वप्न और जाग्रत्‌में तो उपाधिके संपर्कवश भिन्नरूपताकी प्राप्ति-सी होती है, उसकी अपेक्षा करके सुषुप्तिमें उसके उपशम होनेसे स्वरूपकी प्राप्ति 'स्वमपीतो भवति' ( यह अपने स्वरूपको प्राप्त हो जाता है ) इस प्रकार विवक्षित है। और इससे सुषुप्ति अवस्थामें कभी सत्‌से सम्पन्न होता है और कभी सम्पन्न नहीं होता, यह कथन युक्त नहीं है। यदि स्थान विकल्प स्वीकार भी किया जाय तो भी विशेष विज्ञानका अभावरूप सुषुप्तका कहीं भेद नहीं है। सुषुप्तिमें सत्‌के साथ सम्पन्न होकर उसके साथ एकत्व होनेसे नहीं जानता है, यह युक्त है, क्योंकि 'तत्केन कं विजानीयात्०' ( और वहाँ किसके द्वारा किसे जाने ) ऐसी श्रुति है। नाड़ियों और पुरीतत्‌में शयन करनेवाले जीवके अज्ञानमें किसी कारणको नहीं जाना जा सकता, कारण कि 'यत्र वाऽन्यदिव०' (जहाँ-जाग्रत् वा स्वप्नावस्थामें आत्मासे

मविज्ञाने स्यात्। बाढम्, एवं स्याद्यदि जीवः स्वतः परिच्छिन्नोऽभ्युपगम्येत—यथा विष्णुमित्रः प्रवासी स्वगृहं न पश्यति, न तु जीवस्योपाधिव्यतिरेकेण परिच्छेदो विद्यते। उपाधिगतमेवातिदूरादिकारणमविज्ञान इति यद्युच्येत, तथाप्युपाधेरुपशान्तत्वात्सत्येव संपन्नो न विजानातीति युक्तम्। * नच वयमिह तुल्यवन्नाड्यादिसमुच्चयं प्रतिपादयामः। नहि नाड्यः सुप्तिस्थानं पुरीतद्वेत्यनेन विज्ञानेन किंचित्प्रयोजनमस्ति, नह्येतद्विज्ञानप्रतिबद्धं किंचित्फलं श्रूयते। नाप्येतद्विज्ञानं फलवतः कस्यचिदङ्गमुपदिश्यते, ब्रह्म त्वनपायि सुप्तिस्थानमित्येतत्प्रतिपादयामः। तेन तु विज्ञानेन प्रयोजनमस्ति जीवस्य ब्रह्मात्मत्वावधारणं स्वप्नजागरितव्यवहारविमुक्तत्वावधारणं च। तस्मादात्मैव सुप्तिस्थानम् ॥७॥

## अतः प्रबोधोऽस्मात् ॥८॥

पदच्छेद—अतः, प्रबोधः, अस्मात्।

सूत्रार्थ—परमात्मा ही सुषुप्ति स्थान है, ( अतः ) अतएव ( अस्मात् ) परमात्मासे जीवका ( प्रबोधः ) उत्थान स्वाप प्रकरणमें 'सत आगम्य' इत्यादि श्रुतियोंसे उपदिष्ट है।

※ यस्माच्चात्मैव सुप्तिस्थानमत एव च कारणान्नित्यवदेवास्मादात्मनः प्रबोधः स्वापाधिकारे शिष्यते—'कुत एतदागात्' (बृह० २।१।१६) इत्यस्य प्रश्नस्य प्रतिवचनावसरे 'यथाग्नेः क्षुद्रा विस्फुलिङ्गा व्युच्चरन्त्येवमेवैतस्मादात्मनः सर्वे प्राणाः' (बृह० २।१।२०) इत्यादिना। 'सत आगम्य न विदुः सत आगच्छामहे' ( छा० ६।१०।२ ) इति च। विकल्प्यमानेषु तु सुषुप्ति-

---

भिन्न अन्य-सा होता है वहाँ अन्य-अन्यको देखता है ) यह श्रुति भेद विषयक है। परन्तु भेद विषयक अज्ञानमें भी अतिदूर आदि कारण होना चाहिए। ठीक ऐसा हो, यदि जीव स्वतः परिच्छिन्न स्वीकार किया जाय। जैसे प्रवासी विष्णुमित्र अपने घरको नहीं देखता। परन्तु जीवका उपाधिके विना परिच्छेद नहीं है। यदि कहो कि उपाधिगत अतिदूर आदि अज्ञानमें कारण हैं, तो भी उपाधि उपशान्त होनेसे सत्में ही सम्पन्न होता हुआ नहीं जानता यह युक्त है, और यहाँ हम ब्रह्मके समान नाड़ी आदि समुच्चयका पतिपादन नहीं करते, क्योंकि नाड़ियाँ और पुरीतत् सुषुप्तिस्थान हैं इस विज्ञानसे कोई प्रयोजन नहीं है, और इस विज्ञानसे प्रतिबद्ध कोई फल भी नहीं सुना जाता, और यह विज्ञान किसी फलवाले [ अङ्गी ] का अङ्गरूपसे भी उपदिष्ट नहीं है। अविनाशी ब्रह्म तो सुषुप्ति स्थान है यह प्रतिपादन करते हैं। इस विज्ञानसे तो जीवका ब्रह्मात्मत्व निश्चय और स्वप्न-जागरित व्यवहारसे विमुक्तत्व निश्चय प्रयोजन है। इसलिए आत्मा ही सुषुप्तिका स्थान है ॥ ७ ॥

क्योंकि परमात्मा ही सुषुप्ति स्थान है, इसी कारणसे स्वाप प्रकरणमें 'कुत एतदागात्०' ( यह कहाँसे आया ) इस प्रश्नके प्रतिवचन ( उत्तर ) के अवसरमें 'यथाऽग्नेः०' ( जैसे अग्निसे अनेकों क्षुद्र चिनगारियाँ निकलती हैं, वैसे ही इस आत्मासे समस्त प्राण ) इत्यादि श्रुतिसे इस आत्मासे नित्य-प्रतिदिन-सा जीवके प्रबोधका उपदेश किया जाता है। और 'सत आगम्य' ( ये सम्पूर्ण प्रजाएँ सत्से

### सत्यानन्दी-दीपिका

* हम नाड़ी आदिका ब्रह्मके साथ समुच्चय नहीं मानते, किन्तु गुणप्रधानभाव मानते हैं अर्थात् ब्रह्म मुख्य सुषुप्तिस्थान है और नाड़ी आदि द्वार होनेसे गौण हैं, इस प्रकार सुषुप्तिस्थानके विकल्पका निराकरण कर अब 'न हि नाड्यः' इत्यादिसे उसके फल आदिका भी खण्डन करते हैं ॥७॥

* 'सत आगम्य' इत्यादि श्रुतिसे जीवका ब्रह्मसे ही उत्थान कहा गया है, कहीं भी नाड़ि आदिमें

स्थानेषु कदाचिन्नाडीभ्यः प्रतिबुध्यते कदाचित्पुरीततः कदाचिदात्मन इत्यशासिष्यत्। तस्मादप्यात्मैव सुप्तिस्थानमिति ॥८॥

( ३ कर्मानुस्मृतिशब्दविध्यधिकरणम् । सू० ९ )

## स एव तु कर्मानुस्मृतिशब्दविधिभ्यः ॥ ९ ॥

पदच्छेद—स, एव, तु, कर्मानुस्मृतिशब्दविधिभ्यः ।

सूत्रार्थ—( स एव तु ) जो जीव सोता है वही उठता है, ( कर्मानुस्मृतिशब्दविधिभ्यः ) क्योंकि अवशेष कर्म, आत्माकी अनुस्मृति, शब्द और विधिसे ऐसा ही ज्ञात होता है ।

* तस्याः पुनः सत्संपत्तेः प्रतिबुध्यमानः किं य एव सत्संपन्नः स एव प्रतिबुध्यत उत स वाऽन्यो वेति चिन्त्यते। तत्र प्राप्तं तावत्-अनियम इति। कुतः ? यदा हि जलराशौ कश्चिज्जलबिन्दुः प्रक्षिप्यते, जलराशिरेव स तदा भवति, पुनरुद्धरणे च स एव जलबिन्दुर्भवतीति दुःसंपादम्। तद्वत्सुप्तः परेणैकत्वमापन्नः संप्रसीदतीति न स एव पुनरुत्थातुमर्हति। तस्मात्स एवेश्वरो वाऽन्यो वा जीवः प्रतिबुध्यत इत्येवं प्राप्त इदमाह—स एव तु जीवः सुप्तः स्वास्थ्यं गतः पुनरुत्तिष्ठति, नान्यः। कस्मात् ? कर्मानुस्मृतिशब्दविधिभ्यः। विभज्य हेतुं दर्शयिष्यामि। कर्मशेषानुष्ठानदर्शनात्तावत्स एवोत्थातुमर्हति, नान्यः। तथाहि—पूर्वेद्युरनुष्ठितस्य कर्मणोऽपरेद्युः शेषमनुतिष्ठन्दृश्यते। न चान्येन सामिकृतस्य कर्मणोऽन्यः शेषक्रियायां प्रवर्तितुमर्हति, अतिप्रसङ्गात्। तस्मादेक एव

---

आनेपर यह नहीं जानतीं कि हम सत्से आई हैं ) यह श्रुति भी है। सुषुप्तिस्थानोंके विकल्प होनेपर तो कभी नाडियोंसे, कभी पुरीतत्से और कभी परमात्मासे जीवका प्रबोध होता है, ऐसा उपदेश करती, उससे भी परमात्मा ही सुषुप्ति स्थान है ॥ ८ ॥

उस सत्संपत्तिसे पुनः जागनेवाला कौन है, क्या जो सत्सम्पन्न हुआ है वही जाग्रत होता है अथवा उससे वह अन्य है ? ऐसा विचार किया जाता है। पूर्वपक्षी—उसमें अनियम है, ऐसा प्राप्त होता है। किससे ? इससे कि जब जलराशिमें कोई जलबिन्दु प्रक्षिप्त किया जाता है तब वह जलराशि ही हो जाता है, पुनः उद्धरण करनेपर वही जलबिन्दु है, ऐसा कहना कठिन है। उसीप्रकार सुप्त पुरुष परमात्माके साथ एकत्वको प्राप्त हुआ अत्यन्त प्रसन्न होता है, अतः वही पुनः उत्थानके लिए युक्त नहीं है। इसलिए वही ईश्वर अथवा अन्य जीव प्रतिबुद्ध होता है। सिद्धान्ती—ऐसा प्राप्त होनेपर यह कहते हैं—वही जीव सुप्त-स्वास्थ्य ( स्वरूप प्राप्ति ) प्राप्तकर पुनः उठता है अन्य नहीं। किससे ? कर्म, अनुस्मृति ( प्रत्यभिज्ञा ) शब्द और विधिसे। विभागकर हेतुको दिखलाऊँगा—कर्मशेषके अनुष्ठान दर्शनसे वही जीव उठनेके लिए युक्त है, अन्य नहीं। जैसे कि पूर्व दिनमें अनुष्ठित कर्मके अवशिष्ट अंशको दूसरे दिन अनुष्ठित करता हुआ देखा जाता है। एकसे आधे किये गये कर्मको शेषक्रियामें अन्य प्रवृत्त होनेमें समर्थ नहीं है, क्योंकि अतिप्रसङ्ग है। इसलिए एक ही पूर्व और अपर ( दूसरे ) दिन एक कर्मका कर्ता है, ऐसा ज्ञात होता है। इससे भी वही सुषुप्तिसे

### सत्यानन्दी-दीपिका

जीवके उत्थानकी अपादनता नहीं कही गई है। इससे भी ब्रह्म ही जीवका मुख्य सुषुप्ति स्थान है। सुषुप्तिमें जीवके उपाधिलयकी अपेक्षा ब्रह्मके साथ जीवका अभेद कहा जाता है, इससे भेद औपाधिक है ॥८॥

* ब्रह्मसे जीवके उत्थानकी श्रुति होनेसे ब्रह्म ही सुषुप्तिस्थान है, यह ठीक नहीं है, क्योंकि सुषुप्तिसे अन्यका भी उत्थान संभव है, अतः नाड़ी आदि सुषुप्तिस्थान हो सकते हैं। इसप्रकार 'अनियम' आदिसे आक्षेप संगतिसे पूर्वपक्ष करते हैं। सिद्धान्ती—'तस्याः' आदिसे कहते हैं।

पूर्वेद्युरपरेद्युश्चैकस्य कर्मणः कर्तेति गम्यते। इतश्च स एवोत्तिष्ठति यत्कारणमतीतेऽहन्यहमदोऽद्राक्षमिति पूर्वानुभूतस्य पश्चात्स्मरणमन्यस्योत्थाने नोपपद्यते। नह्यन्यदृष्टमन्योऽनुस्मर्तुमर्हति। सोऽहमस्मीति चात्मानुस्मरणमात्मान्तरोत्थाने नावकल्पते। शब्देभ्यश्च तस्यैवोत्थानमवगम्यते। तथाहि—'पुनः प्रतिन्यायं प्रतियोन्याद्रवति बुद्धान्तायैव' ( बृह० ४।३।१६ ) 'इमाः सर्वाः प्रजा अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्ति' ( छा० ८।३।२ ) 'त इह व्याघ्रो वा सिंहो वा वृको वा वराहो वा कीटो वा पतङ्गो वा दंशो वा मशको वा यद्यद्भवन्ति तदाभवन्ति' (छा० ६।९।३) इत्येवमादयः शब्दाः स्वापप्रबोधाधिकारे पठिता नात्मान्तरोत्थाने सामञ्जस्यमीयुः। कर्मविद्याविधिभ्यश्चैवमेवावगम्यते। अन्यथा हि कर्मविद्याविधयोऽनर्थकाः स्युः। अन्योत्थानपक्षे हि सुप्तमात्रो मुच्यत इत्यापद्येत। एवं चेत्स्यादृद—किं कालान्तरफलेन कर्मणा विद्यया वा कृतं स्यात्, अपि चान्योत्थानपक्षे यदि तावच्छरीरान्तरे व्यवहरमाणो जीव उत्तिष्ठेत् तत्रत्यव्यवहारलोपप्रसङ्गः स्यात्? अथ तत्र सुप्त उत्तिष्ठेत् कल्पनानर्थक्यं स्यात्। यो हि यस्मिञ्शरीरे सुप्तः स तस्मिन्नोत्तिष्ठत्यन्यस्मिञ्शरीरे सुप्तोऽन्यस्मिन्नुत्तिष्ठतीति कोऽस्यां कल्पनायां लाभः स्यात्। अथ मुक्त उत्तिष्ठेदन्तवान्मोक्ष आपद्येत्। निवृत्ताविद्यस्य च पुनरुत्थानमनुपपन्नम्। एतेनेश्वरस्योत्थानं प्रत्युक्तम्, नित्यनिवृत्ताविद्यत्वात्। अकृताभ्यागमकृतविप्रणाशौ च दुर्निवारावन्योत्थानपक्षे स्याताम्। तस्मात्स एवोत्तिष्ठति नान्य इति। * यत्पुनरुक्तम्—यथा जलराशौ

उठता है, क्योंकि पूर्व दिनमें 'मैंने यह देखा था' इसप्रकार पूर्व अनुभूतका पश्चात् स्मरण अन्यके उठनेपर उपपन्न नहीं होता, कारण कि अन्यसे दृष्ट पदार्थका अन्य अनुस्मरण करनेके लिए युक्त नहीं है। इसप्रकार 'सोऽहम्' ( वह मैं हूँ ) इसप्रकार अपना अनुस्मरण अन्य आत्माके उठनेपर संभव नहीं है। श्रुतियोंसे भी उसका ही उत्थान अवगत होता है, क्योंकि 'पुनः प्रतिन्यायं०' ( पुनः जिस प्रकार आया था और जहाँसे आया था वह प्रतियोनि जीव उस जागरित-स्थानको लौट जाता है ) 'इमाः सर्वाः०' (इसप्रकार यह सारी प्रजा प्रतिदिन जाती हुई उस ब्रह्मलोकको नहीं जानती) 'त इह व्याघ्रो०' ( वे इस लोकमें व्याघ्र, सिंह, भेड़िया, शूकर, कीट, पतङ्ग, डांस अथवा मच्छर जो-जो भी [ सुषुप्ति आदिसे पूर्व ] हुए होते हैं वे ही पुनः हो जाते हैं ) इत्यादि सुषुप्ति और जागरितके प्रकरणमें पठित श्रुतियाँ अन्य आत्माके उत्थानमें संगत नहीं होंगी। कर्मविधि और विद्याविधिसे भी ऐसा ही अवगत होता है, अन्यथा कर्मविधि और विद्याविधि अनर्थक हो जायँगी। अन्यके उत्थान पक्षमें सोये हुए सभी मुक्त हो जायँगे, ऐसा प्रसक्त होगा। यदि ऐसा हो तो इसका उत्तर दो कि कालान्तरमें फल देनेवाले कर्म और विद्यासे क्या प्रयोजन होगा ? और अन्य उत्थान पक्षमें—यदि अन्य शरीरमें व्यवहार करनेवाला जीव [ इस शरीरमें ] उठे तो वहाँपर होनेवाले व्यवहारका लोप हो जायगा। यदि उसमें सोया हुआ उठे तो कल्पना व्यर्थ होगी, क्योंकि जो जिस शरीरमें सुप्त है वह उसमें नहीं उठता है अन्य शरीरमें सुप्त अन्यशरीरमें उठता है, तो इस कल्पनामें लाभ क्या होगा ? यदि मुक्त जीव उठेगा तो अनित्य मोक्ष प्रसक्त होगा, क्योंकि निवृत्त अविद्यावालेका पुनरुत्थान अनुपपन्न है। इससे ईश्वरके उत्थानका निराकरण हुआ, क्योंकि वह नित्य निवृत्त अविद्यावाला है। अन्य उत्थानपक्षमें अकृताभ्यागम और कृतकर्मकी हानि दुर्निवार होगी, इसलिए वही उठता है अन्य नहीं। जो यह कहा गया है कि जैसे जलराशिमें प्रक्षिप्त जलबिन्दु निकाला नहीं जा सकता, वैसे सत् ( ब्रह्म ) में सम्पन्न

## सत्यानन्दी-दीपिका

* अनादि अनिर्वचनीय अविद्या आदि उपाधि भेदसे कल्पित जीव वस्तुतः परमात्मासे भिन्न नहीं है, किन्तु उपाधिके उद्भव और अभिभवसे वह उद्भूत-सा और अभिभव-सा प्रतीत होता है।

प्रक्षिप्तो जलबिन्दुर्नोद्धर्तुं शक्यत एवं सति संपन्नो जीवो नोत्पतितुमर्हतीति, तत्परिह्रियते-युक्तं तत्र विवेककारणाभावाज्जलबिन्दोरनुद्धरणम्, इह तु विद्यते विवेककारणं कर्म चाविद्या चेति वैषम्यम्। दृश्यते च दुर्विवेचयोरप्यस्मज्जातीयैः क्षीरोदकयोः संसृष्टयोर्हंसेन विवेचनम्। अपि च न जीवो नाम कश्चित्परस्मादन्यो विद्यते यो जलबिन्दुरिव जलराशेः सतो विविच्येत। सदेव तूपाधिसंपर्काज्जीव इत्युपचर्यत इत्यसकृत्प्रपञ्चितम्। एवं सति यावदेकोपाधिगता बन्धानुवृत्तिस्तावदेकजीवव्यवहारः। उपाध्यन्तरगतायां तु बन्धानुवृत्तौ जीवान्तरव्यवहारः। स एवायमुपाधिः स्वापप्रबोधयोर्बीजाङ्कुरन्यायेनेत्यतः स एव जीवः प्रतिबुध्यत इति युक्तम् ॥ ९ ॥

( ४ मुग्धेऽर्धसंपत्त्यधिकरणम्। सू० १० )

## मुग्धेऽर्धसंपत्तिः परिशेषात् ॥ १० ॥

**पदच्छेद**—मुग्धे, अर्धसंपत्तिः, परिशेषात्।

**सूत्रार्थ**—(मुग्धे) मूर्च्छावस्थामें जीवकी (अर्धसंपत्तिः) अर्ध सुषुप्ति है, क्योंकि (परिशेषात्) परिशेषसे ऐसा ही ज्ञात होता है।

अस्ति मुग्धो नाम यं मूर्च्छित इति लौकिकाः कथयन्ति। स तु किमवस्थ इति परीक्षायामुच्यते-तिस्रस्तावदवस्थाः शरीरस्थस्य जीवस्य प्रसिद्धाः-जागरितं स्वप्नः सुषुप्तमिति। चतुर्थी शरीरादपसृप्तिः, नतु पञ्चमी काचिदवस्था जीवस्य श्रुतौ स्मृतौ वा प्रसिद्धास्ति। तस्माच्चतसृणामेवावस्थानामन्यतमावस्था मूर्च्छेत्येवं प्राप्ते ब्रूमः-न तावन्मुग्धो जागरिता-

---

हुआ जीव उठ नहीं सकता, उसका परिहार किया जाता है—विवेक ( भेद ) कारणके अभावसे वहाँ जलबिन्दुका अनुद्धरण युक्त है, परन्तु यहाँ तो विवेकके कारण कर्म और अविद्या हैं, अतः वैषम्य है। यद्यपि संसृष्ट जल और क्षीरका विवेचन हम लोगोंसे दुष्कर है, तो भी उनका हंससे विवेचन देखा जाता है। किञ्च जीव कोई परमात्मासे अन्य नहीं है जो जलराशिमें जलबिन्दुके समान सत्से विविक्त-पृथक् किया जाय। सद् ब्रह्म ही तो उपाधिके सम्बन्धसे जीव है, ऐसा उपचार किया जाता है। यह बार-बार विस्तारसे कहा गया है। ऐसा होनेपर जबतक एक उपाधिगत बन्धकी अनुवृत्ति है तबतक एक जीव व्यवहार होता है। बन्धकी अनुवृत्ति अन्य उपाधिगत होनेपर अन्य जीव व्यवहार होता है सुषुप्ति और जागरितमें वहाँ यह उपाधि बीजाङ्कुरन्यायसे है, इसलिए वही जीव प्रतिबुद्ध होता है, यह युक्त है ॥ ९ ॥

मुग्ध वह है जिसे लोग मूर्च्छित कहते हैं। उसकी अवस्था कौन-सी है ? इस परीक्षामें कहा जाता है—शरीरमें स्थित जीवकी तीन अवस्थाएँ तो प्रसिद्ध हैं—जागरित, स्वप्न और सुषुप्ति। चतुर्थ अवस्था शरीरसे उत्क्रान्ति है। जीवकी कोई पाँचवीं अवस्था तो श्रुति, स्मृतिमें प्रसिद्ध नहीं है। इसलिए मूर्च्छा चार अवस्थाओंमें से ही एक अवस्था है। सिद्धान्ती—ऐसा प्राप्त होनेपर हम कहते हैं—

### सत्यानन्दी-दीपिका

इसलिए उसका सुषुप्तिमें उपाधिके लयसे लय और जाग्रत्में उपाधिके उद्भवसे उद्भव होता है। इस प्रकार उपाधिके उद्भवसे वही जीव उठता है। पूर्वपक्षमें तत्वज्ञान व्यर्थ है, क्योंकि सुषुप्तिसे जीवकी पुनरावृत्ति न होनेसे मुक्तिसिद्ध है, सिद्धान्तमें तो अज्ञात ब्रह्मरूपस्थितिका अज्ञानके बलसे पुनः उत्थान अवश्यंभावी है, अतः अज्ञानकी निवृत्ति के लिए तत्त्वज्ञान अपेक्षित है ॥ ९ ॥

* तीन अवस्थाओंसे आत्माका विवेचन कर, अब मूर्च्छासे उसका विवेचन करते हैं—मूर्च्छा प्रसिद्ध अवस्थाओंके अन्तर्गत है अथवा उनसे भिन्न पाँचवी अवस्था है? इस प्रकार संशय होता है। उत्थित पुरुषमें 'वही मैं हूँ' इस प्रकारकी प्रत्यभिज्ञासे जैसे सुषुप्तिमें विशेष ज्ञानका अभाव है, वैसे

वस्थो भवितुमर्हति । नह्ययमिन्द्रियैर्विषयानीक्षते । स्यादेतत्—इषुकारन्यायेन मुग्धो भविष्यति । यथेषुकारो जाग्रदपीष्वासक्तमनस्तया नान्यान्विषयानीक्षत एवं मुग्धो मुसलसंपातादिजनितदुःखानुभवव्यग्रमनस्तया जाग्रदपि नान्यान्विषयानीक्षत इति, न, अचेतयमानत्वात् । इषुकारो हि व्यापृतमना ब्रवीति-इषुमेवाहमेतावन्तं कालमुपलभमानोऽभूवमिति । मुग्धस्तु लब्धसंज्ञो ब्रवीति-अन्धे तमस्यहमेतावन्तं कालं प्रक्षिप्तोऽभूवं न किंचिन्मया चेतितमिति । जाग्रतश्चैकविषयविषक्तचेतसोऽपि देहो विध्रियते, मुग्धस्य तु देहो धरण्यां पतति । * तस्मान्न जागर्ति; नापि स्वप्नान्पश्यति, निःसंज्ञकत्वात् । नापि मृतः, प्राणोष्मणोर्भावात् । मुग्धे हि जन्तौ मृतोऽयं स्यान्न वा मृत इति संशयाना ऊष्मास्ति नास्तीति हृदयदेशमालभन्ते निश्चयार्थं प्राणोऽस्ति नास्तीति च नासिकादेशम् । यदि प्राणोष्मणोरस्तित्वं नावगच्छन्ति, ततो मृतोऽयमित्यध्यवसाय दहनायारण्यं नयन्ति । अथ तु प्राणमूष्माणं वा प्रतिपद्यन्ते ततो नायं मृत इत्यध्यवसाय संज्ञालाभाय भिषज्यन्ति । पुनरुत्थानाच्च न दिष्टं गतः । नहि यमं गतो यमराष्ट्रात्प्रत्यागच्छति । अस्तु तर्हि सुषुप्तः, निःसंज्ञत्वादमृतत्वाच्च, न, वैलक्षण्यात् । मुग्धः कदाचिच्चिरमपि

---

मूर्च्छित जागरित अवस्थावाला नहीं हो सकता, क्योंकि यह इन्द्रियोंसे विषयोंका ईक्षण नहीं करता । परन्तु यहाँ ऐसी शङ्का होती है कि मूर्च्छित इषुकार न्यायसे होगा, जैसे इषुकार (बाण बनानेवाला) जागता हुआ भी बाणमें आसक्तमनवाला है, इससे अन्य विषयोंको नहीं देखता, वैसे मूसल प्रहार आदिसे उत्पन्न हुए दुःख अनुभवसे मनके व्यग्र होनेके कारण जागता हुआ भी [मुग्ध] अन्य विषयोंको नहीं देखता है, ऐसा नहीं है, क्योंकि वह अचेतयमान-चेतनारहित है । किन्तु इषुकार तो व्यापृत मना होकर कहता है—मैं इतने काल पर्यन्त बाण को ही उपलब्ध करता हुआ था । मूर्च्छित तो चेतना प्राप्त कर कहता है—इतना समय तो मैं घोर अन्धकारमें पड़ा था मैंने कुछ भी नहीं जाना । एक विषयमें आसक्त चित्तवाले जाग्रत पुरुषका भी देह खड़ा रहता है, किन्तु मूर्च्छितका देह तो पृथिवीपर गिर जाता है । इसलिए मुग्ध जागता नहीं और स्वप्नोंको भी नहीं देखता, क्योंकि वह चेतना रहित है । मृतक भी नहीं है, क्योंकि उसमें प्राण और गर्मी विद्यमान हैं, मुग्ध प्राणीके विषयमें यह मर गया है अथवा नहीं मरा, इस प्रकार संशय करते हुए लोग इसमें गर्मी है कि नहीं, यह निश्चय करनेके लिए हृदय भागका स्पर्श करते हैं । प्राण है कि नहीं, इस निश्चयके लिए नासिका देशका स्पर्श करते हैं । यदि प्राण और गर्मीका अस्तित्व अनुभव नहीं करते तो यह मर गया है, ऐसा निश्चयकर उसे जलानेके लिए जंगलमें ले जाते हैं । यदि उसमें प्राण और गर्मी प्राप्त करते हैं, तो यह मृत नहीं है, ऐसा निश्चय कर चेतना प्राप्त करनेके लिए चिकित्सा करते हैं । पुनः उत्थान होनेसे मुग्ध मृत नहीं है, क्योंकि यमको प्राप्त कर पुनः यमलोकसे लौटकर नहीं आता । तब मुग्ध सुषुप्त हो, क्योंकि वह चेतना रहित और अमृत ( मरा नहीं ) है । ऐसा नहीं, क्योंकि दोनोंमें वैलक्षण्य है । मुग्ध प्राणी कभी चिरकालतक उच्छ्वास नहीं लेता, उसका शरीर काँपता है, मुख भयानक और नेत्र विस्फारित होते हैं । किन्तु सुषुप्त तो प्रसन्न

## सत्यानन्दी-दीपिका

मूर्च्छामें भी है, इस समान लिङ्गसे मूर्छा सुषुप्ति ही है । सिद्धान्ती—प्रसिद्ध इन चार अवस्थाओंसे मूर्छा पृथक् अवस्था है । उनमेंसे प्रथम जागरितका 'न तवात्' इत्यादि भाष्यसे निवारण करते हैं । इषुकारमें इन्द्रिय जन्य ज्ञान और देह धारण आदि हैं, किन्तु मूर्च्छितमें दोनों नहीं हैं, इसलिए इषुकार उदाहरण विषम है ।

* जैसे सुषुप्तिमें विशेष ज्ञानका अभाव है, वैसे मूर्च्छामें भी है, इस प्रकारकी दोनोंमें समानता होनेपर भी लक्षणों और निमित्तोंके भेदसे इन दोनोंका परस्पर भेद है । इस तरह समानता और

नोच्छ्वसिति, सवेपथुरस्य देहो भवति, भयानकं च वदनं विस्फारिते नेत्रे। सुषुप्तस्तु प्रसन्नवदनस्तुल्यकालं पुनः पुनरुच्छ्वसिति, निमीलिते अस्य नेत्रे भवतः, न चास्य देहो वेपते। पाणिपेषणमात्रेण च सुषुप्तमुत्थापयन्ति, नतु मुग्धं मुद्गरघातेनापि। निमित्तभेदश्च भवति मोहस्वापयोः, मुसलसंपातादिनिमित्तत्वान्मोहस्य, श्रमादिनिमित्तत्वाच्च स्वापस्य। नच लोकेऽस्ति प्रसिद्धिर्मुग्धः सुप्त इति। परिशेषादर्धसंपत्तिर्मुग्धतेत्यवगच्छामः। निःसंज्ञत्वात्संपन्न इतरस्माद्वैलक्षण्यादसंपन्न इति॥ कथं पुनरर्धसंपत्तिर्मुग्धतेति शक्यते वक्तुम्? यावता सुप्तं प्रति तावदुक्तं श्रुत्या—'सता सोम्य तदा संपन्नो भवति' ( छा० ६।८।१ ) इति, 'अत्र स्तेनोऽस्तेनो भवति' ( बृह० ४।३।२२ ), 'नैतं सेतुमहोरात्रे तरतो न जरा न मृत्युर्न शोको न सुकृतं न दुष्कृतम्' ( छा० ८।४।१ ) इत्यादि। * जीवे हि सुकृतदुष्कृतयोः प्राप्तिः सुखित्वदुःखित्वप्रत्ययोत्पादनेन भवति। न च सुखित्वप्रत्ययो दुःखित्वप्रत्ययो वा सुषुप्ते विद्यते, मुग्धेऽपि तौ प्रत्ययौ नैव विद्येते। तस्मादुपाध्युपशमात्सुषुप्तवन्मुग्धेऽपि कृत्स्नसंपत्तिरेव भवितुमर्हति, नार्धसंपत्तिरिति। अत्रोच्यते—न ब्रूमो मुग्धेऽर्धसंपत्तिर्जीवस्य ब्रह्मणा भवतीति। किं तर्हि? अर्धेन सुषुप्तपक्षस्य भवति मुग्धत्वमर्धेनावस्थान्तरपक्षस्येति ब्रूमः। दर्शिते च मोहस्य स्वापेन साम्यवैषम्ये। द्वारं चैतन्मरणस्य। यदाऽस्य सावशेषं कर्म भवति, तदा वाङ्मनसे प्रत्यागच्छतः। यदा तु निरवशेषं कर्म भवति, तदा प्राणोष्माणावपगच्छतः। तस्मादर्धसंपत्तिं ब्रह्मविद इच्छन्ति। यत्तूक्तम्-

---

वदन और समकालमें पुन: पुनः उच्छ्वास लेता है, उसके नेत्र निमीलित होते हैं, उसका शरीर काँपता नहीं है, हाथके स्पर्शमात्रसे उसे लोग उठाते हैं। परन्तु मुग्धको तो मुद्गरके प्रहारसे भी नहीं उठा सकते। मूर्च्छा और सुषुप्तिके कारण भी भिन्न-भिन्न होते हैं, क्योंकि मूर्च्छाका मूसल प्रहार आदि निमित्त हैं और सुषुप्तिका परिश्रम आदि निमित्त हैं। और लोकमें यह प्रसिद्ध नहीं है कि मुग्ध सुप्त है, इसलिए परिशेषसे मूर्च्छा अर्ध सुषुप्ति है, ऐसा हम समझते हैं। चेतना रहित होनेसे वह सम्पन्न है और सुषुप्तसे वैलक्षण्य होनेसे असम्पन्न है। परन्तु मूर्च्छा अर्ध सुषुप्ति है, यह कैसे कहा जा सकता है? क्योंकि 'सता सोम्य०' (हे सोम्य ! उस समय सत्‌के साथ सम्पन्न होता है) 'अत्र स्तेनोऽस्तेनो भवति' ( यहाँ सुषुप्तिमें चोर अचोर होता है ) और ( इस सेतुरूप आत्माका दिन-रात अतिक्रमण नहीं करते। इसे न जरा, न मृत्यु, न शोक और न सुकृत अथवा दुष्कृत ही प्राप्त हो सकते हैं ) इत्यादि श्रुतिसे सुप्तके प्रति ऐसा कहा गया है। जीवमें सुखित्व और दु:खित्व प्रतीतिकी उत्पत्तिसे सुकृत और दुष्कृतकी प्राप्ति होती है, सुखित्व प्रत्यय अथवा दु:खित्व प्रत्यय सुषुप्तके विद्यमान नहीं हैं, इस प्रकार मुग्धमें भी वे दोनों प्रत्यय नहीं हैं। इसलिए सुषुप्तके समान मुग्धमें भी उपाधिके उपशम होनेसे सम्पूर्ण सुषुप्ति होनी चाहिए, अर्ध सुषुप्ति नहीं। इस पर कहते हैं—मूर्च्छामें जीवकी ब्रह्मके साथ अर्द्ध सम्पत्ति होती है, ऐसा हम नहीं कहते, किन्तु हम ऐसा कहते हैं कि मुग्धत्व अर्ध सुषुप्त पक्षमें और अर्ध अन्य अवस्था पक्षमें होता है। मूर्च्छाका सुषुप्तिसे साम्य और वैषम्य दिखलाया गया है। यह मरणका द्वार है। जब इस मूर्च्छितका अवशेष कर्म होता है तब वाणी और मन अपने स्थानमें लौट आते हैं और जब इसका अवशेष कर्म नहीं होता है तब प्राण और औष्ण्य चले जाते हैं। इसलिए ब्रह्मवेत्ता मूर्च्छाको अर्ध सुषुप्ति कहते हैं। और जो यह कहा गया है कि कोई पाँचवीं अवस्था

### सत्यानन्दी-दीपिका

विलक्षणतासे मूर्च्छा आधि सुषुप्ति है। मुग्ध सुषुप्तिके सब धर्मोंसे असम्पन्न होनेसे सुषुप्त नहीं है, इसी प्रकार मृतावस्थाके सब धर्मोंसे रहित होनेसे वह मृतक भी नहीं है। इसलिए मूर्च्छा कुछ अंशमें सुषुप्तिके सम होनेसे अर्ध सुषुप्ति ही है। इस पर पूर्वपक्षी 'कथं पुनः' इत्यादिसे शङ्का करते हैं।

* चेतना आदि रहित सुषुप्तिके आधे धर्मोंके समान मूर्च्छित सुषुप्तिके आधे धर्मोंसे

न पञ्चमी काचिदवस्था प्रसिद्धास्तीति—नैष दोषः, कादाचित्कीयमवस्थेति न प्रसिद्धा स्यात्। प्रसिद्धा चैषा लोकायुर्वेदयोः। अर्धसंपत्त्यभ्युपगमाच्च न पञ्चमी गण्यत इत्यनवद्यम्॥ १० ॥

(५ उभयलिङ्गाधिकरणम्। सू० ११-२१)

## न स्थानतोऽपि परस्योभयलिङ्गं सर्वत्र हि ॥ ११ ॥

पदच्छेद—न, स्थानतः, अपि, परस्य, उभयलिङ्गम्, सर्वत्र, हि।

सूत्रार्थ—( स्थानतः ) स्वभावसे अथवा उपाधिभेदसे भी ( परस्य ) पर ब्रह्ममें ( उभयलिङ्गम् ) सविशेष और निर्विशेष दो रूप उपपन्न (न) नहीं होते, ( हि ) क्योंकि ( सर्वत्र ) 'अशब्दम्' इत्यादि सब उपनिषदोंमें निर्विशेष ब्रह्मका ही उपदेश है।

* येन ब्रह्मणा सुषुप्त्यादिषु जीव उपाध्युपशमात्संपद्यते, तस्येदानीं स्वरूपं श्रुतिवशेन निर्धार्यते। सन्त्युभयलिङ्गाः श्रुतयो ब्रह्मविषयाः—'सर्वकर्मा सर्वकामः सर्वगन्धः सर्वरसः' (छा० ३।१४।२) इत्येवमाद्याः सविशेषलिङ्गाः। 'अस्थूलमनण्वह्रस्वमदीर्घम्' ( बृह० ३।८।८ ) इत्येवमाद्याश्च निर्विशेषलिङ्गाः। किमासु श्रुतिषूभयलिङ्गं ब्रह्म प्रतिपत्तव्यमुतान्यतरलिङ्गम्? यदाप्यन्यतरलिङ्गं, तदापि किं सविशेषमुत निर्विशेषमिति मीमांस्यते। तत्रोभयलिङ्गश्रुत्यनुग्रहादुभयलिङ्गमेव ब्रह्मेत्येवं प्राप्ते ब्रूमः—न तावत्स्वत एव परस्य ब्रह्मण उभयलिङ्गत्वमुपपद्यते। न ह्येकं वस्तु स्वत एव रूपादिविशेषोपेतं तद्विपरीतं चेत्यवधारयितुं शक्यं, विरोधात्। अस्तु तर्हि स्थानतः पृथिव्याद्युपाधियोगादिति, तदपि नोपपद्यते—नह्युपाधियोगादप्यन्यादृशस्य वस्तुनोऽन्यादृशः स्वभावः संभवति।

---

प्रसिद्ध नहीं है। यह दोष नहीं है, क्योंकि यह अवस्था कादाचित्क होनेसे भले प्रसिद्ध न हो परन्तु लोक और आयुर्वेद ग्रन्थोंमें यह प्रसिद्ध है। अर्ध संपत्ति स्वीकार होनेसे पांचवीं अवस्था नहीं गिनी जाती, इसलिए कोई दोष नहीं है॥ १० ॥

सुषुप्ति आदिमें उपाधिके उपशान्त होनेसे जीव जिस ब्रह्मके साथ सम्पन्न होता है, अब उसका स्वरूप श्रुतिकी सामर्थ्यसे निर्धारित किया जाता है। ब्रह्मविषयक श्रुतियाँ दो लिङ्गवाली हैं—'सर्व कर्मा०' (समस्त विश्व इसका कर्म है, सब दोषोंसे रहित इसका काम है, सब गन्ध इसका सुखकर है, और वह सर्वरस है) इत्यादि श्रुति सविशेष लिङ्गक है। और 'अस्थूलम०' ( वह न स्थूल है, न अणु है, न ह्रस्व है और न दीर्घ है ) इत्यादि श्रुति निर्विशेष लिङ्गक है! क्या इन श्रुतियोंमें दोनों लिङ्गवाला ब्रह्म समझना चाहिए अथवा दोनोंमें एक लिङ्गवाला? यदि दोनोंमें एक लिङ्गवाला समझा जाय तो भी क्या वह सविशेष है अथवा निर्विशेष, ऐसा विचार किया जाता है। उसमें दोनों लिङ्गवाली श्रुतियोंके अनुग्रहसे दोनों लिङ्गवाला ब्रह्म समझना चाहिए। सिद्धान्ती—ऐसा प्राप्त होनेपर हम कहते हैं—परब्रह्मका स्वतः उभयलिङ्गत्व उपपन्न नहीं होता, क्योंकि स्वतः ही एक वस्तु रूप आदि विशेष युक्त और रूप आदि विशेष रहित हो, इसप्रकार विरोध होनेसे अवधारण नहीं किया जा सकता। यदि कहो कि स्थानतः—पृथिवी आदि उपाधिके योगसे ऐसा हो, तो वह भी उपपन्न नहीं होता, क्योंकि

### सत्यानन्दी-दीपिका

सम्पन्न होता है और कंपन आदि धर्मोंके साम्य होनेसे आधा मरण पक्षमें है, इस प्रकार मूर्छा अर्धसुषुप्ति कही गई है। पूर्वपक्षमें प्रसिद्ध अवस्थाओंसे पृथक् आत्माका मूर्च्छासे विवेक करनेके लिए यत्नकी असिद्धि फल है, सिद्धान्तमें वह पृथक् निश्चित है॥ १० ॥

* पूर्व अधिकरणोंमें स्वप्न आदि अवस्थाओंकी उक्तिसे उनसे अलिप्त स्वप्रकाश ब्रह्मात्मक उद्देश्यरूप 'त्वम्' पदार्थका परिशोधनकर अब विधेय 'तत्' पदार्थका परिशोधन आरम्भ करते हुए पहले उसका निर्विशेषरूप कहते हैं॥ ११ ॥

नहि स्वच्छः सन्स्फटिकोऽलक्तकाद्युपाधियोगादस्वच्छो भवति, भ्रममात्रत्वादस्वच्छताभिनिवेशस्य, उपाधीनां चाविद्याप्रत्युपस्थापितत्वात्। अतश्चान्यतरलिङ्गपरिग्रहेऽपि समस्तविशेषरहितं निर्विकल्पकमेव ब्रह्म प्रतिपत्तव्यं, न तद्विपरीतम्। सर्वत्र हि ब्रह्मस्वरूपप्रतिपादनपरेषु वाक्येषु 'अशब्दमस्पर्शमरूपमव्ययम्' ( क० ३।१५। मुक्तिको० २।७२ ) इत्येवमादिष्वपास्तसमस्तविशेषमेव ब्रह्मोपदिश्यते ॥ ११ ॥

न भेदादिति चेन्न प्रत्येकमतद्वचनात् ॥ १२ ॥

पदच्छेद—न, भेदात्, इति, चेत्, न, प्रत्येकम्, अतद्वचनात्।

सूत्रार्थ—सभी वेदान्त वाक्योंसे निर्विशेष ब्रह्म ही उपदिष्ट है, ( न ) यह कथन युक्त नहीं है, ( भेदात् ) क्योंकि 'चतुष्पाद् ब्रह्म' इसप्रकार श्रुतिमें भेदका कथन है। ( इति चेन्न ) ऐसा यदि कहो, तो नहीं, क्योंकि ( प्रत्येकम् ) प्रत्येक उपाधिमें ( अतद्वचनात् ) 'यश्चायमस्यां' इत्यादि श्रुतियोंमें ब्रह्मके अभेदका ही श्रवण है।

अथापि स्याद्यदुक्तं निर्विकल्पमेकलिङ्गमेव ब्रह्म, नास्य स्वतः स्थानतो वोभयलिङ्गत्वमस्तीति, तन्नोपपद्यते। कस्मात्? भेदात्। भिन्ना हि प्रतिविद्यं ब्रह्मण आकारा उपदिश्यन्ते। चतुष्पाद्ब्रह्म षोडशकलं ब्रह्म वामनीत्वादिलक्षणं ब्रह्म त्रैलोक्यशरीरवैश्वानरशब्दोदितं ब्रह्मेत्येवंजातीयकाः। तस्मात्सविशेषत्वमपि ब्रह्मणोऽभ्युपगन्तव्यम्। ननूक्तं नोभयलिङ्गत्वं ब्रह्मणः संभवतीति, अयमप्यविरोधः, उपाधिकृतत्वादाकारभेदस्य। अन्यथा हि निर्विषयमेव भेदशास्त्रं प्रसज्येतेति चेत्—नेति ब्रूमः, कस्मात्? प्रत्येकमतद्वचनात्। प्रत्युपाधिभेदं ह्यभेदमेव ब्रह्मणः श्रावयति शास्त्रम्—'यश्चायमस्यां पृथिव्यां तेजोमयोऽमृतमयः पुरुषो यश्चायमध्यात्मं शरीरस्तेजोमयोऽमृतमयः पुरुषोऽयमेव स योऽयमात्मा' (बृह० २।५।१) इत्यादि। अतश्च न भिन्नाकारयोगो ब्रह्मणः शास्त्रीय इति शक्यते वक्तुम्, भेदस्योपासनार्थत्वादभेदे तात्पर्यात् ॥ १२ ॥

---

उपाधिके योगसे भी अन्य प्रकारकी वस्तुका अन्य प्रकारका स्वभाव संभव नहीं है, स्वभावतः स्वच्छ होता हुआ स्फटिक अलक्तक ( लाख ) आदि उपाधिके योगसे अस्वच्छ नहीं हो जाता, उसमें अस्वच्छ का अभिनिवेश भ्रममात्र है, कारण कि उपाधियाँ अविद्यासे उपस्थापित होती हैं। अतः अन्यतर लिङ्गका परिग्रह करनेपर भी समस्त विशेषोंसे रहित निर्विशेष ही ब्रह्म समझना चाहिए उससे विपरीत नहीं। क्योंकि ब्रह्मस्वरूप प्रतिपादन परक 'अशब्दमस्पर्शम०' ( वह शब्दरहित, स्पर्शरहित और रूप रहित अव्यय है ) इत्यादि वाक्योंमें सर्वत्र समस्त विशेष रहित ब्रह्म ही उपदिष्ट है ॥ ११ ॥

भले ही ऐसा हो, परन्तु जो यह कहा गया है कि ब्रह्म निर्विशेष एक लिङ्ग ही है और वह स्वतः अथवा उपाधिसे उभय लिङ्ग नहीं है, वह उपपन्न नहीं होता, किससे? भेदसे। प्रत्येक विद्यामें ब्रह्मके आकार भिन्न भिन्न ही उपदेश किये जाते हैं। जैसे 'ब्रह्म चतुष्पाद है, ब्रह्म सोलह कालाओंवाला है, ब्रह्म वामनीयत्व आदिरूप है, ब्रह्म त्रैलोक्य शरीरवाला है और ब्रह्म वैश्वानर शब्दसे कथित है' इसप्रकारके आकार ब्रह्मके उपदिष्ट हैं। इसलिए ब्रह्म सविशेष है ऐसा भी स्वीकार करना चाहिए। परन्तु यह जो कहा गया है कि ब्रह्म उभय लिङ्गवाला नहीं हो सकता। यह भी विरोध नहीं है, क्योंकि आकार भेद उपाधिकृत है, अन्यथा भेदशास्त्र निर्विषयक ही प्रसक्त होगा। सिद्धान्ती—ऐसा यदि कहो, तो नहीं, ऐसा हम कहते हैं। किससे? इससे कि प्रत्येकमें 'अतद्वचन-ऐसा नहीं' ऐसा वचन है। 'यश्चायमस्यां०' ( इस पृथिवीमें जो यह तेजोमय अमृतमय पुरुष है और शरीरमें जो यह तेजोमय अमृतमय पुरुष है, यही वह है जो कि यह आत्मा है ) इत्यादि शास्त्र प्रत्येक उपाधि भेदमें ब्रह्मके अभेदका ही श्रवण कराता है। इसलिए ब्रह्ममें भिन्न आकारका योग शास्त्रीय है, ऐसा नहीं कहा जा

## अपि चैवमेके ॥ १३ ॥

पदच्छेद—अपि, च, एवम्, एके ।

सूत्रार्थ—( अपि च एके ) और कोई शाखावाले 'मृत्युमाप्नोति' 'नेह नानास्ति किञ्चन' ( एवम् ) इसप्रकार श्रुति वाक्यसे भेदकी निन्दा पूर्वक परमात्माके अभेदका कथन करते हैं ।

अपि चैवं भेददर्शननिन्दापूर्वकमभेददर्शनमेवैके शाखिनः समामनन्ति—'मनसैवेदमाप्तव्यं नेह नानास्ति किंचन । मृत्योः स मृत्युमाप्नोति य इह नानेव पश्यति' (क० ४।११) इति । तथाऽन्येऽपि 'भोक्ता भोग्यं प्रेरितारं च मत्वा सर्वं प्रोक्तं त्रिविधं ब्रह्म मे तत्' ( श्वे० १।१२ ) इति समस्तस्य भोग्यभोक्तृनियन्तृलक्षणस्य प्रपञ्चस्य ब्रह्मैकस्वभावतामधीयते ॥ १३ ॥

कथं पुनराकारवदुपदेशिनीष्वनाकारोपदेशिनीषु च ब्रह्मविषयासु श्रुतिषु सतीष्वनाकारमेव ब्रह्मावधार्यते, न पुनर्विपरीतमिति ? अत उत्तरं पठति—

## अरूपवदेव हि तत्प्रधानत्वात् ॥ १४ ॥

पदच्छेद—अरूपवत्, एव, हि, तत्प्रधानत्वात् ।

सूत्रार्थ—( अरूपवदेव ) रूप आदि आकार रहित ब्रह्मका ही अवधारण करना चाहिए, ( तत्प्रधानत्वात् ) क्योंकि 'अस्थूलम' इत्यादि श्रुतिमें निर्विशेष ब्रह्म प्रधान है ।

* रूपाद्याकाररहितमेव ब्रह्मावधारयितव्यं न रूपादिमत् । कस्मात् ? तत्प्रधानत्वात् । 'अस्थूलमनण्वह्रस्वमदीर्घम्' (बृह० ३।८।८) 'अशब्दमस्पर्शमरूपमव्ययम्' ( कठ० ३।१५। मुक्ति० २।७२ ) 'आकाशो वै नाम नामरूपयोर्निर्वहिता ते यदन्तरा तद्ब्रह्म' (छा० ८।१४।१), 'दिव्यो ह्यमूर्तः पुरुषः सबाह्याभ्यन्तरो ह्यजः' (मुण्ड०२।१।२), 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यमयमात्मा

---

सकता है, क्योंकि भेद उपासनाके लिए है और अभेदमें तात्पर्य है ॥ १२ ॥

और इसप्रकार भेद दर्शनकी निन्दा पूर्वक अभेद दर्शनका ही कोई शाखावाले श्रवण कराते हैं—'मनसैवेदमाप्तव्यं' ( मनसे ही यह तत्त्व प्राप्त करना चाहिए, इस ब्रह्मतत्त्वमें नाना कुछ भी नहीं है । जो पुरुष इसमें भेद-सा देखता है वह मृत्युसे मृत्युको प्राप्त होता है ) इसप्रकार अन्य शाखावाले भी 'भोक्ता भोग्यं०' ( भोक्ता [ जीव ] भोग्य [ जगत् ] और प्रेरक [ ईश्वर ] का विचार कर मेरेसे यह तीन प्रकारसे कहा हुआ वह सब ब्रह्म ही है ) इसप्रकार भोग्य, भोक्ता और नियन्तारूप सम्पूर्ण प्रपञ्च ब्रह्मैक स्वरूप है, ऐसा अध्ययन करते हैं ॥ १३ ॥

परन्तु साकारका उपदेश करनेवाली और निराकारका उपदेश करनेवाली ब्रह्मविषयक श्रुतियोंके होनेपर निराकार ब्रह्मका ही कैसे अवधारण किया जाता है और उसके विपरीत नहीं ? इसलिए इसका उत्तर कहते हैं—

रूप आदि आकारसे रहित ही ब्रह्मका अवधारण करना चाहिए, रूप आदिसे युक्तका नहीं, किससे ? इससे कि उसकी प्रधानता है । जैसे 'अस्थूलम०' ( वह न स्थूल है, न ह्रस्व है और न दीर्घ है ) 'अशब्दम०' (वह शब्दरहित, स्पर्शरहित, रूपरहित और अव्यय है) 'आकाशो वै०' (आकाश नाम और रूपात्मक प्रपञ्चका निर्वाहक है, वे नाम और रूप जिसके भीतर हैं वह ब्रह्म है) 'दिव्यो ह्यमूर्तः०' ( वह निश्चय ही स्वयं प्रकाश, अमूर्त, बाहर-भीतर विद्यमान तथा अज पुरुष है) 'तदेतद्ब्रह्म०' ( वह यह ब्रह्म कारण रहित, कार्यरहित, विजातीय द्रव्यसे रहित और अबाह्य है, यह आत्मा ही सबका

### सत्यानन्दी-दीपिका

* दोनों प्रकारकी श्रुतियोंके होनेपर निर्विशेष ब्रह्मके ग्रहण करनेमें 'तत्परातत्परविरोधे तत्परं बलवत्' ( तत्पर और अतत्पर वाक्योंके विरोध होनेपर तत्पर वाक्य बलवान् होता है ) यह न्याय

ब्रह्म सर्वानुभूः' ( बृह० २।५।१९ ) इत्येवमादीनि वाक्यानि निष्प्रपञ्चब्रह्मात्मतत्त्वप्रधानानि नार्थान्तरप्रधानानीत्येतत्प्रतिष्ठापितं 'तत्तु समन्वयात्' ( ब्रह्मसूत्र १।१।४ )इत्यत्र। तस्मादेवंजातीयकेषु वाक्येषु यथाश्रुतं निराकारमेव ब्रह्मावधारयितव्यम्। इतराणि त्वाकारवद्ब्रह्मविषयाणि वाक्यानि, न तत्प्रधानानि। उपासनाविधिप्रधानानि हि तानि, तेष्वसति विरोधे यथाश्रुतमाश्रयितव्यम्। सति तु विरोधे तत्प्रधानान्यतत्प्रधानेभ्यो बलीयांसि भवन्ति—इत्येष विनिगमनायां हेतुः। येनोभयीष्वपि श्रुतिषु सतीष्वनाकारमेव ब्रह्मावधार्यते, न पुनर्विपरीतमिति ॥ १४ ॥

का तर्ह्याकारवद्विषयाणां श्रुतीनां गतिरित्यत आह—

## प्रकाशवच्चावैयर्थ्यम् ॥ १५ ॥

पदच्छेद—प्रकाशवत्, च, अवैयर्थ्यम्। [ क्वचित्पुस्तके 'प्रकाशवच्चावैयर्थ्यात्' इति पाठः ]

सूत्रार्थ—( प्रकाशवत् ) जैसे सूर्य आदि प्रकाश वक्र अङ्गुलि आदि उपाधिसे वक्र-सा प्रतीत होता है, वैसे ब्रह्म ( च ) भी पृथिवी आदि उपाधिके सम्बन्धसे तत् तत् आकार-सा हो जाता है। वह आकार उपासनाके लिए है। ( अवैयर्थ्यम् ) अतः साकार विषयक श्रुतियाँ व्यर्थ नहीं हैं।

यथा प्रकाशः सौरश्चान्द्रमसो वा वियद्व्याप्यावतिष्ठमानोऽङ्गुल्याद्युपाधिसंबन्धात्तेष्वृजुवक्रादिभावं प्रतिपद्यमानेषु तद्भावमिव प्रतिपद्यते, एवं ब्रह्मापि पृथिव्याद्युपाधिसंबन्धात्तदाकारतामिव प्रतिपद्यते,तदालम्बनो ब्रह्मण आकारविशेषोपदेश उपासनार्थो न विरुध्यते। एवमवैयर्थ्यमाकारवद्ब्रह्मविषयाणामपि वाक्यानां भविष्यति। नहि वेदवाक्यानां कस्यचिदर्थवत्त्वं कस्यचिदनर्थवत्त्वमिति युक्तंप्रतिपत्तुम्, प्रमाणत्वाविशेषात्। नन्वेवमपि यत्पु-

---

अनुभव करनेवाला ब्रह्म है) इत्यादि वाक्य निष्प्रपञ्च ब्रह्मात्मतत्त्व प्रधानक हैं, अन्य अर्थ प्रधानक नहीं हैं, ऐसा 'तत्तु समन्वयात्' इस सूत्रमें प्रतिष्ठापित किया गया है। इसलिए इसप्रकारके वाक्योंमें यथाश्रुत निराकार ब्रह्मका ही अवधारण करना चाहिए। साकार ब्रह्मविषयक अन्य वाक्य तो साकार ब्रह्म प्रधान नहीं है, वे उपासना विधि प्रधान हैं। उनके विरोध न होनेपर यथाश्रुतका आश्रय करना चाहिए। विरोध होनेपर तो तत्प्रधान-निराकार प्रधान वाक्य अतत्प्रधान-निराकार अप्रधान वाक्योंसे बलवान् होते हैं, यही विनिगमनमें हेतु है, जिससे दोनों प्रकारकी श्रुतियोंके विद्यमान होनेपर भी निराकार ब्रह्म ही अवधारित होता है, उससे विपरीत-साकार ब्रह्म अवधारित नहीं होता ॥ १४ ॥

तब साकार ब्रह्मविषयक श्रुतियोंकी क्या गति होगी ? इसपर कहते हैं—

जैसे आकाशको व्याप्त कर अवस्थित हुआ सूर्य अथवा चन्द्रमाका प्रकाश अङ्गुलि आदि उपाधिके सम्बन्धसे उन अङ्गुलि आदिमें सीधा, वक्र आदि भाव प्राप्त होनेपर तद्भाव-सा प्राप्त होता है, वैसे ब्रह्म भी पृथिवी आदि उपाधिके सम्बन्धसे उसके आकारताको प्राप्त-सा होता है। उसका आलम्बन उपासनाके लिए ब्रह्ममें आकार विशेषका उपदेश विरुद्ध नहीं है। इसप्रकार आकारवद् ब्रह्मविषयक वाक्य भी प्रयोजन रहित नहीं होंगे। वेद वाक्योंमें कोई सार्थक और कोई निरर्थक है, ऐसा समझना युक्त नहीं है, क्योंकि दोनोंमें प्रमाणत्व समान है। परन्तु ऐसा माननेपर भी जो पहले प्रतिज्ञा की गई है कि उपाधि योगसे भी ब्रह्म उभयलिङ्ग नहीं है, वह विरुद्ध है ? नहीं ऐसा

### सत्यानन्दी-दीपिका

नियामक है। इसलिए 'अस्थूलम' इत्यादि तत्पर-निराकार ब्रह्मपरक वाक्य 'सर्वकर्मा सर्वकामः' इत्यादि अतत्पर-अनिराकार परक ( साकार ) वाक्योंसे बलवान् होते है। अतः नियामकके होनेसे निर्विशेष ब्रह्मका अवधारण करना चाहिए ॥ १४ ॥

रस्तात्प्रतिज्ञातम्—नोपाधियोगादप्युभयलिङ्गत्वं ब्रह्मणोऽस्तीति, तद्विरुच्यते। नेति ब्रूमः—उपाधिनिमित्तस्य वस्तुधर्मत्वानुपपत्तेः, उपाधीनां चाविद्याप्रत्युपस्थापितत्वात्। सत्यामेव च नैसर्गिक्यामविद्यायां लोकवेदव्यवहारावतार इति तत्र तत्रावोचाम ॥१५॥

## आह च तन्मात्रम् ॥ १६ ॥

पदच्छेद—आह, च, तन्मात्रम्।

सूत्रार्थ—( च ) इसलिए 'यथा सैन्धवघनः' इत्यादि श्रुति ( तन्मात्रम् ) निर्विशेष ब्रह्मको ही ( आह ) कहती है।

आह च श्रुतिश्चैतन्यमात्रं विलक्षणरूपान्तररहितं निर्विशेषं ब्रह्म—'स यथा सैन्धवघनोऽनन्तरोऽबाह्यः कृत्स्नो रसघन एवैवं वा अरेऽयमात्माऽनन्तरोऽबाह्यः कृत्स्नः प्रज्ञानघन एव' (बृह० ४।५।१३) इति। एतदुक्तं भवति—नास्यात्मनोऽन्तर्बहिर्वा चैतन्यादन्यद्रूपमस्ति, चैतन्यमेव तु निरन्तरमस्य स्वरूपम्। यथा सैन्धवघनस्यान्तर्बहिश्च लवणरस एव निरन्तरो भवति, न रसान्तरं तथैवेति ॥ १६ ॥

## दर्शयति चाथो अपि स्मर्यते ॥ १७ ॥

पदच्छेद—दर्शयति, च, अथो, अपि, स्मर्यते।

सूत्रार्थ—'अथात आदेशः' इत्यादि श्रुति निषेध मुखसे निर्विशेष ब्रह्मको ही (दर्शयति) दिखलाती है। (अथो) तथा (स्मर्यते) 'अनादिमत्परं ब्रह्म' इत्यादि स्मृतिमें (अपि) भी ऐसी ही उपदेश है।

दर्शयति च श्रुतिः पररूपप्रतिषेधेनैव ब्रह्म, निर्विशेषत्वात्—'अथात आदेशो नेति नेति' (बृह० २।३।६) इति, 'अन्यदेव तद्विदितादथो अविदितादधि' (के० १।३) 'यतो वाचो निवर्तन्ते अप्राप्य मनसा सह' ( तै० २।४।१ ) इत्येवमाद्या। बाष्कलिना च बाध्वः पृष्टः सन्नवचनेनैव ब्रह्म प्रोवाचेति श्रूयते—'स होवाचाधीहि भो इति स तूष्णीं बभूव तं ह द्वितीये वा तृतीये वा वचन उवाच ब्रूमः खलु त्वं तु न विजानासि। उपशान्तोऽयमात्मा' इति। तथा स्मृतिष्वपि परप्रतिषेधे-

---

हम कहते हैं—उपाधिनिमित्तक वस्तुका धर्म नहीं हो सकता, क्योंकि उपाधियाँ अविद्याद्वारा उपस्थापित हैं। नैसर्गिक ( स्वाभाविक ) अविद्याके होनेपर ही लौकिक और वैदिक व्यवहारोंका अवतार होता है, ऐसा हमने तत्-तत् स्थलमें कहा है ॥ १५ ॥

'स यथा सैन्धवघनः०' ( जैसे लवण पिण्ड आन्तर और बाहरसे रहित सम्पूर्ण रसघन ही है, हे मैत्रेयी ! वैसे ही यह आत्मा आन्तर-बाह्य भेदसे शून्य सम्पूर्ण प्रज्ञानघन ही है ) इसप्रकार यह श्रुति विलक्षण रूपान्तरसे रहित चैतन्यमात्र निर्विशेष ब्रह्मको कहती है। तात्पर्य यह है—इस आत्माका आन्तर अथवा बाहर चैतन्यरूपसे अन्यरूप नहीं है, किन्तु चैतन्य ही इसका निरन्तर स्वरूप है। जैसे लवण पिण्डके आन्तर और बाहर लवण रस ही निरन्तर होता है, अन्य रस नहीं होता; वैसे ही ।१६।

और 'अथात आदेशो०' ( इसके अनन्तर ब्रह्म मूर्त नहीं है और अमूर्त भी नहीं है यह उपदेश है ) अन्यदेव०' ( वह विदित-कार्यसे अन्य और अविदित-कारणसे अन्य है ) और 'यतो वाचो०' ( जहाँसे मन सहित वाणी उसे न पाकर लौट आती हैं ) इत्यादि श्रुति पररूप-आनत्मरूप प्रतिषेधसे ही ब्रह्मको दिखलाती है, क्योंकि वह निर्विशेषरूप है। बाष्कलिसे पूछे गये बाध्वने अवचनसे ही ब्रह्मको कहा 'स होवाच०' ( उसने कहा—हे भगवन् बाध्व ! मुझे ब्रह्मका उपदेश कीजिए, ऐसा पूछे जानेपर वह तूष्णी रहा, द्वितीय अथवा तृतीय बार पूछनेपर उसने उससे कहा—हम कह रहे हैं, किन्तु तुम उसे नहीं जान रहे हो यह आत्मा उपशान्त-द्वैतरहित है ) ऐसी श्रुति है। इसप्रकार 'ज्ञेयं यत्तत्प्रवक्ष्यामि०' ( जो ज्ञेय है उसे यथावत् कहूँगा जिसे जानकर मनुष्य परमानन्दको प्राप्त

नैवोपदिश्यते—'ज्ञेयं यत्तत्प्रवक्ष्यामि यज्ज्ञात्वाऽमृतमश्नुते । अनादिमत्परं ब्रह्म न सत्तन्नासदुच्यते' ( गी० १३।१२ ) इत्येवमाद्यासु । तथा विश्वरूपधरो नारायणो नारदमुवाचेति स्मर्यते—'माया ह्येषा मया सृष्टा यन्मां पश्यसि नारद । सर्वभूतगुणैर्युक्तं नैवं मां ज्ञातुमर्हसि ॥' इति ॥१७॥

## अत एव चोपमा सूर्यकादिवत् ॥ १८ ॥

**पदच्छेद**—अतः, एव, च, उपमा, सूर्यकादिवत् ।

**सूत्रार्थ**—( अतएव ) क्योंकि इस चैतन्यस्वरूप आत्माका पर प्रतिषेधसे उपदेश किया जाता है, इसलिए इसकी ( सूर्यकादिवत् ) जलगत सूर्य प्रतिविम्बके साथ ( उपमा ) उपमा दी जाती है ।

यत एव चायमात्मा चैतन्यरूपो निर्विशेषो वाङ्मनसातीतः परप्रतिषेधोपदेश्योऽत एव चास्योपाधिनिमित्तामपारमार्थिकीं विशेषवत्तामभिप्रेत्य जलसूर्यकादिवदित्युपमोपादीयते मोक्षशास्त्रेषु—'यथा ह्ययं ज्योतिरात्मा विवस्वानपो भिन्ना बहुधैकोऽनुगच्छन् । उपाधिना क्रियते भेदरूपो देवः क्षेत्रेष्वेवमजोऽयमात्मा' इति । 'एक एव हि भूतात्मा भूते भूते व्यवस्थितः । एकधा बहुधा चैव दृश्यते जलचन्द्रवत्' ( ब्र० विं० १२ ) इत्येवमादिषु ॥ १८ ॥

अत्र प्रत्यवस्थीयते—

## अम्बुवदग्रहणात्तु न तथात्वम् ॥ १९ ॥

**पदच्छेद**—अम्बुवत्, अग्रहणात्, तु, न, तथात्वम् ।

**सूत्रार्थ**—( अम्बुवत् ) जैसे जलका सूर्यसे पृथक् ग्रहण होता है, वैसे यहाँ उपाधिका पृथक् ( अग्रहणात् ) ग्रहण नहीं होता, इसलिए ( न तथात्वम् ) यह सूर्य दृष्टान्त युक्त नहीं है ।

* न जलसूर्यकादितुल्यत्वमिहोपपद्यते, तद्वदग्रहणात् । सूर्यादिभ्यो हि मूर्तेभ्यः पृथग्भूतं विप्रकृष्टदेशं मूर्तं जलं गृह्यते, तत्र युक्तः सूर्यादिप्रतिविम्बोदयः, न त्वात्मा मूर्तो

---

होता है । वह अनादिमत् परब्रह्म न सत्-इन्द्रिय वेद्य और न असत्-परोक्ष कहा जाता है ) इत्यादि स्मृतियोंमें भी परके प्रतिषेधसे ही उसका उपदेश किया जाता है । और विश्वरूप धारण करनेवाले नारायणने नारदसे कहा—'माया ह्येषा०' (हे नारद ! यह माया मैंने रची है, जो कि तुम मुझे सर्वभूत गुणोंसे युक्त देखते हो इसप्रकार द्वैतयुक्त मुझे देखनेके लिए तुम योग्य नहीं हो ) ऐसी स्मृति है ॥१७॥

और क्योंकि यह आत्मा चैतन्यरूप, निर्विशेष, वाणी और मनका अविषय पर-द्वैत प्रतिषेधसे उपदेश्य है, इसलिए इसमें उपाधि निमित्तक अपारमार्थिक सविशेषके अभिप्रायसे 'यथा ह्ययं०' ( जैसे यह ज्योतिःस्वरूप सूर्य स्वतः एक होनेपर भी भिन्न-भिन्न जलोंमें प्रतिबिम्बित होता हुआ उपाधिसे अनेक प्रकारका भासता है, वैसे ही यह स्वयं प्रकाशरूप अज आत्मा शरीरोंमें उपाधिसे अनेक भिन्न-भिन्न आकाररूपसे भासता है) और 'एक एव०' ( एक ही भूतात्मा प्रत्येक भूतमें अवस्थित होता हुआ जलगत चन्द्रप्रतिबिम्बके समान एकधा और अनेकधा दिखाई देता है ) इत्यादि मोक्षशास्त्रोंमें जलगत सूर्य प्रतिविम्बके समान उपमाका ग्रहण किया जाता है ॥ १८ ॥

इसमें शङ्का उठायी जाती है—

यहाँ जलगत सूर्य प्रतिविम्ब आदिके साथ समानता उपपन्न नहीं होती, क्योंकि आत्माका उसके समान ग्रहण नहीं होता । मूर्त सूर्य आदिसे पृथग्भूत दूर देशस्थ मूर्त जल सबसे गृहीत होता है, इसलिए उसमें सूर्य आदि प्रतिबिम्बका उदय होना युक्त है । परन्तु आत्मा मूर्त नहीं है और

### सत्यानन्दी-दीपिका

* पूर्वपक्षी आत्मामें उक्त दृष्टान्तकी विषमताका प्रतिपादन करते हैं—रूपादि युक्त सूर्यका रूप आदि युक्त जलमें प्रतिविम्ब युक्त है । परन्तु आत्मा तो रूपादि रहित, सर्वगत और सबसे अभिन्न

नचास्मात्पृथग्भूता विप्रकृष्टदेशाश्चोपाधयः, सर्वगतत्वात्सर्वानन्यत्वाच्च। तस्मादयुक्तोऽयं दृष्टान्त इति॥ १९॥

अत्र प्रतिविधीयते—

**वृद्धिह्रासभाक्त्वमन्तर्भावादुभयसामञ्जस्यादेवम्॥ २०॥**

पदच्छेद—वृद्धिह्रासभाक्त्वम्, अन्तर्भावात्, उभयसामञ्जस्यात्, एवम्।

सूत्रार्थ—जैसे जलगत सूर्य प्रतिबिम्ब जलगत वृद्धि और ह्रासका भागी-सा होता है (एवम्) वैसे निर्विशेष ब्रह्म भी उपाधिके (अन्तर्भावात्) अन्तर्भावसे (वृद्धिह्रासभाक्त्वम्) उपाधिगत वृद्धि और ह्रासका भागी-सा होता है, इस प्रकार (उभयसामञ्जस्यात्) दृष्टान्त और दार्ष्टान्तिक दोनोंमें सामञ्जस्य है।

युक्त एव त्वयं दृष्टान्तः, विवक्षितांशसंभवात्। नहि दृष्टान्तदार्ष्टान्तिकयोः क्वचित्कंचिद्विवक्षितांशं मुक्त्वा सर्वसारूप्यं केनचिद्दर्शयितुं शक्यते। सर्वसारूप्ये हि दृष्टान्तदार्ष्टान्तिकभावोच्छेद एव स्यात्। न चेदं स्वमनीषया जलसूर्यकादिदृष्टान्तप्रणयनम्, शास्त्रप्रणीतस्य त्वस्य प्रयोजनमात्रमुपन्यस्यते। किं पुनरत्र विवक्षितं सारूप्यमिति? तदुच्यते—वृद्धिह्रासभाक्त्वमिति। जलगतं हि सूर्यप्रतिबिम्बं जलवृद्धौ वर्धते, जलह्रासे ह्रसति, जलचलने चलति, जलभेदे भिद्यत इत्येवं जलधर्मानुयायि भवति, नतु परमार्थतः सूर्यस्य तथात्वमस्ति। एवं परमार्थतोऽविकृतमेकरूपमपि सद्ब्रह्म देहाद्युपाध्यन्तर्भावाद्भजत इवोपाधिधर्मान्वृद्धिह्रासादीन्। एवमुभयोर्दृष्टान्तदार्ष्टान्तिकयोः सामञ्जस्यादविरोधः॥२०॥

**दर्शनाच्च॥ २१॥**

पदच्छेद—दर्शनात्, च।

सूत्रार्थ—प्रतिबिम्बरूप देहान्तरानुप्रवेश परब्रह्मका 'पुरश्चक्रे द्विपदः' इत्यादि श्रुतियोंमें देखा जाता है, अतः निर्विशेष ब्रह्म सिद्ध है।

* दर्शयति च श्रुतिः परस्यैव ब्रह्मणो देहादिषूपाधिष्वन्तरनुप्रवेशम्—'पुरश्चक्रे द्विपदः

---

उपाधियाँ इससे पृथग्भूत और दूर देशस्थ नहीं हैं, क्योंकि आत्मा सर्वगत और सबसे अभिन्न है। इसलिए यह दृष्टान्त युक्त नहीं है॥ १९॥

यहाँ इस शङ्काका समाधान किया जाता है—

यह दृष्टान्त तो युक्त ही है, क्योंकि इसमें विवक्षितांशका संभव है। दृष्टान्त और दार्ष्टान्तिकमें क्वचित्, किञ्चित् विवक्षित अंशको छोड़कर सर्वरूपसे सादृश्य कोई भी नहीं दिखा सकता। सम्पूर्णरूपसे सादृश्य होनेपर तो दृष्टान्त-दार्ष्टान्तिकभावका उच्छेद ही हो जायगा, और यह जल सूर्यक आदि दृष्टान्त अपनी बुद्धिसे नहीं रचा गया है, किन्तु शास्त्र रचित इसके प्रयोजनमात्रका उपन्यास किया जाता है। यहाँ विवक्षित सारूप्य क्या है? उसे कहते हैं—वृद्धि और ह्रासका भागी होना सारूप्य है। जलगत सूर्य प्रतिबिम्ब जलकी वृद्धि होनेपर बढ़ता है, जलके ह्रास होनेपर क्षीण होता है, जलके हिलनेपर हिलता है, जलके भिन्न होनेपर भिन्न होता है, इस प्रकार जलके धर्मोंका अनुयायी होता है, परन्तु परमार्थतः सूर्य वैसा नहीं है, वैसे परमार्थतः अविकृत, एकरूप होता हुआ भी ब्रह्म देह आदि उपाधिके अन्तर्भावसे वृद्धि और ह्रास आदि उपाधिके धर्मोंको भजता ( प्राप्त होता ) सा है। इस प्रकार दृष्टान्त और दार्ष्टान्तिक दोनोंके सामञ्जस्यसे अविरोध है॥ २०॥

'पुरश्चक्रे द्विपदः०' ( परमेश्वरने दो पैरोंवाले पुर-मनुष्यादि शरीर बनाये और चार पैरोंवाले

सत्यानन्दी-दीपिका

है, अतः उपाधियाँ उससे भिन्न और दूरस्थ नहीं हो सकतीं, इसलिए उसका माया द्वारा बुद्धि आदिमें प्रतिबिम्ब युक्त नहीं है॥ १९॥

पुरश्चक्रे चतुष्पदः। पुरः स पक्षी भूत्वा पुरः पुरुष आविशत्' (बृह० २।५।१८) इति। 'अनेन जीवेनात्मनाऽनुप्रविश्य' (छा० ६।३।२) इति च। तस्माद्युक्तमेतत्—'अत एव चोपमा सूर्यकादिवत्' (ब्रह्मसूत्र ३।२।१८) इति। तस्मान्निर्विकल्पकैकलिङ्गमेव ब्रह्म नोभयलिङ्गं विपरीतलिङ्गं चेति सिद्धम्। अत्र केचिद् द्वे अधिकरणे कल्पयन्ति। प्रथमं तावत्—किं प्रत्यस्तमिताशेषप्रपञ्चमेकाकारं ब्रह्मोत प्रपञ्चवदनेकाकारोपेतमिति? द्वितीयं तु—स्थिते प्रत्यस्तमितप्रपञ्चत्वे किं सल्लक्षणं ब्रह्मोत बोधलक्षणमुतोभयलक्षणमिति? अत्र वयं वदामः—सर्वथाप्यानर्थक्यमधिकरणान्तरारम्भस्येति। यदि तावदनेकलिङ्गत्वं परस्य ब्रह्मणो निराकर्तव्यमित्ययं प्रयासस्तत्पूर्वेणैव 'न स्थानतोऽपि' (ब्रह्मसूत्र ३।२।११) इत्यनेनाधिकरणेन निराकृतमित्युत्तरमधिकरणं 'प्रकाशवच्च' (ब्रह्मसूत्र ३।२।१५) एतद्व्यर्थमेव भवेत्। न च सल्लक्षणमेव ब्रह्म न बोधलक्षणमिति शक्यं वक्तुम्, 'विज्ञानघन एव' इत्यादि श्रुतिवैयर्थ्यप्रसङ्गात्। कथं वा निरस्तचैतन्यं ब्रह्म चेतनस्य जीवस्यात्मत्वेनोपदिश्येत? नापि बोधलक्षणमेव ब्रह्म न सल्लक्षणमिति शक्यं वक्तुम्, 'अस्तीत्येवोपलब्धव्यः' (कठ० ६।१३) इत्यादिश्रुतिवैयर्थ्यप्रसङ्गात्। कथं वा निरस्तसत्ताको बोधोऽभ्युपगम्येत? नाप्युभयलक्षणमेव ब्रह्मेति शक्यं वक्तुम्, पूर्वाभ्युपगमविरोध-

---

पशु शरीर बनाये। पहले वह पुरुष पक्षी (लिङ्ग शरीरी) होकर शरीरमें प्रविष्ट हुआ) 'अनेन जीवेन०' (इस जीवरूपसे प्रवेश कर) इसप्रकार श्रुति परब्रह्मका ही देह आदि उपाधियोंमें अनुप्रवेश दिखलाती है। इसलिए 'अतएव चोपमा सूर्यकादिवत्' यह युक्त है। इससे सिद्ध हुआ कि निर्विशेष एक लिङ्ग (आकारवाला) ही ब्रह्म है न उभय लिङ्गवाला है और न विपरीत लिङ्गवाला है। यहाँ कोई दो अधिकरणोंकी कल्पना करते हैं—प्रथम तो यह कि सम्पूर्ण प्रपञ्चसे शून्य एक आकार ब्रह्म है अथवा प्रपञ्चसे युक्त अनेक आकार युक्त है। द्वितीय तो सर्व प्रपञ्च शून्य स्थित होनेपर क्या सद्रूप ब्रह्म है, वा बोधरूप है अथवा उभयरूप है? इसपर हम कहते हैं—अन्य अधिकरणका आरम्भ सर्वथा अनर्थक है। यदि परब्रह्मका अनेक लिङ्गत्व निराकर्तव्य है इसलिए यह प्रयास है, तो इसका 'न स्थानतोऽपि' इस पूर्व अधिकरणसे निराकरण हो गया है, इससे 'प्रकाशवच्च' यह अग्रिम अधिकरण व्यर्थ ही होगा। ब्रह्म सद्रूप ही है ज्ञानरूप नही है, ऐसा नहीं कहा जा सकता, क्योंकि 'विज्ञानघन एव' इत्यादि श्रुतियोंमें वैयर्थ्य प्रसङ्ग आ जायगा। अथवा चैतन्य रहित ब्रह्म चैतन्य जीवका आत्मरूपसे कैसे उपदिष्ट होगा। ब्रह्म ज्ञानरूप ही है सद्रूप नहीं है, ऐसा नहीं कहा जा सकता है, क्योंकि 'अस्तीत्येवोपलब्धव्यः' (है, इस प्रकार उपलब्धि करनी चाहिए) इत्यादि श्रुतियोंका वैयर्थ्य प्रसङ्ग होगा। जिसकी सत्ता नहीं है, ऐसा बोध कैसे स्वीकार किया जायगा? इस प्रकार ब्रह्म उभय लक्षण ही है, इस प्रकार

## सत्यानन्दी-दीपिका

❀ स्वसिद्धान्तको दृढ़ करनेके लिए किसी एक देशीकी व्याख्याका 'अत्र केचिद्' इत्यादिसे उत्थान करते हैं—वे पूर्वोक्त सूत्रोंमें दो अधिकरणोंकी कल्पला करते हैं 'न स्थानतोऽपि (ब्रह्मसूत्र ३।२।११) तक इस एक अधिकरणसे ब्रह्ममें निष्प्रपञ्चत्व सिद्ध होनेपर 'ब्रह्मका क्या स्वरूप है? ऐसा सन्देह होनेपर 'प्रकाशवच्च (ब्रह्मसूत्र ३।२।१५) इत्यादि द्वितीय अधिकरण प्रवृत्त हुआ। ब्रह्म केवल सद्रूप ही नहीं है, किन्तु ज्ञानरूप भी है, क्योंकि 'सत्यं ज्ञानम्, 'सदेव सोम्य०' इत्यादि श्रुतियाँ द्विरूप ब्रह्ममें सार्थक हैं। 'सिद्धान्त—'आह च तन्मात्रम्' (ब्रह्मसूत्र ३।२।१६) ब्रह्म सद्रूप ही है, क्योंकि ज्ञान सत्तासे भिन्न है। इस प्रकार 'अत्र वयं वदामः' इत्यादिसे दूसरे अधिकरणको दूषित करते हैं—द्वितीय अधिकरणका क्या ब्रह्मके अनेक रूपत्वका निरास प्रयोजन है वा ज्ञानरूपत्वका निरास अथवा सत्ताका निरास? इस प्रकार विकल्प कर सर्वथा आनर्थक्यका विस्तार दिखलाते हुए प्रथम विकल्पसे 'यदि तावत्' इत्यादिसे गतार्थता कहते हैं।

प्रसङ्गात्। सत्ताव्यावृत्तेन च बोधेन बोधव्यावृत्तया च सत्तयोपेतं ब्रह्म प्रतिजानानस्य तदेव पूर्वाधिकरणप्रतिषिद्धं सप्रपञ्चत्वं ब्रह्मणः प्रसज्येत। श्रुतत्वाददोष इति चेत्—न, एकस्यानेकस्वभावत्वानुपपत्तेः। अथ सत्तैव बोधो बोध एव च सत्ता, नानयोः परस्पर-व्यावृत्तिरस्तीति यद्युच्येत, तथापि किं सल्लक्षणं ब्रह्मोत बोधलक्षणमुतोभयलक्षणमित्ययं विकल्पो निरालम्बन एव स्यात्। सूत्राणि त्वेकाधिकरणत्वेनैवास्माभिर्नीतानि। ❀अपि च ब्रह्मविषयासु श्रुतिष्वाकारवदनाकारप्रतिपादनेन विप्रतिपन्नास्वनाकारे ब्रह्मणि परिगृहीतेऽवश्यं वक्तव्येतरासां श्रुतीनां गतिः। तादर्थ्येन प्रकाशवच्चेत्यादीनि सूत्राण्यर्थवत्तराणि संपद्यन्ते। यदप्याहुराकारवादिन्योऽपि श्रुतयः प्रपञ्चप्रविलयमुखे-नानाकारप्रतिपत्त्यर्था एव न पृथगर्था इति तदपि न समीचीनमिव लक्ष्यते। कथम्? ये हि परविद्याधिकारे केचित्प्रपञ्चा उच्यन्ते, यथा—'युक्ता ह्यस्य हरयः शता दशेत्ययं वै हरयोऽयं वै दश च सहस्राणि बहूनि चानन्तानि च' ( बृह० २।५।१९ ) इत्येवमादयस्ते भवन्ति प्रविलयार्थाः, 'तदेतद्ब्रह्मापूर्वमनपरमनन्तमबाह्यम्' ( बृह० २।५।१९ ) इत्युपसंहारात्। ये पुनरुपासनाविधानाधिकारे प्रपञ्चा उच्यन्ते, यथा 'मनोमयः प्राणशरीरो भारूपः' ( छा० ३।१४।२ ) इत्येवमादयो न तेषां प्रविलयार्थत्वं न्याय्यम्, 'स क्रतुं कुर्वीत' (छा० ३।१४।१) इत्येवंजातीयकेन प्रकृतेनवोपासनविधिना तेषां संबन्धात्। श्रुत्या चैवंजातीयकानां

---

भी नहीं कहा जा सकता, कारण कि 'न स्थानतोऽपि' इस सूत्रमें पूर्व स्वीकारके साथ विरोध प्रसङ्ग होगा। सत्तासे रहित ज्ञान और ज्ञानसे रहित सत्तासे युक्त ब्रह्म है, ऐसी प्रतिज्ञा करनेवालेको पूर्व अधिकरणमें प्रतिषिद्ध वही सप्रपञ्चत्व ब्रह्ममें प्रसक्त होगा अर्थात् प्रपञ्च युक्त ब्रह्म होगा। यदि कहो कि श्रुति प्रतिपादित होनेसे यह दोष नहीं है, तो यह युक्त नहीं है, क्योंकि एकका अनेक स्वभाव नहीं हो सकता। यदि कहो कि सत्ता ही ज्ञान है और ज्ञान ही सत्ता है, इन दोनोंकी परस्पर व्यावृत्ति नहीं है, तो भी ब्रह्म सद्रूप है वा बोध रूप है अथवा उभयरूप है? यह विकल्प निराश्रय हो जायगा। सूत्रोंकी योजना तो हमने एक अधिकरणरूपसे कर ली है। और ब्रह्म-विषयक श्रुतियोंके साकार और निराकार ब्रह्मका प्रतिपादन करनेसे परस्पर विरोध होनेके कारण निराकार ब्रह्मके परिगृहीत होनेपर अन्य श्रुतियोंकी गति अवश्य कहनी चाहिए। और उस गतिके लिए 'प्रकाशवच्च' इत्यादि सूत्रोंका अधिक अर्थ संगत है। जो भी कहते हैं कि साकार वादिनी श्रुतियां प्रपञ्च विलयद्वारा निराकार ब्रह्मके ज्ञानके लिए ही हैं उनका पृथक् प्रयोजन नहीं है, वह भी समीचीन-सा देखनेमें नहीं आता। कैसे? ये जो परविद्याके प्रकरणमें 'युक्ता ह्यस्य ( जैसे रथमें जुते अश्व हैं वैसे शरीररूप रथमें जोड़े हुए इसके इन्द्रियरूप अश्व शत और दश हैं, यह परमेश्वर ही हरि-इन्द्रियरूप अश्व है, यही दश, सहस्र, अनेक और अनन्त है ) इत्यादि जो कोई विस्तारसे कहे जाते हैं, वे प्रविलयके लिए होते हैं, क्योंकि 'तदेतद्ब्रह्म०' ( वह यह ब्रह्म कारण रहित, कार्य रहित विजातीय द्रव्यसे रहित और अबाह्य है ) ऐसा उपसंहार है। परन्तु 'मनोमयः०' ( मनोमयः, प्राण शरीर और चैतन्यरूप है ) इत्यादि जो उपासना विधानके प्रकरणमें विस्तारसे कहे जाते हैं, वे प्रल-यार्थक हों यह युक्त नहीं है, कारण कि 'स क्रतुं कुर्वीत' ( वह ध्यान करे ) इसप्रकारकी प्रकृत

### सत्यानन्दी-दीपिका

❀ पर विद्याके प्रकरणमें 'युक्ता ह्यस्य०' इत्यादि आकार प्रतिपादक श्रुतियाँ यद्यपि प्रपञ्चप्रवि-लयद्वारा तत्त्वज्ञानकी प्राप्तिके लिए उपयुक्त हैं, क्योंकि 'तदेतद्ब्रह्म०' इसप्रकार उपसंहारमें निर्वि-शेष ब्रह्म ही प्रतिपादित है, तो भी 'मनोमयः प्राण शरीरः' इस तरह उपासना विधानके प्रकरणमें पठित श्रुतियाँ प्रपञ्चके प्रविलयके लिए नहीं हो सकतीं, कारण कि ईश्वरमें अनेक इन्द्रियोंका कथन

गुणानामुपासनार्थत्वेऽवकल्प्यमाने न लक्षणया प्रविलयार्थत्वमवकल्पते। * सर्वेषां च साधारणे प्रविलयार्थत्वे सति 'अरूपवदेव हि तत्प्रधानत्वात्' (ब्रह्मसूत्र ३।२।१४) इति विनिगमनकारणवचनमनवकाशं स्यात्। फलमप्येषां यथोपदेशं क्वचिद्दुरितक्षयः क्वचिदैश्वर्यप्राप्तिः क्वचित्क्रममुक्तिरित्यवगम्यत एवेत्यतः पार्थगर्थ्यमेवोपासनावाक्यानां ब्रह्मवाक्यानां च न्याय्यं नैकवाक्यत्वम्। कथं चैषामेकवाक्यतोत्प्रेक्ष्यत इति वक्तव्यम्। एकनियोगप्रतीतेः प्रयाजदर्शपूर्णमासवाक्यवदिति चेत्—न, ब्रह्मवाक्येषु नियोगाभावत्। वस्तुमात्रपर्यवसायीनि हि ब्रह्मवाक्यानि न नियोगोपदेशीनीत्येतद्विस्तरेण प्रतिष्ठापितम्—'तत्तु समन्वयात्' (ब्रह्मसूत्र १।१।४) इत्यत्र। किंविषयश्चात्र नियोगोऽभिप्रेयत इति वक्तव्यम्। पुरुषो हि नियुज्यमानः कुर्विति स्वव्यापारे कस्मिंश्चिन्नियुज्यते। ननु द्वैतप्रपञ्चविलयो नियोगविषयो भविष्यति। अप्रविलापिते हि द्वैतप्रपञ्चे ब्रह्मतत्त्वावबोधो न भवति, अतो ब्रह्मतत्त्वावबोधप्रत्यनीकभूतो द्वैतप्रपञ्चः प्रविलाप्यः। यथा स्वर्गकामस्य यागोऽनुष्ठातव्य उपदिश्यत एवमपवर्गकामस्य प्रपञ्चप्रविलयः। यथाच तमसि व्यवस्थितं घटादितत्त्वमवबुभुत्समानेन तत्प्रत्यनीकभूतं तमः प्रविलाप्यत एवं ब्रह्मतत्त्वमवबुभुत्समानेन तत्प्रत्यनीकभूतः प्रपञ्चः प्रविलापयितव्यः।

---

उपासना विधिके साथ उन साकार वाक्योंका सम्बन्ध है। श्रुतिसे-अभिधावृत्तिसे इसप्रकारके गुण उपासनार्थक संभव होनेपर उनका लक्षणावृत्तिसे प्रलयार्थत्व नहीं हो सकता। और यदि सब उपासना-साकार वाक्योंका साधारण प्रविलयार्थ माना जाय, तो 'अरूपवदेव हि तत्प्रधानत्वात्' यह विनिगमन-नियामक कारण वचन अनवकाश हो जायगा। और उनका फल भी उपदेशके अनुसार कहीं-पर पाप क्षय, कहीपर ऐश्वर्य प्राप्ति और कहींपर क्रममुक्ति इसप्रकार अवगत होता है, इसलिए उपासना वाक्यों और ब्रह्मवाक्योंकी पृथक् अर्थता (पृथक् पृथक् अर्थ) युक्त है, एकवाक्यता (एकार्थवत्ता) नहीं। इनकी एकवाक्यताकी कल्पना किसप्रकारकी जाती है यह कहना चाहिए। यदि कहो कि प्रयाज और दर्शपूर्णमास वाक्योंके समान एक नियोगकी प्रतीति होनेसे एकवाक्यता है, तो ऐसा नहीं, क्योंकि ब्रह्मवाक्योंमें नियोगका अभाव है। ब्रह्मवाक्य वस्तुमात्र पर्यवसायी हैं नियोगका उपदेश करने वाले नहीं हैं, ऐसा 'तत्तु समन्वयात्' इस सूत्रमें विस्तारसे प्रतिष्ठापित किया गया है। यहाँ किंविषयक नियोग अभिप्रेत है? यह कहना चाहिए, क्योंकि जो पुरुषको नियुक्त करता हुआ किसी अपने व्यापारमें 'करो' इसप्रकार नियुक्त करता है वह नियोग है। द्वैत प्रपञ्चका प्रविलय यहाँ नियोगका विषय होगा, क्योंकि द्वैतप्रपञ्चके प्रविलापित किये बिना ब्रह्मतत्त्वका ज्ञान नहीं होता, इसलिए ब्रह्मतत्त्वके ज्ञानमें प्रतिबन्धकीभूत द्वैतप्रपञ्चका प्रविलापन करना चाहिए। जैसे स्वर्गकामनावालेको यागका अनुष्ठान करना चाहिए, ऐसा उपदेश किया जाता है, वैसे मुमुक्षुके लिए प्रपञ्च प्रविलयका उपदेश किया जाता है। जैसे अन्धकारमें स्थित घटादि पदार्थोंको जाननेकी इच्छा करनेवाला उसके प्रतिबन्धकीभूत तमका प्रविलय करता है, वैसे ब्रह्मतत्त्वको जाननेकी इच्छा करने वालेको उस तत्त्वके प्रतिबन्धकीभूत

## सत्यानन्दी-दीपिका

प्राणी भेदसे है। प्राणी अनन्त हैं, उनकी इन्द्रियाँ भी अनन्त हैं, ये सभी इन्द्रियाँ ईश्वरकी हैं, ऐसा मानकर ईश्वरकी अनन्त इन्द्रियाँ 'युक्ता ह्यस्य' इत्यादि श्रुतिमें कही गई हैं। 'युक्ता ह्यस्य' जीवभावको प्राप्त हुए ईश्वरके हरि-दश इन्द्रियाँ हैं, इन्द्रियाँ विषयोंका आहरण करती हैं अथवा विषय इन्द्रियोंका हरण करते हैं इसलिए हरि कहे जाते हैं।

* साकार और निराकार प्रतिपादक श्रुतियोंके विद्यमान होनेपर ब्रह्म निराकार ही है, इसमें 'अस्थूलम' इत्यादि श्रुतियोंका निर्विशेष ब्रह्ममें तात्पर्य ही नियामक है। इसको कहनेके लिए 'अरूपवदेव कि तत्प्रधानत्वात्' (ब्रह्मसूत्र ३।२।१४) यह सूत्र सार्थक होता है।

* ब्रह्मस्वभावो हि प्रपञ्चो न प्रपञ्चस्वभावं ब्रह्म, तेन नामरूपप्रपञ्चप्रविलापनेन ब्रह्मतत्त्वावबोधो भवतीति। अत्र वयं पृच्छामः—कोऽयं प्रपञ्चप्रविलयो नाम ? किमग्निप्रतापसंपर्काद् घृतकाठिन्यप्रविलय इव प्रपञ्चप्रविलयः कर्तव्य आहोस्विदेकस्मिंश्चन्द्रे तिमिरकृतानेकचन्द्रप्रपञ्चवदविद्याकृतो ब्रह्मणि नामरूपप्रपञ्चो विद्यया प्रविलापयितव्य इति ? तत्र यदि तावद्विद्यमानोऽयं प्रपञ्चो देहादिलक्षण आध्यात्मिको बाह्यश्च पृथिव्यादिलक्षणः प्रविलापयितव्य इत्युच्येत स पुरुषमात्रेणाशक्यः प्रविलापयितुमिति तत्प्रविलयोपदेशोऽशक्यविषय एव स्यात्। एकेन चादिमुक्तेन पृथिव्यादिप्रविलयः कृत इतीदानीं पृथिव्यादिशून्यं जगदभविष्यत्। * अथाविद्याध्यस्तो ब्रह्मण्येकस्मिन्नयं प्रपञ्चो विद्यया प्रविलाप्यत इति ब्रूयात्, ततो ब्रह्मैवाविद्याध्यस्तप्रपञ्चप्रत्याख्यानेनावेदयितव्यम्। 'एकमेवाद्वितीयं ब्रह्म', 'तत्सत्यं स आत्मा तत्त्वमसि' (छा० ६।८।७) इति, तस्मिन्नावेदिते विद्या स्वयमेवोत्पद्यते, तया चाविद्या बाध्यते, ततश्चाविद्याध्यस्तः सकलोऽयं नामरूपप्रपञ्चः

---

प्रपञ्चका प्रविलय करना चाहिए, क्योंकि ब्रह्मस्वभाववाला प्रपञ्च है किन्तु प्रपञ्च स्वभाववाला ब्रह्म नहीं है। इस नाम, रूप प्रपञ्चके प्रविलापनसे ब्रह्मतत्त्वका बोध होता है। सि०—हम यहाँ पूछते हैं—यह प्रपञ्च प्रविलय क्या है ? क्या जैसे अग्नि उष्णताके सम्पर्कसे घृतके काठिन्यका प्रविलय होता है, वैसे प्रपञ्चका प्रविलय करना चाहिए अथवा एक चन्द्रमामें नेत्र दोष कृत अनेक चन्द्र प्रपञ्चके समान ब्रह्ममें अविद्याकृत नामरूप प्रपञ्चका विद्यासे प्रविलय करना चाहिए। उनमें यदि कहो कि विद्यमान यह देह आदिरूप आध्यात्मिक प्रपञ्च और पृथिवी आदिरूप बाह्य प्रपञ्चका प्रविलय करना चाहिए, उसके प्रविलय करनेमें तो पुरुषमात्र असमर्थ है, इसलिए उसके प्रविलयका उपदेश अशक्य विषयक ही होगा। और एक आदि मुक्त पुरुषसे पृथिवी आदिका प्रविलय किया गया होता, तो इस समय जगत् पृथिवी आदिसे शून्य होता। ऐसा यदि कहो कि एक ब्रह्ममें अविद्यासे अध्यस्त यह प्रपञ्च विद्यासे प्रविलापित किया जाता है, तो 'एकमेवाद्वितीयं०' ( एक ही अद्वितीय ब्रह्म है ) 'तत्सत्यं०' ( वह सत्य है, वह आत्मा है वह तू है ) इसप्रकार अविद्यासे अध्यस्त प्रपञ्चके प्रत्याख्यानसे ब्रह्म ही वेदितव्य है। उस ब्रह्मका ज्ञान होनेपर विद्या स्वयं उत्पन्न होती है और उससे अविद्याका बाध होता है। उस अविद्यासे अध्यस्त इस सम्पूर्ण नामरूपात्मक प्रपञ्चका स्वप्न प्रपञ्चके समान प्रविलय हो

## सत्यानन्दी-दीपिका

* परन्तु प्रपञ्चका प्रविलय होनेपर ब्रह्मका भी लय हो जायगा, क्योंकि दोनोंका अभेद है ? ऐसा नहीं, क्योंकि कार्यका स्वरूप कारण होता है किन्तु कारणका स्वरूप कार्य नहीं होता। इसलिए कार्यका लय होनेपर कारणका लय नहीं होता। जैसे घटके लयसे मृत्तिकाका लय नहीं होता, अतः प्रपञ्चके विलयसे ब्रह्मका विलय नहीं होता। किञ्च सत्य प्रपञ्चके विलयमें विधि है अथवा कल्पित प्रपञ्चके विलयमें ? प्रथम पक्ष युक्त नहीं है, क्योंकि सत्य वस्तुकी ज्ञानसे निवृत्ति नहीं होती, कारण कि दोनोंका परस्पर विरोध नहीं है, अतः आकाश प्रसन विधिके समान इस प्रपञ्चका लय अशक्य है। इस अनादि संसारमें अभी तक कोई मुक्त हुआ है कि नहीं ? प्रथम पक्ष 'एकेन' आदिसे कहते हैं। द्वितीय विकल्पमें तो शुकदेव आदिके मुक्ति प्रतिपादक शास्त्रसे विरोध होगा। इससे सिद्ध होता है कि सत्य प्रपञ्चकी निवृत्ति ज्ञानसे नहीं होती है।

* दूसरे विकल्पको भी 'अथाविद्याध्यस्तो' इत्यादिसे दूषित करते हैं। ब्रह्मज्ञान और प्रपञ्चके विलयमें जो विधि कहते हैं, क्या वह अज्ञात ब्रह्ममें है अथवा ज्ञात ब्रह्ममें ? प्रथम पक्षका 'अनावेदिते' इत्यादिसे समाधान किया गया है। द्वितीय पक्ष भी युक्त नहीं है, क्योंकि 'तत्त्वमसि' आदि वेदान्त वाक्योंके श्रवणसे उत्पन्न ब्रह्मज्ञानसे ब्रह्मका साक्षात्कार और अविद्याकृत प्रपञ्चका विलय सिद्ध है।

स्वप्नप्रपञ्चवत्प्रविलीयते। अनावेदिते तु ब्रह्मणि ब्रह्मविज्ञानं कुरु प्रपञ्चप्रविलयं चेति शतकृत्वोऽप्युक्ते न ब्रह्मविज्ञानं प्रपञ्चप्रविलयो वा जायेत। नन्वावेदिते ब्रह्मणि तद्विज्ञानविषयः प्रपञ्चविषयो वा नियोगः स्यात्, न, निष्प्रपञ्चब्रह्मात्मत्वावेदनेनैवोभयसिद्धेः। रज्जुस्वरूपप्रकाशनेनैव हि तत्स्वरूपविज्ञानमविद्याध्यस्तसर्पादिप्रपञ्चप्रविलयश्च भवति। नच कृतमेव पुनः क्रियते। नियोज्योऽपि च प्रपञ्चावस्थायां योऽवगम्यते जीवो नाम, स प्रपञ्चपक्षस्यैव वा स्याद्ब्रह्मपक्षस्यैव वा? प्रथमे विकल्पे निष्प्रपञ्चब्रह्मतत्त्वप्रतिपादनेन पृथिव्यादिवज्जीवस्यापि प्रविलापितत्वात्कस्य प्रपञ्चविलये नियोग उच्येत? कस्य वा नियोगनिष्ठतया मोक्षोऽवाप्तव्य उच्येत? द्वितीयेऽपि ब्रह्मैवानियोज्यस्वभावं जीवस्य स्वरूपं जीवत्वं त्वविद्याकृतमेवेति प्रतिपादिते ब्रह्मणि नियोज्याभावान्नियोगाभाव एव। द्रष्टव्यादिशब्दा अपि परविद्याधिकारपठितास्तत्त्वाभिमुखीकरणप्रधाना न तत्त्वावबोधविधिप्रधाना भवन्ति। लोकेऽपीदं पश्येदमाकर्णयेति चैवंजातीयकेषु निर्देशेषु प्रणिधानमात्रं कुर्वित्युच्यते, न साक्षाज्ज्ञानमेव कुर्विति ज्ञेयाभिमुखस्यापि ज्ञानं कदाचिज्जायते कदाचिन्न जायते, तस्मात्तं प्रति ज्ञानविषय एव दर्शयितव्यो ज्ञापयितुकामेन। तस्मिन्दर्शिते स्वयमेव यथाविषयं यथाप्रमाणं च ज्ञानमुत्पद्यते। नच प्रमाणान्तरेणान्यथाप्रसिद्धेऽर्थेऽन्यथाज्ञानं नियुक्तस्याप्युपपद्यते। यदि पुनर्नियुक्तोऽहमित्यन्यथा ज्ञानं कुर्यान्न तु तज्ज्ञानं, किं तर्हि? मानसी सा क्रिया। स्वयमेव चेदन्यथोत्पद्येत, भ्रान्तिरेव स्यात्। ज्ञानं तु प्रमाणजन्यं यथाभूतविषयं च, न तन्नियोगशतेनापि कारयितुं शक्यते।

---

जाता है। ब्रह्मके अविदित होनेपर 'ब्रह्मज्ञान करो' 'प्रपञ्चका प्रविलय करो' ऐसा शतवार कहनेपर भी ब्रह्मका विज्ञान अथवा प्रपञ्चका विलय नहीं होता। परन्तु ब्रह्मके विदित होनेपर उसके ज्ञानविषयक वा प्रपञ्च प्रलयविषयक नियोग होगा। ऐसा नहीं, क्योंकि निष्प्रपञ्च ब्रह्मात्मतत्त्वके विज्ञानसे ही दोनों सिद्ध होते हैं। रज्जुस्वरूपके प्रकाशसे ही रज्जुस्वरूपका ज्ञान और अविद्यासे अध्यस्त सर्प आदि प्रपञ्चका प्रविलय होता है, क्योंकि जो सिद्ध है उसको पुनः सिद्ध नहीं किया जाता। जो जीव प्रपञ्चावस्थामें नियोज्य अवगत होता है वह प्रपञ्च पक्षका ही है अथवा ब्रह्म पक्षका ही? प्रथम विकल्पमें प्रपञ्च रहित ब्रह्मतत्त्वके प्रतिपादनसे पृथिवी आदिके समान जीवका भी प्रविलय हो गया है, अतः किसका प्रपञ्चके प्रविलयमें नियोग कहा जाय अथवा किसको नियोगनिष्ठत्वसे मोक्ष प्राप्तव्य कहा जाय। द्वितीय विकल्पमें भी अनियोज्य स्वभाव ब्रह्म ही जीवका स्वरूप है और जीवत्व तो अविद्याकृत ही है, ऐसा प्रतिपादित होनेपर ब्रह्ममें नियोज्यके अभाव होनेसे नियोगका अभाव ही है। और परविद्याके प्रकरणमें पठित 'द्रष्टव्य' आदि शब्दोंकी भी तत्त्वके अभिमुख करनेमें प्रधानता है वे तत्त्वज्ञानमें विधिप्रधान नहीं हैं। लोक व्यवहारमें भी 'यह देखो, यह सुनो' इस प्रकारके निर्देशोंमें 'एकाग्र मन करो' ऐसा कहा जाता है 'साक्षात् ज्ञान करो' ऐसा नहीं कहा जाता। ज्ञेयके अभिमुखको भी कभी ज्ञान उत्पन्न होता है और कभी नहीं उत्पन्न होता। इसलिए जो ज्ञान कराना चाहता है, उसे उस ( ज्ञानार्थी ) को ज्ञानका विषय ही दिखलाना चाहिए। उसके दिखलानेपर विषय और प्रमाणके अनुसार उसको स्वयं ही ज्ञान उत्पन्न हो जाता है। अन्य प्रमाणसे अन्य प्रकारसे प्रसिद्ध अर्थमें नियुक्तको भी अन्यथाज्ञान नहीं होता। यदि 'मैं नियुक्त हूँ' ऐसा समझकर अन्यथाज्ञान करे तो वह ज्ञान नहीं है, किन्तु वह मानसी क्रिया है। यदि स्वयं ही अन्यथा उत्पन्न हो तो वह भ्रान्ति ही होगी।

## सत्यानन्दी-दीपिका

अतः पूर्व सिद्ध ब्रह्ममें विधि नहीं। इस प्रकार विषयके अभावसे नियोगका अभाव कहकर अब आगे 'नियोज्योऽपि' इत्यादिसे नियोज्यके अभावसे भी उसका अभाव कहते हैं।

प्रविलय

नच प्रतिषेधशतेनापि वारयितुं शक्यते। नहि तत्पुरुषतन्त्रं, वस्तुतन्त्रमेव हि तत्। अतोऽपि नियोगाभावः। किंचान्यन्नियोगनिष्ठतयैव पर्यवस्यत्याम्नाये यदभ्युपगतमनियोज्यब्रह्मात्मत्वं जीवस्य, तदप्रमाणकमेव स्यात्। अथ शास्त्रमेवानियोज्यब्रह्मात्मत्वमप्याचक्षीत तदवबोधे च पुरुषं नियुञ्जीत, ततो ब्रह्मशास्त्रस्यैकस्य द्व्यर्थपरता विरुद्धार्थपरता च प्रसज्येयाताम्। नियोगपरतायां च श्रुतहानिरश्रुतकल्पना कर्मफलवन्मोक्षस्यादृष्टफलत्वमनित्यत्वं चेत्येवमादयो दोषा न केनचित्परिहर्तुं शक्याः। तस्मादवगतिनिष्ठान्येव ब्रह्मवाक्यानि, न नियोगनिष्ठानि। अतश्चैकनियोगप्रतीतेरेकवाक्यतेत्ययुक्तम्। * अभ्युपगम्यमानेऽपि च ब्रह्मवाक्येषु नियोगसद्भावे तदेकत्वं निष्प्रपञ्चोपदेशेषु चासिद्धम्। नहि शब्दान्तरादिभिः प्रमाणैर्नियोगभेदेऽवगम्यमाने सर्वत्रैको नियोग इति शक्यमाश्रयितुम्। प्रयाजदर्शपूर्णमासवाक्येषु त्वधिकारांशेनाभेदाद्युक्तमेकत्वम्, नत्विह सगुणनिर्गुणचोदनासु कश्चिदेकत्वाधिकारांशोऽस्ति। नहि भारूपत्वादयो गुणाः प्रपञ्चप्रविलयोपकारिणः, नापि प्रपञ्चप्रविलयो भारूपत्वादिगुणोपकारी, परस्परविरोधित्वात्। नहि कृत्स्नप्रपञ्चप्रविलापनं प्रपञ्चैकदेशापेक्षणं चैकस्मिन्धर्मिणि युक्तं समावेशयितुम्। तस्मादस्मदुक्त एव विभाग आकारवदनाकारोपदेशानां युक्ततर इति ॥२१॥

---

ज्ञान तो प्रमाण जन्य और यथाभूत विषयक होता है वह सौ नियोगोंसे भी नहीं कराया जा सकता; और सौ प्रतिषेधोंसे भी उसका निवारण नहीं किया जा सकता, क्योंकि वह पुरुषके अधीन नहीं है, वह तो वस्तुके अधीन है। इससे भी नियोगका अभाव है। और दूसरी बात यह है कि यदि वेदवाक्योंका नियोग निष्ठारूपसे पर्यवसान होता है तो जो यह स्वीकार किया गया है कि जीव अनियोज्य ब्रह्मस्वरूप है, वह अप्रमाणक हो जायगा। यदि शास्त्र ही जीव को अनियोज्य ब्रह्मस्वरूप कहे और उसके ज्ञानमें पुरुषको नियुक्त करे, तो एक ब्रह्मशास्त्रमें दो अर्थकी प्रतिपादकता और विरुद्ध अर्थ प्रतिपादकता प्रसक्त होगी। और ब्रह्मशास्त्रका तात्पर्य यदि नियोगमें है तो श्रुतकी हानि और अश्रुतकी कल्पना, कर्मफलके समान मोक्षफलमें अदृष्टफलत्व और अनित्यत्व आदि दोष किसीसे भी वारण नहीं किये जा सकते। इसलिए ब्रह्मवाक्य अवगति निष्ठ ही हैं नियोग निष्ठ नहीं हैं। अतः एक नियोगकी प्रतीतिसे उनकी एक वाक्यता है यह कथन अयुक्त है। और ब्रह्म वाक्योंमें नियोगका सद्भाव स्वीकार किये जानेपर भी निष्प्रपञ्च उपदेशोंमें और सप्रपञ्च उपदेशोंमें उसका एकत्व असिद्ध है, क्योंकि अन्य शब्द आदि प्रमाणोंसे नियोगका भेद अवगत होनेपर सर्वत्र एक नियोग है, ऐसा आश्रय नहीं किया जा सकता। प्रयाजवाक्य और दर्शपूर्णमासवाक्योंमें अधिकार अंशमें अभेद होनेसे एकत्व युक्त है। परन्तु यहाँ सगुण और निर्गुण विधि वाक्योंमें एकत्वका कोई अधिकारांश नहीं है। भारूपत्व आदि गुण प्रपञ्चके प्रविलय करनेमें उपकारी नहीं हैं और न प्रपञ्च प्रविलय भारूपत्व आदि गुणोंका उपकारी है, क्योंकि वे परस्पर विरोधी हैं। एक धर्मीमें सम्पूर्ण प्रपञ्चका प्रविलय और प्रपञ्चके एक देशकी अपेक्षा, इन दोनोंका समावेश करना युक्त नहीं है। इसलिए साकार और निराकार उपदेशोंका हमसे कहा गया विभाग युक्ततर है ॥ २१ ॥

## सत्यानन्दी-दीपिका

* ब्रह्म वाक्योंमें नियोग स्वीकार करनेपर भी दोनों उपदेशोंमें एक नियोग नहीं हो सकता, क्योंकि भिन्न-भिन्न क्रिया वाचक शब्दोंसे भेद ही ज्ञात होता है। जैसे 'यजति' 'ददाति' वैसे प्रकृतमें 'वेद' 'उपासीत' यह शब्द भेद है, निर्गुण और सगुण यह रूपभेद, प्रकरण भेद मुक्ति और अभ्युदयरूप फल भेद, इन प्रामाणोंसे निर्गुण ज्ञान और सगुण उपासना विषयक नियोग भेद सिद्ध होता है, अतः दोनों वाक्योंमें एक नियोग असिद्ध है। इसलिए 'सर्वकर्मा सर्वकामः' इत्यादि साकार श्रुतियोंका

सप्रपञ्चोपदेशेष

( ६ प्रकृतैतावत्त्वाधिकरणम् । सू० २२-३० )

## प्रकृतैतावत्त्वं हि प्रतिषेधति ततो ब्रवीति च भूयः ॥ २२ ॥

**पदच्छेद**—प्रकृतैतावत्त्वम्, हि, प्रतिषेधति, ततः, ब्रवीति; च, भूयः ।

**सूत्रार्थ**—( हि ) क्योंकि ( प्रकृतैतावत्त्वम् ) प्रकरणमें प्रतिपादित ब्रह्मके इयत्ता परिच्छिन्न मूर्त और अमूर्तरूपका ( प्रतिषेधति ) 'नेति नेति' यह शब्द प्रतिषेध करता है । ( च ) और ( ततः ) उस प्रतिषेधसे आगे (भूयः) पुनः (ब्रवीति) 'अन्यत्परमस्ति' इस प्रकार कहता है, इसलिए शून्यवादका प्रसङ्ग नहीं है ।

* 'द्वे वाव ब्रह्मणो रूपे मूर्तं चैवामूर्तं च' ( बृह० २।३।१ ) इत्युपक्रम्य पञ्चमहाभूतानि द्वैराश्येन प्रविभज्यामूर्तरसस्य च पुरुषशब्दोदितस्य महारजनादीनि रूपाणि दर्शयित्वा पुनः पठ्यते-'अथात आदेशो नेति नेति न ह्येतस्मादिति नेत्यन्यत्परमस्ति' ( बृह० २।३।६ ) इति। तत्र कोऽस्य प्रतिषेधस्य विषय इति जिज्ञासामहे ? न ह्यत्रेदं तदिति विशेषितं किंचित्प्रतिषेध्यमुपलभ्यते । इतिशब्देन त्वत्र प्रतिषेध्यं किमपि समर्प्यते 'नेति नेति' इतिपरत्वान्नञ्प्रयोगस्य । इतिशब्दश्चायं संनिहितालम्बन एवंशब्दसमानवृत्तिः प्रयुज्यमानो दृश्यते-'इति ह स्मोपाध्यायः कथयति' इत्येवमादिषु । संनिहितं चात्र प्रकरणसामर्थ्याद्रूपद्वयं सप्रपञ्चं ब्रह्मणस्तच्च ब्रह्म यस्यैते द्वे रूपे । तत्र नः संशय उपजायते-किमयं प्रतिषेधो रूपे रूपवच्चोभयमपि प्रतिषेधत्याहोस्विदेकतरम् ? यदाप्येकतरं तदापि किं ब्रह्म प्रतिषेधति, रूपे

---

'द्वे वाव ब्रह्मणो०' (ब्रह्मके दो रूप हैं मूर्त और अमूर्त) इस प्रकार उपक्रम कर पाँच महाभूत दो राशिमें विभक्तकर पुरुषशब्दसे कथित अमूर्तसारके महारजन ( हरिद्रा-हल्दीके समान ) आदि रूप दिखलाकर 'अथात आदेशो०' ( अब इसके अनन्तर 'नेति नेति' यह ब्रह्मका आदेश है 'नेति नेति' इससे बढ़कर कोई उत्कृष्ट आदेश नहीं है अतः ब्रह्म है ) इस प्रकार श्रुति पुनः कहती है । यहाँ इस प्रतिषेधका विषय (प्रतिषेध्य) क्या है, ऐसी हम जिज्ञासा करते हैं । क्योंकि यहाँ 'यह वह' ऐसा विशेषित कोई प्रतिषेध्य उपलब्ध नहीं होता । 'इति' शब्द तो यहाँ किसी भी प्रतिषेध्यका समर्पण करता है, क्योंकि 'नेति' नेति' इसमें नञ् ( न ) प्रयोग 'इति' परक है, और संनिहितका आलम्बन करनेवाला यह 'इति' शब्द 'एवं' शब्दका तुल्यार्थक 'इति ह स्मोपाध्यायः०' (ऐसा उपाध्यायने कहा) इत्यादिमें प्रयुक्त हुआ देखा जाता है । और यहाँ प्रकरणकी सामर्थ्यसे प्रपञ्च युक्त ब्रह्मके दो रूप सन्निहित हैं; जिसके ये दो रूप हैं वह ब्रह्म है । यहाँपर हमें संशय उत्पन्न होता है— क्या यह प्रतिषेध दो रूपों और रूपवत् इन दोनोंका प्रतिषेध करता है अथवा दोनोंमें एकका ? यद्यपि एकका प्रतिषेध करता है तो

### सत्यानन्दी-दीपिका

कल्पित आकारमें और उसकी उपासनासे अभ्युदय आदिकी सिद्धिमें तात्पर्य है और 'अस्थूलम०' इत्यादि निर्गुण श्रुतियोंका ब्रह्मात्मतत्त्वकी अवगति-ज्ञानमें तात्पर्य है, अतः हमारा कहा हुआ यह विभाग ही अधिक युक्त है ॥ २१ ॥

* पृथिवी, जल और तेज ये तीन भूत मूर्त हैं । वायु और आकाश ये दो अमूर्त हैं । इस प्रकार दो राशियोंको कहकर दो अमूर्त भूतोंका सार 'करणात्मा हिरण्यगर्भो य एष एतस्मिन्सूर्यमण्डले पुरुषो यश्चायं दक्षिणेऽक्षिणि पुरुषः' ( इस सूर्यमण्डलमें जो यह इन्द्रियरूप हिरण्यगर्भ पुरुष है और दक्षिण नेत्रमें जो यह पुरुष है ) इसप्रकार पुरुष शब्दसे कहा गया है । उसका वासनामय विचित्र स्वरूप 'तद्यथा महारजनं वासो यथा पाण्ड्वाविकं यथेन्द्रगोपः' ( बृ० २।३।६ ) ( जैसा हल्दीमें रङ्गा हुआ वस्त्र, जैसा सफेद ऊनी वस्त्र, जैसा इन्द्रगोप-वीरबहूटी ) इत्यादि उपमाओंसे कहा गया है ।

परिशिनष्टि आहोस्विद्रूपे प्रतिषेधति, ब्रह्म परिशिनष्टीति ? तत्र प्रकृतत्वाविशेषादुभयमपि प्रतिषेधतीत्याशङ्कामहे । द्वौ चैतौ प्रतिषेधौ, द्विर्नेतिशब्दप्रयोगात् । तयोरेकेन सप्रपञ्चं ब्रह्मणो रूपं प्रतिषिध्यते, अपरेण रूपवद्ब्रह्मेति भवति मतिः । अथवा ब्रह्मैव रूपवत्प्रतिषिध्यते, तद्धि वाङ्मनसातीतत्वादसंभाव्यमानसद्भावं प्रतिषेधार्हम्, नतु रूपप्रपञ्चः प्रत्यक्षादिगोचरत्वात्प्रतिषेधार्हः । अभ्यासस्त्वादरार्थ इति । ※ एवं प्राप्ते ब्रूमः— न तावदुभयप्रतिषेध उपपद्यते, शून्यवादप्रसङ्गात् । कंचिद्धि परमार्थमालम्ब्यापरमार्थः प्रतिषिध्यते यथा रज्ज्वादिषु सर्पादयः । तच्च परिशिष्यमाणे कस्मिंश्चिद्भावेऽवकल्प्यते । उभयप्रतिषेधे तु कोऽन्यो भावः परिशिष्येत ? अपरिशिष्यमाणे चान्यस्मिन्य इतरः प्रतिषेद्धुमारभ्यते प्रतिषेद्धुमशक्यत्वात्तस्यैव परमार्थत्वापत्तेः प्रतिषेधानुपपत्तिः । नापि ब्रह्मप्रतिषेध उपपद्यते, 'ब्रह्म ते ब्रवाणि' ( बृह० २।१।१ ) इत्याद्युपक्रमविरोधात् । 'असन्नेव स भवति । असद्ब्रह्मेति वेद चेत्' ( तैत्ति० २।६।१ ) इत्यादिनिन्दाविरोधात्, 'अस्तीत्येवोपलब्धव्यः' ( कठ० ६।१३ ) इत्यवधारणविरोधात्, सर्ववेदान्तव्याकोपप्रसङ्गाच्च । वाङ्म-

भी क्या ब्रह्मका प्रतिषेध करता है और दो रूपोंको अवशिष्ट रखता है, अथवा दो रूपोंका प्रतिषेध करता है और ब्रह्मको अवशिष्ट रखता है ? पूर्वपक्षी—प्रकृतत्वके समान होनेसे यहाँ दोनोंका प्रतिषेध करता है ऐसी हम आशङ्का करते हैं। ये दो प्रतिषेध हैं, क्योंकि 'नेति' शब्दका दो वार प्रयोग है। उन दो शब्दोंमें एकसे प्रपञ्च युक्त ब्रह्मके रूपका प्रतिषेध किया जाता है और दूसरेसे रूपवद् ब्रह्मका, ऐसी मति होती है, अथवा रूपवद् ब्रह्मका ही प्रतिषेध होता है, क्योंकि वाणी और मनसे अतीत होनेसे उसका अस्तित्व नहीं हो सकता अतः वह प्रतिषेधके योग्य है, किन्तु रूपप्रपञ्च प्रत्यक्ष आदि प्रमाणोंका विषय होनेसे प्रतिषेधके योग्य नहीं है। 'नेति नेति' यह अभ्यास (दो वार कथन) तो आदरके लिए है। सिद्धान्ती—ऐसा प्राप्त होनेपर हम कहते हैं—शून्यवादके प्रसङ्ग होनेसे दोनोंका प्रतिषेध उपपन्न नहीं होता, क्योंकि किसी परमार्थका आश्रयकर अपरमार्थका प्रतिषेध किया जाता है। जैसे रज्जु आदिमें सर्प आदिका। परन्तु वह किसी भावके परिशिष्ट होनेपर हो सकता है, किन्तु दोनों—सबके प्रतिषेध होनेपर कौन अन्य भाव अवशिष्ट रहेगा ? अन्य भावके अवशिष्ट न होनेपर जिस अन्य भावका प्रतिषेध आरम्भ किया जाता है, उसका प्रतिषेध न हो सकनेके कारण उसीमें परमार्थत्व प्रसक्त होनेसे प्रतिषेधकी अनुपपत्ति है, और ब्रह्मका भी प्रतिषेध युक्त नहीं है, क्योंकि 'ब्रह्म ते ब्रवाणि' (मैं तुम्हें ब्रह्मका उपदेश करूँ) इत्यादि उपक्रमसे विरोध होता है और 'असन्नेव०' (यदि पुरुष 'ब्रह्म असत् है' ऐसा जानता है, तो वह स्वयं असत् ही हो जाता है) इत्यादि निन्दासे विरोध होता है और 'अस्तीत्येवो-

## सत्यानन्दी-दीपिका

कोई लोग श्रुतिको उपलक्षण मानकर 'सूक्ष्म पाँच भूत अमूर्त हैं और पञ्चीकृत पाँच भूत मूर्त हैं' इससे अमूर्तोंके रस कहनेसे करणोंमें पाँच भौतिकत्वकी सिद्धि करते हैं। और यहाँ 'नेति नेति' इस प्रतिषेधकका प्रतिषेध्य विकल्पकर भाष्यमें दिखलाया गया है। निषेध श्रुतियोंसे ब्रह्मका जो निर्विशेषरूप सिद्ध किया गया है, वह युक्त नहीं है, क्योंकि वे तो ब्रह्मका भी निषेध करते हैं, इसप्रकार दृष्टान्त संगतिसे पूर्वपक्ष करते हैं। पूर्वपक्षीने 'नेति नेति' से रूपवद् ब्रह्म और दो रूपोंका निषेध किया है। परन्तु निरधिष्ठानक निषेध नहीं देखा जाता, अतः सबका निषेध युक्त नहीं है। इस अरुचिसे 'अथवा' इत्यादि से कहते हैं। पूर्वपक्षमें 'तत्त्वमसि' इस वाक्य स्थित 'तत्' ( ब्रह्म ) पदार्थके अभाव होनेसे अभेदकी असिद्धि है और सिद्धान्तमें 'तत्' पदार्थका अस्तित्व होनेसे अभेद सिद्ध है।

※ उपाधिके हट जाने अथवा निषेध किये जानेपर भी उपहितका निषेध नहीं हो सकता। जैसे मुखके आगेसे दर्पण आदिके हटाये जानेपर मुखका अभाव अथवा अप्रतीति नहीं होती, वैसे ही

नसातीतत्वमपि ब्रह्मणो नाभावाभिप्रायेणाभिधीयते। नहि महता परिकरबन्धेन 'ब्रह्मविदाप्नोति परम्' (तै० २।१।१), 'सत्यं ज्ञानमनन्तं ब्रह्म' (तै० २।१।१) इत्येवमादिना वेदान्तेषु ब्रह्म प्रतिपाद्य तस्यैव पुनरभावोऽभिलप्येत। 'प्रक्षालनाद्धि पङ्कस्य दूराद्स्पर्शनं वरम्' इति हि न्यायः। *प्रतिपादनप्रक्रिया त्वेषा—'यतो वाचो निवर्तन्ते। अप्राप्य मनसा सह' (तै० २।४।१) इति। एतदुक्तं भवति—वाङ्मनसातीतमविषयान्तःपाति प्रत्यगात्मभूतं नित्यशुद्धबुद्धमुक्तस्वभावं ब्रह्मेति। तस्माद्ब्रह्मणो रूपप्रपञ्चं प्रतिषेधति परिशिनष्टि ब्रह्मेत्यभ्युपगन्तव्यम्। तदेतदुच्यते—प्रकृतैतावत्त्वं हि प्रतिषेधतीति। प्रकृतं यदेतावदियत्तापरिच्छिन्नं मूर्तामूर्तलक्षणं ब्रह्मणो रूपं तदेष शब्दः प्रतिषेधति। तद्धि प्रकृतं प्रपञ्चितं च पूर्वस्मिन्ग्रन्थेऽधिदैवतमध्यात्मं च तज्जनितमेव च वासनालक्षणमपरं रूपममूर्तरसभूतं पुरुषशब्दोदितं लिङ्गात्मव्यपाश्रयं महारजनाद्युपमाभिर्दर्शितम्, अमूर्तरसस्य पुरुषस्य चक्षुर्ग्राह्यरूपयोगित्वानुपपत्तेः। तदेतत्सप्रपञ्चं ब्रह्मणो रूपं संनिहितालम्बनेनेतिकरणेन प्रतिषेधकं नञं प्रत्युपनीयत इति गम्यते। ब्रह्म तु रूपविशेषणत्वेन षष्ठ्या निर्दिष्टं पूर्वस्मिन्ग्रन्थे, न स्वप्रधानत्वेन।

---

पलब्धव्यः' ( है, इसप्रकार उसकी उपलब्धि करनी चाहिए ) इत्यादि अवधारणका विरोध है और सब वेदान्तोंके विरोधका प्रसङ्ग आता है। ब्रह्म वाणी और मनका अविषय है, तो भी वह अभावके अभिप्रायसे नहीं कहा जाता, क्योंकि 'ब्रह्मविदाप्नोति परम्' ( ब्रह्मवेत्ता परब्रह्मको प्राप्त होता है ) 'सत्यं ज्ञानमनन्तं ब्रह्म' इत्यादि वाक्योंसे वेदान्तोंमें महान् प्रयत्नसे ब्रह्मका प्रतिपादन कर पुनः उसीका अभाव नहीं कहा जा सकता, क्योंकि 'प्रक्षालनाद्धि०' ( कीचड़को अङ्गमें लगाकर धोनेकी अपेक्षा उसका दूरसे ही अस्पर्श श्रेष्ठ है ) ऐसा ही न्याय है। 'यतो वाचो निवर्तन्ते०' ( जहाँसे मन सहित वाणी उसे न पाकर लौट आती हैं ) यह तो [ ब्रह्मके ] प्रतिपादन करनेकी प्रक्रिया है। तात्पर्य यह है कि ब्रह्म वाणी और मनसे अतीत है, इससे वह विषयोंके अन्तर्भूत नहीं है, अतः प्रत्यगात्मरूप, नित्य, शुद्ध, बुद्ध और मुक्त स्वभाव है। इसलिए श्रुति ब्रह्मके रूपप्रपञ्चका प्रतिषेध करती है और ब्रह्मको अवशिष्ट रखती है, ऐसा स्वीकार करना चाहिए। इससे यह कहते हैं—'प्रकृतैतावत्त्वं हि प्रतिषेधति' प्रकृत ब्रह्मका जो इयत्तासे परिच्छिन्न मूर्त और अमूर्तरूप है उसका यह श्रुति प्रतिषेध करती है, क्योंकि उस प्रकृत अधिदैवत और अध्यात्मका पूर्वग्रन्थमें विस्तारसे वर्णन किया गया है, उससे उत्पन्न हुआ वासनालक्षण दूसरा रूप अमूर्तका सारभूत जो पुरुषशब्दसे कहा गया है और लिङ्गात्मव्यपाश्रय है और महारजन आदि उपमाओंसे दिखलाया गया है, क्योंकि अमूर्तका सारभूत पुरुष चक्षुसे ग्राह्यरूपसे युक्त नहीं हो सकता। ब्रह्मका वह सप्रपञ्चरूप संनिहितका आश्रयण करनेवाले 'इति' के द्वारा प्रतिषेधक 'नञ्' के प्रति विषयरूपसे स्थापित किया जाता है, ऐसा ज्ञात होता है। ब्रह्म तो रूपके विशेषणरूपसे षष्ठी द्वारा पूर्व ग्रन्थमें निर्दिष्ट है स्व प्रधानरूपसे नहीं। उसके दो रूपोंका विस्तारपूर्वक

### सत्यानन्दी-दीपिका

अविद्या और अविद्यासे कल्पित प्रपञ्चके प्रतिषेध करनेपर भी उपहित ब्रह्मका अभाव वा अप्रतीति नहीं हो सकती। अतः निर्विशेष ब्रह्म श्रुति सिद्ध है।

* 'द्वे वाव ब्रह्मणो रूपे' इसप्रकार प्रधान होनेसे यहाँ दो रूप ही प्रकृत हैं, अतः उनका ही 'नेति नेति' से प्रतिषेध है। ब्रह्म तो षष्ठी विभक्तिसे निर्दिष्ट होनेसे अप्रधान है। यदि षष्ठी विभक्तिसे निर्दिष्टका भी प्रधानरूपसे स्वीकार कर निषेध करें, तो 'राज्ञो भृत्यो नास्ति' ( राजाका सेवक नहीं है ) यहाँपर सेवकके निषेधसे राजाका भी निषेध प्रसक्त होगा? अतः ब्रह्म निषेध्य नहीं है। शङ्का—प्रत्यक्ष आदि प्रमाणोंसे सिद्ध द्वैतका निषेध करनेपर उसके साथ विरोध होगा? समाधान—किन्तु आरम्भाधिकरणमें प्रत्यक्ष आदिकी व्यावहारिक प्रमाणता स्थापन की गई है, पारमार्थिक नहीं,

प्रपञ्चिते च तदीये रूपद्वये रूपवतः स्वरूपजिज्ञासायामिदमुपक्रान्तम्—'अथात आदेशो नेति नेति' ( बृह० २।३।६ ) इति। तत्र कल्पितरूपप्रत्याख्यानेन ब्रह्मणः स्वरूपावेदनमिदमिति निर्णीयते। तदास्पदं हीदं समस्तं कार्यं नेति नेतीति प्रतिषिद्धम्। युक्तं च कार्यस्य वाचारम्भणशब्दादिभ्योऽसत्त्वमिति नेति नेतीति प्रतिषेधनं नतु ब्रह्मणः; सर्वकल्पनामूलत्वात्। न चात्रेयमाशङ्का कर्तव्या—कथं हि शास्त्रं स्वयमेव ब्रह्मणो रूपद्वयं दर्शयित्वा स्वयमेव पुनः प्रतिषेधति—'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इति। यतो नेदं शास्त्रं प्रतिपाद्यत्वेन ब्रह्मणो रूपद्वयं निर्दिशति, लोकप्रसिद्धं त्विदं रूपद्वयं ब्रह्मणि कल्पितं परामृशति प्रतिषेध्यत्वाय शुद्धब्रह्मस्वरूपप्रतिपादनाय चेति निरवद्यम्। द्वौ चैतौ प्रतिषेधौ यथासंख्यन्यायेन द्वे अपि मूर्तामूर्ते प्रतिषेधतः। यद्वा—पूर्वः प्रतिषेधो भूतराशिं प्रतिषेधति, उत्तरो वासनाराशिम्। अथवा—'नेति नेति' (बृह० २।३।६) इति वीप्सेयमितीति यावत्किंचिदुत्प्रेक्ष्यते तत्सर्वं न भवतीत्यर्थः। परिगणितप्रतिषेधे हि क्रियमाणे यदि नैतद्ब्रह्म किमन्यद्ब्रह्म भवेदिति जिज्ञासा स्यात्। वीप्सायां तु सत्यां समस्तस्य विषयजातस्य प्रतिषेधादविषयः प्रत्यगात्मा ब्रह्मेति जिज्ञासा निवर्तते। तस्मात्प्रपञ्चमेव ब्रह्मणि कल्पितं प्रतिषेधति परिशिनष्टि ब्रह्मेति निर्णयः। * इतश्चैष एव निर्णयः यतस्ततः प्रतिषेधाद्भूयो

---

वर्णन होनेसे रूपवत्के स्वरूपकी जिज्ञासा होनेपर 'अथात आदेशो नेति नेति' ऐसा उपक्रम किया गया है। यहां कल्पितरूपके प्रत्याख्यान द्वारा ब्रह्मका यह स्वरूप ज्ञान है, ऐसा निर्णय होता है, क्योंकि तद्विषयक यह समस्त कार्य 'नेति नेति' इससे प्रतिषिद्ध है, और वाचारम्भण शब्द आदिसे कार्य असत्-मिथ्या है। अतः 'नेति नेति' इससे उसका प्रतिषेध युक्त है किन्तु ब्रह्मका नहीं, क्योंकि वह सर्वकल्पनाओंका मूल है। यहां पर यह शङ्का नहीं करनी चाहिए कि स्वयं ही शास्त्र ब्रह्मके दो रूप दिखलाकर पुनः स्वयं ही 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' इसप्रकार उसका प्रतिषेध कैसे करता है, क्योंकि यह शास्त्र ब्रह्मके दो रूपोंका प्रतिपाद्यरूपसे निर्देश नहीं करता, किन्तु लोक प्रसिद्ध और ब्रह्ममें कल्पित इन दोनों रूपोंका प्रतिषेध्यत्व और शुद्ध ब्रह्मस्वरूप प्रतिपादन करनेके लिए परामर्श करता है, इसप्रकार कोई दोष नहीं है। ये दो प्रतिषेध यथासंख्य न्यायसे मूर्त और अमूर्त दो रूपोंका प्रतिषेध करते हैं। अथवा पूर्व ( नेति ) प्रतिषेध भूतसमुदायका प्रतिषेध करता है और दूसरा प्रतिषेध वासना राशिका प्रतिषेध करता है। अथवा 'नेति नेति' यह वीप्सा है, इससे जिस किसीकी कल्पनाकी जा सकती है, वह सब ब्रह्म नहीं है, ऐसा अर्थ है। क्योंकि परिगणित प्रतिषेध किये जानेपर यदि यह ब्रह्म नहीं है, तो क्या अन्य ब्रह्म है, ऐसी जिज्ञासा होगी। और वीप्सा होनेपर तो सम्पूर्ण विषय समुदायके प्रतिषेध होनेसे प्रत्यगात्मा ब्रह्म अविषय है, इस प्रकार जान लेनेपर जिज्ञासा निवृत्त हो जाती है। इसलिए यह निषेध शास्त्र ब्रह्ममें कल्पित प्रपञ्चका ही प्रतिषेध करता है और ब्रह्मका परिशेष (अवशिष्ट) करता है, ऐसा निर्णय है। और इससे भी यही निर्णय है, क्योंकि उस प्रतिषेधसे 'अन्यत्परमस्ति' ( अन्य

## सत्यानन्दी-दीपिका

अतः 'वाचारम्भणं विकारो नामधेयं०' इत्यादि श्रुतिवाक्योंसे कार्यमात्रमें मिथ्यात्व सिद्ध होता है। इसलिए पारमार्थिक दृष्टिसे ही कार्यमात्रमें मिथ्यात्वका उपपादन कर 'नेति नेति' इससे निषेध किया गया है। किन्तु व्यावहारिक सत्ताको लेकर प्रत्यक्ष आदिका निषेध नहीं किया जाता, अतः कोई विरोध नहीं है।

* यदि प्रपञ्च प्रतिषेधसे पृथक् 'अन्यत्परमस्ति' यह आदेश ब्रह्मविषयक नहीं, तो 'सत्यस्य सत्यमिति' इसप्रकार प्रश्न और प्रतिवचन अनुपपन्न होंगे और शून्यवाद प्रसक्त होगा। यदि ब्रह्म पर्यन्त प्रतिषेध माना जाय तो यह प्रश्न और प्रतिवचन संगत होते हैं। इसलिए परमार्थ सद्ब्रह्म पर्यन्त ही प्रतिषेध मानना युक्त है ॥ २२ ॥

ब्रवीति—'अन्यत्परमस्ति' ( बृह० २।३।६ ) इति। अभावावसाने हि प्रतिषेधे क्रियमाणे किमन्यत्परमस्तीति ब्रूयात्। तत्रैषाक्षरयोजना—नेति नेतीति ब्रह्मादिश्य तमेवादेशं पुनर्निर्वक्ति। नेति नेतीत्यस्य कोऽर्थः? न ह्येतस्माद्ब्रह्मणो व्यतिरिक्तमस्तीत्यतो नेति नेतीत्युच्यते, न पुनः स्वयमेव नास्तीत्यर्थः। तच्च दर्शयति—अन्यत्परमप्रतिषिद्धं ब्रह्मास्तीति। यदा पुनरेवमक्षराणि योज्यन्ते नह्येतस्मादिति नेति नेति, नहि प्रपञ्चप्रतिषेधरूपादादेशनादन्यत्परमादेशनं ब्रह्मणोऽस्तीति, तदा 'ततो ब्रवीति च भूय' इत्येतन्नामधेयविषयं योजयितव्यम्। अथ नामधेयम्—'सत्यस्य सत्यमिति प्राणा वै सत्यं तेषामेष सत्यम्' ( बृह० २।१।२० ) इति हि ब्रवीतीति। तच्च ब्रह्मावसाने प्रतिषेधे समञ्जसं भवति। अभावावसाने तु प्रतिषेधे किं सत्यस्य सत्यमित्युच्येत? तस्माद्ब्रह्मावसानोऽयं प्रतिषेधो नाभावावसान इत्यध्यवस्यामः ॥ २२ ॥

## तदव्यक्तमाह हि ॥ २३ ॥

पदच्छेद—तत्, अव्यक्तम्, आह, हि।

सूत्रार्थ—( तदव्यक्तम् ) वह ब्रह्म अव्यक्त है, ( हि ) क्योंकि ( आह ) 'न चक्षुषा गृह्यते' इत्यादि श्रुति ऐसा कहती है।

यत्प्रतिषिद्धात्प्रपञ्चजातादन्यत्परं ब्रह्म तदस्ति चेत्कस्मान्न गृह्यत इति। उच्यते—तदव्यक्तमनिन्द्रियग्राह्यं सर्वदृश्यसाक्षित्वात्। आह ह्येवं श्रुतिः—'न चक्षुषा गृह्यते नापि वाचा नान्यैर्देवैस्तपसा कर्मणा वा' ( मुण्ड० ३।१।८ ) 'स एष नेति नेत्यात्माऽगृह्यो नहि गृह्यते' ( बृह० ३।९।२६ ) 'यत्तदद्रेश्यमग्राह्यम्' ( मुण्ड० १।१।६ ) 'यदा ह्येवैष एतस्मिन्नदृश्येऽनात्म्येऽनिरुक्तेऽनिलयने' ( तै० २।७।१ ) इत्याद्या। स्मृतिरपि—'अव्यक्तोऽयमचिन्त्योऽयमविकार्योऽयमुच्यते' ( भ० गी० २।२५ ) इत्याद्या ॥ २३ ॥

---

परम है ) ऐसा श्रुति पुनः कहती है। प्रतिषेधका अभावमें पर्यवसान करनेपर तो श्रुति 'अन्यत्परमस्ति' ऐसा क्यों कहती। यहाँ इसप्रकार अक्षर योजना है—'नेति नेति' इस प्रकार ब्रह्मका आदेशकर पुनः उसी आदेशका निर्वचन करती है। 'नेति नेति' इसका क्या अर्थ है? उस ब्रह्मसे अतिरिक्त कुछ नहीं है, अतः 'नेति नेति' ऐसा कहा जाता है, ब्रह्म स्वयं ही नहीं है, ऐसा अर्थ नहीं है। और अन्य परम अप्रतिषिद्ध ब्रह्म है, ऐसा अवशिष्ट उस ब्रह्मको दिखलाती है। यदि इसप्रकार अक्षरोंकी योजना की जाय कि 'नेति नेति' यह नहीं, यह नहीं, इस उपदेशसे ब्रह्म उपदिष्ट नहीं है, प्रपञ्च प्रतिषेधरूप आदेशसे 'अन्यत्परमस्ति' यह आदेश ब्रह्मका नहीं है, तो 'ततो ब्रवीति च भूयः' इस सूत्रांशकी नाम विषयक योजना करनी चाहिए। 'सत्यस्य सत्यमिति०' ( सत्यका सत्य प्राण ही सत्य है, उनका ही यह सत्य है ) इसप्रकार नामधेयको श्रुति कहती है। और वह नामधेय, प्रतिषेधका ब्रह्ममें पर्यवसान होने पर संगत होता है, और प्रतिषेधका अभावमें पर्यवसान होनेपर तो सत्यसा सत्य कौन कहा जायगा। इसलिए यह प्रतिषेधावसानक ब्रह्म है अभाव अवसानक नहीं है, ऐसा हम निश्चय करते हैं ॥ २२ ॥

प्रतिषिद्ध प्रपञ्च समूहसे अन्य जो परब्रह्म है यदि वह है तो गृहीत क्यों नहीं होता? कहते हैं—वह अव्यक्त है इन्द्रिय अग्राह्य है, क्योंकि वह सम्पूर्ण दृश्यका साक्षी है। और 'न चक्षुषा०' ( उस आत्माका न नेत्रसे ग्रहण किया जाता है, न वाणीसे, न अन्य इन्द्रियोंसे और न तप अथवा कर्मसे ही ) 'स एष०' (नेति नेति, ऐसा कहकर मधुकाण्डमें निरूपण किया है वह आत्मा अग्राह्य है, क्योंकि उसका ग्रहण नहीं किया जाता ) 'यत्तदद्रेश्यमग्राह्यम्' ( यह जो अदृश्य और अग्राह्य है ) 'यदाह्येवैष०' ( जिस समय वह साधक इस अदृश्य, अशरीर, अनिर्वाच्य और निराधार ब्रह्ममें अभयस्थिति प्राप्त करता है उस समय वह अभयको प्राप्त हो जाता है ) इत्यादि श्रुति इसप्रकार कहती है। और

## अपि च संराधने प्रत्यक्षानुमानाभ्याम् ॥ २४ ॥

पदच्छेद—अपि, च, संराधने, प्रत्यक्षानुमानाभ्याम् ।

सूत्रार्थ—( अपि च ) और योगी लोग उस अव्यक्त आत्माको ( संराधने ) ध्यानके समय देखते हैं, ( प्रत्यक्षानुमानाभ्याम् ) क्योंकि 'कश्चिद्धीरः' 'यं विनिद्रा' इत्यादि श्रुति और स्मृतिसे ऐसा अवगत होता है ।

अपि चैनमात्मानं निरस्तसमस्तप्रपञ्चमव्यक्तं संराधनकाले पश्यन्ति योगिनः । संराधनं च भक्तिध्यानप्रणिधानाद्यनुष्ठानम् । कथं पुनरवगम्यते—संराधनकाले पश्यन्तीति । प्रत्यक्षानुमानाभ्यां श्रुतिस्मृतिभ्यामित्यर्थः । तथा हि श्रुतिः—'पराञ्चि खानि व्यतृणत् स्वयंभूस्तस्मात्पराङ् पश्यति नान्तरात्मन् । कश्चिद्धीरः प्रत्यगात्मानमैक्षदावृत्तचक्षुरमृतत्वमिच्छन्' (क० ४।१) इति । 'ज्ञानप्रसादेन विशुद्धसत्त्वस्ततस्तु तं पश्यते निष्कलं ध्यायमानः' ( मु० ३।१।८ ) इति चैवमाद्या । स्मृतिरपि—'यं विनिद्रा जितश्वासाः संतुष्टाः संयतेन्द्रियाः । ज्योतिः पश्यन्ति युञ्जानास्तस्मै योगात्मने नमः ॥ योगिनस्तं प्रपश्यन्ति भगवन्तं सनातनम्' इति चैवमाद्या ॥२४॥

ननु संराध्यसंराधकभावाभ्युपगमात्परापरात्मनोरन्यत्वं स्यादिति नेत्युच्यते—

## प्रकाशादिवच्चावैशेष्यं प्रकाशश्च कर्मण्यभ्यासात् ॥ २५ ॥

पदच्छेद—प्रकाशादिवत्, च, अवैशेष्यम्, प्रकाशः, च, कर्मणि, अभ्यासात् ।

सूत्रार्थ—( प्रकाशादिवत् ) जैसे प्रकाश आदि अङ्गुलि आदि उपाधिमें भिन्न-सा प्रतीत होने पर भी वस्तुतः एकरूप है, वैसे ( प्रकाशः ) परमात्मा भी ( कर्मणि ) ध्यान आदिमें भिन्न-सा भासता हुआ ( अवैशेष्यम् ) वस्तुतः एक रूप है, ( अभ्यासात् ) क्योंकि 'तत्त्वमसि' इत्यादि अभेद श्रुतिका अभ्यास है ।

यथा प्रकाशाकाशसवितृप्रभृतयोऽङ्गुलिकरकोदकप्रभृतिषु कर्मसूपाधिभूतेषु सवि-

---

'अव्यक्तोऽयम्०' ( यह आत्मा अव्यक्त—इन्द्रियोंका अविषय, यह अचिन्त्य-मनका अविषय और यह विकार रहित कहा जाता है ) इत्यादि स्मृति भी ऐसा ही कहती है ॥ २३ ॥

और समस्त प्रपञ्चसे शून्य, अव्यक्त इस आत्माको योगी लोग संराधन समयमें देखते हैं । भक्ति, ध्यान, प्रणिधान आदिका अनुष्ठान संराधन है । परन्तु यह कैसे जाना जाता है कि योगी लोग उसे ध्यान कालमें देखते हैं ? प्रत्यक्ष और अनुमानसे-श्रुति और स्मृतिसे [ ऐसा अवगत होता है ] ऐसा अर्थ है । जैसे कि 'पराञ्चि खानि०' (स्वयम्भु ईश्वरने छिद्रोपलक्षित इन्द्रियोंको बहिर्मुखकर हिंसित कर दिया है, इससे जीव बाह्य विषयोंको देखता है, अन्तरात्माको नहीं । जिसने अमृतत्व-मोक्षकी इच्छा करते हुए अपनी इन्द्रियोंको रोक लिया है ऐसा कोई धीर पुरुष ही प्रत्यगात्माको देख पाता है) और 'ज्ञानप्रसादेन०' (ज्ञान प्रसादसे पुरुष विशुद्ध चित्त हो जाता है और तभी वह ध्यान करते हुए उस निष्कल आत्मतत्त्वका साक्षात्कार करता है ) इत्यादि श्रुति और 'यं विनिद्रा०' ( निद्रारहित-तमोगुण रहित, श्वासको जीतनेवाले, सन्तुष्ट और संयतेन्द्रिय पुरुष ध्यान करते हुए जिस ज्योतिको देखते हैं, उस योगलभ्य आत्माको नमस्कार है, उस सनातन भगवान्‌को योगी लोग सम्यग्रूपसे देखते हैं ) इत्यादि स्मृति भी है ॥ २४ ॥

परन्तु संराध्य और संराधकभाव स्वीकार करनेसे पर और अपर आत्माओंमें भेद हो जायगा ? नहीं, ऐसा कहते हैं—

जैसे प्रकाश, आकाश, सविता आदि अङ्गुलि, कमण्डलु, जल आदि उपाधि भूत कर्मोंमें सविशेषसे भासते हैं, परन्तु अपने स्वाभाविक साधारणरूपको नहीं छोड़ते, वैसे ही यह आत्मभेद

शेषा इवावभासन्ते, नच स्वाभाविकीमविशेषात्मतां जहति, एवमुपाधिनिमित्त एवायमात्मभेदः स्वतस्त्वैकात्म्यमेव। तथाहि—वेदान्तेष्वभ्यासेनासकृज्जीवप्राज्ञयोरभेदः प्रतिपाद्यते ॥ २५ ॥

## अतोऽनन्तेन तथाहि लिङ्गम् ॥ २६ ॥

पदच्छेद—अतः, अनन्तेन, तथा, हि, लिङ्गम्।

सूत्रार्थ—( अतः ) भेदके औपाधिक होनेसे विद्यासे उसकी निवृत्ति होनेपर जीव ( अनन्तेन ) अनन्त परमात्माके साथ एक हो जाता है, क्योंकि (तथाहि लिङ्गम्) वैसा ही लिङ्ग—ज्ञापक है अर्थात् 'स यो ह वै०' इत्यादि श्रुति है।

अतश्च स्वाभाविकत्वादभेदस्याविद्याकृतत्वाच्च भेदस्य विद्ययाऽविद्यां विधूय जीवः परेणानन्तेन प्राज्ञेनात्मनैकतां गच्छति। तथाहि लिङ्गम्—'स यो ह वै तत्परमं ब्रह्म वेद ब्रह्मैव भवति' ( मु० ३।२।९ ) 'ब्रह्मैव सन्ब्रह्माप्येति' (बृह० ४।४।६) इत्यादि ॥२६॥

## उभयव्यपदेशात्त्वहिकुण्डलवत् ॥ २७ ॥

पदच्छेद—उभयव्यपदेशात्, तु, अहिकुण्डलवत्।

सूत्रार्थ—( अहिकुण्डलवत् ) जैसे सर्परूपसे अभेद है और कुण्डल आदि रूपसे भेद है, वैसे ही ( उभयव्यपदेशात् ) ध्यातृ और ध्येयभावसे और 'तत्त्वमसि' आदिसे जीव और ईश्वरमें भेद और अभेद दोनोंका व्यपदेश है। ( तु ) शब्द विलक्षणताका द्योतक है।

तस्मिन्नेव संराध्यसंराधकभावे मतान्तरमुपन्यस्यति स्वमतविशुद्धये। क्वचिज्जीवप्राज्ञयोर्भेदो व्यपदिश्यते 'ततस्तु तं पश्यते निष्कलं ध्यायमानः' ( मुण्ड० ३।१।८ ) इति ध्यातृध्यातव्यत्वेन द्रष्टृद्रष्टव्यत्वेन च। 'परात्परं पुरुषमुपैति दिव्यम्' ( मु० ३।२।८ ) इति गन्तृगन्तव्यत्वेन। 'यः सर्वाणि भूतान्यन्तरो यमयति' इति नियन्तृनियन्तव्यत्वेन च। क्वचित्तु तयोरेवाभेदो व्यपदिश्यते—'तत्त्वमसि' ( छा० ६।८।७) 'अहं ब्रह्मास्मि' ( बृह० १।४।१० ) 'एष त आत्मा सर्वान्तरः' ( बृह०३।४।१ ) 'एष त आत्मान्तर्याम्यमृतः' ( बृह०३।७।३ ) इति। तत्रैवमुभयव्यपदेशे सति यद्यभेद एवैकान्ततो गृह्यते भेदव्यपदेशो निरालम्बन एव स्यात्।

---

उपाधि निमित्तक ही है स्वतः तो एक रूप ही है, क्योंकि वेदान्त वाक्योंमें अभ्याससे अनेक वार जीव और प्राज्ञका अभेद प्रतिपादित किया जाता है ॥ २५ ॥

और इससे-अभेदके स्वाभाविक होनेसे और भेदके अविद्याकृत होनेसे विद्या द्वारा अविद्याकी निवृत्तिकर जीव पर-अनन्त प्राज्ञात्माके साथ एकताको प्राप्त होता है, क्योंकि 'स यो ह वै०' ( जो उस परब्रह्मको जानता है वह ब्रह्म ही हो जाता है ) 'ब्रह्मैव०' ( ब्रह्म होकर ही ब्रह्मको प्राप्त होता है ) इत्यादि लिङ्ग-ज्ञापक है ॥ २६ ॥

उसी संराध्य-संराधकभावमें स्वमतकी विशुद्धिके लिए अन्य मतका उपन्यास करते हैं। 'ततस्तु तं पश्यते०' (तो उससे वह ध्यान करता हुआ उस निष्कल आत्मतत्त्वका साक्षात्कार करता है) इस तरह कहींपर ध्यातृ-ध्यातव्यरूपसे और द्रष्टृ-द्रष्टव्यरूपसे, और 'परात्परं०' ( परात्पर दिव्य पुरुषको प्राप्त हो जाता है ) इस प्रकार कहींपर गन्तृ-गन्तव्यरूपसे, और 'यः सर्वाणि०' ( जो सब भूतोंका उनके अन्तर रहकर नियमन करता है ) इस प्रकार कहींपर नियन्तृ-नियन्तव्यरूपसे जीव और परमात्माके भेदका व्यपदेश किया जाता है। और 'तत्त्वमसि' 'अहं ब्रह्मास्मि' 'एष त०' ( यह तेरा आत्मा सर्वान्तर है ) और 'एष त०' ( वह तुम्हारा आत्मा अन्तर्यामी अमृत है ) इस प्रकार कहींपर तो उन दोनोंमें अभेदका ही व्यपदेश किया जाता है। इस प्रकार वहाँ दोनोंके व्यपदेश होनेपर यदि एकान्ततः अभेदका ही ग्रहण किया जाय तो भेद व्यपदेश निरालम्बन ही हो जायगा। अतः उभय व्यपदेशके दर्शनसे अहिकुण्डलके समान यहाँ तत्त्व होना युक्त है। जैसे 'सर्प' इस प्रकार अभेद है

अत उभयव्यपदेशदर्शनादहिकुण्डलवदत्र तत्त्वं भवितुमर्हति । यथाहिरित्यभेदः कुण्डलाभोगप्रांशुत्वादीनीति तु भेद एवमिहापीति ॥ २७ ॥

## प्रकाशाश्रयवद्वा तेजस्त्वात् ॥ २८ ॥

पदच्छेद—प्रकाशाश्रयवत्, वा, तेजस्त्वात् ।

सूत्रार्थ—( वा ) अथवा ( प्रकाशाश्रयवत् ) जैसे प्रकाश और उसके आश्रय सूर्य दोनोंमें अत्यन्त भेद नहीं है, ( तेजस्त्वात् ) क्योंकि दोनोंमें तेजस्त्व समान है, वैसे जीव और ईश्वरमें भी भेद और अभेद समझना चाहिए ।

* अथवा प्रकाशाश्रयवदेतत्प्रतिपत्तव्यम् । यथा प्रकाशः सावित्रस्तदाश्रयश्च सविता नात्यन्तभिन्नावुभयोरपि तेजस्त्वाविशेषात् । अथ च भेदव्यपदेशभाजौ भवत एवमिहापीति ॥ २८ ॥

## पूर्ववद्वा ॥ २९ ॥

पदच्छेद—पूर्ववत्, वा ।

सूत्रार्थ—( वा ) अथवा ( पूर्ववत् ) 'प्रकाशादिवच्चावैशेष्यम्' इस सूत्रमें पहले भेद काल्पनिक और अभेद पारमार्थिक कहा गया है, उसके समान यहाँ भी समझना चाहिए ।

* यथा वा पूर्वमुपन्यस्तं प्रकाशादिवच्चावैशेष्यमिति तथैवैतद्भवितुमर्हति । तथाह्यविद्याकृतत्वाद्बन्धस्य विद्यया मोक्षउपपद्यते । यदि पुनः परमार्थत एव बद्धः कश्चिदात्माहिकुण्डलन्यायेन परस्यात्मनः संस्थानभूतः प्रकाशाश्रयन्यायेन चैकदेशभूतोऽभ्युपगम्येत ततः पारमार्थिकस्य बन्धस्य तिरस्कर्तुमशक्यत्वान्मोक्षशास्त्रवैयर्थ्यं प्रसज्येत,न चात्रोभावपि भेदाभेदौ श्रुतिस्तुल्यवद्व्यपदिशति । अभेदमेव हि प्रतिपाद्यत्वेन निर्दिशति, भेदं तु

---

और कुण्डल-वलयाकार, आभोग-वक्राकार, दीर्घाकार आदि तो भेद है, वैसे यहाँ भी दोनोंमें जीवरूपसे भेद और ब्रह्मरूपसे अभेद है ॥ २७ ॥

अथवा प्रकाश और उसके आश्रयके समान यह समझना चाहिए । जैसे सूर्यका प्रकाश और उसका आश्रय सूर्य अत्यन्त भिन्न नहीं हैं, क्योंकि दोनोंमें भी तेजस्त्व समान है, किन्तु दोनों ही भेद व्यपदेशके भागी होते हैं, वैसे यहाँ भी समझना चाहिए ॥ २८ ॥

अथवा प्रकाश आदिके समान जीव और परमात्माका अभेद जैसे पूर्वमें कहा गया है, वैसे ही यह होना युक्त है, क्योंकि बन्धके अविद्याकृत होनेसे विद्यासे मोक्ष उपपन्न होता है । यदि पुनः परमार्थसे ही अहिकुण्डल न्यायसे परमात्माका संस्थानभूत अथवा प्रकाशाश्रय न्यायसे एक देश भूत कोई बद्ध जीवात्मा स्वीकार किया जाय, तो पारमार्थिक बन्धका तिरस्कार ( निवृत्ति ) न हो सकनेसे मोक्षशास्त्र व्यर्थ हो जायगा, और यहाँ भेद और अभेद इन दोनोंका श्रुति समानरूपसे व्यपदेश नहीं करती । श्रुति अभेदका ही प्रतिपाद्यरूपसे निर्देश करती है, और पूर्व प्रसिद्ध भेदका तो अन्य अर्थकी

### सत्यानन्दी-दीपिका

* जैसे तेजस्त्व समान धर्मको लेकर सूर्यके प्रकाश और सूर्यमें अभेद है और प्रकाशत्व और सूर्यत्वको लेकर दोनोंमें भेद भी है, वैसे आत्मत्वको लेकर जीव और परमेश्वरमें अभेद है और जीवत्व और ईश्वरत्वको लेकर दोनोंमें भेद भी है ॥ २८ ॥

* भेद और अभेद इन दोनोंका एक स्थलमें स्वीकार करनेसे लोकमें उनकी विरोधकथा लुप्त हो जायगी, अतः श्रुति तो अभेदका ही प्रतिपाद्यरूपसे उपन्यास करती है और ब्रह्म सिद्धिकी विवक्षासे अज्ञानावस्थामें लोक प्रसिद्ध भेदका अनुवादमात्र करती है ॥ २९ ॥

पूर्वप्रसिद्धमेवानुवदत्यर्थान्तरविवक्षया । तस्मात्प्रकाशादिवच्चावैशेष्यमित्येष एव सिद्धान्तः ॥ २९ ॥

## प्रतिषेधाच्च ॥ ३० ॥

पदच्छेद—प्रतिषेधात्, च ।

सूत्रार्थ—'नान्योऽतोऽस्ति द्रष्टा' इत्यादि श्रुतिसे परमात्मासे भिन्न चेतनका और 'नेति नेति' इत्यादि श्रुतिसे ब्रह्मसे भिन्न दृश्यमान प्रपञ्चका प्रतिषेध होनेसे अद्वितीय ब्रह्म ही अवशिष्ट है ।

❀ इतश्चैष एव सिद्धान्तः । यत्कारणं परस्मादात्मनोऽन्यं चेतनं प्रतिषेधति शास्त्रम्—'नान्योऽतोऽस्ति द्रष्टा' ( बृह० ३।७।२३ ) इत्येवमादि । 'अथात आदेशो नेति नेति' ( बृह० २।३।६ ) 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' ( बृह० २।५।१९ ) इति च ब्रह्मव्यतिरिक्तप्रपञ्चनिराकरणाद्ब्रह्ममात्रपरिशेषाच्चैष एव सिद्धान्त इति गम्यते ॥ ३० ॥

( ७ पराधिकरणम् । सू० ३१-३७ )

## परमतः सेतून्मानसंबन्धभेदव्यपदेशेभ्यः ॥ ३१ ॥

पदच्छेद—परम्, अतः, सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ।

सूत्रार्थ—( अतः ) इस ब्रह्मसे ( परम् ) अन्य वस्तु है, क्योंकि ( सेतून्मानसम्बन्धभेदव्यपदेशेभ्यः ) सेतु, उन्मान, सम्बन्ध और भेदके व्यपदेशोंसे ऐसा ज्ञात होता है ।

❀ यदेतन्निरस्तसमस्तप्रपञ्चं ब्रह्म निर्धारितम्, अस्मात्परमन्यत्तत्त्वमस्ति नास्तीति श्रुतिविप्रतिपत्तेः संशयः । कानिचिद्धि वाक्यान्यापातेनैव प्रतिभासमानानि ब्रह्मणोऽपि परमन्यत्तत्त्वं प्रतिपादयन्तीव । तेषां हि परिहारमभिधातुमयमुपक्रमः क्रियते । परमतो ब्रह्मणोऽन्यत्तत्त्वं भवितुमर्हति । कुतः ? सेतुव्यपदेशादुन्मानव्यपदेशात्संबन्धव्यपदेशाद्भेदव्यप-

---

विवक्षासे अनुवाद करती है । इसलिए 'प्रकाशादिवच्चावैशेष्यम्' 'प्रकाश आदिके समान अभेद है' यही सिद्धान्त है ॥ २९ ॥

इससे भी यही सिद्धान्त है, क्योंकि 'नान्योऽतोऽस्ति द्रष्टा' (उस-परमात्मासे अन्य द्रष्टा नहीं है) इत्यादि शास्त्र परमात्मासे अन्य चेतनका प्रतिषेध करता है, और 'अथात०' ( अब इसके अनन्तर 'नेति नेति' यह ब्रह्मका आदेश है ) और 'तदेतद्ब्रह्म०' ( वह यह ब्रह्म कारण रहित, कार्य रहित विजातीय द्रव्यसे रहित और अबाह्य है ) इस प्रकार ब्रह्मसे व्यतिरिक्त प्रपञ्चका निराकरण होनेसे ब्रह्ममात्रका परिशेष होनेसे यही सिद्धान्त है, ऐसा ज्ञात होता है ॥ ३० ॥

समस्त प्रपञ्चसे शून्य इस ब्रह्मका जो निर्धारण किया गया है, इससे भिन्न अन्य तत्त्व है कि नहीं ? इस प्रकार श्रुतियोंकी विप्रतिपत्तिसे संशय होता है । आपाततः कोई प्रतिभासमान वाक्य ब्रह्मसे भी भिन्न अन्य तत्त्वका प्रतिपादन-सा करते हैं, उनका ही परिहार कहनेके लिए यह उपक्रम किया जाता है । पूर्वपक्षी—इस ब्रह्मसे पर-अन्य तत्त्व हो सकता है । किससे ? इससे कि सेतुका व्यपदेश, उन्मानका व्यपदेश, सम्बन्धका व्यपदेश और भेदका व्यपदेश है । 'अथ य आत्मा०' (जो आत्मा है वह विधारक

### सत्यानन्दी-दीपिका

❀ इस प्रकार निषेध वाक्योंका विचार करनेपर निष्प्रपञ्च चिदेकरस ब्रह्म ही 'तत्' पदसे लक्षित सिद्ध होता है, यही सिद्धान्त है ॥ ३० ॥

❀ 'नेति नेति' इत्यादि श्रुतिसे ब्रह्म अतिरिक्त वस्तुका प्रतिषेध किया गया है, परन्तु सेतु आदि श्रुतिसे अन्य वस्तुका अस्तित्व प्रतीत होता है, इस प्रकार आक्षेप संगतिसे 'परम' इत्यादिसे पूर्वपक्ष करते हैं । यद्यपि द्युभ्वाद्यधिकरणमें सेतु शब्दको गौण मानकर विधारकरूपसे उसका व्याख्यान किया गया है, तो भी उन्मान आदि श्रुतियोंके तात्पर्यको न समझकर पूर्वपक्षी शङ्का करते हैं । इससे

देशाच्चेति। सेतुव्यपदेशस्तावत्-'अथ य आत्मा स सेतुर्विधृतिः' (छा० ८।४।१) इत्यात्मशब्दाभिहितस्य ब्रह्मणः सेतुत्वं संकीर्तयति। सेतुशब्दश्च हि लोके जलसंतानविच्छेदकरे मृद्दार्वादिप्रचये प्रसिद्धः, इह च सेतुशब्द आत्मनि प्रयुक्त इति लौकिकसेतोरिवात्मसेतोरन्यस्य वस्तुनोऽस्तित्वं गमयति, 'सेतुं तीर्त्वा' (छा० ८।४।२) इति च तरतिशब्दप्रयोगात्। यथा लौकिकं सेतुं तीर्त्वा जाङ्गलमसेतुं प्राप्नोत्येवमात्मानं सेतुं तीर्त्वाऽनात्मानमसेतुं प्राप्नोतीति गम्यते। * उन्मानव्यपदेशश्च भवति—'तदेतद्ब्रह्म चतुष्पादष्टाशफं षोडशकलमि' ति। यच्च लोक उन्मितमेतावदिदमिति परिच्छिन्नं कार्षापणादि, ततोऽन्यद्वस्त्वस्तीति प्रसिद्धम्। तथा ब्रह्मणोऽप्युन्मानात्ततोऽन्येन वस्तुना भवितव्यमिति गम्यते। तथा संबन्धव्यपदेशोऽपि भवति-'सता सोम्य तदा संपन्नो भवति' (छा० ६।८।१)इति 'शारीर आत्मा' (तै० २।३।१) 'प्राज्ञेनात्मना संपरिष्वक्तः' (बृह० ४।३।२१)इति च। मितानां च मितेन संबन्धो दृष्टो यथा नराणां नगरेण। जीवानां च ब्रह्मणा संबन्धं व्यपदिशति सुषुप्तौ। अतस्ततः परमन्यदमितमस्तीति गम्यते। भेदव्यपदेशश्चैनमेवार्थं गमयति। तथाहि-'अथ य एषोऽन्तरादित्ये हिर-

---

सेतु है ) इस प्रकार सेतु व्यपदेश आत्मशब्दसे अभिहित ब्रह्म सेतु है ऐसा कहता है। और लोकमें सेतु शब्द जल प्रवाहका विच्छेद करनेवाले मृत्तिका, लकड़ी आदिके समूहमें प्रसिद्ध है। यहाँ तो सेतुशब्द आत्मामें प्रयुक्त है, इसलिए वह लौकिक सेतुके समान आत्मसेतुसे अन्य वस्तुके अस्तित्वका ज्ञान कराता है। क्योंकि 'सेतुं तीर्त्वा' ( सेतुको तैरकर ) इस प्रकार 'तरति' शब्दका प्रयोग है। जैसे लौकिक सेतुको तैरकर असेतु जाङ्गल (वायु प्रधान) स्थलको प्राप्त होता है, वैसे ही आत्मसेतुको तैरकर असेतु अनात्माको प्राप्त होता है, ऐसा ज्ञात होता है।

उन्मानका भी व्यपदेश है—'तदेतद्ब्रह्म०' ( वह ब्रह्म चार पाद वाला, आठखुर वाला और सोलह अवयव वाला है ) लोकमें जो उन्मित है—यह इतना है इस प्रकार परिच्छिन्न जो कार्षापण आदि है उससे अन्य वस्तु है, ऐसा प्रसिद्ध है। उसी प्रकार ब्रह्मके उन्मानसे भी उससे अन्य वस्तु होनी चाहिए, ऐसा ज्ञात होता है। तथा 'सता सोम्य०' ( हे सोम्य ! उस समय सत्के साथ सम्पन्न होता है ) और 'शारीर आत्मा०' ( अन्नमयमें स्थित यही आत्मा है ) 'प्राज्ञेनात्मना०' ( यह पुरुष प्राज्ञात्माके साथ संसृष्ट हुआ है ) इस प्रकार सम्बन्धका व्यपदेश होता है। और मितों-परिच्छिन्नोंका-परिच्छिन्नके साथ सम्बन्ध देखा जाता है, जैसे मनुष्योंका नगरके साथ। और श्रुति सुषुप्तिमें जीवोंका ब्रह्मके साथ सम्बन्ध कहती है, इसलिए उससे यह अन्य अमित-अपरिच्छिन्न है, यह ज्ञात होता है। भेदव्यपदेश भी इसी अर्थका बोध कराता है, क्योंकि 'अथ य एषो०' ( तथा यह जो आदित्य मण्डलके अन्तर्गत सुवर्णमय-सा पुरुष दिखाई देता है ) इस तरह आदित्य आधारवाले ईश्वरका

## सत्यानन्दी-दीपिका

पूर्वपक्षमें उन्मान आदि श्रुतियोंके मुख्य होनेसे द्वैत सिद्ध होता है। सिद्धान्तमें तो तत् पद लक्ष्य अद्वितीय ब्रह्मकी सिद्धि फल है। 'ब्रह्म सद्वयं सेतुत्वात् लौकिकसेतुवत्' 'ब्रह्म सद्वितीय है, क्योंकि सेतु है, जैसे लौकिक सेतु' इस अनुमानसे ब्रह्मसे अतिरिक्त वस्तु सिद्ध होती है। और 'सेतुं तीर्त्वा' इत्यादि श्रुति से भी ऐसा ज्ञात होता है।

* प्रकाशवत्, अनन्तवत्, ज्योतिष्मत् और आयतनवत् ये चार ब्रह्मके पाद हैं। चार दिशाएँ-कलाएँ यह प्रकाशवत् पाद है। पृथिवी, अन्तरिक्ष, द्यु और समुद्र यह अनन्तवान्पाद है। अग्नि, सूर्य, चन्द्रमा और विद्युत् यह ज्योतिष्मान् पाद है। चक्षु, श्रोत्र, वाक् और मन यह आयतनवान् पाद है। इसप्रकार ब्रह्म चतुष्पाद है। प्रत्येक पादके दो भाग होनेसे ब्रह्मके आठ खुर होते हैं,

ण्मयः पुरुषो दृश्यते' (छा० १।६।६) इत्यादित्याधारमीश्वरं व्यपदिश्य ततो भेदेनाक्ष्याधारमीश्वरं व्यपदिशति—'अथ य एषोऽन्तरक्षिणि पुरुषो दृश्यते' ( छा० १।७।५ ) इति। अतिदेशं चास्यामुना रूपादिषु करोति—'तस्यैतस्य तदेव रूपं यदमुष्य रूपं यावमुष्य गेष्णौ तौ गेष्णौ यन्नाम तन्नाम' ( छा० १।७।५ ) इति। सावधिकं चेश्वरत्वमुभयोर्व्यपदिशति—'ये चामुष्मात्पराञ्चो लोकास्तेषां चेष्टे देवकामानां च' ( छा० १।६।८ ) इत्येकस्य। 'ये चैतस्मादर्वाञ्चो लोकास्तेषां चेष्टे मनुष्यकामानां च' ( छा० १।७।६ ) इत्येकस्य। यथेदं मागधस्य राज्यमिदं वैदेहस्येति एवमेतेभ्यः सेत्वादिव्यपदेशेभ्यो ब्रह्मणः परमस्तीति ॥ ३१ ॥

एवं प्राप्ते प्रतिपाद्यते—

## सामान्यात्तु ॥ ३२ ॥

**पदच्छेद**—सामान्यात्, तु।

**सूत्रार्थ**—परन्तु जैसे लौकिक सेतु जलका व्यवस्थापक है, वैसे ब्रह्म जगत् मर्यादाका व्यवस्थापक है, इसप्रकार सादृश्यसे ब्रह्ममें सेतुत्व उपदिष्ट है।

तुशब्देन प्रदर्शितां प्राप्तिं निरुणद्धि। न ब्रह्मणोऽन्यत्किंचिद्भवितुमर्हति, प्रमाणाभावात्। न ह्यन्यस्यास्तित्वे किंचित्प्रमाणमुपलभामहे। सर्वस्य हि जनिमतो वस्तुजातस्य जन्मादि ब्रह्मणो भवतीति निर्धारितम्। अनन्यत्वं च कारणात्कार्यस्य। न च ब्रह्मव्यतिरिक्तं

---

व्यपदेश कर उसके अनन्तर 'अथ य एष०' (तथा यह जो नेत्रोंके अन्तर्गत पुरुष दिखाई देता है ) इस प्रकार भेदसे नेत्र आधारवाले ईश्वरका व्यपदेश करती है। और 'तस्यैतस्य०' ( उस इस पुरुषका वही रूप है जो उस आदित्यान्तर्गत पुरुषका रूप है, जो उसके पर्व हैं वही इसके पर्व हैं, जो उसका नाम है वही इसका भी नाम है ) इस प्रकार अक्षिस्थ पुरुषका इस आदित्यस्थ पुरुषके साथ रूप आदिमें अतिदेश करती है। और 'ये चामुष्मात्०' ( जो इस आदित्य लोकसे ऊपरके लोक हैं और जो देवताओंकी कामनाएँ हैं उनका शासन करता है) इसप्रकार एकका, और 'ये चैतस्मात्०' (जो इस अध्यात्म आत्मासे नीचेके लोक हैं उनका तथा मानवीय कामनाओंका शासन करता है) इसप्रकार दूसरेका, इस तरह दोनोंका ईश्वरत्व मर्यादित व्यपदेश करती है। जैसे यह मगधका राज्य है और यह वैदेहका। इस तरह इन सेतु आदि व्यपदेशोंसे ब्रह्मसे अन्य वस्तु है ॥ ३१ ॥

ऐसा प्राप्त होनेपर प्रतिपादन किया जाता है—

सिद्धान्ती—तु शब्दसे प्रदर्शित प्राप्तिका निरोध करते हैं—ब्रह्मसे अन्य कुछ भी नहीं हो सकता, क्योंकि प्रमाणका अभाव है। अन्यके सद्भावमें हमें कोई प्रमाण उपलब्ध नहीं होता। उत्पत्तिमत् सम्पूर्ण वस्तु समुदायका जन्म आदि ब्रह्मसे होता है, ऐसा निर्धारित है। कारणसे कार्य अनन्य होता

### सत्यानन्दी-दीपिका

और प्रत्येक पादके उक्त चार-चार भाग होनेसे ब्रह्म सोलह अवयवों वाला है। जैसे सोलह पणोंका कार्षापण होता है। इसप्रकार ब्रह्म परिच्छिन्न होनेसे द्वैतसहित है, और सुषुप्तिमें जीवके साथ ग्रामके समान सम्बन्धी होनेसे भी ब्रह्म द्वैतसहित है। आधारभेदसे भी वस्तुका भेद होता है। आधार, अतिदेश और अवधिरूपसे भेद तीन प्रकारका कहा गया है। नेत्र और आदित्य मण्डलका आधाररूपसे कथन है। नेत्रस्थ पुरुषका जो नाम आदि है वही आदित्यस्थ पुरुषका है, यह अतिदेश है। इसी प्रकार एक आदित्य लोकसे ऊपरलोकों और देव कामनाओंका शासक है और दूसरा इससे नीचे लोकों और मनुष्य कामनाओंका शासक है। इसप्रकार शासकत्वकी सीमा निर्धारित है। इसतरह सेतु, सम्बन्ध, उन्मान और भेदके कथनसे ब्रह्मसे भिन्न अन्य कोई अपरिच्छिन्न वस्तु है ॥ ३१ ॥

किंचिदजं संभवति, 'सदेव सोम्येदमग्र आसीदेकमेवाद्वितीयम्' (छा० ६।२।१) इत्यवधारणात्। एकविज्ञानेन च सर्वविज्ञानप्रतिज्ञानाच्च ब्रह्मव्यतिरिक्तवस्त्वस्तित्वमवकल्पते। ननु सेत्वादिव्यपदेशा ब्रह्मव्यतिरिक्तं तत्त्वं सूचयन्तीत्युक्तम्, नेत्युच्यते—सेतुव्यपदेशस्तावन्न ब्रह्मणो बाह्यस्य सद्भावं प्रतिपादयितुं क्षमते। सेतुरात्मेति ह्याह, न ततः परमस्तीति। तत्र परस्मिन्नसति सेतुत्वं नावकल्पत इति परं किमपि कल्प्येत। न चैतन्न्याय्यम्, हठो ह्यप्रसिद्धकल्पना। अपि च सेतुव्यपदेशादात्मनो लौकिकसेतुनिदर्शनेन सेतुबाह्यवस्तुतां प्रसञ्जयता मृद्दारुमयतापि प्रासङ्क्ष्यत, न चैतन्न्याय्यम्, अजत्वादिश्रुतिविरोधात्। सेतुसामान्यात्तु सेतुशब्द आत्मनि प्रयुक्त इति श्लिष्यते। जगतस्तन्मर्यादानां च विधारकत्वं सेतुसामान्यमात्मनः। अतः सेतुरिव सेतुरिति प्रकृत आत्मा स्तूयते। सेतुं तीर्त्वेत्यपि तरतेरतिक्रमासंभवात्प्राप्नोत्यर्थ एव वर्तते। यथा व्याकरणं तीर्ण इति प्राप्त इत्युच्यते नातिक्रान्तस्तद्वत्॥ ३२॥

## बुद्ध्यर्थः पादवत्॥ ३३॥

पदच्छेद—बुद्ध्यर्थः, पादवत्।

सूत्रार्थ-(पादवत्) जैसे ब्रह्मके प्रतीक मनकी उपासनाके लिए वाणी आदिकी पादरूपसे कल्पना की गई है, वैसे 'चतुष्पाद् ब्रह्म' इत्यादि श्रुतिमें उन्मानकी (बुद्ध्यर्थः) उपासनाके लिए कल्पना की गई है।

* यदप्युक्तम्—उन्मानव्यपदेशादस्ति परमिति, तत्राभिधीयते—उन्मानव्यपदेशोऽपि न ब्रह्मव्यतिरिक्तवस्त्वस्तित्वप्रतिपत्त्यर्थः। किमर्थस्तर्हि? बुद्ध्यर्थः, उपास-

है। और 'सदेव सोम्य०' (हे सोम्य! आरम्भमें यह एकमात्र अद्वितीय सत् ही था) इस अवधारणसे ब्रह्मसे अतिरिक्त कोई अज नहीं हो सकता। और एक विज्ञानसे सर्वविज्ञानकी प्रतिज्ञा होनेके कारण ब्रह्मसे अतिरिक्त वस्तुका अस्तित्व नहीं हो सकता। परन्तु यह जो कहा गया है कि सेतु आदि व्यपदेश ब्रह्मसे अतिरिक्त तत्त्व-पदार्थको सूचित करते हैं। नहीं, ऐसा कहते हैं—सेतु-व्यपदेश तो ब्रह्मसे बाह्य वस्तुके सद्भावके प्रतिपादन करनेमें समर्थ नहीं है, क्योंकि 'सेतुरात्मा' (आत्मा सेतु है) ऐसा कहा है। पुनः 'उससे अन्य है' ऐसा नहीं कहा है। वहाँ अन्यके न होनेपर सेतुत्व नहीं हो सकता, इससे किसी भी एक अन्यकी कल्पना करनी चाहिए, परन्तु यह युक्त नहीं है, क्योंकि अप्रसिद्धकी कल्पना केवल दुराग्रहमात्र है। और सेतु व्यपदेशसे लौकिक सेतु दृष्टान्तद्वारा आत्मामें सेतुसे बाह्य वस्तुका प्रसङ्ग लानेवाला मृण्मयता तथा काष्ठमयताका भी प्रसङ्ग लायेगा, परन्तु यह न्याय नहीं है, क्योंकि 'आत्मा अज है' इत्यादि प्रतिपादक श्रुतिसे विरोध होता है। सेतु सामान्यसे तो आत्मामें सेतु शब्द प्रयुक्त है, यह सङ्गत है। जगत् और उसकी मर्यादाओंका विधारकत्व सेतु सादृश्य आत्मामें है, अतः सेतुके समान सेतु, इसप्रकार प्रकृत आत्माकी स्तुति की जाती है। 'सेतुं तीर्त्वा०' (सेतु तैर कर) इसमें भी 'तॄ' धातु अतिक्रमणरूप अर्थके सम्भव न होनेसे प्राप्तकरणरूप अर्थमें है। जैसे 'व्याकरण तैर गया' अर्थात् व्याकरणको प्राप्त हुआ है, ऐसा कहा जाता है, अतिक्रान्त हुआ, ऐसा नहीं कहा जाता है, वैसे यहाँ भी समझना चाहिए॥ ३२॥

यह भी जो कहा गया है कि उन्मान व्यपदेशसे ब्रह्मसे अन्य है, उसपर कहते हैं—उन्मान व्यपदेश भी ब्रह्मसे अतिरिक्त वस्तुके अस्तित्वकी प्रतिपत्तिके लिए नहीं है, तो किसके लिए है? 'बुद्ध्यर्थः' उपासनाके लिए है। चार पैरवाला, आठ खुरवाला और सोलह अवयवोंवाला इसप्रकारकी बुद्धि

### सत्यानन्दी-दीपिका

* जैसे ब्रह्मके अध्यात्म प्रतीक मनके वाक्, प्राण, चक्षु और श्रोत्र यह चार पाद और अधिदैवत प्रतीक आकाशके अग्नि, वायु, आदित्य और दिशाएँ यह चार पाद उपासनाके लिए कल्पित हैं,

नार्थं इति यावत्। चतुष्पादष्टाशफं षोडशकलमित्येवंरूपा बुद्धिः कथं नु नाम ब्रह्मणि स्थिरा स्यादिति-विकारद्वारेण ब्रह्मण उन्मानकल्पनैव क्रियते। न ह्यविकारेऽनन्ते ब्रह्मणि सर्वैः पुंभिः शक्या बुद्धिः स्थापयितुम्, मन्दमध्यमोत्तमबुद्धित्वात्पुंसामिति। पादवत्। यथा मन आकाशयोरध्यात्ममधिदैवतं च ब्रह्मप्रतीकयोराम्नातयोश्चत्वारो वागादयो मनःसंबन्धिनः पादाः कल्प्यन्ते चत्वारश्चाग्न्यादय आकाशसंबन्धिनः आध्यानाय तद्वत्। अथवा, पादवदिति—यथा कार्षापणे पादविभागो व्यवहारप्राचुर्याय कल्प्यते। नहि सकलेनैव कार्षापणेन सर्वदा सर्वे जना व्यवहर्तुमीशते, क्रयविक्रये परिमाणानियमात्तद्वदित्यर्थः ॥ ३३ ॥

## स्थानविशेषात्प्रकाशादिवत् ॥ ३४ ॥

पदच्छेद—स्थानविशेषात्, प्रकाशादिवत्।

सूत्रार्थ—( प्रकाशादिवत् ) प्रकाश आदिके समान ( स्थानविशेषात् ) उपाधिके योगसे ब्रह्ममें सम्बन्ध और भेदव्यपदेश उपचरित होते हैं।

इह सूत्रे द्वयोरपि संबन्धभेदव्यपदेशयोः परिहारो विधीयते। यदप्युक्तम्—संबन्धव्यपदेशाद्भेदव्यपदेशाच्च परमतः स्यादिति—तदप्यसत्, यत एकस्यापि स्थानविशेषापेक्षयैतौ व्यपदेशावुपपद्येते। संबन्धव्यपदेशो तावदयमर्थः—बुद्ध्याद्युपाधिस्थानविशेषयोगादुद्भूतस्य विशेषविज्ञानस्योपाध्युपशमे य उपशमः स परमात्मना संबन्ध इत्युपाध्यपेक्षयैवोपचर्यते, न परिमितत्वापेक्षया। तथा भेदव्यपदेशोऽपि ब्रह्मण उपाधिभेदापेक्षयोपचर्यते, न स्वरूपभेदापेक्षया। प्रकाशादिवदित्युपमोपादानम्।

---

ब्रह्ममें किस प्रकार स्थिर होगी, इसलिए विकार द्वारा ब्रह्ममें उन्मानकी कल्पना की जाती है, क्योंकि विकार रहित अनन्त ब्रह्ममें सब पुरुष बुद्धिकी स्थापना करनेमें समर्थ नहीं हैं, कारण कि पुरुष मन्द, मध्यम और उत्तम बुद्धिवाले हैं। पादवत्—पादके समान। जैसे मन और आकाश जो आध्यात्म और अधिदैवत ब्रह्मके प्रतीकरूपसे श्रुतिमें पठित हैं। उसमें मन सम्बन्धी वाक् आदि चार पाद और आकाश सम्बन्धी अग्नि आदि चार पाद ध्यानके लिए कल्पित किये जाते हैं, वैसे। अथवा पादवत्—पादके समान। जैसे कार्षापणमें पाद-विभाग व्यवहार प्राचुर्यके लिए कल्पित किया जाता है, क्योंकि समस्त कार्षापणसे ही सभी लोग सर्वदा व्यवहार नहीं कर सकते, कारण कि क्रय और विक्रयमें परिमाणका नियम नहीं है, वैसे ही, ऐसा अर्थ है ॥ ३३ ॥

इस सूत्रमें सम्बन्ध व्यपदेश और भेदव्यपदेश इन दोनोंका भी परिहार कहा जाता है। यह भी जो कहा गया है कि सम्बन्धव्यदेश और भेदव्यपदेशसे ब्रह्मसे अन्य होना चाहिए। वह भी ठीक नहीं है, क्योंकि स्थानविशेषकी अपेक्षासे एकमें भी ये व्यपदेश उपपन्न होते हैं। सम्बन्धव्यपदेशमें यह अर्थ-अभिप्राय है—बुद्धि आदि उपाधिरूप स्थान विशेषके योगसे आविर्भूत विशेष विज्ञानका उपाधिके उपशम-लय होनेपर जो उपशम होता है वह परमात्माके साथ सम्बन्ध है, इसप्रकार उपाधिकी अपेक्षासे उपचार किया जाता है, परिमितत्वकी अपेक्षासे नहीं है। इसप्रकार ब्रह्ममें भेदव्यपदेश भी उपाधिकी अपेक्षासे उपचरित है, स्वरूपभेदकी अपेक्षासे नहीं है। प्रकाशादिवत्—प्रकाशादिके समान

### सत्यानन्दी-दीपिका

वैसे बुद्धि आदि उपाधिसे ब्रह्ममें उन्मान उपासनाके लिए कल्पित है। अथवा जैसे व्यवहारके लिए कार्षापण ( मुद्रा ) में पाद-विभागकी कल्पना की जाती है, वैसे उपासनाके लिए ब्रह्ममें उन्मानकी कल्पना की जाती है ॥ ३३ ॥

* 'सता सोम्य तदा सम्पन्नो भवति' ( छा० ६।८।१ ) इत्यादि श्रुतिमें सम्बन्ध व्यपदेशसे ब्रह्मसे भिन्न वस्तु है, और 'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते' ( छा० १।६।६ )

यथैकस्य प्रकाशस्य सौर्यस्य चान्द्रमसस्य वोपाधियोगादुपजातविशेषस्योपाध्युपशमात्संबन्धव्यपदेशो भवत्युपाधिभेदाच्च भेदव्यपदेशः। यथा वा सूचीपाशाकाशादिपूपाध्यपेक्षयैवैतौ संबन्धभेदव्यपदेशौ भवतस्तद्वत् ॥ ३४ ॥

## उपपत्तेश्च ॥ ३५ ॥

पदच्छेद—उपपत्तेः, च।

सूत्रार्थ—सम्बन्ध और भेदव्यपदेश मुख्य नहीं हैं, क्योंकि ( उपपत्तेः ) 'स्वमपीतो भवति' इत्यादि श्रुतिसे ऐसी ही उपपत्ति होती है।

* उपपद्यते चात्रेदृश एव संबन्धो नान्यादृशः, 'स्वमपीतो भवति' (छा०६।८।१) इति हि स्वरूपसंबन्धमेनमामनन्ति, स्वरूपस्य चानपायित्वात्। न नरनगरन्यायेन संबन्धो घटते। उपाधिकृतस्वरूपतिरोभावात्तु—'स्वमपीतो भवति' (छा० ६।८।१ )इत्युपपद्यते। तथा भेदोऽपि नान्यादृशः संभवति, बहुतरश्रुतिप्रसिद्धैकेश्वरत्वविरोधात्। तथाच श्रुतिरेकस्याप्याकाशस्य स्थानकृतं भेदव्यपदेशमुपपादयति 'योऽयं बहिर्धा पुरुषादाकाशः' (छा० ३।१२।७), 'योऽयमन्तः पुरुष आकाशः' (छा०३।१२।८), 'योऽयमन्तर्हृदय आकाशः' (छा०३।१।२।९) इति ॥ ३५ ॥

## तथान्यप्रतिषेधात् ॥ ३६ ॥

पदच्छेद—तथा, अन्यप्रतिषेधात्।

सूत्रार्थ—जैसे सेतुत्व आदि व्यपदेशोंसे अन्य वस्तुकी अप्रतिपत्ति है, (तथा) वैसे ही 'आत्मैवाधस्तात्' इत्यादि श्रुति वाक्योंसे ( अन्यप्रतिषेधात् ) अन्य वस्तुके प्रतिषेध होनेसे अद्वितीय ब्रह्म ही अवधारित होता है।

---

यह उपमाका ग्रहण है। जैसे सूर्य अथवा चन्द्रमाके एक प्रकाशमें उपाधिके योगसे उत्पन्न हुए विशेषका उपाधिके उपशमसे सम्बन्ध व्यपदेश और उपाधिभेदसे भेदव्यपदेश होता है। अथवा जैसे सुईके छिद्र, पाश, आकाश आदिमें उपाधिकी अपेक्षासे ही ये सम्बन्ध व्यपदेश और भेदव्यपदेश होते हैं, वैसे ही यहाँ भी समझना चाहिए ॥ ३४ ॥

और यहाँपर इसप्रकारका सम्बन्ध उपपन्न होता है अन्य प्रकारका नहीं, क्योंकि 'स्वमपीतो भवति' ( अपनेको ही अपीत-प्राप्त होता है ) इस प्रकार श्रुति इस स्वरूप सम्बन्धको कहती है, कारण कि स्वरूप अनिवाशी है, अतः नर-नगर न्यायसे सम्बन्ध नहीं घटता। उपाधिकृत स्वरूपके तिरोभावसे 'स्वमपीतो भवति' यह उपपन्न होता है। इसप्रकार भेद भी अन्य प्रकारका सम्भव नहीं है, क्योंकि अधिकतर श्रुतियोंसे प्रसिद्ध अद्वितीय ईश्वरत्वका विरोध होता है। और 'योऽयं बहिर्धा०' ( जो भी यह पुरुष-देहसे बाहर आकाश है ) 'योऽयमन्तः०' ( जो यह पुरुष-देहके भीतर आकाश है ) और 'योऽयम०' ( जो यह हृदयके अन्तर आकाश है ) इसप्रकार श्रुति एक आकाशमें भी स्थानकृत भेद व्यपदेशका उपपादन करती है ॥ ३५ ॥

### सत्यानन्दी-दीपिका

इत्यादि श्रुतिमें भेदव्यपदेशसे ब्रह्मसे अन्य वस्तु है। ऐसा ( ब्रह्मसूत्र ३।२।३१ ) में सिद्ध किया गया है। परन्तु वह युक्त नहीं है, क्योंकि उपाधिकी अपेक्षासे दोनों व्यपदेश होते हैं ॥ ३४ ॥

* 'स्वमपीतो भवति' इस श्रुतिसे जीव और ब्रह्मका स्वरूप सम्बन्ध होता है। वस्तुतः जीव ब्रह्म ही है, अतः उपाधि कृत जीवस्वरूपके लयसे यह सम्बन्ध भी उपचरित होता है। जैसे एक आकाशमें उपाधिकृत भेदव्यपदेश है, वैसे ही एक ब्रह्ममें भी बुद्धि आदि उपाधिकृत भेदव्यपदेश है, अतः दोनों मुख्य नहीं हैं ॥ ३५ ॥

एवं सेत्वादिव्यपदेशान्परपक्षहेतूनुन्मथ्य संप्रति स्वपक्षं हेत्वन्तरेणोपसंहरति। तथान्यप्रतिषेधादपि न ब्रह्मणः परं वस्त्वन्तरमस्तीति गम्यते, तथा हि—'स एवाधस्तात्' (छा० ७।२५।१ ), 'अहमेवाधस्तात्' ( छा० ७।२५।३ ), 'आत्मैवाधस्तात्' ( छा० ७।२५।२ ), 'सर्वं तं परादाद्योऽन्यत्रात्मनः सर्वं वेद' ( बृह० २।४।६ ),'ब्रह्मैवेदं सर्वम्,' 'आत्मैवेदं सर्वम्' (छा० ७।२५।२), 'नेह नानास्ति किंचन' (बृह० ४।४।१९), 'यस्मात्परं नापरमस्ति किंचित्' (श्वे० ३।९), 'तदेतद्ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्' (बृह०२।५।१९) इत्येवमादिवाक्यानि स्वप्रकरणस्थान्यन्यार्थत्वेन परिणेतुमशक्यानि ब्रह्मव्यतिरिक्त वस्त्वन्तरं वारयन्ति। सर्वान्तरश्रुतेश्च न परमात्मनोऽन्योऽन्तरात्माऽस्तीत्यवधार्यते ॥ ३६ ॥

## अनेन सर्वगतत्वमायामशब्दादिभ्यः ॥ ३७ ॥

पदच्छेद—अनेन, सर्वगतत्वम्, आयामशब्दादिभ्यः ।

सूत्रार्थ—( अनेन ) सेतु आदि व्यपदेशोंमें मुख्यत्व और अन्य वस्तुत्वके निषेधसे ब्रह्ममें ( सर्वंगतत्वम् ) सर्वंगतत्व सिद्ध होता है, और ( आयामशब्दादिभ्यः ) 'आकाशवत्सर्वगतश्च नित्यः' इसप्रकार व्यापक वाचक शब्द आदिसे भी ब्रह्ममें सर्वगतत्व सिद्ध होता है ।

*अनेन सेत्वादिव्यपदेशनिराकरणेनान्यप्रतिषेधसमाश्रयणेन च सर्वगतत्वमप्यात्मनः सिद्धं भवति। अन्यथा हि तन्न सिध्येत्। सेत्वादिव्यपदेशेषु हि मुख्येष्वङ्गीक्रियमाणेषु परिच्छेद आत्मनः प्रसज्येत, सेत्वादीनामेवमात्मकत्वात्। तथाऽन्यप्रतिषेधेऽप्यसति, वस्तु वस्त्वन्तराद्व्यावर्तत इति परिच्छेद एवात्मनः प्रसज्येत। सर्वगतत्वं चास्यायामशब्दादिभ्यो विज्ञायते। आयामशब्दो व्याप्तिवचनः शब्दः। 'यावान्वा अयमाकाशस्तावानेषोऽन्तर्हृदय

---

उक्त रीतिसे परपक्षके हेतुभूत सेतु आदि व्यपदेशोंका उन्मथनकर अब स्वपक्षका अन्य हेतुसे उपसंहार करते हैं । इसीप्रकार अन्यके प्रतिषेधसे भी ब्रह्मसे पर-अन्य वस्तु नहीं है, ऐसा ज्ञात होता है । जैसे कि 'स एवाधस्तात्' (वही नीचे है ) 'अहमेवाधस्तात्' (मैं ही नीचे हूं) 'आत्मैवाधस्तात्' ( आत्मा ही नीचे है) 'सर्वं तं०' ( सभी उसे परास्त कर देते हैं जो सबको आत्मासे भिन्न देखता है ) 'ब्रह्मैवेदं सर्वम्' ( ब्रह्म ही यह सब है ) 'आत्मैवेदं सर्वम्' ( आत्मा ही यह सब है ) 'नेह नानास्ति-किञ्चन' ( इस ब्रह्ममें नाना कुछ भी नहीं है ) 'यस्मात्परं०' ( जिस पुरुषसे उत्कृष्ट अन्य कुछ भी नहीं है ) 'तदेतद्ब्रह्म०' ( वह यह ब्रह्म कारण रहित, कार्यरहित, अन्तररहित और अबाह्य है ) इत्यादि स्वप्रकरण स्थित वाक्य अन्य अर्थरूपसे नहीं लिये जा सकते, वे ब्रह्मसे व्यतिरिक्त अन्य वस्तुका निवारण करते हैं, और सर्वान्तर श्रुतिसे भी ऐसा अवधारण होता है कि परमात्मासे अन्य अन्तरात्मा नहीं है ॥ ३६ ॥

इससे—सेतु आदि व्यपदेशोंके निराकरण और अन्य वस्तुके प्रतिषेधके आश्रयणसे आत्मामें सर्वगतत्व भी सिद्ध होता है, अन्यथा वह सिद्ध न होगा । सेतु आदि व्यपदेश मुख्यार्थ ( मृन्मयत्वादि ) में अङ्गीकार किये जांय तो आत्मामें परिच्छिन्नत्व प्रसक्त होगा, क्योंकि सेतु आदि एवमात्मक-परिच्छिन्नात्मक हैं । इसीप्रकार अन्य वस्तुके प्रतिषेध न होनेपर एक वस्तु अन्य वस्तुसे व्यावृत्त होती है, इससे भी आत्मामें परिच्छिन्नत्व ही प्रसक्त होगा । आत्मामें सर्वगतत्व आयामशब्द आदिसे विज्ञात होता है । आयामशब्द व्याप्तिवाचक शब्द है । 'यावान्वा०' ( जितना यह भौतिक आकाश है उतना ही यह हृदयान्तर्गत आकाश है ) 'आकाशवत्०' ( आत्मा आकाशके समान सर्वगत और नित्य है )

### सत्यानन्दी-दीपिका

* इसप्रकार श्रुति, स्मृति और 'अधिष्ठानेनाध्यस्तं जगत् व्याप्तं, अध्यस्तत्वात् रज्ज्वाध्यस्तसर्पवत्' अधिष्ठानसे अध्यस्त जगत् व्याप्त है, अध्यस्त होनेसे, रज्जुसे व्याप्त सर्पके समान' इस न्यायसे भी आत्मामें सर्वगतत्व सिद्ध होता है ॥ ३७ ॥

आकाशः' ( छा० ८।१।३ ), 'आकाशवत्सर्वगतश्च नित्यः', 'ज्यायान्दिवः' (छा० ३।१४।३) 'ज्यायानाकाशात्', 'नित्यः सर्वगतः स्थाणुरचलोऽयं सनातनः' (भ० गी०२।२४) इत्येवमादयो हि श्रुतिस्मृतिन्यायाः सर्वगतत्वमात्मनोऽवबोधयन्ति ॥ ३७ ॥

( ८ फलाधिकरणम् । सू० ३८-४१ )

## फलमत उपपत्तेः ॥ ३८ ॥

पदच्छेद—फलम्, अतः, उपपत्ते। ।

सूत्रार्थ—( फलम् ) कर्मका फल ( अतः ) इस ईश्वरसे ही सबको प्राप्त होता है, (उपपत्तेः) क्योंकि इसप्रकार उपपन्न होता है ।

* तस्यैव ब्रह्मणो व्यावहारिक्यामीशित्रीशितव्यविभागावस्थायामयमन्यः स्वभावो वर्ण्यते । यदेतदिष्टानिष्टव्यामिश्रलक्षणं कर्मफलं संसारगोचरं त्रिविधं प्रसिद्धं जन्तूनाम्, किमेतत्कर्मणो भवत्याहोस्विदीश्वरादिति भवति विचारणा । तत्र तावत्प्रतिपाद्यते—फलमत ईश्वराद्भवितुमर्हति । कुतः ? उपपत्तेः । स हि सर्वाध्यक्षः सृष्टिस्थितिसंहारान्विचित्रान्विदधद्देशकालविशेषाभिज्ञत्वात्कर्मिणां कर्मानुरूपं फलं संपादयतीत्युपपद्यते । कर्मणस्त्वनुक्षणविनाशिनः कालान्तरभावि फलं भवतीत्यनुपपन्नम्, अभावाद्भावानुत्पत्तेः । स्यादेतत्—कर्म विनश्यत् स्वकालमेव स्वानुरूपं फलं जनयित्वा विनश्यति, तत्फलं कालान्तरितं कर्त्रा भोक्ष्यत इति । तदपि न परिशुध्यति, प्राग्भोक्तृसंबन्धात्फलत्वानुपपत्तेः । यत्कालं हि यत्सुखं दुःखं वाऽऽत्मना भुज्यते तस्यैव लोके

---

'ज्यायान्दिवः' ( आत्मा द्युलोकसे बड़ा है ) 'ज्यायानाकाशात्' ( आत्मा आकाशसे बड़ा है ) 'नित्यः सर्वगतः०' ( यह आत्मा नित्य, सर्वगत, स्थाणु, अचल और सनातन है ) इत्यादि श्रुति, स्मृति और न्याय आत्मामें सर्वगतत्व अवबोधित करते हैं ॥ ३७ ॥

उसी ब्रह्मका व्यावहारिक ईशितृ-ईशितव्यरूप विभाग अवस्थामें यह अन्य स्वभाव फल हेतुत्व वर्णन किया जाता है । जीवोंका इष्ट, अनिष्ट और मिश्रितरूप संसार विषयक त्रिविध जो यह कर्मफल प्रसिद्ध है, क्या यह कर्मसे होता है अथवा ईश्वरसे ? ऐसा विचार होता है । उसपर सिद्धान्ती प्रतिपादन करते हैं—फल अतः-ईश्वरसे होना चाहिए । किससे ? इससे कि ऐसी उपपत्ति होती है । वह ईश्वर कर्माध्यक्ष, विचित्र सृष्टि, स्थिति और संहारका कर्ता है, क्योंकि देश विशेष और काल विशेषका अभिज्ञाता है, इसलिए वह कर्म कर्ता जीवोंको कर्मके अनुसार फलका संपादन करता है, यह उपपन्न होता है । प्रतिक्षणमें विनाश शील कर्मसे कालान्तरभावी फल होता है, यह अनुपपन्न है, क्योंकि अभावसे भावकी उत्पत्ति नहीं हो सकती । यह हो, परन्तु विनष्ट होता हुआ कर्म अपनी स्थितिकालमें अपने अनुरूप कर्मफल उत्पन्नकर विनष्ट हो जाता है और कर्ता कालान्तरमें उस कर्मफलको भोगेगा । वह भी परिशुद्ध ( दोषरहित ) नहीं है, क्योंकि भोक्ताके सम्बन्धसे पहले फलत्व अनुपपन्न है, कारण कि जिस कालमें जो सुख अथवा दुःख आत्मासे उपभुक्त होता है वही लोकमें फलरूपसे प्रसिद्ध है ।

### सत्यानन्दी-दीपिका

* इसप्रकार 'तत्' पदके लक्ष्यार्थका संशोधनकर अब 'तत्' पदका वाच्यार्थ 'फलमत उपपत्तेः' इस सूत्रसे कहते हैं । पूर्वपक्षमें 'तत्' पदके वाच्य फलदाता ईश्वरकी असिद्धि होनेके कारण 'तत्' पदके लक्ष्यार्थकी भी स्वतः असिद्धि है, सिद्धान्तमें उसकी सिद्धि है, इसप्रकार दोनोंमें भेद है । यद्यपि ब्रह्ममें सर्वगतत्वके समान फलदातृत्व भी व्यवहारदशामें हो सकता है, तो भी कर्ममें फलदातृत्व होनेसे ईश्वरमें फलदातृत्व अयुक्त है । इसप्रकार आक्षेपसंगतिसे पूर्वपक्ष है । सिद्धान्ती—

फलत्वं प्रसिद्धम्। नह्यसंबद्धस्यात्मना सुखस्य दुःखस्य वा फलत्वं प्रतियन्ति लौकिकाः। अथोच्येत—मा भूत्कर्मानन्तरं फलोत्पादः। कर्मकार्यादपूर्वात्फलमुत्पत्स्यत इति, तदपि नोपपद्यते, अपूर्वस्याचेतनस्य काष्ठलोष्टसमस्य चेतनेनाप्रवर्तितस्य प्रवृत्त्यनुपपत्तेः, तदस्तित्वे च प्रमाणाभावात्। अर्थापत्तिः प्रमाणमिति चेत्—न, ईश्वरसिद्धेरर्थापत्तिक्षयात्।

## श्रुतत्वाच्च ॥ ३९ ॥

पदच्छेद—श्रुतत्वात्, च।

सूत्रार्थ—और 'स वा एष महानज' इत्यादि श्रुतिसे ईश्वरमें फलदातृत्व श्रुत होनेसे ईश्वर ही फलदाता है।

* न केवलमुपपत्तेरेवेश्वरं फलहेतुं कल्पयामः, किं तर्हि? श्रुतत्वादपीश्वरमेव फलहेतुं मन्यामहे। तथा च श्रुतिर्भवति—'स वा एष महानज आत्मान्नादो वसुदानः' ( बृह० ४।४।२४ ) इत्येवंजातीयका ॥ ३९ ॥

## धर्मं जैमिनिरत एव ॥ ४० ॥

पदच्छेद—धर्मम्, जैमिनिः, अतः, एव।

सूत्रार्थ—जिस श्रुति और उपपत्तिसे सिद्धान्ती ईश्वरको फलदाता मानते हैं, ( अतएव ) उसी श्रुति और उपपत्तिसे ( जैमिनिः ) जैमिनि आचार्य ( धर्मम् ) धर्मको—यागादिको फलदाता मानते हैं।

* जैमिनिस्त्वाचार्यो धर्मं फलस्य दातारं मन्यते। अत एव हेतोः श्रुतेरुपपत्तेश्च।

---

आत्मासे असम्बद्ध सुख अथवा दुःखको फलरूपसे लोग नहीं जानते हैं। यदि ऐसा कहा जाय कि कर्मके अनन्तर फलकी उत्पत्ती मत हो, परन्तु कर्म जन्य अपूर्वसे फल उत्पन्न हो जायगा? तो वह भी युक्त नहीं है, क्योंकि चेतनसे अप्रवर्तित काष्ठ और लोष्टके समान अचेतन अपूर्वकी प्रवृत्ति नहीं हो सकती, और उसके अस्तित्वमें प्रमाण भी नहीं है। यदि कहो कि अर्थापत्ति प्रमाण है, तो यह युक्त नहीं है, क्योंकि ईश्वरकी सिद्धिसे अर्थापत्तिका क्षय हो जायगा ॥ ३८ ॥

हम केवल उपपत्ति-युक्तिसे ईश्वरको फलका हेतु नहीं कहते हैं, किन्तु श्रुति प्रतिपादित होनेसे भी ईश्वरको ही फलका हेतु हम मानते हैं। क्योंकि 'स वा एष महानज०' ( वह यह महान् अज आत्मा अन्न भक्षण करनेवाला और कर्मफल देनेवाला है ) इसप्रकारकी श्रुति है ॥ ३९ ॥

जैमिनि आचार्य तो 'अत एव'—इसी हेतुसे श्रुति और उपपत्तिसे धर्मको फलदाता मानते हैं। और यही अर्थ 'स्वर्गकामो यजेत' ( स्वर्गकी कामनावाला याग करे ) इत्यादि वाक्योंमें सुना जाता

### सत्यानन्दी-दीपिका

कर्मफलका दाता ईश्वर है, क्योंकि 'स्वर्गादिकं विशिष्टदेशकालकर्माभिज्ञातृकम्, कर्मफलत्वात्, सेवाफलवत्' ( स्वर्गादि विशिष्ट देश, काल और कर्मके अभिज्ञद्वारा प्राप्त होता है, क्योंकि फल है, जैसे सेवाफल ) यह उपपत्ति-अनुमान है। याग आदि क्रिया जो क्षणिक कर्म है, क्या वह अपने नाशके अनन्तर फल उत्पन्न करता है अथवा अपना फल उत्पन्नकर नष्ट होता है वा अपूर्वसे फल सिद्ध होता है? प्रथम पक्ष तो अयुक्त है, क्योंकि कर्मका नाश अभावरूप है, अतः अभावसे भावकी उत्पत्ति नहीं होती। शेष दो विकल्पोंका समाधान 'स्यादेतत्' आदिसे करते हैं ॥ ३८ ॥

* 'कृतात्ययेऽनुशयवान्' ( ब्रह्मसूत्र ३।१।८ ) इस सूत्रमें उदाहृत 'तद्य इह रमणीयचरणाः' इत्यादि श्रुति और स्मृति वाक्योंसे यदि अपूर्व सिद्ध होता है, तो उन वाक्योंसे ईश्वरमें फलदातृत्व भी स्वीकार करना चाहिए। ऐसा भगवान् सूत्रकार 'श्रुतत्वाच्च' से कहते हैं ॥ ३९ ॥

* यह पूर्वपक्ष सूत्र है। 'यजेत' इस विध्यात्मक लिङ्र्थका यागविषय है, उसके भावावगमसे

श्रूयते तावदयमर्थः 'स्वर्गकामो यजेत' इत्येवमादिषु वाक्येषु। तत्र च विधिश्रुतेर्विषयभावोपगमाद्यागः स्वर्गस्योत्पादक इति गम्यते। अन्यथा ह्यननुष्ठातृको याग आपद्येत तत्रास्योपदेशवैयर्थ्यं स्यात्। नन्वनुक्षणविनाशिनः कर्मणः फलं नोपपद्यत इति, परित्यक्तोऽयं पक्षः—नैष दोषः, श्रुतिप्रामाण्यात्। श्रुतिश्चेत्प्रमाणं यथाऽयं कर्मफलसंबन्धः श्रुत उपपद्यते तथा कल्पयितव्यः। न चानुत्पाद्य किमप्यपूर्वं कर्म विनश्यत्कालान्तरितं फलं दातुं शक्नोति। अतः कर्मणो वा सूक्ष्मा काचिदुत्तरावस्था फलस्य वा पूर्वावस्थाऽपूर्वं नामास्तीति तर्क्यते। उपपद्यते चायमर्थ उक्तेन प्रकारेण। ईश्वरस्तु फलं ददातीत्यनुपपन्नम्, अविचित्रस्य कारणस्य विचित्रकार्यानुपपत्तेर्वैषम्यनैर्घृण्यप्रसङ्गादनुष्ठानवैयर्थ्यापत्तेश्च। तस्माद्धर्मादेव फलमिति।

## पूर्वं तु बादरायणो हेतुव्यपदेशात् ॥ ४१ ॥

पदच्छेद—पूर्वम्, बादरायणः, हेतुव्यपदेशात्।

सूत्रार्थ—( तु ) शङ्कानिवृत्त्यर्थ है, ( बादरायणः ) बादरायण आचार्य तो ( पूर्वम् ) पूर्वोक्त ईश्वरको फलदाता मानते हैं, क्योंकि (हेतुव्यपदेशात्) 'एष ह्येव साधु कर्म कारयति' 'अन्नादो वसुदानः' 'लभते च ततः कामान्' इत्यादि श्रुति और स्मृतिमें ईश्वरका हेतुरूपसे व्यपदेश है।

* बादरायणस्त्वाचार्यः पूर्वोक्तमेवेश्वरं फलहेतुं मन्यते। केवलात्कर्मणोऽपूर्वाद्वा केवलात्फलमित्ययं पक्षस्तुशब्देन व्यावर्त्यते। कर्मापेक्षादपूर्वापेक्षाद्वा यथा तथाऽस्त्वीश्वरात्फलमिति सिद्धान्तः। कुतः? हेतुव्यपदेशात्। धर्माधर्मयोरपि हि कारयितृत्वे-

---

है, क्योंकि उसमें विधि श्रुतिके विषयभावकी अवगतिसे 'याग स्वर्गका उत्पादक है' ऐसा ज्ञात होता है, अन्यथा अनुष्ठाता न होनेवाला याग होगा, तो ऐसा होनेपर यागका उपदेश व्यर्थ होगा। परन्तु अनुक्षण विनाशी कर्मसे फल उपपन्न नहीं होता, अतः यह पक्ष परित्यक्त है। यह दोष नहीं है, क्योंकि श्रुति प्रमाण है। यदि श्रुतिप्रमाण हो तो जिस प्रकार यह श्रुति प्रतिपादित कर्मफल सम्बन्ध उपपन्न हो उसीप्रकार कल्पना करनी चाहिए, और किसी अपूर्वको उत्पन्न किये विना विनष्ट होता हुआ कर्म कालान्तरमें फल देनेमें समर्थ नहीं होता, अतः कर्मकी कोई एक सूक्ष्म उत्तरावस्था अथवा फलकी पूर्वावस्था अपूर्व नामक है, ऐसा तर्क किया जाता है। और यह अर्थ उक्त प्रकारसे उपपन्न होता है। ईश्वर फल देता है, यह अनुपपन्न है, क्योंकि अविचित्र कारणका विचित्र कार्य अनुपपन्न है, और 'वैषम्य और नैर्घृण्य' प्रसंग और अनुष्ठान वैयर्थ्यापत्ति होती है, इसलिए धर्मसे ही फल होता है ॥४०॥

बादरायण आचार्य तो पूर्वोक्त ईश्वरको ही फलका हेतु मानते हैं। केवल कर्मसे अथवा केवल अपूर्वसे फल होता है, इस पक्षकी 'तु' शब्द व्यावृत्ति करता है, कर्मकी अपेक्षावाले अथवा अपूर्वकी अपेक्षावाले ईश्वरसे यथा स्यात् तथा फल होता है, यह सिद्धान्त है। किससे? इससे कि हेतुरूपसे व्यपदेश है। धर्म और अधर्मके भी कारयतृरूपसे और फलदातृरूपसे ईश्वर हेतु कहा गया है—

### सत्यानन्दी-दीपिका

याग स्वर्गका साधन है, ऐसा ज्ञात होता है, क्योंकि यदि याग पुरुषके इष्ट-स्वर्गका साधन न हो तो प्रेरणा उपपन्न नहीं होगी, इसलिए अपूर्व द्वारा कर्मसे फल होता है। अब 'ईश्वरस्तु' इत्यादिसे सिद्धान्तको दूषित करते हैं—क्या ईश्वर कर्मकी अपेक्षाके विना ही फल देता है अथवा किसीकी अपेक्षासे? प्रथम पक्षमें 'अविचित्रस्य' इत्यादिसे कहते हैं। द्वितीय पक्षमें—जैसे स्थिति-स्थापक-संस्कारमात्रसे चटाईमें वेष्टन होता है, वैसे ही कर्म जन्य अपूर्वसे फल सिद्ध होता है, तो ईश्वरका क्या प्रयोजन है। अतः धर्मसे ही फल होता है, यह जैमिनि आचार्यका मत है ॥ ४० ॥

* यदि चन्दन, कण्टक आदि दृष्ट पदार्थोंसे सुख आदिका सम्भव है, तो धर्म और अधर्मके स्वीकार करनेका क्या प्रयोजन? यदि कहो कि श्रुति और स्मृतिके बलसे इनकी अपेक्षा है, तो श्रुति

नेश्वरो हेतुर्व्यपदिश्यते, फलस्य च दातृत्वेन 'एष ह्येव साधु कर्म कारयति तं यमेभ्यो लोकेभ्य उन्निनीषते। एष उ एवासाधु कर्म कारयति तं यमधो निनीषते' इति। स्मर्यते चायमर्थो भगवद्गीतासु—'यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति। तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम्। स तया श्रद्धया युक्तस्तस्याराधनमीहते। लभते च ततः कामान्मयैव विहितान्हितान्' (७।२१) इति। सर्ववेदान्तेषु चेश्वरहेतुका एव सृष्टयो व्यपदिश्यन्ते। तदेव चेश्वरस्य फलहेतुत्वं यत्स्वकर्मानुरूपाः प्रजाः सृजतीति। विचित्रकार्यानुपपत्त्यादयोऽपि दोषाः कृतप्रयत्नापेक्षत्वादीश्वरस्य न प्रसज्यन्ते ॥ ४१ ॥

इति श्रीमच्छङ्करभगवत्पूज्यपादकृतौ शारीरकमीमांसाभाष्ये तृतीयाध्यायस्य द्वितीय पादः ॥ २ ॥

## तृतीयाध्याये तृतीयः पादः।

[ अत्र परापरब्रह्मविद्यागुणोपसंहारविवरणम्। ]

इस पादमें पर और अपर ब्रह्मविद्याके गुणोंके उपसंहारका विवरण है।

( १ सर्ववेदान्तप्रत्ययाधिकरणम्। सू० १-४ )

### सर्ववेदान्तप्रत्ययं चोदनाद्यविशेषात् ॥ १ ॥

पदच्छेद—सर्ववेदान्तप्रत्ययम्, चोदनाद्यविशेषात्।

सूत्रार्थ—( सर्ववेदान्तप्रत्ययम् ) सब वेदान्तोंमें विहित उपासना भिन्न नहीं है, ( चोदनाद्यविशेषात् ) क्योंकि चोदना आदिकी अविशेषता-समानता-एकता है।

* व्याख्यातं विज्ञेयस्य ब्रह्मणस्तत्त्वम्, इदानीं तु प्रतिवेदान्तं विज्ञानानि भिद्यन्ते न वेति विचार्यते। ननु विज्ञेयं ब्रह्म पूर्वापरादिभेदरहितमेकरसं सैन्धवघनवदवधारितं, तत्र

---

'एष ह्येव०' ( यही जिसे ऊपर ले जाना चाहता है उससे साधु कर्म कराता है और यही जिसे नीचे ले जाना चाहता है उससे असाधु कर्म कराता है ) और यह अर्थ 'यो यो०' ( जो जो सकामी भक्त जिस जिस विग्रहकी श्रद्धासे पूजा करना चाहता है, उस उस भक्तकी मैं उसके प्रति अचल श्रद्धा उत्पन्न करता हूँ। तथा वह उस श्रद्धासे युक्त हुआ उस देवताके आराधनकी चेष्टा करता है और उस देवतासे मेरेद्वारा ही विधान किये हुए उन इच्छित भोगोंको निःसन्देह प्राप्त होता है ) इस प्रकार भगवद्गीतामें भी कहा गया है। इसप्रकार सम्पूर्ण वेदान्तोंमें ईश्वर हेतुक सृष्टियोंका व्यपदेश है। जो प्रजाओंका अपने कर्म अनुरूप सृजन करता है वही ईश्वरमें फल हेतुत्व है। जीवकृत प्रयत्नकी अपेक्षा होनेसे ईश्वरको विचित्र कार्य अनुपपत्ति आदि दोष भी प्रसक्त नहीं होते हैं ॥ ४१ ॥

स्वामी सत्यानन्द सरस्वती कृत शाङ्करभाष्य-भाषानुवादके तृतीयाध्यायका द्वितीय पाद समाप्त ॥२॥

विज्ञेय ब्रह्मके तत्त्वका व्याख्यान किया जा चुका है। अब प्रत्येक वेदान्तमें विज्ञान (उपासना) भिन्न है अथवा नहीं ? इसका विचार किया जाता है। परन्तु पूर्वापर आदि भेदसे रहित, सैन्धवघनके

### सत्यानन्दी-दीपिका

और स्मृति प्रसिद्ध ईश्वरकी अपेक्षा क्यों नहीं हो। यदि ईश्वरकी अपेक्षा नहीं है, तो ईश्वर प्रतिपादक श्रुति, स्मृति बाधित होंगी। इसलिए ईश्वरकी अपेक्षाके बिना केवल कर्म अथवा अपूर्वसे ही फल हो, यह अयुक्त है। अतः कर्मफलदाता ईश्वर है। इसप्रकार 'तत्' पदवाच्य ईश्वरके सिद्ध होनेपर 'तत्' पदका लक्ष्यार्थ भी सिद्ध हुआ समझना चाहिए। इसलिए श्रुति, स्मृति और युक्ति युक्त होनेसे यह सिद्धान्त दोष रहित है ॥ ४१ ॥

स्वामी सत्यानन्द सरस्वती कृत 'सत्यानन्दी-दीपिका' के तृतीयाध्यायका द्वितीय पाद समाप्त ॥२॥

* गत पादमें 'तत्' और 'त्वम्' पदार्थका निरूपण किया गया है। अब अन्तःकरण शुद्धिद्वारा

कुतो विज्ञानभेदाभेदचिन्तावसरः? नहि कर्मबहुत्ववद्ब्रह्मबहुत्वमपि वेदान्तेषु प्रतिपिपादयिषितमिति शक्यं वक्तुम्, ब्रह्मण एकत्वादेकरूपत्वाच्च। न चैकरूपे ब्रह्मण्यनेकरूपाणि विज्ञानानि संभवन्ति। न ह्यन्यथाऽर्थोऽन्यथा ज्ञानमित्यभ्रान्तं भवति। यदि पुनरेकस्मिन्ब्रह्मणि बहूनि विज्ञानानि वेदान्तान्तरेषु प्रतिपिपादयिषितानि, तेषामेकमभ्रान्तम्, भ्रान्तानीतराणीत्यनाश्वासप्रसङ्गो वेदान्तेषु। तस्मान्न तावत्प्रतिवेदान्तं ब्रह्मविज्ञानभेद आशङ्कितुं शक्यते। * नाप्यस्य चोदनाद्यविशेषादभेद उच्येत, ब्रह्मविज्ञानस्याचोदनालक्षणत्वात्। अविधिप्रधानैर्हि वस्तुपर्यवसायिभिर्ब्रह्मवाक्यैर्ब्रह्मविज्ञानं जन्यत इत्यवोचदाचार्यः 'तत्तु समन्वयात्' (ब्रह्मसूत्र १।१।४) इत्यत्र। तत्कथमिमां भेदाभेदचिन्तामारभत इति? तदुच्यते—सगुणब्रह्मविषया प्राणादिविषया चेयं विज्ञानभेदाभेदचिन्तेत्यदोषः। तत्र हि कर्मवदुपासनानां भेदाभेदौ संभवतः, कर्मवदेव चोपासनानि दृष्टफलान्यदृष्टफलानि चोच्यन्ते, क्रममुक्तिफलानि च कानिचित्सम्यग्ज्ञानोत्पत्तिद्वारेण। तेष्वेषा चिन्ता संभवति—किं प्रतिवेदान्तं विज्ञानभेद आहोस्विन्नेति? तत्र पूर्वपक्षहेतवस्तावदुपन्यस्यन्ते—नाम्नस्तावद्भेदप्रति-

---

समान एक रस विज्ञेय ब्रह्मका अवधारण किया गया है, उसमें विज्ञानके भेद अथवा अभेदके विचारका अवसर ही कहाँ है? क्योंकि ब्रह्मके एक और एक रूप होनेसे कर्म बहुतके समान ब्रह्मके बहुत्वका प्रतिपादन वेदान्तोंमें अभीष्ट है, ऐसा नहीं कहा जा सकता, और एकरूप ब्रह्ममें अनेक प्रकारके विज्ञानोंका संभव नहीं है, क्योंकि अन्य प्रकारका अर्थ और अन्य प्रकारका विज्ञान अभ्रान्त-यथार्थ नहीं होता। यदि एक ब्रह्ममें अनेक विज्ञानोंका भिन्न-भिन्न वेदान्तोंमें प्रतिपादन अभीष्ट हो तो उनमेंसे एक अभ्रान्त और अन्य भ्रान्त हैं, इस प्रकार वेदान्तोंमें अविश्वास प्रसङ्ग हो जायगा। इसलिए प्रत्येक वेदान्तमें ब्रह्म विज्ञानभेदकी आशङ्का नहीं की जा सकती है। और चोदना आदिके अविशेषसे विज्ञानका अभेद भी नहीं कहा जाता, क्योंकि ब्रह्मविज्ञान अचोदनात्मक है। अविधि-प्रधान और वस्तु पर्यवसायी ब्रह्मवाक्योंसे ब्रह्मविज्ञान उत्पन्न किया जाता है, इसप्रकार आचार्यने 'तत्तु समन्वयात्' इस सूत्रमें कहा है। तो पुनः इस भेद और अभेद विचारको क्यों आरम्भ करते हो? सि०—इसपर कहते हैं—यह विज्ञानके भेद और अभेदका विचार सगुणब्रह्म विषयक और प्राण आदि विषयक है, इसलिए कोई दोष नहीं है। यहाँ कर्मके समान उपासनाओंका भेद और भेद संभव है, क्योंकि उपासनाएँ कर्मके समान ही दृष्ट फल और अदृष्ट फलवाली कही जाती हैं। और कई एक तत्त्वज्ञानकी उत्पत्ति द्वारा क्रममुक्ति फलवाली कही जाती हैं। उनमें यह विचार होता है कि क्या प्रत्येक वेदान्तमें विज्ञानभेद है अथवा नहीं? यहाँ पूर्वपक्षके हेतुओंका उपन्यास किया जाता है। पूर्वपक्षी—नाम भेद-प्रतिपत्तिके हेतुरूपसे ज्योतिरादिमें प्रसिद्ध है। अन्य वेदान्तोंमें विहित विज्ञानोंमें तैत्तिरीयक, वाजसनेयक,

## सत्यानन्दी-दीपिका

'तत्त्वमसि' आदि वाक्यार्थ निर्धारणके उपयोगी सगुण उपासनाके विषयमें विचार किया जाता है। इसप्रकार हेतुहेतुमद्भावसंगतिसे कहते हैं। पूर्वपक्षमें उपासनाओंका भेद है और सिद्धान्तमें उपासना एक है, इसपर विचार किया जाता है। परन्तु वेद्यके भेद होनेपर विज्ञानका भेद होता है किन्तु ब्रह्म तो पूर्वापार भेद रहित एक रूप है, अतः उसमें ज्ञान भेदका अवसर ही नहीं है। यदि भेद रहित ब्रह्ममें ज्ञान भेदकी कल्पनाकी जायगी तो वह ज्ञानभेद यथार्थ नहीं होगा, अतः निधर्मक एक ब्रह्ममें ज्ञानभेदकी कल्पना नहीं करनी चाहिए।

* यद्यपि यह विज्ञानके भेद और अभेदका विचार निर्विशेष अद्वितीय ब्रह्मविषयक नहीं है, तो भी सगुणब्रह्म विषयक और प्रणादि विषयक हो सकता है, क्योंकि पञ्चाग्निविद्या, प्राणविद्या, दहर-

पत्तिहेतुत्वं प्रसिद्धं ज्योतिरादिषु। अस्ति चात्र वेदान्तान्तरविहितेषु विज्ञानेष्वन्यदन्यन्नाम तैत्तिरीयकं वाजसनेयकं कौथुमकं कौषीतकं शाट्यायनकमित्येवमादि। तथा रूपभेदोऽपि कर्मभेदस्य प्रतिपादकः प्रसिद्धो वैश्वदेव्यामिक्षा वाजिभ्यो वाजिनमित्येवमादिषु। अस्ति चात्र रूपभेदः। तद्यथा—केचिच्छाखिनः पञ्चाग्निविद्यायां षष्ठमपरमग्निमामनन्त्यपरे पुनः पञ्चैव पठन्ति। तथा प्राणसंवादादिषु केचिदूनान्वागादीनामनन्ति, केचिदधिकान्। तथा धर्मविशेषोऽपि कर्मभेदस्य प्रतिपादक आशङ्कितः कारीर्यादिषु। अस्ति चात्र धर्मविशेषः—यथाथर्वणिकानां शिरोव्रतमिति। एवं पुनरुक्त्यादयोऽपि भेदहेतवो यथासंभवं वेदान्तान्तरेषु योजयितव्याः। तस्मात्प्रतिवेदान्तं विज्ञानभेद इति। ॐ एवं प्राप्ते ब्रूमः—

---

कौथुमक, कौषीतक और शाट्यायन इत्यादि भिन्न-भिन्न नाम हैं। और इसी प्रकार 'वैश्वदेव्यामिक्षा०' ( विश्वदेवोंको अमिक्षा और वाजि देवताओंको वाजिन ) इत्यादिमें रूपभेद भी कर्मभेदका प्रतिपादक प्रसिद्ध है। और यहाँ रूपभेद है, जैसे कि कोई शाखावाले पञ्चाग्निविद्यामें अन्य छठवीं अग्नि भी कहते हैं, और अन्य पाँच ही पढ़ते हैं। इस प्रकार प्राणसंवाद आदिमें कोई शाखावाले न्यून वाग् आदि कहते हैं और कोई लोग अधिक वाक् आदिका पाठ करते हैं। इस प्रकार धर्मविशेष भी कर्मभेदका प्रतिपादक कारीर्यादिमें आशङ्कित है। और यहाँ धर्मविशेष भी है—जैसे कि आथर्वणिकोंका शिरोव्रत। इस प्रकार पुनरुक्ति आदि भेदके हेतुओंकी वेदान्तोंमें यथासंभव योजना करनी चाहिए। इसलिए प्रत्येक वेदान्तमें विज्ञानका भेद है। सिद्धान्ती—ऐसा प्राप्त होनेपर हम कहते हैं—सब वेदान्त प्रत्यय-विज्ञान

## सत्यानन्दी-दीपिका

विद्या, वैश्वानर आदि विद्या परस्पर भिन्न हैं, ऐसा 'नानाशब्दादिभेदात्' ( ब्रह्मसूत्र ३।३।५८ ) इस सूत्रमें कहा जायगा। यहाँ तो परस्पर भिन्न-भिन्न वे विद्याएँ क्या प्रत्येक शाखामें भिन्न-भिन्न हैं अथवा नहीं? इसप्रकार नाम आदिके भेदसे और विधि आदिके समान होनेसे सन्देह होता है। पूर्वमीमांसाके शाखान्तर अधिकरणमें पूर्वपक्षका यह सूत्र है—"नामरूपधर्मविशेषपुनरुक्तिनिन्दाशक्तिसमाप्तिवचनप्रायश्चित्तान्यार्थदर्शनाच्छाखान्तरे कर्मभेदःस्यात्' ( जै० सू० २।४।८ ) ( नाम, रूप, धर्मविशेष, पुनरुक्ति, निन्दा, अशक्ति, समाप्तिवचन, प्रायश्चित्त, अन्यार्थदर्शन इनसे अन्य शाखामें कर्मभेद होना चाहिए ) ये सब कर्मके भेदमें हेतु हैं। जैसे 'अथैष ज्योतिरथैष सर्वज्योतिरेतेन सहस्रदक्षिणेन यजेत' ( अनन्तर सहस्र दक्षिणासे यह ज्योतिः नामक याग करे ) यहाँ नामभेदसे यह ज्योति याग ज्योतिष्टोम यागसे भिन्न है। और 'विश्वेदेवोंको अमिक्षा ( पनीर ) और वाजिदेवोंको वाजिन-द्रव भाग दे' यागका रूप-द्रव्य और देवता हैं, उससे ही याग सिद्ध होता है, अतः यहाँ विश्वे देवताके उद्देश्यसे अमिक्षा द्रव्यवाले यागमें, वाजिन गुण विधि नहीं हो सकती, क्योंकि यागका रूप द्रव्य और देवता भिन्न-भिन्न हैं। अतः ये कर्म भिन्न-भिन्न हैं, वैसे प्रकरणमें तैत्तिरीयक, वाजसनेयक आदि नामभेदसे उपासनाएँ भिन्न-भिन्न हैं। भाष्यमें आदि पदसे 'ऐन्द्रं दधि' ऐन्द्रं पयः' इत्यादि द्रव्यभेदसे भी कर्मभेद ग्राह्य है, उसी प्रकार प्रकरणमें भी नाम और रूपभेदसे वाजसनेयी पञ्चाग्नि और छान्दोगोंकी षडग्नि विद्याका भेद है। इसप्रकार छान्दोग्यमें रेत रहित वाग् आदि पाँच अग्नियाँ और रेतसहित वाग् आदि वाजसनेयियोंके मतमें छ अग्नियाँ हैं, अतः प्राण आदि विद्याका भेद है। कारीरिवाक्योंके अध्ययनमें तैत्तिरीय शाखावाले भूमिमें भोजन करते हैं, यह उन्हींका धर्मविशेष है, और अन्य शाखावाले ऐसा नहीं करते, क्योंकि वह उनका धर्म नहीं है। इसप्रकार अन्य शाखाओंमें धर्मविशेषोंसे जैसे कर्मभेद शङ्कित है, वैसे प्रकृतमें भी मुण्डकोपनिषद्के अध्ययनमें जिन लोगोंका माथेपर अङ्गारपात्र ( भस्म ) धारण करना धर्मविशेष है अन्योंका नहीं, अतः धर्मविशेषसे विद्याका भेदशङ्कित है। पुनरुक्ति-अभ्यास, जैसे 'समिधो यजति' 'तनूनपातं यजति' यहाँपर 'यजति' के पुनः पुनः कथनसे

सर्ववेदान्तप्रत्ययानि विज्ञानानि तस्मिंस्तस्मिन्वेदान्ते तानि तान्येव भवितुमर्हन्ति। कुतः ? चोदनाद्यविशेषात्। आदिग्रहणेन शाखान्तराधिकरणसिद्धान्तसूत्रोदिता अभेद-हेतव इहाकृष्यन्ते। संयोगरूपचोदनाख्याविशेषादित्यर्थः। यथैकस्मिन्नग्निहोत्रे शाखा-भेदेऽपि पुरुषप्रयत्नस्तादृश एव चोद्यते-जुहुयादिति। एवम् 'यो ह वै ज्येष्ठं च श्रेष्ठं च वेद' ( बृह० ६।१।१, छा० ५।१।१ ) इति वाजसनेयिनां छन्दोगानां च तादृश्येव चोदना।

---

तत् तत् वेदान्तमें वे वे ही हो सकते हैं। किससे ? इससे कि चोदना आदि अविशेष हैं, आदि पदके ग्रहणसे शाखान्तर अधिकरणमें सिद्धान्तसूत्रोंमें प्रतिपादित अभेद हेतुओंका यहाँ आकर्षण किया जाता है, क्योंकि संयोग, रूप, चोदना और समाख्याका प्रत्येक शाखामें वैलक्षण्य नहीं है, ऐसा अर्थ है। जैसे एक अग्निहोत्रमें शाखाभेद होनेपर भी 'जुहुयात्' वैसा ही पुरुषप्रयत्न विहित है, वैसे ही 'यो ह वै०' ( जो ज्येष्ठत्व और श्रेष्ठत्व गुण विशिष्टको जानता है ) इस प्रकार वाजसनेयी और छान्दोगोंकी

## सत्यानन्दी-दीपिका

पाँच प्रयाजोंका परस्पर भेद सिद्ध होता है, अन्यथा-एक कर्म माननेसे 'यजति' का पुनःपुनः कथन व्यर्थ है। वैसे अन्य शाखामें भी अभ्याससे विद्याका भेद है। आदि पदसे निन्दादिका ग्रहण है।

निन्दावचन—'प्रातः प्रातरनृतं ते वदन्ति पुरोदयाज्जुह्वति अग्निहोत्रम्' ( जो सूर्योदयसे पहले अग्निहोत्र करते हैं वे प्रातः अनृत बोलनेवाले होते हैं ) इससे अनुदित होमकी और 'यदुदिते सूर्ये प्रातर्जुहुयात्' (जो सूर्यके उदित होनेपर प्रातः होम करता है वह अतिथिके चले जानेपर शून्य ग्रहमें भोजन ले आता है उसके समान है ) इस वाक्यसे उदित होमकी निन्दा श्रुत है, अतः दोनों होमोंका भेद है, क्योंकि एक पुरुष उदित और अनुदित होमका अनुष्ठान नहीं कर सकता। उदित तथा अनुदित होमके अतिक्रमणसे प्रायश्चित्तका विधान है। इसप्रकार प्रायश्चित्तके विधानसे भी दोनों होमों-में भेदशङ्कित है। ये निन्दा और प्रायश्चित्त वेदान्त विद्यामें नहीं हैं, अतः उनका उदाहरण नहीं दिया गया है। अशक्ति—जैसे सब शाखाओंमें विहित कर्मके जानने और करनेमें एक व्यक्तिकी असामर्थ्यसे कर्मका भेद है, वैसे सब वेदान्तके अध्ययन और ज्ञानमें अथवा उपासना करनेमें एक व्यक्तिकी शक्ति न होनेसे तत् तत् वेदान्तमें विद्याका भेद शङ्कित है। समाप्ति—सब शाखाओंकी एक रूप समाप्ति नहीं कही जाती, किन्तु अन्य शाखाकी अन्यत्र कर्ममें समाप्ति कही जाती है, इसप्रकार समाप्तिवचन भेदसे भी कर्मका भेद शङ्कित है, वैसे किसी वेदान्तगत ओंकारकी सर्वात्मतामें किसीकी अन्यत्र समाप्ति है, इससे विद्याका भेद शङ्कित है। अन्यार्थदर्शन—अर्थवादसे जैसे कर्मका भेद शङ्कित है, वैसे प्रकृतमें विद्याका भेद शङ्कित है।

इसप्रकार पूर्वपक्ष सूत्रमें कर्मभेदके लिए कथित हेतुओंको दिखलाया गया है। अब उनमेंसे कोई हेतु सिद्धान्त और पूर्वपक्ष दोनोंमें यहाँ उपयुक्त होते हैं। वैसे शब्दान्तर, अभ्यास, संख्या, गुण, क्रिया और नामधेय कर्मके भेदक हैं। उनमें नाम, गुण, रूप और अभ्यास इन चारोंका व्याख्यान हो चुका है। किञ्च 'यजेत, जुहुयात्' इसप्रकार प्रकृति शब्दके भेदसे तत् तत् अवच्छिन्न भवनारूप कर्मका भेद है, वैसे यहाँ भी 'वेद, उपासते' इत्यादि शब्द भेदसे विद्याका भेद है। 'तिस्र-आहुतीर्जुहोति' ( तीन आहुति करे ) इसमें जैसे संख्यासे कर्मभेद है, वैसे 'द्वौ संवर्गौ' ( छा० ४।३।४ ) ( देवताओंमें वायु और इन्द्रियोंमें प्राण-संवर्ग है ) इसमें द्वित्व संख्यासे संवर्गविद्याका भेद है। नित्य अग्निहोत्रके प्रकरणसे अन्य प्रकरणमें कुण्डपायियोंके अयन नामक संवत्सर सत्रमें 'मासमग्निहोत्रं जुह्वति' (मासपर्यन्त अग्निहोत्र करे) इसमें श्रुत अग्निहोत्र अन्य प्रकरणमें स्थित होनेके कारण भिन्न कर्म है, इसप्रकार सिद्ध किया गया है, वैसे यहाँ वेदान्तभेद और प्रकरणभेद होनेसे उपासना का भी भेद है।

* उक्त नाम आदिसे प्रत्येक शाखामें अग्निहोत्र आदि कर्मोंका भेद प्राप्त होनेपर शाखान्तरा-धिकरणमें सिद्धान्त सूत्र है—'एकं वा संयोगरूपचोदनाख्याविशेषात्' ( जै० सू० २।४।९ ) ( प्रयोजनका

प्रयोजनसंयोगोऽप्यविशिष्ट एव—'ज्येष्ठश्च श्रेष्ठश्च स्वानां भवति' (बृह०६।१।१) इति। रूपमप्युभयत्र तदेव विज्ञानस्य, यदुत ज्येष्ठश्रेष्ठादिगुणविशेषणान्वितं प्राणतत्त्वम्। यथा च द्रव्यदेवते यागस्य रूपम्, एवं विज्ञेयं रूपं विज्ञानस्य, तेन हि तद्रूप्यते। समाख्याऽपि सैव—प्राणविद्येति। तस्मात्सर्ववेदान्तप्रत्ययत्वं विज्ञानानाम्। एवं पञ्चाग्निविद्या वैश्वानरविद्या शाण्डिल्यविद्येत्येवमादिषु योजयितव्यम्। ये तु नामरूपादयो भेदहेत्वाभासास्ते प्रथम एव काण्डे 'न नाम्ना स्यादचोदनाभिधानत्वात्' इत्यारभ्य परिहृताः ॥ १ ॥

इहापि कंचिद्विशेषमाशङ्क्य परिहरति—

**भेदान्नेति चेन्नैकस्यामपि ॥ २ ॥**

पदच्छेद—भेदात्, न, इति, चेत्, न, एकस्याम्, अपि।

---

वैसी एक-सी चोदना है। और 'ज्येष्ठश्च०' ( वह अपनी ज्ञातिमें ज्येष्ठ और श्रेष्ठ होता है ) इस तरह प्रयोजनका संयोग भी समान है। दोनों स्थलोंमें विज्ञानका रूप भी वही है—जो ज्येष्ठ और श्रेष्ठ आदि गुणरूप विशेषणोंसे युक्त प्राणतत्त्व है। जैसे द्रव्य और देवता यागके रूप हैं, वैसे ही विज्ञानका विज्ञेय रूप है, क्योंकि उससे उसका निरूपण किया जाता है। इसी प्रकार समाख्या-संज्ञा भी वही प्राणविद्या है। इससे विज्ञानोंमें सर्व वेदान्त प्रत्ययत्व है। एवं पञ्चाग्निविद्या, वैश्वानरविद्या, शाण्डिल्यविद्या आदिमें योजना करनी चाहिए। जो नाम, रूप आदि भेद हेतु-से हैं, प्रथम काण्डमें ही 'न नाम्ना०' (नामसे भेद न होगा, क्योंकि चोदनासे अभिधान नहीं है) ऐसा आरम्भकर परिहृत किये गये हैं ॥ १ ॥

यहाँ भी किसी विशेषकी आशङ्का कर परिहार करते हैं—

## सत्यानन्दी-दीपिका

संयोग, रूप-द्रव्य और देवता, चोदना-पुरुषप्रयत्न और आख्या-नाम समान होनेसे शाखान्तरमें एक ही कर्म है ) चोदनाका अर्थ विधिवाक्य अथवा पुरुषप्रयत्न है 'चोदनेति क्रियाप्रवर्तकं वचनमाहुःशबरस्वामिनः' (शबरस्वामी क्रिया प्रवर्तक वचनको चोदना कहते हैं) जैसे 'जुहुयात्' 'हु' धातुका अर्थ होम है, तद्विषयक पुरुषप्रयत्न जैसे यहाँ एक है, वैसे ही 'वेद, उपास्ते' इत्यादिमें भी पुरुषप्रयत्न एक है। जैसे ज्येष्ठत्व, श्रेष्ठत्व आदि गुणोंसे युक्त प्राणविद्या एक है, वैसे फल संयोग आदिके समान होनेसे पञ्चाग्निविद्या भी एक ही है। इस प्रकार शाखा भिन्न होनेपर भी विद्याओंमें भेद नहीं है। पूर्वपक्षीसे कर्मके भेदमें प्रतिपादित हेतु वस्तुतः वे हेतु नहीं हेत्वाभास हैं। जैसे—'काठक' आदि नामसे कर्म भेद युक्त नहीं है, क्योंकि चोदनाका अभिधान नहीं है। काठक आदि ग्रन्थोंके नाम हैं कर्मके नहीं, अतः पृथक् नामवाले शाखा ग्रन्थोंके भेद होनेपर भी उनसे विहित कर्म एक ही है। इससे वे कर्म भी उस ग्रन्थके नामसे कहे जाते हैं। उनमें पृथक् शक्तिकी कल्पना गौरव है। पृथक् शाखा ग्रन्थोंमें थोड़ा-सा भेद होनेपर भी कर्म एक ही है। रूप ( द्रव्य और देवता ) भी कर्मका भेदक नहीं है, क्योंकि समान है। इस प्रकार नामके भेदसे विद्याका भी भेद नहीं है। धर्मविशेष भी भेदक नहीं है, क्योंकि वह अध्ययनका अङ्ग है कर्मका नहीं। पृथक् शाखाओंमें पुनरुक्ति सिद्ध नहीं है। निन्दा और अन्यार्थदर्शन भी कर्म भेदके साधक नहीं हैं, क्योंकि वे तत् तत् विधिमें स्तुतिमात्र हैं। अशक्ति भी भेदसाधक नहीं है, क्योंकि अनेक शाखाओंके अध्ययनमें अशक्ति होनेपर भी अपनी शाखाओंमें अनुक्तकी अपेक्षा होनेसे अन्य शाखासे उसका ग्रहण सम्भव है। एक भी कर्ममें अङ्गलोप-वैगुण्य आदि होनेसे प्रायश्चित्त हो सकता है, अतः प्रायश्चित्त भी कर्मका भेदक नहीं है। इसी प्रकार समाप्तिवचनका भेद भी भेद प्रयोजक नहीं है। इस रीतिसे कर्मके अभेद साधक प्रमाणोंका प्राबल्य होनेसे भेद साधक हेतु परिहृत हैं। पूर्वपक्षमें विद्याके भेदसे गुणोंका अनुपसंहार है, सिद्धान्तमें विद्याके एक होनेसे गुणोंका उपसंहार है ॥ १ ॥

सूत्रार्थ—( इति चेत् ) यदि कहो कि ( भेदात् ) जैसे द्रव्य और देवताके भेदसे यागका भेद होता है, वैसे वेद्यके भेदसे विद्याका भेद है, ( न ) तो यह युक्त नहीं है, क्योंकि ( एकस्यामपि ) एक विद्यामें भी इस प्रकारका गुण भेद उपपन्न होता है।

* स्यादेतत्—सर्ववेदान्तप्रत्ययत्वं विज्ञानानां गुणभेदान्नोपपद्यते। तथाहि वाजसनेयिनः पञ्चाग्निविद्यां प्रस्तुत्य षष्ठमपरमग्निमामनन्ति—'तस्याग्निरेवाग्निर्भवति' ( बृह० ६।२।१४ ) इत्यादिना। छन्दोगास्तु तं नामनन्ति पञ्चसंख्ययैव च त उपसंहरन्ति—'अथ ह य एतानेवं पञ्चाग्नीन्वेद' (छा० ५।१०।१०) इति। येषां च स गुणोऽस्ति, येषां च नास्ति, कथमुभयेषामेका विद्योपपद्येत ? न चात्र गुणोपसंहारः शक्यते प्रत्येतुम्, पञ्चसंख्याविरोधात्। तथा प्राणसंवादे श्रेष्ठादन्यांश्चतुरः प्राणान्वाक्चक्षुःश्रोत्रमनांसि छन्दोगा आमनन्ति। वाजसनेयिनस्तु पञ्चममप्यामनन्ति—'रेतो वै प्रजापतिः प्रजायते ह प्रजया पशुभिर्य एवं वेद' (बृह० ६।१।६) इति। आवापोद्वापभेदाच्च वेद्यभेदो भवति, वेद्यभेदाच्च विद्याभेदः द्रव्यदेवताभेदादिव यागस्येति चेत्—नैष दोषः, यत एकस्यामपि विद्यायामेवंजातीयको गुणभेद उपपद्यते। यद्यपि षष्ठस्याग्नेरुपसंहारो न संभवति, तथापि द्युप्रभृतीनां पञ्चाना-

---

यह हो, परन्तु विज्ञानोंमें सर्ववेदान्त प्रत्ययत्व गुणभेदसे उपपन्न नहीं होता, क्योंकि वाजसनेयी शाखावाले पञ्चाग्निविद्याको प्रस्तुतकर 'तस्याग्निरेव०' ( उस-आहुति भूत पुरुषका प्रसिद्ध अग्नि ही अग्नि है ) इत्यादिसे अन्य षष्ठ अग्नि कहते हैं। छान्दोग तो उसका कथन नहीं करते किन्तु 'अथ ह य०' ( किन्तु जो इसप्रकार इन पाँच अग्नियोंको जानता है ) इसप्रकार वे पाँच संख्यासे उपसंहार करते हैं। जिनके मतमें वह गुण है और जिनके मतमें वह गुण नहीं है उन दोनोंकी एक विद्या किस प्रकार उपपन्न होगी। और यहाँ गुणका उपसंहार भी नहीं जाना जा सकता, क्योंकि पाँच संख्याका विरोध है। उसीप्रकार प्राणसंवादमें श्रेष्ठ प्राणसे अन्य वाक्, चक्षु, श्रोत्र और मन इन चार प्राणोंका छान्दोग कथन करते हैं, और वाजसनेयी तो 'रेतो वै प्रजापतिः०' ( रेत ही प्रजापति है, जो ऐसा जानता है, वह प्रजा और पशुओंसे सम्पन्न होता है ) इस तरह पञ्चमका भी कथन करते हैं। आवाप ( डालना ) उद्वाप (निकालना) के भेदसे वेद्यका भेद होता है, वेद्यके भेदसे विद्याका भेद होता है। जैसे द्रव्य और देवताके भेदसे यागका भेद होता है। ऐसा यदि कहो तो यह दोष नहीं है, क्योंकि एक विद्यामें भी इसप्रकारका गुणभेद उपपन्न होता है। यद्यपि षष्ठ अग्निका उपसंहार संभव नहीं है, तो भी द्यु आदि पाँच अग्नियोंका दोनों स्थलों ( वाजसनेयी और छान्दोग ) में प्रत्यभि-

## सत्यानन्दी-दीपिका

* वाजसनेयी छः अग्नियाँ मानते हैं और छान्दोग पाँच, अतः संख्या आदिके भेदसे विद्याका भेद होना चाहिए। जैसे एक शाखामें अग्नीषोमीय यागमें एकादश कपालोंका कथन और अन्य शाखामें द्वादश कपालोंका निर्वाप प्रतिपादित है, इससे वहाँ संख्याके भेदसे शाखान्तरका कर्म भी भिन्न माना गया है ? यह वेदान्तशास्त्र पूर्वमीमांसासे पृथक् शास्त्र है, अतः यहाँ कर्म न्यायकी समानता नहीं है, क्योंकि यह उपासना मानसिक विद्या है, इससे पुनरुक्ति नहीं है। परन्तु उस मृत पुरुषके दाहके लिए अन्त्येष्टिगत छठवीं अग्निको वाजसनेयियोंने प्रसिद्ध अग्निके समान स्वीकृत किया है, उसका छान्दोगोंने पाँच अग्नियोंमें अन्तर्भाव किया है, अतः रूपका भेद नहीं है। छान्दोग रेतको न लेकर प्राणके साथ वाणी, चक्षु, श्रोत्र और मनको लेकर पाँच अग्नियाँ मानते हैं और वाजसनेयियोंने जननशक्ति गुणविशिष्ट रेतको अधिक लेकर छः अग्नियाँ स्वीकार की हैं, इस थोड़े भेदको लेकर विद्याका भेद सिद्ध नहीं होता। यहाँ तक तो गुणभेदको मानकर विद्याका अभेद कहा गया है। अब उसे अस्वीकार कर 'पञ्चतेऽपि' इत्यादिसे कहते हैं।

मग्नीनामुभयत्र प्रत्यभिज्ञायमानत्वान्न विद्याभेदो भवितुमर्हति। नहि षोडशिग्रहणाग्रहणयोरतिरात्रो भिद्यते। पठ्यतेऽपि च षष्ठोऽग्निश्छन्दोगैः—'तं प्रेतं दिष्टमितोऽग्नय एवं हरन्ति' ( छा० ५।९।२ ) इति। * वाजसनेयिनस्तु सांपादिकेषु पञ्चस्वग्निष्वनुवृत्तायाः समिद्धूमादिकल्पनाया निवृत्तये 'तस्याग्निरेवाग्निर्भवति समित्समित्' ( बृह० ६।२।१४ ) इत्यादि समामनन्ति, स नित्यानुवादः। अथाप्युपासनार्थ एष वादस्तथापि स गुणः शक्यते छन्दोगैरप्युपसंहर्तुम्। न चात्र पञ्चसंख्याविरोध आशङ्क्यः,सांपादिकाग्न्यभिप्राया ह्येषा पञ्चसंख्या नित्यानुवादभूता न विधिसमवायिनीत्यदोषः। एवं प्राणसंवादादिष्वप्यधिकस्य गुणस्येतरत्रोपसंहारो न विरुध्यते। नचावापोद्वापभेदाद्वेद्यभेदो विद्याभेदश्चाशङ्क्यः, कस्यचिद्वेद्यांशस्यावापोद्वापयोरपि भूयसो वेद्यराशेरभेदावगमात्। तस्मादेकविद्यमेव ॥ २ ॥

## स्वाध्यायस्य तथात्वेन हि समाचारेऽधिकाराच्च सववच्च तन्नियमः ॥ ३ ॥

पदच्छेद—स्वाध्यायस्य, तथात्वेन, हि, समाचारे, अधिकारात्, च, सववत्, च, तन्नियमः।

सूत्रार्थ—( स्वाध्यायस्य ) यह शिरोव्रत स्वाध्यायका धर्म है विद्याका नहीं, ( हि ) क्योंकि ( समाचारे ) वेद व्रतोपदेशक सूत्र ग्रन्थमें ( तथात्वेन ) वह स्वाध्यायके धर्मरूपसे विहित है, ( अधिकारात् ) कारण कि 'नैतदचीर्णव्रतोऽधीते' यह उसका प्रकरण है। ( च ) और इसप्रकार ( सववत् ) 'सवहोमके समान' ( तन्नियमः ) यह आथर्वणिकोंका नियम है।

यदप्युक्तम्–आथर्वणिकानां विद्यां प्रति शिरोव्रताद्यपेक्षणादन्येषां च तदनपेक्षणाद्विद्याभेद इति, तत्प्रत्युच्यते–स्वाध्यायस्यैष धर्मो न विद्यायाः, कथमिदमवगम्यते? यतस्तथात्वेन स्वाध्यायधर्मत्वेन समाचारे वेदव्रतोपदेशपरे ग्रन्थे, आथर्वणिका इदमपि वेदव्रत-

---

ज्ञान होनेसे विद्याका भेद नहीं हो सकता। अतिरात्रयागमें षोडशिपात्रके ग्रहण और अग्रहणसे अतिरात्रयागका भेद नहीं होता। और 'तं प्रेतं०' ( कर्म वश परलोकमें प्रस्थित हुए उस मृतकको ज्ञातिवाले अग्निके प्रति ही ले जाते हैं ) इसप्रकार छान्दोग षष्ठ अग्निको भी पढ़ते हैं। वाजसनेयी तो उपासनाके लिए सांपादिक-आरोपित पाँच अग्नियोंमें अनुवृत्त समिध्, धूम आदि कल्पनाकी निवृत्तिके लिए 'तस्याग्निरेव०' ( उस मृतक पुरुषके दाहके लिए प्रसिद्ध अग्नि ही अग्नि है और प्रसिद्ध समिध् ही समिध् है ) इत्यादि कहते हैं। वह नित्य अनुवाद है। यदि यह वाद उपासनाके लिए हो तो भी छान्दोग उस गुणका उपसंहार कर सकते हैं, अतः यहाँ पाँच संख्याके विरोधकी आशङ्का नहीं करनी चाहिए, क्योंकि यह पाँच संख्या उपासनाके लिए आरोपित अग्निके अभिप्रायसे नित्य अनुवादरूप है विधि सम्बन्धी नहीं है, इसलिए कोई दोष नहीं है। इसीप्रकार प्राणसंवाद आदिमें भी अधिक गुणका अन्यत्र उपसंहार विरुद्ध नहीं है। और न आवाप, उद्वापके भेदसे वेद्यभेद और विद्याभेदकी आशङ्का करनी चाहिए, क्योंकि किसी वेद्यांशके आवाप और उद्वापमें भी महान् वेद्यराशिका अभेद अवगत होता है, इससे एक ही विद्या है ॥ २ ॥

जो यह भी कहा गया है कि आथर्वणिकोंको विद्याके लिए शिरोव्रत आदिकी अपेक्षा है और अन्य-छान्दोगोंको उसकी अपेक्षा नहीं है, इससे विद्याका भेद है, उसका निराकरण किया जाता है—यह शिरोव्रत आदि स्वाध्यायका धर्म है विद्याका नहीं है, यह कैसे अवगत हो? इससे कि इस-

### सत्यानन्दी-दीपिका

★ अनग्नि द्यु आदि पांचमें उपासनाके लिए कल्पित अग्नित्व स्वीकार किया गया है, अतः उनका कल्पित पञ्चत्व अनुवादमात्र है ध्येयरूपसे उनका विधान नहीं है, अतः कोई विरोध नहीं है। अतः वेद्यके एक होनेसे विद्या भी एक ही है ॥ २ ॥

त्वेन व्याख्यातमिति समामनन्ति। 'नैतदचीर्णव्रतोऽधीते' ( मु० ३।२।११ ) इति चाधिकृत-विषयादेतच्छब्दादध्ययनशब्दाच्च स्वोपनिषदध्ययनधर्म एवैष इति निर्धार्यते। ननु च 'तेषामेवैतां ब्रह्मविद्यां वदेत शिरोव्रतं विधिवद्यैस्तु चीर्णम्' ( मुण्ड० ३।२।१० ) इति ब्रह्मविद्या-संयोगश्रवणादेकैव सर्वत्र ब्रह्मविद्येति संकीर्येतैष धर्मः, न, तत्राप्येतामिति प्रकृतप्रत्यव-मर्शात्। प्रकृतत्वं च ब्रह्मविद्याया ग्रन्थविशेषापेक्षमिति ग्रन्थविशेषसंयोग्येवैष धर्मः। सववच्च तन्नियम इति निदर्शननिर्देशः। यथा च सवाः सप्त सौर्यादयः शतौदनपर्यन्ता वेदान्तरोदितत्रेताग्न्यनभिसंबन्धादाथर्वणोदितैकाग्न्यभिसंबन्धाच्चाथर्वणिकानामेव निय-म्यन्ते, तथैवायमपि धर्मः स्वाध्यायविशेषसंबन्धात्तत्रैव नियम्यते। तस्माद्प्यनवद्यं विद्यैकत्वम् ॥ ३ ॥

## दर्शयति च ॥ ४ ॥

पदच्छेद—दर्शयति, च।

सूत्रार्थ—और 'सर्वे वेदा' इसप्रकार वेद भी सब वेदान्तोंमें विद्याका एकत्व दिखलाता है।

दर्शयति च वेदोऽपि विद्यैकत्वं सर्ववेदान्तेषु, वेद्यैकत्वोपदेशात् 'सर्वे वेदा यत्पद-मामनन्ति' ( क० २।१५ ) इति। तथा 'एतं ह्येव बह्वृचा महत्युक्थे मीमांसन्त एतमग्नावध्वर्यव एतं महाव्रते छन्दोगाः' इति च। तथा 'महद्भयं वज्रमुद्यतम्' (क० ६।२) इति काठक उक्तस्ये-श्वरगुणस्य भयहेतुत्वस्य तैत्तिरीयके भेददर्शननिन्दायै परामर्शो दृश्यते—'यदा ह्येवैष एतस्मिन्नुदरमन्तरं कुरुते। अथ तस्य भयं भवति। तत्त्वेव भयं विदुषोऽमन्वानस्य' ( तै० २।७।१ ) इति। तथा वाजसनेयके प्रादेशमात्रसंपादितस्य वैश्वानरस्य छान्दोग्ये सिद्धवदुपादानम्-'यस्त्वेतमेवं प्रादेशमात्रमभिविमानमात्मानं वैश्वानरमुपास्ते' ( छा० ५।१८।१ ) इति। तथा सर्व-

---

प्रकार स्वाध्यायके धर्मरूपसे समाचारमें—वेदके व्रतोंके उपदेश परक सूत्रग्रन्थमें यह भी वेद व्रतरूपसे व्याख्यात है, ऐसा आथर्वणिक लोग कहते हैं। 'नैतदचीर्णव्रतोऽधीते' ( शिरोव्रतका अनुष्ठान नहीं किया है वह इसका अध्ययन नहीं कर सकता ) इसप्रकार अधिकृत विषयक 'एतत्' शब्दसे और 'अध्ययन' शब्दसे भी यह अपने उपनिषद् अध्ययनका ही धर्म है, ऐसा निर्धारित किया जाता है। परन्तु 'तेषामेवैताम्०' ( जिन्होंने विधिवत् शिरोव्रतका अनुष्ठान किया है उन्होंमें ही यह ब्रह्मविद्या कहनी चाहिए ) इसप्रकार ब्रह्मविद्याके संयोगका श्रवण होनेसे सब शाखाओंमें एक ही ब्रह्मविद्या है, इसलिए यह शिरोव्रत धर्म भी सर्वत्र सम्बधित होगा ? ऐसा नहीं, क्योंकि वहांपर भी 'एताम्' इससे प्रकृत ब्रह्मविद्याका परामर्श है, और ब्रह्मविद्यामें प्रकृतत्व ग्रन्थविशेषकी अपेक्षासे है, इसलिए यह धर्म भी ग्रन्थविशेषका संयोगी-सम्बन्धी होगा। 'सववच्च तन्नियमः' यह दृष्टान्तका निर्देश है। जैसे शतौदनपर्यन्त सौर्यादि सात होमोंका अन्य वेदमें कथित त्रेताग्नि-दक्षिणाग्नि, गार्हपत्य और आहवनीय अग्निके साथ सम्बन्ध न होनेसे और आथर्वण उदित एक ऋषि नामक अग्निके साथ सम्बन्ध होनेसे आथर्वणिकोंमें ही ( वे होम हैं ) यह नियम किया गया है, वैसे ही यह धर्म भी स्वाध्याय विशेषके सम्बन्धसे आथर्वणिकोंमें ही नियमित होता है। इससे भी विद्याका एकत्व निर्दोष है ॥ ३ ॥

और वेद भी विद्याका एकत्व दिखलाता है, क्योंकि 'सर्वे वेदा०' ( सब वेद जिस पदका प्रति-पादन करते हैं ) इसप्रकार सब वेदान्तोंमें विद्याके एकत्वका उपदेश है, और 'एतं ह्येव०' ( इसीका बह्वृच-ऋग्वेदी महान् उक्थमें विचार करते हैं, अध्वर्यु इसका अग्निमें और छान्दोग इसका महाव्रतमें विचार करते हैं ) तथा 'महद्भयं०' ( वह ब्रह्म महान् भयरूप और उठे हुए वज्रके समान है ) इस प्रकार काठकमें उक्त भयहेतुत्व ईश्वर-गुणका 'यदा ह्येवैष०' (और जब यह अज्ञानी इस अद्वय आत्मामें थोड़ा-सा भी भेद करता है तो इसे भय प्राप्त होता है, क्योंकि वह ब्रह्म ही भेददर्शी विद्वान्के लिए भयरूप है ) इसप्रकार तैत्तिरीयकमें भेददर्शनकी निन्दाके लिए परामर्श देखा जाता है और वाजस-

वेदान्तप्रत्ययत्वेनान्यत्र विहितानामुक्थादीनामन्यत्रोपासनविधानायोपादानात्प्रायदर्शनन्यायेनोपासनानामपि सर्ववेदान्तप्रत्ययत्वसिद्धिः ॥ ४ ॥

( २ उपसंहाराधिकरणम् । सू० ५ )

## उपसंहारोऽर्थाभेदाद्विधिशेषवत्समाने च ॥ ५ ॥

पदच्छेद—उपसंहारः, अर्थाभेदात्, विधिशेषवत्, समाने, च ।

सूत्रार्थ—( विधिशेषवत् ) जैसे सर्वत्र अग्निहोत्र एक होनेसे उसके शेष गुणोंका उपसंहार होता है, वैसे ही ( समाने ) उपासनामें भी ( उपसंहार ) गुणोपसंहार करना चाहिए, ( अर्थाभेदात् ) क्योंकि उपास्यके गुणोंसे प्राप्य उपासनारूप अर्थका सब शाखाओंमें अभेद है ।

* इदं प्रयोजनसूत्रम् । स्थिते चैवं सर्ववेदान्तप्रत्ययत्वे सर्वविज्ञानानामन्यत्रोदितानां विज्ञानगुणानामन्यत्रापि समाने विज्ञान उपसंहारो भवति, अर्थाभेदात् । य एव हि तेषां गुणानामेकत्रार्थो विशिष्टविज्ञानोपकारकः स एवान्यत्रापि । उभयत्रापि हि तदेवैकं विज्ञानम्, तस्मादुपसंहारः । विधिशेषवत् । यथा विधिशेषाणामग्निहोत्रादिधर्माणां तदेवैकमग्निहोत्रादि कर्म सर्वत्रेत्यर्थाभेदादुपसंहरणमेवमिहापि । यदि हि विज्ञानभेदो भवेत्ततो विज्ञानान्तरनिबद्धत्वाद्गुणानां प्रकृतिविकृतिभावाभावाच्च न स्यादुपसंहारः । विज्ञानैकत्वे तु नैवमिति । अस्यैव तु प्रयोजनसूत्रस्य प्रपञ्चः सर्वाभेदादित्यारभ्य भविष्यति ।

---

नेयकमें प्रादेशमात्रसे संपादित वैश्वानरका, 'यस्त्वेतमेवं०' (जो कोई 'यही मैं हूँ' इसप्रकार अभिमानका विषय होनेवाले इस प्रादेशमात्र वैश्वानर आत्माकी उपासना करता है) इसप्रकार छान्दोग्यमें सिद्धके समान उपादान है । इसप्रकार सर्ववेदान्त प्रत्ययरूपसे अन्यत्र विहित उक्थ आदिका अन्यत्र उपासना विधानके लिए ग्रहण होनेसे प्रायदर्शनन्यायसे उपासनाओंमें भी सर्ववेदान्त प्रत्ययत्वकी सिद्धि होती है ।४।

यह प्रयोजन सूत्र है । इसप्रकार सम्पूर्ण विज्ञानोंमें सर्ववेदान्त प्रत्ययत्व सिद्ध होनेपर अन्य शाखाओंमें उक्त विज्ञानके गुणोंका अन्य शाखामें भी समान विज्ञानमें उपसंहार होता है, क्योंकि अर्थका अभेद है । उन गुणोंका एक शाखामें विशिष्ट विज्ञानका उपकारकत्व जो एक प्रयोजन है वही अन्य शाखामें भी है । दोनों स्थलोंमें भी वही एक विज्ञान है, इसलिए गुणोंका उपसंहार है । 'विधिशेषवत्'—विधिशेषके समान । जैसे विध्यङ्ग अग्निहोत्र आदि धर्मोंका वही अग्निहोत्र आदि कर्म सर्वत्र एक है । इसप्रकार अर्थ-प्रयोजनके अभेद होनेसे उन सब धर्मोंका उपसंहार होता है, उसीप्रकार प्रयोजनके अभिन्न होनेसे यहाँ भी धर्मोंका उपसंहार है । यदि शाखाभेदसे विज्ञानका भेद हो तो उस विज्ञानसे भिन्न अन्य विज्ञानमें गुणोंके निरुद्ध होनेसे और प्रकृतिविकृतिभावके न होनेसे उपसंहार नहीं होगा । किन्तु विज्ञानके एक होनेपर तो ऐसा नहीं होगा । इसी प्रयोजन सूत्रका विस्तार 'सर्वाभेदात्' ( ब्रह्मसूत्र ३।३।२५ ) इस सूत्रके आरम्भसे होगा ॥ ५ ॥

### सत्यानन्दी-दीपिका

* जैसे वेद्य एक होनेसे ब्रह्मविद्या एक है, वैसे उसके समीप पठित होनेसे सगुणविद्या भी सब शाखाओंमें एक ही है । इसको सूत्रकार 'दर्शयति च' इत्यादिसे दिखलाते हैं । जो एक वेदान्तमें विहित उपासनाका अन्य शाखामें सिद्धके समान ग्रहण उसे प्रायदर्शनन्याय कहा जाता है, अतः ब्रह्मविद्याके अभिन्न होनेके समान उक्थ आदि उपासनाएँ भी सभी शाखाओंमें एक ही हैं ॥ ४ ॥

* शाखाओंका भेद होनेपर भी समान विद्यामें श्रुत गुण श्रुतिके अनुसार व्यवस्थित हैं अथवा एक शाखामें अश्रुत गुणोंका अन्य शाखासे उपसंहार है । इस प्रकार सन्देह होनेपर पूर्वपक्षमें विद्याके एक होनेपर भी तत् तत् शाखामें उक्त गुणोंसे ही उपकारकी सिद्धि होनेसे शाखा-भेदसे गुण व्यवस्थित हैं । सिद्धान्ती—प्रधानके एक होनेपर तत् तत् उपकारक अङ्गोंके उपसंहारमें 'विधिशेषवत्'

( ३ अन्यथात्वाधिकरणम् । सू० ६-८ )

## अन्यथात्वं शब्दादिति चेन्नाविशेषात् ॥ ६ ॥

पदच्छेद—अन्यथात्वम्, शब्दात्, इति, चेत्, न, अविशेषात् ।

सूत्रार्थ—(शब्दात्) 'त्वं न उद्गाय' 'तमुद्गीथमुपासाञ्चक्रिरे' इत्यादि श्रुतिसे (अन्यथात्वम्) विद्याका भेद होना चाहिए, ( इति चेन्न ) ऐसा यदि कहो तो युक्त नहीं है, ( अविशेषात् ) क्योंकि श्रुतियोंके अभिप्रायमें विशेषता नहीं है, अतः विद्याका भेद नहीं है ।

* वाजसनेयके 'ते ह देवा ऊचुर्हन्तासुरान्यज्ञ उद्गीथेनात्ययामेति' ( बृह० १।३।१ ) 'ते ह वाचमूचुस्त्वं न उद्गाय' (बृह० १।३।२) इति प्रक्रम्य वागादीन्प्राणानसुरपाप्मविद्धत्वेन निन्दित्वा मुख्यप्राणपरिग्रहः पठ्यते—'अथ हेममासन्यं प्राणमूचुस्त्वं न उद्गायेति तथेति तेभ्य एष प्राण उदगायत्' ( बृह० १।३।७ ) इति । तथा छान्दोग्येऽपि—'तद्ध देवा उद्गीथमाजह्रुरनेनैनानभिभविष्यामः' ( छा० १।२।१ ) इति प्रक्रम्येतरान्प्राणानसुरपाप्मविद्धत्वेन निन्दित्वा तथैव मुख्यप्राणपरिग्रहः पठ्यते—'अथ ह य एवायं मुख्यः प्राणस्तमुद्गीथमुपासांचक्रिरे' ( छा० १।२।७ ) इति । उभयत्रापि च प्राणप्रशंसया प्राणविद्याविधिरध्यवसीयते । तत्र संशयः—किमत्र विद्याभेदः स्यादाहोस्विद्विद्यैकत्वमिति ? किं तावत्प्राप्तम् ? पूर्वेण न्यायेन विद्यै-

---

वाजसनेयकमें 'ते ह देवा ऊचुः०' ( उन देवताओंने कहा, हम इस यज्ञमें उद्गीथसे असुरोंका अतिक्रमण करें ) 'ते ह वाचमूचुः०' ( उन देवताओंने वाक्से कहा, 'तुम हमारे लिए उद्गान करो' वाणी—बहुत अच्छा ) इस प्रकार उपक्रमकर वाक् आदि प्राण असुर-पापोंसे आक्रान्त हैं, इस प्रकार उनकी निन्दा कर 'अथ हेममासन्यं०' ( फिर अपने मुखमें रहनेवाले प्राणसे कहा, 'तुम हमारे लिए उद्गान-उद्गाता सम्बन्धी कर्म करो' 'तब बहुत अच्छा' ऐसा कहकर इस प्राणने उनके लिए उद्गान किया ) इस प्रकार मुख्य प्राणका परिग्रह कहते हैं । ऐसे ही छान्दोग्य में भी 'तद्ध देवा०' ( उनमेंसे देवताओंने यह सोचकर कि इसके द्वारा इनका पराभव करेंगे, उद्गीथका अनुष्ठान किया ) इसप्रकार उपक्रमकर अन्य प्राणोंके असुरोंके पापोंसे आक्रान्त होनेसे उनकी निन्दाकर वैसे ही 'अथ ह य०' (पुनः यह जो प्रसिद्ध मुख्य प्राण है उसीके रूपमें उद्गीथकी उपासना-उसकी उद्गीथरूपसे उपासना की) इस प्रकार मुख्य प्राणका परिग्रह करते हैं । वाजसनेयक और छान्दोग्य दोनोंमें भी प्राणकी प्रशंसासे प्राण-विद्याविधिका निश्चय होता है । यहाँ संशय होता है कि क्या यहाँ विद्याका भेद है अथवा विद्या एक है ? तब क्या प्राप्त होता है ? पूर्व न्यायसे विद्या एक है, यह प्राप्त होता है । परन्तु उपक्रमके भेदसे

### सत्यानन्दी-दीपिका

इत्यादिसे दृष्टान्त कहते हैं । शङ्का—जैसे आग्नेय यागमें अन्वित गुणोंकी उससे भिन्न सौर्ययागमें प्राप्ति होती है, वैसे ही एक विद्यास्थित गुणोंका अन्य विद्यामें उपसंहार क्यों न हो ? समाधान—'प्रकृतिवद्विकृतिः कर्तव्यः' ( प्रकृति यागके समान विकृति याग करना चाहिए ) 'यत्र समग्राङ्गोपदेशः सा प्रकृतिः' ( विधिसे जिसमें समग्र अङ्गोंका उपदेश हो वह प्रकृति याग है ) 'यत्र वैशेषिकाङ्गानामुपदेशः सा विकृतिः' ( प्रकृति यागके समान और विशेष अङ्गोंका जहाँ उपदेश हो वह विकृति याग है ) यहाँ आग्नेय याग प्रकृति है और सौर्य याग विकृति है, यह उक्त न्याय कर्मोंमें तो युक्त है । परन्तु इस प्रकारका प्रकृति-विकृतिभाव ही विद्याओंमें असिद्ध है, अतः उसकी यहाँ प्राप्ति नहीं है । इस प्रकार विद्याके एक होनेसे गुणोंका उपसंहार सिद्ध है ॥ ५ ॥

* पूर्वाधिकरणोंमें विद्याओंके प्रतिपादक वाक्योंमें अविशेष होनेसे समानरूपसे विद्याका एकत्व कहा गया है । अब इस अधिकरणमें उसका अपवाद करते हैं । यहाँ पूर्वाधिकरण सिद्धान्त-

श्रुत्यादिभ्य इत्युक्तं प्रथमे तन्त्रे—'श्रुतिलिङ्गवाक्यप्रकरणस्थानसमाख्यानां समवाये पारदौर्बल्यमर्थविप्रकर्षात्' (जै० सू० ३।३।१३) इत्यत्र। * तथा कर्मणामपि प्रवर्ग्यादीनामन्यत्र विनियुक्तानां न विद्याशेषत्वोपपत्तिः, न ह्येषां विद्याभिः सहैकार्थ्यं किंचिदस्ति। वाजपेये तु बृहस्पतिसवस्य स्पष्टं विनियोगान्तरम्—'वाजपेयेनेष्ट्वा बृहस्पतिसवेन यजेत' इति। अपि चैकोऽयं प्रवर्ग्यः सकृदुत्पन्नो बलीयसा प्रमाणेनान्यत्र विनियुक्तो न दुर्बलेन प्रमाणेनान्यत्रापि विनियोगमर्हति। अगृह्यमाणविशेषत्वे हि प्रमाणयोरेतदेवं स्यान्नतु बलवदबलवतोः प्रमाणयोरगृह्यमाणविशेषता संभवति, बलवदबलवत्त्वविशेषादेव। तस्मादेवंजातीयकानां मन्त्राणां कर्मणां वा न संनिधिपाठमात्रेण विद्याशेषत्वमाशङ्कितव्यम्। अरण्यानुवचनादिधर्मसामान्यात्तु संनिधिपाठ इति संतोष्टव्यम् ॥ २५ ॥

( १५ हान्यधिकरणम्। सू० २६ )

**हानौ तूपायनशब्दशेषत्वात्कुशाच्छन्दस्तुत्युपगानवत्तदुक्तम् । २६ ॥**

पदच्छेद—हानौ, तु, उपायनशब्दशेषत्वात्, कुशाच्छन्दस्तुत्युपगानवत्, तत्, उक्तम्।

सूत्रार्थ—( हानौ ) जिन श्रुतियोंमें ब्रह्मज्ञानियोंके अन्त समयमें (तु) केवल पापकी हानि सुनी जाती है, वहाँपर पुत्र आदिके द्वारा दाय आदि उपायनका भी उपादान करना चाहिए, ( उपायनशब्दशेषत्वात् ) क्योंकि उपायनशब्द हानशब्दके अङ्गरूपसे कहा गया है, ( कुशाच्छन्दस्तुत्युपगानवत् ) इसे पूर्वमीमांसामें प्रतिपादित कुशा, छन्द, स्तुति और उपगानके समान समझना चाहिए, ( तदुक्तम् ) कारण कि 'अपितु वाक्यशेषत्वात्' इस जैमिनीय सूत्रमें ऐसा ही कहा गया है। अथवा हानिशब्द विधूनन अर्थमें ही समझना चाहिए, क्योंकि उपायनशब्दके समीप पठित विधूननशब्द उपायनशब्दका अङ्ग है इसमें पूर्वके समान कुशा आदि दृष्टान्त दिया गया है।

अस्ति ताण्डिनां श्रुतिः—'अश्व इव रोमाणि विधूय पापं चन्द्र इव राहोर्मुखात्प्रमुच्य

---

प्रकरण, स्थान, समाख्याके समवाय-एक ही विषयमें यथासम्भव एकसे अधिकका समावेश प्राप्त होनेपर पूर्व-पूर्व की अपेक्षा पर दुर्बल होता है—बाधित होता है, क्योंकि अर्थ-अङ्गाङ्गिनिर्णयरूप विनियोगको बोधन करानेमें व्यवहित होनेके कारण विलम्बित हो जाता है ) इससूत्रमें श्रुति आदिसे संनिधि दुर्बल है, ऐसा पूर्वमीमांसा ग्रन्थमें कहा गया है। इसीप्रकार अन्यत्र विनियुक्त प्रवर्ग्य आदि कर्म भी विद्याके शेष नहीं हो सकते, क्योंकि इनकी विद्याके साथ किञ्चिदपि एकार्थता नहीं है और 'वाजपेयेनेष्ट्वा०' ( वाजपेय याग कर बृहस्पति सव नामक याग करे ) इसप्रकार वाजपेयमें तो बृहस्पतिसवका अन्य विनियोग स्पष्ट है। और यह एक प्रवर्ग्य कर्म एक बार उत्पन्न होकर बलवान् प्रमाणसे एकत्र विनियुक्त हो पुनः उसका दुर्बल प्रमाणसे अन्यत्र भी विनियोग हो, यह युक्त नहीं है, क्योंकि दो प्रमाणोंमें विशेषता गृहीत न होनेपर तो ऐसा होगा। परन्तु बलवान् और दुर्बल दो प्रमाणोंमें अगृहीत विशेषता नहीं हो सकती, कारणकि बलवत्त्व और दुर्बलत्व विशेष है, इसलिए इसप्रकारके मन्त्रोंमें अथवा कर्मोंमें संनिधि पाठमात्रसे विद्याशेषत्वकी आशङ्का नहीं करनी चाहिए। अरण्यमें उनका अनुवचन आदि समान धर्म होनेसे केवल संनिधिमें पाठ है, ऐसा सन्तोष करना चाहिए ॥२५॥

'अश्व इव रोमाणि०' ( जिस प्रकार अश्व अपने रोएँ झाड़कर-रोम कम्पन द्वारा श्रम और धूलि आदि दूर कर निर्मल हो जाता है, वैसे ही हार्द ब्रह्मके ज्ञानसे धर्माधर्म रूप पापको झाड़कर

**सत्यानन्दी-दीपिका**

* उपनिषद् वाक्योंके साथ वेध आदि सब वाक्योंका अरण्यमें जाकर आचार्यद्वारा अध्ययन किया जाता है, अतः अरण्यानुवचन ( अरण्यमें अध्ययन ) आदि धर्मोंकी समानतासे केवल संनिधिमें पाठ है, अन्य कोई प्रयोजन नहीं है। इसलिए वेध आदि मन्त्रों और प्रवर्ग्य आदि कर्मोंका विद्याओंमें उपसंहार नहीं है ॥ २५ ॥

धूत्वा शरीरमकृतं कृतात्मा ब्रह्मलोकमभिसंभवामि' ( छा० ८।१३।१ ) इति। तथाऽऽथर्वणिकानाम् 'विद्वान्नामरूपाद्विमुक्तः परात्परं पुरुषमुपैति दिव्यम्' ( मुण्ड० ३।२।८ ) इति। तथा शाट्यायनिनः पठन्ति–'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति। तथैव कौषीतकिनः 'तत्सुकृतदुष्कृते विधूनुते तस्य प्रिया ज्ञातयः सुकृतमुपयन्त्यप्रिया दुष्कृतम्' (कौ० १।४) इति। तदिह क्वचित्सुकृतदुष्कृतयोर्हानं श्रूयते, क्वचित्तयोरेव विभागेन प्रियैरप्रियैश्चोपायनम्, क्वचित्तूभयमपि हानमुपायनं च। तद्यत्रोभयं श्रूयते तत्र तावन्न किंचिद्वक्तव्यमस्ति। यत्राप्युपायनमेव श्रूयते न हानं तत्राप्यर्थादेव हानं संनिपतति। अन्यैरात्मीययोः सुकृतदुष्कृतयोरुपेयमानयोरावश्यकत्वात्तद्धानस्य। यत्र तु हानमेव श्रूयते नोपायनं तत्रोपायनं संनिपतेद्वा न वेति विचिकित्सायामश्रवणादसंनिपातः। विद्यान्तरगोचरत्वाच्च शाखान्तरीयस्य श्रवणस्य। अपि चात्मकर्तृकं सुकृतदुष्कृतयोर्हानम्, परकर्तृकं तूपायनम्, तयोरसत्यावश्यकभावे कथं हानेनोपायनमाक्षिप्येत? तस्मादसंनिपातो हानावुपायनस्येति। अस्यां प्राप्तौ पठति—हानौ त्विति। हानौ त्वेतस्यां केवलायामपि श्रूयमाणायामुपायनं संनिपतितुमर्हति। तच्छेषत्वात्। हानशब्दशेषो ह्युपायनशब्दः समधिगतः कौषितकिरहस्ये। तस्मादन्यत्र केवलहानशब्दश्रवणेऽप्युपायनानुवृत्तिः। यदुक्तमश्रवणाद्विद्यान्तरगोचरत्वादनावश्यकत्वाच्चासंनिपात इति, तदुच्यते—भवेदेषा व्यवस्थोक्तिर्यद्यनुष्ठेयं किंचिदन्यत्र श्रुतमन्यत्र निनीष्येत। नत्विह हानमुपायनं वानुष्ठेयत्वेन संकीर्त्यते विद्यास्तुत्यर्थं त्वनयोः संकीर्तनम्–इत्थं महाभागा विद्या यत्सा-

---

तथा राहुके मुखसे निकले हुए चन्द्रमाके समान अनर्थके आश्रयभूत इस शरीरको त्यागकर कृतकृत्य हो ब्रह्मलोकको प्राप्त होता हूँ ) ऐसी ताण्डियोंकी श्रुति है। 'तथा विद्वान्०' ( उसी प्रकार विद्वान् नामरूपसे मुक्त होकर परात्पर दिव्य पुरुषको प्राप्त हो जाता है ) ऐसी आथर्वणिकोंकी श्रुति है। और 'तस्य पुत्रा दायमुप०' ( उसके-मृतक-विद्वान्‌के पुत्र-शिष्य धनको प्राप्त करते हैं, सुहृद पुण्य कर्म और शत्रु पाप कर्मको प्राप्त करते हैं ) इसी प्रकार शाट्यायनियोंकी श्रुति है। और 'तत्सुकृतदुष्कृते०' (शरीर त्यागके समय विद्वान् उस विद्याबलसे सुकृत और दुष्कृतका त्याग करता है, उसके प्रिय बन्धु सुकृतको और द्वेषी दुष्कृतको प्राप्त होते हैं) ऐसी कौषीतकियोंकी श्रुति है। इन उदाहृत वाक्योंमें कहींपर सुकृत और दुष्कृतके त्यागकी श्रुति है, कहींपर उन दोनोंके ही विभागसे प्रिय और अप्रिय पुरुषोंसे ग्रहणकी श्रुति है और कहींपर तो हान और उपायन दोनोंका भी श्रवण है। उसमें जहाँ दोनोंकी श्रुति है वहाँ तो कुछ भी वक्तव्य नहीं है। परन्तु जहाँ ग्रहणकी ही श्रुति है और त्यागकी नहीं है, वहाँ भी अर्थसे ही त्याग प्राप्त हो जाता है, क्योंकि दूसरोंसे अपने सुकृत और दुष्कृतके ग्रहण किये जानेपर तो उसका त्याग आवश्यक है। परन्तु जहाँ केवल त्यागका ही श्रवण है उपायन-ग्रहणका नहीं है, वहाँ ग्रहण प्राप्त होता है कि नहीं? ऐसा सन्देह प्राप्त होनेपर ग्रहणका श्रवण न होनेसे ग्रहण प्राप्त नहीं होता। अन्य शाखामें ग्रहणका श्रवण अन्य विद्याविषयक है और सुकृत, दुष्कृतका त्याग आत्मकर्तृक है और उपायन परकर्तृक है, अतः त्याग और ग्रहण दोनोंका आवश्यकभाव न होनेसे किस प्रकार हानसे उपायनका आक्षेप किया जाय, इससे हानमें उपायनकी प्राप्ति नहीं है। सिद्धान्ती—ऐसी शङ्काके प्राप्त होनेपर कहते हैं—'हानौ त्विति' इस श्रुतिमें केवल हानके श्रूयमाण होनेपर भी उपायनका संनिपात होना युक्त है, क्योंकि उपायन हानका शेष है, कौषीतकिरहस्यमें उपायनशब्द हानशब्दके शेषरूपसे समधिगत है। इसलिए अन्य शाखामें केवल हानशब्दकी श्रुति होनेपर भी उपायनकी अनुवृत्ति होती है। और जो यह कहा गया है कि श्रुति न होनेसे, विद्यान्तरका विषय होनेसे, अनावश्यक होनेसे उपायनका संनिपात-प्राप्त नहीं है। उसपर कहते हैं—यदि एक स्थानमें श्रुत अनुष्ठेयको अन्य शाखामें ले जानेकी इच्छा हो तो यह उक्त व्यवस्था हो सकती है, परन्तु यहाँ तो हान ( त्याग )

मर्ग्यादस्य विदुषः सुकृतदुष्कृते संसारकारणभूते विधूयेते ते चास्य सुहृद्द्विषत्सु निविशेते इति। स्तुत्यर्थं चास्मिन्संकीर्तने हानानन्तरभावित्वेनोपायनस्य क्वचिच्छ्रुतत्वादन्यत्रापि हानश्रुतावुपायनानुवृत्तिं मन्यते स्तुतिप्रकर्षलाभाय। * प्रसिद्धा चार्थवादान्तरापेक्षाऽर्थवादान्तरप्रवृत्तिः—'एकविंशो वा इतोऽसावादित्यः' (छा० २।१०।५) इत्येवमादिषु। कथं हीहैकविंशतादित्यस्याभिधीयेतानपेक्ष्यमाणेऽर्थवादान्तरे 'द्वादश मासाः पञ्चर्तवस्त्रय इमे लोका असावादित्य एकविंशः' इत्येतस्मिन्। तथा 'त्रिष्टुभौ भवतः सेन्द्रियत्वाय' इत्येवमादिवादेषु 'इन्द्रियं वै त्रिष्टुप्' इत्येवमाद्यर्थवादान्तरापेक्षा दृश्यते। विद्यास्तुत्यर्थत्वाच्चास्योपायनवादस्य कथमन्यदीये सुकृतदुष्कृते अन्यैरुपेयेते इति नातीवाभिनिवेष्टव्यम्। उपायनशब्दशेषत्वादिति तु शब्दशब्दं समुच्चारयन्स्तुत्यर्थामेव हानावुपायनानुवृत्तिं सूचयति। गुणोपसंहारविवक्षायां ह्युपायनार्थस्यैव हानानुवृत्तिं ब्रूयात्। तस्माद्गुणोपसंहारविचारप्रसङ्गेनस्तुत्युपसंहारप्रदर्शनार्थमिदं सूत्रम्। *कुशाछन्दस्तुत्युपगानवदित्युपमोपादानम्।

---

अथवा उपायन (ग्रहण) अनुष्ठेयरूपसे नहीं कहा जाता है, किन्तु इन दोनोंका केवल विद्याकी स्तुतिके लिए संकीर्तन है—ऐसी महाभागाविद्या है जिसकी सामर्थ्यसे इस विद्वान्‌के संसारके कारणभूत सुकृत और दुष्कृत छूट ( निवृत्त ) हो जाते हैं, वे इसके सुहृद और द्वेषीमें प्रवेश करते हैं। स्तुत्यर्थक इस संकीर्तनमें हानके अनन्तर भाविरूपसे उपायनके कहींपर श्रुत होनेसे अन्य शाखामें भी हानके श्रुत होनेपर स्तुतिप्रकर्ष लाभके लिए उपायनकी अनुवृत्ति मानी जाती है, और एक अर्थवादकी अपेक्षासे अन्य अर्थवादकी प्रवृत्ति 'एकविंशो०' ( इस लोकसे वह आदित्य निश्चय ही इक्कीसवाँ है ) इत्यादिमें प्रसिद्ध है, क्योंकि 'द्वादशमासाः०' ( द्वादश मास, पाँच ऋतु, ये तीन लोक और यह आदित्य इक्कीसवाँ है ) इस अन्य अर्थवादकी अपेक्षा न होनेपर यहाँ आदित्यको इक्कीसवाँ किस प्रकार अभिधान किया जाता है। इस प्रकार 'सेन्द्रियत्वके लिए दो त्रिष्टुभ् होते हैं'। इत्यादि वादोंमें भी 'इन्द्रिय ही त्रिष्टुभ् है' इत्यादि अन्य (स्थानान्तर स्थित) अर्थवादकी अपेक्षा देखी जाती है। विद्या स्तुत्यर्थक होनेसे इस उपायनवादमें अन्य कृत सुकृत-दुष्कृत अन्योंसे कैसे प्राप्त किये जाते हैं, इस प्रकार अत्यन्त अभिनिवेश नहीं करना चाहिए। क्योंकि 'उपायनशब्दशेषत्वात्' (उपायनशब्द हानका अङ्ग है) इस सूत्रमें 'शब्द' पदका उच्चारण करते हुए सूत्रकार सूचित करते हैं कि हानमें उपायनकी अनुवृत्ति स्तुतिके लिए ही है। यदि गुणोंके उपसंहारकी विवक्षा होती तो उपायन अर्थकी ही हानमें अनुवृत्ति कहते, इसलिए गुणोंपसंहार विचारके प्रसंगसे स्तुतिके लिए उपसंहारका प्रदर्शन करनेके लिए यह सूत्र है।

## सत्यानन्दी-दीपिका

* यज्ञकी पुरुषाकार कल्पनाकर उसमें 'सेन्द्रियत्वके लिए दो त्रिष्टुभ् होते हैं' ऐसा सामवेद ब्राह्मणमें कहा गया है। यद्यपि 'त्रिष्टुभ्' छन्दोमात्र है इन्द्रिय नहीं, तो भी अन्यप्रकरणस्थ 'इन्द्रियं वै त्रिष्टुभ्' इस यजुर्वेदवाक्यके सम्बन्धसे उसमें इन्द्रियत्वकी कल्पना की जाती है, त्रिष्टुभ् छन्दमें इन्द्रियत्वकी कल्पना इसलिए की गई है कि त्रिष्टुभ् छन्दमें एकादश अक्षर हैं और इन्द्रियाँ भी एकादश हैं। अन्य शाखागत उपायन दूसरी शाखामें भी स्तुति प्रकर्षके लिए गृहीत है। यदि यहाँ उपायनकी विवक्षा होती है तो सूत्रकार 'उपायनशेषत्वात्' इस प्रकार उसका उपसंहार करते न कि 'उपायनशब्दशेषत्वात्' इस प्रकार उपायनशब्दका। अतः विद्यास्तुतिको सूचित करनेके लिए उपायनशब्दका उपसंहार कहा है। यहाँ गुणोंके उपसंहारके विचार प्रसंगसे स्तुतिमें दूसरी स्तुतिके उपसंहारको भी दिखलाया गया है। एक शाखामें स्थिति विशेष अन्य शाखामें भी ग्राह्य है।

* उद्गाताओंके स्तोत्र गणनाके लिए दारुमय शिलाकाको कुशा कहा जाता है। छन्दोंमें—

तद्यथा भाल्लविनाम्—'कुशा वानस्पत्याः स्थ ता मा पात' इत्येतस्मिन्निगमे कुशानामविशेषेण वनस्पतियोनित्वेन श्रवणे शाट्यायनिनामौदुम्बराः कुशा इति विशेषवचनादौदुम्बर्यः कुशा आश्रीयन्ते। यथा च कचिद्देवासुरच्छन्दसामविशेषेण पौर्वापर्यप्रसङ्गे 'देवच्छन्दांसि पूर्वाणि' इति पैङ्ग्यास्नानात्प्रतीयते। यथा च षोडशिस्तोत्रे केषांचित्कालाविशेषप्राप्तौ 'समयाध्युषिते सूर्ये' इत्यार्चश्रुतेः कालविशेषप्रतिपत्तिः। यथैव चाविशेषेणोपगानं केचित्समामनन्ति विशेषेण भाल्लविनः। यथैतेषु कुशादिषु श्रुत्यन्तरगतविशेषान्वयः, एवं हानावप्युपायनान्वय इत्यर्थः। श्रुत्यन्तरकृतं हि विशेषं श्रुत्यन्तरेऽनभ्युपगच्छतः सर्वत्रैव विकल्पः स्यात्। स चान्याय्यः सत्यां गतौ। तदुक्तं द्वादशलक्षण्याम्—'अपि तु वाक्यशेषत्वादितरपर्युदासः स्यात्प्र-

---

'कुशाच्छन्दस्तुत्युपगानवत्' 'कुशा, छन्द, स्तुति और उपगानके समान' इस उपमाका ग्रहण है। जैसे 'कुशा वानस्पत्याः०' ( हे कुश! तुम वनस्पतिसे उत्पन्न हुए हो, तुम हमारी रक्षा करो ) इस भाल्लवियोंकी श्रुतिमें कुशोंकी समानरूपसे वनस्पतिसे उत्पत्तिरूपसे श्रवण होनेपर शाट्यायनियोंका 'औदुम्बराः कुशाः' ( उदम्बरसे उत्पन्न हुए कुशा ) इसप्रकार विशेष वचनके श्रवणसे उदम्बरसे उत्पन्न हुए कुशोंका आश्रयण किया जाता है। जैसे देवछन्द और असुरछन्दका समानरूपसे पूर्वापर प्रसंग होनेपर 'देवच्छन्दासि पूर्वाणि' ( देव छन्द पूर्व हैं ) ऐसा पैङ्गियोंकी श्रुतिसे प्रतीत होता है। और जैसे षोडशीके स्तोत्रमें कुछको काल विशेष प्राप्त न होनेपर 'समयाध्युषिते सूर्ये' ( आधे सूर्यके अस्त होनेके समय षोडशी स्तोत्र करना चाहिए ) ऐसी ऋचाका अध्ययन करनेवालोंकी श्रुति होनेसे कालविशेष प्रतीत होता है। और जैसे कोई उपगान अविशेषरूपसे कहते हैं और भाल्लवी विशेषरूपसे उपगान कहते हैं। जैसे इन कुशा आदिमें अन्य श्रुति स्थित विशेषका अन्वय है, वैसे ही हानमें उपायनका अन्वय है, ऐसा अर्थ है। एक श्रुतिकृत विशेषका अन्य श्रुतिमें स्वीकार न करनेवालेको सर्वत्र ही विकल्प हो जायगा। गति-व्यवस्थाके होनेपर वह विकल्प उचित नहीं है। द्वादश अध्यायवाले पूर्वमीमांसा ग्रन्थमें 'अपि तु०' ( दीक्षितो न ददाति, न जुहोति न पचति-दीक्षितको दान नहीं करना चाहिए, होम नहीं करना चाहिए और पाक नहीं करना चाहिए ) ऐसी श्रुति है। उससे 'अहरहर्दद्यात्' ( प्रतिदिन दान करना चाहिए ) इसका 'न दीक्षितो ददाति' इस वाक्यशेषसे इतर-दीक्षितसे भिन्नका पर्युदास है, क्योंकि यदि पर्युदास न हो, तो प्रतिषेधमें विकल्प होगा, वह अन्याय है ) ऐसा कहा गया है। अथवा इन्हीं विधूनन श्रुतियोंके विषयमें इस सूत्रसे यह विचार करना

### सत्यानन्दी-दीपिका

'नवाक्षराणि छन्दांसि आसुराणि अन्यानि दैवानि' ( नौ अक्षरवाले छन्द असुर छन्द हैं और अन्य देव छन्द हैं ) कहीं पर 'छन्दोभिः स्तुवते' ( छन्दोंसे स्तवन करते हैं ) इन मन्त्रोंमें विशेष न होनेसे सब छन्दोंकी प्राप्ति होनेपर 'देवच्छन्दासि पूर्वाणि' ऐसा पैङ्गियोंकी श्रुतिसे विशेष प्रतीत होता है। स्तुतिमें—अतिरात्र यागमें षोडशी पात्रका ग्रहण होनेपर उसके ग्रहणके अङ्गभूत स्तोत्र कब होते हैं? इसप्रकार छन्दोगों द्वारा पूछे जानेपर 'समयाध्युषिते सूर्ये' इस श्रुतिसे कालविशेष प्रतीत होता है। उपगान—'ऋत्विज उपगायन्ति' (ऋत्विज उपगान करें) यह सामान्य श्रुति है। इससे 'नाध्वर्युरुपगायति' ( अध्वर्यु उपगान न करे ) इस दूसरी श्रुतिसे अध्वर्युसे भिन्न ऋत्विज उपगान करें। इस प्रकार विशेषका ग्रहण है। कुशा आदि वाक्योंकी दूसरी विशेष श्रुतियोंके साथ एकवाक्यता इसलिए की गई है कि विकल्प प्राप्त न हो, सामान्य और विशेष इन दोनों श्रुति वाक्योंको एक वाक्यतारूप गतिके होनेपर वाक्य भेदकर 'अध्वर्यु उपगान न करे' ऐसा विशेष होनेसे और 'ऋत्विज उपगान करें' ऐसी सामान्य श्रुतिके होनेसे 'अध्वर्यु उपगान करे' 'अध्वर्यु उपगान न करे' इसप्रकार सर्वत्र विकल्प करना युक्त नहीं है। 'व्रीहिभिर्यजेत यवैर्वा यजेत' ( धान अथवा यवोंसे याग करे ) यहाँ तो अवस्था

तिषेधे विकल्पः स्यात्' इति। ※ अथवा-एतास्वेव विधूननश्रुतिष्वेतेन सूत्रेणैतच्चिन्तयितव्यम्-किमनेन विधूननवचनेन सुकृतदुष्कृतयोर्हानमभिधीयते, किंवाऽर्थान्तरमिति? तत्र चैवं प्रापयितव्यम्, न हानं विधूननमभिधीयते-धूञ् कम्पने' इति स्मरणात्, 'दोधूयन्ते ध्वजाग्राणी'ति च वायुना चाल्यमानेषु ध्वजाग्रेषु प्रयोगदर्शनात्, तस्माच्चालनं विधूननमभिधीयते। चालनं तु सुकृतदुष्कृतयोः कंचित्कालं फलप्रतिबन्धनादित्येवं प्राप्ये प्रतिवक्तव्यम्। हानावेवैष विधूननशब्दो वर्तितुमर्हति, उपायनशब्दशेषत्वात्। नहि परपरिग्रहभूतयोः सुकृतदुष्कृतयोरप्रहीणयोः परैरुपायनं संभवति। यद्यपीदं परकीययोः सुकृतदुष्कृतयोः परैरुपायनं नाञ्जसं संभाव्यते, तथापि तत्संकीर्तनात्तावत्तदानुगुण्येन हानमेव विधूननं नामेति निर्णेतुं शक्यते। क्वचिदपि चेदं विधूननसंनिधावुपायनं श्रूयमाणं कुशाछन्दस्तुत्युपगानवद्विधूननश्रुत्या सर्वत्रापेक्ष्यमाणं सार्वत्रिकं निर्णयकारणं संपद्यते। न च चालनं ध्वजाग्रवत्सुकृतदुष्कृतयोर्मुख्यं संभवति, अद्रव्यत्वात्। अश्वश्च रोमाणि विधून्वा-

---

चाहिए—क्या इस विधूनन वचनसे सुकृत और दुष्कृतके हानका विधान किया जाता है अथवा अन्य अर्थका? संशय होनेपर ऐसा प्राप्त होना चाहिए कि विधूनन शब्द हानका अभिधान नहीं करता, क्योंकि 'धूञ् कम्पने' (धूञ् धातुका अर्थ कम्पन है) ऐसा पाणिनिकी स्मृति है। और 'दोधूयन्ते ध्वजाग्राणि' (ध्वजाके अग्रभाग बार बार हिलते हैं) इसप्रकार वायु द्वारा चलायमान ध्वजाके अग्रभागोंमें विधूनन शब्दका प्रयोग देखनेमें आता है, इससे चालन ही विधूनन अभिहित है। सुकृत और दुष्कृतका चालन तो कुछ समय तक फलके प्रतिबन्धसे अभिहित है। ऐसा पूर्वपक्ष प्राप्त कर निराकरण करना चाहिए। यह विधूनन शब्द हानमें ही वर्तने योग्य है, क्योंकि उपायन शब्दका शेष है, कारण कि दूसरेसे परिगृहीत होनेवाले अत्यक्त सुकृत दुष्कृतका अन्यसे उपायन नहीं हो सकता। यद्यपि अन्यके सुकृत और दुष्कृतका अन्यसे उपायन मुख्यरूपसे सम्भव नहीं होता, तो भी उसके संकीर्तनसे उसके अनुकूल हान ही विधूनन है, ऐसा निर्णय किया जा सकता है। विधूननकी संनिधिमें कहींपर भी श्रूयमाण उपायन कुशा, छन्द, स्तुति और उपगानके समान विधूनन श्रुतिसे सर्वत्र अपेक्ष्यमाण होता हुआ सर्वत्र निर्णयका कारण सम्पन्न होता है। और सुकृत-दुष्कृतका ध्वजाके

## सत्यानन्दी-दीपिका

विकल्पका आलम्बन युक्त है, क्योंकि विकल्प न्याय संगत नहीं है। ज्योतिष्टोम प्रकरणमें 'दीक्षितो न जुहोति' यह श्रुति है और 'यावज्जीवमग्निहोत्रं जुहुयात्' यह अन्यत्र श्रुति है। यदि यहाँ 'न दीक्षित' वाक्य होमका प्रतिषेधक हो, तो यज्ञार्थक होनेसे निषेध अनुष्ठेय है अथवा 'यावज्जीवम्' इस विधिसे होम अनुष्ठेय है? ऐसा विकल्प होगा। परन्तु वह न्याय संगत नहीं है। यहाँ 'यावज्जीव' वाक्यके प्रति 'न दीक्षित' वाक्यके शेष होनेसे 'न' इतर पर्युदासार्थक है, अतः नकार दीक्षितसे भिन्न लोगोंका लक्षक है होमका प्रतिषेधक नहीं है। परन्तु मीमांसा शास्त्रमें 'नञ्' के दो अर्थ माने गये हैं—एक निषेध और दूसरा पर्युदास। 'प्रतिषेधः स विज्ञेयः क्रियया सह यत्र नञ्' (जहाँपर क्रिया-विधि प्रत्ययके साथ 'नञ्' का सम्बन्ध हो वहाँ प्रतिषेध होता है) जैसे 'ब्राह्मणो न हन्तव्यः'। 'पर्युदासः स विज्ञेयो यत्रोत्तरपदेन नञ्' (जहाँ 'नञ्' विधि प्रत्ययमें भिन्न धात्वर्थके साथ अथवा कर्ता आदिके साथ सम्बन्धित हो वह पर्युदास है) जैसे 'दीक्षितो न जुहोति' इसका विशेष विस्तार मीमांसा शास्त्रमें देखना चाहिए। इसलिए 'अदीक्षित जीवन पर्यन्त होम करे' इसप्रकार एक वाक्यता है, ऐसा 'न दीक्षिताधिकरण'के सिद्धान्तसूत्रका अर्थ है।

※ इसप्रकार विधूननका हानि अर्थसिद्ध होनेपर जहाँ केवल हानका श्रवण हो वहाँपर भी उपायनका उपसंहार है। यहाँ पूर्वपक्षमें स्तुति प्रकर्षकी असिद्धि है, सिद्धान्तमें उसकी सिद्धि है ॥ २६ ॥

नस्त्यजन्रजः सहैव तेन रोमाण्यपि जीर्णानि शातयति 'अश्व इव रोमाणि विधूय पापम्' ( छा० ८।१३।१ ) इति च ब्राह्मणम्। अनेकार्थत्वाभ्युपगमाच्च धातूनां न स्मरणविरोधः। तदुक्तमिति व्याख्यातम् ॥ २६ ॥

( १६ सांपरायाधिकरणम्। सू० २७-२८ )

## सांपराये तर्तव्याभावात्तथा ह्यन्ये ॥ २७ ॥

पदच्छेद—सांपराये, तर्तव्याभावात्, तथा, हि, अन्ये।

सूत्रार्थ—( सांपराये ) देह त्यागके समय विद्याकी सामर्थ्यसे सुकृत, दुष्कृतकी हानि होती है, ( तर्तव्याभावात् ) क्योंकि विद्वान्को कुछ मध्यमें प्राप्तव्य नहीं है, ( हि ) क्योंकि ( अन्ये ) अन्य शाखावाले 'अश्व इव रोमाणि विधूय पापम्' (तथा) ऐसा ही कहते हैं।

* देवयानेन पथा पर्यङ्कस्थं ब्रह्माभिप्रस्थितस्य व्यध्वनि सुकृतदुष्कृतयोर्वियोगं कौषीतकिनः पर्यङ्कविद्यायामामनन्ति 'स एतं देवयानं पन्थानमासाद्याग्निलोकमागच्छति' (कौ० १।३) इत्युपक्रम्य 'स आगच्छति विरजां नदीं तां मनसैवात्येति तत्सुकृतदुष्कृते विधूनुते' ( कौ० १।४ ) इति। तत्किं यथाश्रुतं व्यध्वन्येव वियोगवचनं प्रतिपत्तव्यमाहोस्विदादावेव देहादपसर्पणे इति विचारणायां श्रुतिप्रामाण्याद्यथाश्रुति प्रतिपत्तिप्रसक्तौ पठति–सांपराय इति। सांपराये गमन एव देहादपसर्पण इदं विद्यासामर्थ्यात्सुकृतदुष्कृतहानं भवतीति प्रतिजानीते। हेतुं चाचष्टे–तर्तव्याभावादिति। नहि विदुषः संपरेतस्य विद्यया ब्रह्म संप्रेप्सतोऽन्तराले सुकृतदुष्कृताभ्यां किंचित्प्राप्तव्यमस्ति, यदर्थं कतिचित्क्षणानक्षीणे ते कल्प्येयाताम्।

---

अग्रभागके समान मुख्य चालन नहीं हो सकता, क्योंकि वे अद्रव्य हैं। रोमोंका विधूनन करनेवाला अश्व रजका त्याग करता हुआ उसके साथ जीर्ण रोमोंको भी झाड़ता है—इस विषयमें 'अश्व इव०' ( जैसे अश्व रोमोंका विधूनन करता है, वैसे विद्वान् पापका विधूनन कर ) ऐसा ब्राह्मण है। धातुओंके अनेक अर्थ स्वीकार करनेसे उक्त स्मृतिके साथ विरोध नहीं है। 'तदुक्तम्' ( वह कहा गया है ) इसका व्याख्यान हो चुका है ॥ २६ ॥

देवयान मार्गसे पर्यङ्कस्थ ब्रह्मकी ओर प्रस्थान करनेवाले पुरुषके सुकृत-दुष्कृतका अर्धमार्गमें वियोग कौषीतकी शाखावाले पर्यङ्कविद्यामें कहते हैं—'स एतं देवयानं०' ( वह इस देवयान मार्गको प्राप्तकर अग्निलोकको प्राप्त होता है ) ऐसा आरम्भकर 'स आगच्छति०' ( वह विरजा नदीको प्राप्त होता है, उसे मनसे ही लांघ जाता है, उससे सुकृत, दुष्कृतका त्याग करता है ) यहाँ श्रुतिके अनुसार उस ( सुकृत-दुष्कृत ) का अर्धमार्गमें ही वियोगवचन समझना चाहिए अथवा आरम्भमें ही देहसे प्रयाण करनेपर ऐसा विचार प्राप्त होनेपर श्रुतिप्रामाण्यसे श्रुतिके अनुसार प्राप्ति प्रसक्त होनेपर [ सूत्रकार ] कहते हैं—'सांपराये'। सांपरायसमयमें-गमनकालमें देहसे निकलनेपर विद्याकी सामर्थ्यसे यह सुकृत, दुष्कृत हान होता है, ऐसी प्रतिज्ञा करते हैं। उसका हेतु कहते हैं—'तर्तव्याभावात्'। विद्यासे ब्रह्म सम्प्राप्तकी इच्छावाले मृत विद्वान्को मध्यमें सुकृत और दुष्कृतद्वारा कुछ भी प्राप्तव्य नहीं है, जिसके लिए कुछ एक क्षणोंके लिए सुकृत और दुष्कृतके क्षीण न होनेकी कल्पना की जाय। परन्तु उनका विद्यासे विरुद्ध फल है, अतः विद्याकी सामर्थ्यसे उन दोनोंका क्षय

### सत्यानन्दी-दीपिका

* इसमें विद्या सुकृत-दुष्कृतक्षयका हेतु है, इसकी असिद्धि पूर्वपक्षका फल है, सिद्धान्तमें उसकी सिद्धि फल है। सिद्धान्ती—देहपातसे पूर्व ही विद्याकी सामर्थ्यसे कर्मोंके क्षय होनेपर विद्वान् उत्तर मार्गसे ब्रह्मको प्राप्त होता है, विना कर्मनाश हुए उत्तर मार्गसे गमन संभव नहीं है, अतः पाठक्रमसे अर्थक्रम बलवान् है ॥ २७ ॥

विद्याविरुद्धफलत्वाच्च विद्यासामर्थ्येन तयोः क्षयः, स च यदैव विद्या फलाभिमुखी तदैव भवितुमर्हति। तस्मात्प्रागेव सन्नयं सुकृतदुष्कृतक्षयः पश्चात्पठ्यते। तथा ह्यन्येऽपि शाखिनस्ताण्डिनः शाट्यायनिनश्च प्रागवस्थायामेव सुकृतदुष्कृतहानमामनन्ति—'अश्व इव रोमाणि विधूय पापम्' ( छा० ८।१३।१ ) इति, 'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति च ॥ २७ ॥

## छन्दत उभयाविरोधात् ॥ २८ ॥

पदच्छेद—छन्दतः, उभयाविरोधात्।

सूत्रार्थ—( छन्दतः ) जीवित पुरुष अपनी इच्छासे विद्याका अनुष्ठान कर सकता है, इससे उसका कर्मक्षय भी जीवनकालमें होगा, ( उभयाविरोधात् ) इसप्रकार उपपत्ति और ताण्डी आदि श्रुति दोनोंके साथ विरोध नहीं होगा।

यदि च देहादपसृप्तस्य देवयानेन पथा प्रस्थितस्यार्धपथे सुकृतदुष्कृतक्षयोऽभ्युपगम्येत, ततः पतिते देहे यमनियमविद्याभ्यासात्मकस्य सुकृतदुष्कृतक्षयहेतोः पुरुषप्रयत्नस्येच्छातोऽनुष्ठानानुपपत्तेरनुपपत्तिरेव तद्धेतुकस्य सुकृतदुष्कृतक्षयस्य स्यात्। तस्मात्पूर्वमेव साधकावस्थायां छन्दतोऽनुष्ठानं तस्य स्यात्। तत्पूर्वकं च सुकृतदुष्कृतहानमिति द्रष्टव्यम्। एवं निमित्तनैमित्तिकयोरुपपत्तिस्ताण्डिशाट्यायनिश्रुत्योश्च संगतिरिति ॥२८॥

( १७ गतेरर्थवत्त्वाधिकरणम्। सू० २९-३० )

## गतेरर्थवत्त्वमुभयथाऽन्यथा हि विरोधः ॥ २९ ॥

पदच्छेद—गतेः, अर्थवत्त्वम्, उभयथा, अन्यथा, हि, विरोधः।

सूत्रार्थ—( गतेः ) देवयान मार्गकी ( अर्थवत्त्वम् ) अर्थवत्ता ( उभयथा ) विभागसे हो सकती है। सगुणविद्यामें देवयानमार्ग है निर्गुणविद्यामें नहीं है, ( अन्यथा ) यदि देवयानमार्गका सर्वत्र उपसंहार करें तो ( विरोधः ) 'विद्वान् पुण्यपापे विधूय' इत्यादि श्रुतिसे विरोध होगा।

* क्वचित्पुण्यपापहानसंनिधौ देवयानः पन्थाः श्रूयते, क्वचिन्न। तत्र संशयः—किं

---

होता है और वह विद्या जब फलाभिमुख होती है तब उनका क्षय होना युक्त है। इसलिए देहपातसे पहले ही वर्तमान यह सुकृत दुष्कृत क्षय पश्चात् पढा जाता है। इसलिए अन्य ताण्डी और शाट्यायनी शाखावाले भी 'अश्व इव०' ( जैसे अश्व रोम झाड़ देता है वैसे विद्वान् पाप मुक्त होकर ) और 'तस्य दायमु०' ( उस मृत विद्वान्‌के पुत्र-शिष्य धन ग्रहण करते हैं, सुहृद पुण्यकर्म और द्वेषी पापकर्म ग्रहण करते हैं ) इसप्रकार पूर्वावस्थामें ही सुकृत-दुष्कृतकी हानि कहते हैं ॥ २७ ॥

देहसे निष्क्रमित देवयान मार्गसे प्रस्थान करनेवाले पुरुषके सुकृत, दुष्कृतका क्षय यदि अर्धमार्गमें स्वीकार किया जाय, तो देहपात होनेपर सुकृत-दुष्कृत क्षयके हेतुभूत यम-नियम सहित विद्याके अभ्यासरूप पुरुषप्रयत्नमें अपनी इच्छासे अनुष्ठानकी उपपत्ति न होनेके कारण उससे होनेवाली सुकृत, दुष्कृत क्षयकी अनुपपत्ति ही होगी। इससे पूर्वमें-साधकावस्थामें अपनी इच्छासे उसका अनुष्ठान होना चाहिए और अनुष्ठान पूर्वक सुकृत, दुष्कृतका हान है, ऐसा समझना चाहिए। इसप्रकार निमित्त, नैमित्तिककी उपपत्ति ताण्डी और शाट्यायनी इन दोनों श्रुतियोंकी संगति होगी ॥ २८ ॥

कहींपर पुण्य-पापके हानकी संनिधिमें देवयानमार्गकी श्रुति है और कहींपर नहीं है, यहाँ

### सत्यानन्दी-दीपिका

सगुणविद्यामें देवयान गति प्रयोजनवाली है और निर्गुणविद्यामें नहीं, अतः समानरूपसे सर्वत्र गमन इष्ट नहीं है। देशसे व्यवहित वस्तुकी प्राप्तिमें तो मार्ग अपेक्षणीय है, किन्तु ब्रह्मविद्यामें मार्गकी अपेक्षा नहीं है ॥ २९ ॥

ज्ञानाविशेषेणैव देवयानः पन्थाः संनिपतेदुत विभागेन क्वचित्संनिपतेत् क्वचिन्नेति। यथा तावज्ज्ञानाविशेषेणैवोपायनानुवृत्तिरुक्तैवं देवयानानुवृत्तिरपि भवितुमर्हतीत्यस्यां प्राप्तावाचक्ष्महे—गतेर्देवयानस्य पथोऽर्थवत्त्वमुभयथा विभागेन भवितुमर्हति, क्वचिदर्थवती गतिः क्वचिन्नेति, नाविशेषेण। अन्यथा ह्यविशेषेणैवैतस्यां गतावङ्गीक्रियमाणायां विरोधः स्यात्। 'पुण्यपापे विधूय निरञ्जनः परमं साम्यमुपैति' ( मु० ३।१।३ ) इत्यस्यां श्रुतौ देशान्तरप्रापणी गतिर्विरुध्येत। कथं हि निरञ्जनोऽगन्ता देशान्तरं गच्छेत्? गन्तव्यं च परमं साम्यं न देशान्तरप्राप्त्यायत्तमित्यानर्थक्यमेवात्र गतेर्मन्यामहे ॥ २९ ॥

## उपपन्नस्तल्लक्षणार्थोपलब्धेर्लोकवत् ॥ ३० ॥

पदच्छेद—उपपन्नः, तल्लक्षणार्थोपलब्धेः, लोकवत्।

सूत्रार्थ—(उपपन्नः) गतिकी विभागसे व्यवस्था युक्त ही है, (तल्लक्षणार्थोपलब्धेः) क्योंकि गति-कारणभूत अर्थ सगुण उपासनाओंमें उपलब्ध होता है, ( लोकवत् ) जैसे लोकमें सेतु वासियोंको ग्रामकी प्राप्तिके लिए मार्गकी अपेक्षा होती है, किन्तु आरोग्य प्राप्तिमें उसकी अपेक्षा नहीं होती, वैसे यहाँ भी है।

उपपन्नश्चायमुभयथाभावः—क्वचिदर्थवती गतिः क्वचिन्नेति, तल्लक्षणार्थोपलब्धेः। गतिकारणभूतो ह्यर्थः पर्यङ्कविद्यादिषु सगुणेषूपासनेषूपलभ्यते। यत्र हि पर्यङ्कारोहणं पर्यङ्कस्थेन ब्रह्मणा संवदनं विशिष्टगन्धादिप्राप्तिश्चेत्येवमादि बहु देशान्तरप्राप्त्यायत्तं फलं श्रूयते, तत्रार्थवती गतिः। नहि सम्यग्दर्शने तल्लक्षणार्थोपलब्धिरस्ति। न ह्यात्मैकत्वदर्शिनामाप्तकामानामिहैव दग्धाशेषक्लेशबीजानामारब्धभोगकर्माशयक्षपणव्यतिरेकेणापेक्षितव्यं किंचिदस्ति, तत्रानर्थिका गतिः। लोकवच्चैष विभागो द्रष्टव्यः—यथा लोके ग्रामप्राप्तौ देशान्तरप्रापणः पन्था अपेक्ष्यते, नारोग्यप्राप्तावेवमिहापीति। भूयश्चैनं विभागं चतुर्थाध्याये निपुणतरमुपपादयिष्यामः ॥ ३० ॥

---

संशय होता है कि क्या ज्ञानमें समानरूपसे ही देवयानमार्गका संनिपात है अथवा विभागसे कहींपर संनिपात होता है और कहींपर नहीं होता? जैसे ज्ञानमें समानरूपसे उपायनकी अनुवृत्ति कही गई है, वैसे देवयानकी अनुवृत्ति भी होनी चाहिए। सिद्धान्ती—इसके प्राप्त होनेपर हम कहते हैं—गतिका-देवयानमार्गका अर्थवत्त्व उभयथा-विभागसे होना चाहिए, कहींपर अर्थवती गति है और कहींपर नहीं। अविशेषसे सर्वत्र गति नहीं है, अन्यथा-अविशेषसे ही इस गतिके अङ्गीकार करनेपर तो विरोध होगा। 'पुण्यपापे०' ( विद्वान् पुण्य-पाप दोनोंको त्यागकर निर्मल हो परम साम्य ( ब्रह्म ) को प्राप्त होता है ) इस श्रुतिमें अन्य देश प्रापक गति विरुद्ध है, क्योंकि गति आदि रहित ब्रह्मस्वरूप देशान्तरमें कैसे जायगा और प्रापणीय परम साम्य देशान्तर प्राप्तिके अधीन नहीं है। इसलिए हम यहाँ निर्गुणविद्यामें गतिको निष्प्रयोजन मानते हैं ॥ २९ ॥

कहींपर गति प्रयोजनवाली है और कहींपर नहीं, ऐसा दोनों प्रकारका विभाग युक्ति युक्त है, क्योंकि गति कारणक प्रयोजन उपलब्ध होता है। गति कारणभूत प्रयोजन पर्यङ्कविद्या आदि सगुण उपासनाओंमें उपलब्ध होता है। उनमें पर्यङ्कारोहण, पर्यङ्कस्थ ब्रह्माके साथ संवाद और विशिष्ट गन्ध आदिकी प्राप्ति, इत्यादि अनेक भिन्न-भिन्न देशोंकी प्राप्तिके अधीन फलकी श्रुति है, वहाँ गति प्रयोजन वाली है, किन्तु तत्त्वज्ञानमें गति कारणभूत अर्थकी उपलब्धि नहीं है, कारण कि आत्मैकत्वदर्शी, आप्तकाम यहाँ दग्ध हो गये हैं सम्पूर्ण क्लेश और उनके कारणीभूत बीज-अविद्या जिनके, उनको-एतादृश महानुभावोंको प्रारब्धभोग कर्म और आशय क्षयके अतिरिक्त कुछ भी फल अपेक्षणीय नहीं है। यहाँ गति प्रयोजन रहित है। और यह विभाग लोक व्यवहारके समान समझना चाहिए, जैसे लोकमें ग्राम प्राप्तिके लिए देशान्तर प्रापक मार्गकी अपेक्षा होती है, किन्तु आरोग्य प्राप्तिमें नहीं होती,

( १८ अनियमाधिकरणम् । सू० ३१ )

## अनियमः सर्वासामविरोधः शब्दानुमानाभ्याम् ॥ ३१ ॥

पदच्छेद—अनियमः, सर्वासाम्, अविरोधः, शब्दानुमानाभ्याम् ।

सूत्रार्थ—( सर्वासाम् ) सभी सगुण उपासनाओंमें ( अनियमः ) अविशेषरूपसे देवयान मार्ग होना चाहिए, ( अविरोधः ) इससे–प्रकरणसे विरोध नहीं है, ( शब्दानुमानाभ्याम् ) क्योंकि 'तद्य इत्थं विदुः' इत्यादि श्रुति और 'शुक्लकृष्णे गती ह्येते' इत्यादि स्मृति है ।

सगुणासु विद्यासु गतिरर्थवती, न निर्गुणायां परमात्मविद्यायामित्युक्तम् । सगुणास्वपि विद्यासु कासुचिद्गतिः श्रूयते—यथा पर्यङ्कविद्यायामुपकोसलविद्यायां पञ्चाग्निविद्यायां दहरविद्यायामिति । नान्यासु—यथा मधुविद्यायां शाण्डिल्यविद्यायां षोडशकलविद्यायां वैश्वानरविद्यायामिति । तत्र संशयः—किं यास्वेवैषा गतिः श्रूयते तास्वेव नियम्येतोतानियमेन सर्वाभिरेवंजातीयकाभिर्विद्याभिरभिसंबध्येतेति । किं तावत्प्राप्तम् ? नियम इति । यत्रैव श्रूयते तत्रैव भवितुमर्हति, प्रकरणस्य नियामकत्वात् । यद्यन्यत्राश्रूयमाणापि गतिर्विद्यान्तरं गच्छेच्छ्रुत्यादीनां प्रामाण्यं हीयेत, सर्वस्य सर्वार्थत्वप्रसङ्गात् । अपि चार्चिरादिकैकैव गतिरुपकोसलविद्यायां पञ्चाग्निविद्यायां च तुल्यवत्पठ्यते, तत्सर्वार्थत्वेऽनर्थकं पुनर्वचनं स्यात् । तस्मान्नियम इति * एवं प्राप्ते पठति—अनियम इति । सर्वासामेवाभ्युदयप्राप्तिफलानां सगुणानां विद्यानामविशेषेणैषा देवयानाख्या गतिर्भवितुमर्हति । नन्वनियमाभ्युपगमे प्रकरणविरोध उक्तः । नैषोऽस्ति विरोधः, शब्दानुमानाभ्यां श्रुतिस्मृतिभ्यामित्यर्थः । तथाहि श्रुतिः—'तद्य इत्थं विदुः' ( छा० ५।१०।१ ) इति पञ्चाग्निविद्यावतां देवयानं पन्थानमवतारयन्ती 'ये

---

वैसे यहाँ प्रकृतमें भी समझना चाहिए । पुनः इस विभागको चतुर्थ अध्यायमें अधिक निपुणतासे उपपादन करेंगे ॥ ३० ॥

सगुण विद्याओंमें गति प्रयोजनवाली है, किन्तु निर्गुण परमात्मविद्यामें नहीं, ऐसा पूर्व अधिकरणमें कहा गया है । सगुण विद्याओंमें भी कुछ विद्याओंकी गति श्रुति है—जैसे 'पर्यङ्कविद्या, उपकोसलविद्या, पञ्चाग्निविद्या और दहरविद्यामें ।' अन्य विद्याओंमें गति श्रुति नहीं है—जैसे 'मधुविद्या, शाण्डिल्यविद्या, षोडशकलविद्या और वैश्वानरविद्यामें । यहाँ संशय होता है—क्या जिनमें यह गति श्रुति है उनमें ही नियमित है अथवा अनियमसे इस प्रकारकी सभी विद्याओंके साथ सम्बन्धित है, तब क्या प्राप्त होता है ? पूर्वपक्षी—नियम प्राप्त होता है । जिन विद्याओंमें गति सुनी जाती है उनमें ही होनी चाहिए, क्योंकि प्रकरण नियामक है । अन्य विद्यामें न सुनी हुई गति भी यदि अन्य विद्यामें प्राप्त हो तो श्रुति आदिमें प्रामाण्यकी हानि होगी, कारण कि सबमें सर्वार्थवत्त्व प्रसङ्ग होगा । और अर्चिरादि एक ही गति उपकोसलविद्या और पञ्चाग्निविद्यामें समानरूपसे जैसे पढ़ी जाती है, वह यदि सब विद्याओंके लिए हो तो पुनर्वचन अनर्थक हो जायगा, इसलिए गतिका नियम है । सि०—ऐसा प्राप्त होनेपर कहते हैं—अनियम है । यह देवयान नामक गति अभ्युदय प्राप्ति फलवाली समस्त सगुण विद्याओंमें समानरूपसे होनी चाहिए । परन्तु अनियमको स्वीकार करनेपर प्रकरणका विरोध कहा गया है ? यह विरोध नहीं है, क्योंकि इसमें शब्द और अनुमान-श्रुति और स्मृति हैं, ऐसा अर्थ है । जैसे कि

### सत्यानन्दी-दीपिका

* जो प्रकरणके बलसे गतिका नियम कहा गया है, वह श्रुति और स्मृतिसे बाधित है, क्योंकि श्रुति प्रकरणसे बलवती है। इसलिए समस्त सगुण उपासनाओंमें समानरूपसे गति होनी चाहिए । 'ये चेमेऽरण्ये०' इस श्रुति वाक्यमें लक्षणाकी गई है, इससे श्रद्धा और तप अन्य सगुण उपासनाके उपलक्षक हैं।

चेमेऽरण्ये श्रद्धा तप इत्युपासते' ( छा० ५।१०।१ ) इति विद्यान्तरशीलिनामपि पञ्चाग्निविद्याविद्भिः समानमार्गतां गमयति। कथं पुनरवगम्यते विद्यान्तरशीलिनामियं गतिरिति ? ननु श्रद्धातपः परायणानामेव स्यात्, तन्मात्रश्रवणात्। नैष दोषः, नहि केवलाभ्यां श्रद्धातपोभ्यामन्तरेण विद्याबलमेषा गतिर्लभ्यते, 'विद्यया तदारोहन्ति यत्र कामाः परागताः। न तत्र दक्षिणा यन्ति नाविद्वांसस्तपस्विनः' इति श्रुत्यन्तरात्। तस्मादिह श्रद्धातपोभ्यां विद्यान्तरोपलक्षणम्। ❀ वाजसनेयिनस्तु पञ्चाग्निविद्याधिकारेऽधीयते—'य एवमेतद्विदुर्ये चामी अरण्यं श्रद्धां सत्यमुपासते' (बृ० ६।२।१५) इति। तत्र श्रद्धालवो ये सत्यं ब्रह्मोपासत इति व्याख्येयम्, सत्यशब्दस्य ब्रह्मण्यसकृत्प्रयुक्तत्वात्। पञ्चाग्निविद्याविदां चेत्थंवित्तयैवोपात्तत्वाद्विद्यान्तरपरायणानामेवैतदुपादानं न्याय्यम्। 'अथ य एतौ पन्थानौ न विदुस्ते कीटाः पतङ्गा यदिदं दन्दशूकम्' (बृह ६।२।१६) इति च मार्गद्वयभ्रष्टानां कष्टामधोगतिं गमयन्ती श्रुतिर्देवयानपितृयाणयोरेवैनानन्तर्भावयति। तत्रापि विद्याविशेषादेषां देवयानप्रतिपत्तिः। स्मृतिरपि 'शुक्लकृष्णे गती ह्येते जगतः शाश्वते मते। एकया यात्यनावृत्तिमन्य-

---

'तद्य इत्थं विदुः०' ( वहाँ इस लोकके प्रति उत्थित हुए अधिकारी गृहस्थोंमें जो इस प्रकार पञ्चाग्निको जानते हैं) यह श्रुति पञ्चाग्नि विद्याके उपासकोंके लिए देवयान पथका अवतरण करती हुई 'ये चेमे०' ( और जो अरण्यसे उपलक्षित वैखानस और परिव्राजक श्रद्धा और तपसे उपलक्षित ब्रह्मका ध्यान करते हैं ) अन्य विद्याके अनुशीलन करनेवालोंका भी पञ्चाग्निविद्या जाननेवालोंके समान मार्ग ज्ञान कराती है। परन्तु यह कैसे अवगत हो कि अन्य विद्याका अनुशीलन करनेवालोंकी यह गति है ? परन्तु श्रद्धा और तपमें संलग्न अरण्यवासियों को ही यह गति प्राप्त होनी चाहिए, क्योंकि केवल उनका श्रवण है। यह दोष नहीं है, कारण कि विद्याबलके विना केवल श्रद्धा और तपसे यह गति प्राप्त नहीं होती, क्योंकि 'विद्यया तदारोहन्ति०' ( विद्यासे-उपासनासे उस ब्रह्मलोकको प्राप्त करते हैं, जहाँ जानेवालेकी कामनाएँ निवृत्त-शान्त हो जाती हैं, वहाँ दक्षिण मार्गसे उपलक्षित केवल कर्मी नहीं जाते और अविद्वान्-उपासना रहित तपस्वी भी नहीं जाते ) यह अन्य श्रुति है। इससे ज्ञात होता है कि यहाँ श्रद्धा और तपसे अन्य विद्याओंका उपलक्षण है। वाजसनेयी तो पञ्चाग्निविद्याके प्रकरणमें 'य एवमेतद्विदुः०' ( वे जो गृहस्थ इस प्रकार इस पञ्चाग्निविद्याको जानते हैं तथा जो संन्यासी अथवा वानप्रस्थ श्रद्धा युक्त होकर सत्यकी उपासना करते हैं ) ऐसा कहते हैं। वहाँ जो श्रद्धालु सत्य ब्रह्मकी उपासना करते हैं, ऐसा व्याख्यान करना चाहिए, क्योंकि सत्य शब्द ब्रह्ममें अनेकवार प्रयुक्त हुआ है। पञ्चाग्निविद्याविदोंका 'य इत्थं विदुः' इस वाक्यसे 'इत्थंवित्त्व' ( इस प्रकार जाननेवाला ) रूपसे ग्रहण होनेके कारण अन्य विद्यामें संलग्न उपासकोंका यह ग्रहण युक्त है। और 'अथ य एतौ०' ( और जो उत्तर और दक्षिण दोनों मार्गोंको नहीं जानते अर्थात् देवयान एवं दक्षिण मार्गके साधन भूत ब्रह्मोपासना अथवा कर्मका अनुष्ठान नहीं करते वे कीट, पतङ्ग और सर्प आदि होते हैं ) यह श्रुति दोनों मार्गोंसे भ्रष्ट हुए लोगोंको दुःखदायक अधोगतिका बोध कराती हुई देवयान और पितृयानमें ही इन उपासकोंका अन्तर्भाव करती है। उनमें भी उपासना विशेषसे इन उपासकोंको देवयानकी प्राप्ति होती है। और

## सत्यानन्दी-दीपिका

❀ तत् तत् स्थलमें मार्ग श्रुति प्रतिदिन मार्ग ध्यानके लिए है, क्योंकि प्रकरणसे मार्ग ध्यान उपासनाका अङ्ग कहा गया है। जिनमें मार्ग श्रुति नहीं है वे मार्ग ध्यानके विना भी विद्याकी सामर्थ्यसे अर्चिरादि मार्ग प्राप्त करते हैं। यह सूचित करनेके लिए 'पुनः' कथन है। इसलिए देवयानमार्गकी प्रतीकसे भिन्न सम्पूर्ण उपासनाओंमें समानरूपसे प्राप्ति होती है। पूर्वपक्षमें पूर्वके समान गतिका नियम है, सिद्धान्तमें गतिका अनियम है ॥ ३१ ॥

याऽऽवर्तते पुनः' (भ० गी० ८।२६) इति। यत्पुनर्देवयानस्य पथो द्विराम्नानमुपकोसलविद्यायां पञ्चाग्निविद्यायां च, तदुभयत्राप्यनुचिन्तनार्थम्। तस्मादनियमः ॥३१॥

( १९ यावदधिकाराधिकरणम्। सू० ३२ )

## यावदधिकारमवस्थितिराधिकारिकाणाम् ॥ ३२ ॥

पदच्छेद—यावदधिकारम्, अवस्थितिः, आधिकारिकाणाम्।

सूत्रार्थ—( आधिकारकाणाम् ) लोक व्यवस्थाके हेतुभूत अधिकारोंमें विनियुक्त, यथार्थज्ञानसे क्षीण कर्मवाले अपान्तरतमा आदि तत्त्वज्ञानियोंकी ( यावदधिकारम् ) प्रारब्धकर्मों तक ( अवस्थितिः ) अवस्थिति है।

*विदुषो वर्तमानदेहपातानन्तरं देहान्तरमुत्पद्यते न वेति चिन्त्यते। ननु विद्यायाः साधनभूतायाः संपत्तौ कैवल्यनिर्वृत्तिः स्यान्न वेति नेयं चिन्तोपपद्यते, नहि पाकसाधनसंपत्तावोदनो भवेन्न वेति चिन्ता संभवति, नापि भुञ्जानस्तृप्येन्न वेति चिन्त्यते, उपपन्ना त्वियं चिन्ता, ब्रह्मविदामपि केषांचिदितिहासपुराणयोर्देहान्तरोत्पत्तिदर्शनात्। तथाहि—अपान्तरतमा नाम वेदाचार्यः पुराणर्षिर्विष्णुनियोगात्कलिद्वापरयोः संधौ कृष्णद्वैपायनः संबभूवेति स्मरन्ति। वसिष्ठश्च ब्रह्मणो मानसः पुत्रः सन्निमिशापादपगतपूर्वदेहः पुनर्ब्रह्मादेशान्मित्रावरुणाभ्यां संबभूवेति। भृग्वादीनामपि ब्रह्मण एव मानसपुत्राणां वारुणे यज्ञे पुनरुत्पत्तिः श्रूयते। सनत्कुमारोऽपि ब्रह्मण एव मानसः पुत्रः स्वयं रुद्राय वरप्रदानात्स्कन्दत्वेन प्रादुर्बभूव। एवमेव दक्षनारदप्रभृतीनां भूयसी देहान्तरोत्पत्तिः

---

'शुक्लकृष्णे०' ( उपासना और कर्मके अधिकारी जनोंके लिए देवयान और पितृयान मार्ग सनातन माने गये हैं। इनमें एकके द्वारा गया हुआ परम गतिको प्राप्त होता है और दूसरे द्वारा गया हुआ जन्म मृत्युको प्राप्त होता है ) ऐसी स्मृति भी है। देवयान मार्गका उपकोसलविद्या और पञ्चाग्निविद्यामें जो दो वार कथन है वह दोनों विद्याओंमें ध्यानके लिए है, अतः गतिका अनियम है ॥ ३१ ॥

विद्वान्‌का वर्तमान शरीर पात होनेपर दूसरा शरीर उत्पन्न होता है कि नहीं ? इसप्रकार विचार किया जाता है। परन्तु साधनभूत विद्याकी प्राप्ति होनेपर मोक्ष निष्पन्न होता है कि नहीं, यह विचार उत्पन्न नहीं होता, क्योंकि पाककी साधन सम्पत्ति होनेपर ओदन पाक होगा कि नहीं, ऐसा विचार नहीं हो सकता, और भोजन करनेवाला तृप्त होगा कि नहीं, ऐसा भी विचार नहीं किया जाता। किन्तु यह विचार तो युक्त है, क्योंकि कुछ ब्रह्मवेत्ताओंकी भी अन्य शरीरकी उत्पत्ति इतिहास और पुराणमें देखनेमें आती है। जैसे कि अपान्तरतमा नामके वेदाचार्य पुराण ऋषि विष्णुके आदेशसे कलि और द्वापुरकी सन्धिमें कृष्णद्वैपायनरूपमें उत्पन्न हुए, ऐसा स्मृतिकार कहते हैं। और वशिष्ठ ब्रह्माके मानस पुत्र होते हुए निमिके शापसे पूर्व देहका त्यागकर ब्रह्माकी आज्ञासे फिर मित्रा और वरुणसे उत्पन्न हुए। इसीप्रकार ब्रह्माके मानस पुत्र भृगु आदिकी भी वरुणके यज्ञमें पुनः उत्पत्ति सुनी जाती है। ब्रह्माके मानस पुत्र सनत्कुमार भी स्वयं रुद्रको वरदान देनेके कारण कार्तिकेयरूपसे उत्पन्न हुए। इसीप्रकार दक्ष, नारद आदिकी तत् तत् निमित्तसे अनेक शरीरोंकी उत्पत्ति स्मृतिमें कही जाती है। और श्रुति ( वेद ) में भी मन्त्र और अर्थवादमें प्रायः ऐसा

### सत्यानन्दी-दीपिका

* 'मेधातिथेर्मेष' इस मन्त्रमें इन्द्रका मेषरूपसे जन्म उपलब्ध होता है। 'वसिष्ठ उर्वशी पुत्रो जातः' ( वसिष्ठ उर्वशीका पुत्र उत्पन्न हुआ ) यह सामवेदका अर्थवाद है। इसप्रकार मोक्ष ज्ञानका फल न होनेसे ब्रह्मलोक प्राप्तिरूप फल सगुणविद्या फलके समान होनेके कारण अर्चिरादि मार्गका उपसंहार पूर्वपक्षमें फल है, सिद्धान्तमें उपर्युक्त व्यवस्थाकी सिद्धि फल है।

कथ्यते तेन तेन निमित्तेन स्मृतौ। श्रुतावपि मन्त्रार्थवादयोः प्रायेणोपलभ्यते। ते च केचित्पतिते पूर्वदेहे देहान्तरमाददते, केचित्तु स्थित एव तस्मिन्योगैश्वर्यवशादनेकदेहादानन्यायेन। सर्वे चैते समधिगतसकलवेदार्थाः स्मर्यन्ते। तदेतेषां देहान्तरोत्पत्तिदर्शनात्प्राप्तं ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्वमहेतुत्वं वेति। अत उत्तरमुच्यते—न, तेषामपान्तरतमः प्रभृतीनां वेदप्रवर्तनादिषु लोकस्थितिहेतुष्वधिकारेषु नियुक्तानामधिकारतन्त्रत्वात्स्थितेः। यथाऽसौ भगवान्सविता सहस्रयुगपर्यन्तं जगतोऽधिकारं चरित्वा तदवसान उदयास्तमयवर्जितं कैवल्यमनुभवति—'अथ तत ऊर्ध्वं उदेत्य नैवोदेता नास्तमेतैकल एव मध्ये स्थाता' ( छा० ३।११।१ ) इति श्रुतेः, यथा च वर्तमाना ब्रह्मविद आरब्धभोगक्षये कैवल्यमनुभवन्ति, 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' ( छा० ६।१४।२ ) इति श्रुतेः, एवमपान्तरतमःप्रभृतयोऽपीश्वरेण तेषु तेष्वधिकारेषु नियुक्ताः सन्तः सत्यपि सम्यग्दर्शने कैवल्यहेतावक्षीणकर्माणो यावदधिकारमवतिष्ठन्ते, तदवसाने चापवृज्यन्त इत्यविरुद्धम्। सकृत्प्रवृत्तमेव हि ते फलदानाय कर्माशयमतिवाहयन्तः स्वातन्त्र्येणैव गृहादिव गृहान्तरमन्यमन्यं देहं संचरन्तः स्वाधिकारनिर्वर्तनायापरिमुषितस्मृतय एव देहेन्द्रियप्रकृतिवशित्वान्निर्माय देहान्युगपत्क्रमेण वाऽधितिष्ठन्ति। न चैते जातीस्मरा इत्युच्यन्ते, 'त एवैते' इति स्मृतिप्रसिद्धेः। यथा हि सुलभा नाम ब्रह्मवादिनी जनकेन विवदितुकामा व्युदस्य स्वं देहं जानकं देहमाविश्य, व्युद्य तेन, पश्चात्स्वमेव देहमाविवेशेति स्मर्यते। यदि ह्युपयुक्ते सकृत्प्रवृत्ते कर्मणि कर्मान्तरं देहान्तरारम्भकारणमाविर्भवेत्त-

---

उपलब्ध होता है। कई एक तो वे पूर्वदेहके पात होनेपर अन्य देह ग्रहण करते हैं, और कई एक तो उस देहके विद्यमान होते ही योग ऐश्वर्य बलसे अनेक अन्य शरीर धारण-न्यायसे अन्य शरीरका ग्रहण करते हैं। और वे सब समधिगत सकल वेद अर्थवाले सम्यक् ज्ञाता स्मरण किये जाते हैं। इसलिए इनकी देहान्तरोत्पत्तिके दर्शन होनेसे ब्रह्मविद्या मोक्षकी पाक्षिक हेतु है अथवा अहेतु है, ऐसा प्राप्त होता है। सिद्धान्ती—इससे उत्तर कहा जाता है—नहीं, लोक स्थितिके हेतुभूत वेदप्रवर्तन आदि अधिकारोंमें नियुक्त इन अपान्तरतमा आदिकी अवस्थिति अधिकारके अधीन है। जैसे यह भगवान् सूर्य सहस्र युग पर्यन्त जगत्का अधिकार चलाकर उसकी समाप्ति होनेपर उदय और अस्तसे रहित कैवल्यका अनुभव करते हैं, क्योंकि 'अथ तत ऊर्ध्वं०' ( प्राणियोंके न होनेपर प्रारब्ध कर्म क्षीण होनेपर केवल ब्रह्मस्वरूप हो न उदित ही होगा और न अस्त ही होगा केवल मध्यमें-अपनेमें ही स्थिर रहेगा ) ऐसी श्रुति है। और जैसे वर्तमान ब्रह्मवेत्ता प्रारब्धकर्मोंके भोगके क्षय होनेपर कैवल्यका अनुभव करते हैं, क्योंकि 'तस्य तावदेव०' ( उसके मोक्षमें उतना ही विलम्ब है जब तक कि वह देह बन्धन-लिङ्ग शरीरसे मुक्त नहीं होता, उसके पश्चात् वह सत्सम्पन्न-ब्रह्मको प्राप्त हो जाता है ) यह श्रुति है। वैसे ही ईश्वर द्वारा तत् तत् अधिकारोंमें नियुक्त होते हुए अपान्तरतमा आदि ईश्वर कैवल्यके हेतुभूत तत्त्वज्ञानके होनेपर भी कर्मोंके क्षीण न होनेतक अधिकारमें रहते हैं और कर्मोंके क्षीण होनेपर मुक्त हो जाते हैं, इसमें कोई विरोध नहीं है, क्योंकि अधिकारका फल देनेके लिए एक बार प्रवृत्त हुए कर्माशयको समाप्त करते हुए एक घरसे दूसरे घरके समान स्वतन्त्रतासे ही अन्य अन्य देहमें संचार करते हुए अपने अधिकारको सम्पन्न करनेके लिए पूर्व स्मृतिका लोप हुए बिना ही देह, इन्द्रियोंकी प्रकृति ( स्वभाव ) को अपने अधीन कर युगपत् अथवा क्रमसे अनेक देहोंका निर्माणकर उसमें अधिष्ठित होते हैं। वे जातिस्मर नहीं कहे जाते, क्योंकि 'त एवैते०' ( ये वे ही हैं ) ऐसा स्मृतिमें प्रसिद्ध है। जैसे 'सुलभा नामकी ब्रह्मवादिनी जनकके साथ विवादकी कामनासे अपने देहका त्यागकर जनकके शरीरमें प्रवेशकर उसके साथ विवादकर पश्चात् अपने ही शरीरमें प्रवेश किया' ऐसी स्मृति है। यदि एक बार प्रवृत्त हुए उपयुक्त कर्ममें दूसरे देहकी उत्पत्तिके

तोऽन्यदप्यदग्धबीजं कर्मान्तरं तद्वदेव प्रसज्येतेति ब्रह्मविद्यायाः पाक्षिकं मोक्षहेतुत्वमहेतुत्वं वा शङ्क्येत, नत्वियमाशङ्कायुक्ता, ज्ञानात्कर्मबीजदाहस्य श्रुतिस्मृतिप्रसिद्धत्वात्। ❀ तथाहि श्रुतिः—'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे परावरे' (मुण्ड० २।२।८) इति। 'स्मृतिलम्भे सर्वग्रन्थीनां विप्रमोक्षः' (छा० ७।२६।२) इति चैवमाद्या। स्मृतिरपि—'यथैधांसि समिद्धोऽग्निर्भस्मसात्कुरुतेऽर्जुन। ज्ञानाग्निः सर्वकर्माणि भस्मसात्कुरुते तथा' ( भ० गी० ४।३७ ) इति, 'बीजान्यग्न्युपदग्धानि न रोहन्ति यथा पुनः। ज्ञानदग्धैस्तथा क्लेशैर्नात्मा संपद्यते पुनः' इति चैवमाद्या। न चाविद्यादिक्लेशदाहे सति क्लेशबीजस्य कर्माशयस्यैकदेशदाह एकदेशप्ररोहश्चेत्युपपद्यते, नह्यग्निदग्धस्य शालिबीजस्यैकदेशप्ररोहो दृश्यते। ❀ प्रवृत्तफलस्य तु कर्माशयस्य मुक्तेषोरिव वेगक्षयान्निवृत्तिः, 'तस्य तावदेव चिरम्' (छा० ६।१४।२) इति शरीरपातावधिक्षेपकरणात्। तस्मादुपपन्ना यावदधिकारमाधिकारिकाणामवस्थितिः। नच ज्ञानफलस्यानैकान्तिकता। तथा च श्रुतिरविशेषेणैव सर्वेषां ज्ञानान्मोक्षं दर्शयति—'तद्यो यो देवानां प्रत्यबुध्यत स एव तदभवत्तथर्षीणां तथा मनुष्याणाम्' ( बृह० १।४।१० ) इति। ज्ञानान्तरेषु चैश्वर्यादिफलेष्वासक्ताः स्युर्महर्षयः ते पश्चादैश्वर्यक्षयदर्शनेन निर्विण्णाः परमात्मज्ञाने परिनिष्ठाः कैवल्यं प्रापुरित्युपपद्यते—'ब्रह्मणा सह ते सर्वे संप्राप्ते प्रतिसंचरे। परस्यान्ते कृतात्मानः प्रविशन्ति परं पदम्'

---

कारणभूत अन्य कर्मका आविर्भाव हो तो अन्य भी जिसका बीज दग्ध नहीं हुआ है ऐसा कर्मान्तर उसीप्रकार प्रसक्त होगा। इससे ब्रह्मविद्या-पाक्षिक मोक्षका हेतु है अथवा अहेतु है, ऐसी आशङ्का होगी। परन्तु यह आशङ्का युक्त नहीं है, क्योंकि ज्ञानसे कर्म बीजका दाह श्रुति और स्मृतिमें प्रसिद्ध है। जैसे 'भिद्यते हृदयग्रन्थिः०' ( कार्य-कारणरूपसे उस परब्रह्मका साक्षात्कार होनेपर इस जीवकी हृदय ग्रन्थि जड़-चेतन और उनके धर्मोंके तादात्म्याध्यासरूप गांठ टूट जाती है, आत्मविषयक सब संशय नष्ट हो जाते हैं और इसके सब कर्म क्षीण हो जाते हैं ) और 'स्मृतिलम्भे०' (तथा स्मृति—'मैं ब्रह्म हूँ' की प्राप्ति होनेपर सम्पूर्ण ग्रन्थियोंकी निवृत्ति हो जाती है) इत्यादि श्रुति है। और 'यथैधांसि०' ( हे अर्जुन ! जैसे प्रज्वलित अग्नि इन्धनको भस्ममयकर देती है, वैसे ही ज्ञान सम्पूर्ण कर्मोंको भस्ममय-निर्बीज कर देता है ) और 'बीजान्यग्न्युपदग्धानि०' ( जैसे अग्निसे भूने गये बीज फिर नहीं उगते, वैसे ही ज्ञानाग्निसे दग्ध हुए क्लेशोंसे पुनः शरीर उत्पन्न नहीं होता ) इत्यादि स्मृति भी है। उसीप्रकार अविद्या आदि क्लेशोंके दाह होनेपर क्लेशके बीज कर्माशयके एक देशका दाह हो और एक देशका प्ररोह हो, यह उपपन्न नहीं होता। अग्निसे दग्ध शाली बीजके एक देशका प्ररोह नहीं देखा जाता। जैसे छोड़े हुए बाणकी निवृत्ति वेग क्षय होनेसे होती है, वैसे प्रवृत्त फलवाले कर्माशयकी निवृत्ति भी वेगक्षय ( भोगक्षय ) होनेपर होती है। क्योंकि 'तस्य तावदेव चिरम्०' ( उसे तभी तक विलम्ब है ) इसप्रकार शरीर पात पर्यन्त विलम्ब होता है, इसलिए अधिकार पर्यन्त आधिकारियोंकी अवस्थिति उपपन्न है। ज्ञानके फलमें व्यभिचार नहीं है, क्योंकि 'तद्यो यो०' ( उसे देवोंमें से जिस-जिसने जाना वही तद्रूप हो गया। इसीप्रकार ऋषियों और मनुष्योंमें से भी जिसने उसे जाना वह तद्रूप-ब्रह्मरूप हो गया ) यह श्रुति समानरूपसे सबका ज्ञानसे मोक्ष दिखलाती है। ऐश्वर्य आदि फलको देनेवाली अन्य उपासनाओंमें महर्षि लोग आसक्त हुए, अनन्तर वे ऐश्वर्य क्षय दर्शनसे विरक्त होकर परमात्माके ज्ञानमें पूर्णरूपसे निष्ठावान् होकर कैवल्यको प्राप्त हुए, ऐसा उपपन्न है, क्योंकि

### सत्यानन्दी-दीपिका

❀ अज्ञानके दो अंश हैं—एक आवरण और दूसरा विक्षेप। आवरण तो ज्ञानसे निवृत्त हो जाता है, जैसे प्रकाशसे अन्धकार। दूसरा विक्षेप—प्रारब्धकर्म, वह भोगसे क्षय होता है। इसलिए ज्ञान होनेपर भी प्रारब्ध जन्य शरीर रहता है, अतः ज्ञानके मोक्षरूप फलमें व्यभिचार नहीं है।

इति स्मरणात्। ॐ प्रत्यक्षफलत्वाच्च ज्ञानस्य फलविरहाशङ्कानुपपत्तिः। कर्मफले हि स्वर्गादावनुभवानारूढे स्यादाशङ्का भवेद्वा न वेति। अनुभवारूढं तु ज्ञानफलम्, 'यत्साक्षादपरोक्षाद्ब्रह्म' (बृ० ३।४।१) इति श्रुतेः, 'तत्त्वमसि' (६।८।७) इति च सिद्धवदुपदेशात्। नहि 'तत्त्वमसि' इत्यस्य वाक्यस्यार्थस्तत्त्वं मृतो भविष्यसीत्येवं परिणेतुं शक्यः। 'तद्धैतत्पश्यन्नृषिर्वामदेवः प्रतिपेदेऽहं मनुरभवं सूर्यश्च' (बृह० १।४।१०) इति च सम्यग्दर्शनकालमेव तत्फलं सर्वात्मत्वं दर्शयति। तस्मादैकान्तिकी विदुषः कैवल्यसिद्धिः॥ ३२॥

( २० अक्षरध्यधिकरणम्। सू० ३३ )

## अक्षरधियां त्ववरोधः सामान्यतद्भावाभ्यामौपसदवत्तदुक्तम्॥ ३३॥

पदच्छेद—अक्षरधियाम्, तु, अवरोधः, सामान्यतद्भावाभ्याम्, औपसदवत्, तत्, उक्तम्।

सूत्रार्थ—( अक्षरधियाम् ) ब्रह्म विषयक विशेष प्रतिषेधक सब बुद्धियोंका सर्वत्र (अवरोधः) उपसंहार होना चाहिए, ( सामान्यतद्भावाभ्याम् ) क्योंकि द्वैत निरसन द्वारा ब्रह्म प्रतिपादन प्रकार सर्वत्र समान है और वही प्रतिपाद्य ब्रह्म सर्वत्र एकरूपसे प्रत्यभिज्ञात होता है। ( औपसदवत् ) जैसे उपसद इष्टि मन्त्र सर्वत्र समान हैं ( तदुक्तम् ) यह जैमिनीय सूत्रमें कहा गया है।

ॐ वाजसनेयके श्रूयते—'एतद्वै तदक्षरं गार्गि ब्राह्मणा अभिवदन्त्यस्थूलमनण्वह्रस्वमदीर्घमलोहितमस्नेहम्' (बृह० ३।८।८) इत्यादि। तथाऽऽथर्वणे श्रूयते—'अथ परा यया तदक्षरमधि-

---

'ब्रह्मणा सह ते०' ( महाप्रलय प्राप्त होनेपर और पर-हिरण्यगर्भका अन्त होनेपर विमल अन्तःकरणवाले ज्ञानी ब्रह्माके साथ ब्रह्मस्वरूपको प्राप्त होते हैं ) ऐसी स्मृति-कूर्मपुराण है। प्रत्यक्ष फलवाला होनेसे ज्ञानमें फल अभावकी आशङ्का नहीं हो सकती। परन्तु अनुभवमें न आनेवाला कर्म-फल स्वर्ग आदिमें 'होगा कि नहीं' ऐसी आशङ्का हो सकती है। ज्ञानका फल तो अनुभवमें आरूढ है अर्थात् सिद्ध है, क्योंकि 'यत्साक्षादपरोक्षाद्ब्रह्म' ( जो साक्षात् अपरोक्ष ब्रह्म है ) ऐसी श्रुति है, और 'तत्त्वमसि' इसप्रकार सिद्धवत् उपदेश है। 'तत्त्वमसि' इस वाक्यका अर्थ 'वह तू मृत होगा' इसप्रकार परिणित नहीं किया जा सकता। 'तद्धैतत्' ( उसे आत्मरूपसे अनुभव करते हुए ऋषि वामदेवने जाना—मैं मनु हुआ और सूर्य भी ) यह श्रुति तत्त्वज्ञान कालमें ही उसका फल सर्वात्मत्व दिखलाती है। इसलिए विद्वान्‌की कैवल्य सिद्धि अव्यभिचरित है॥ ३२॥

वाजसनेयकमें 'एतद्वैतदक्षरम्०' ( याज्ञवल्क्य-हे गार्गी! जो तुमने मुझसे पूछा कि आकाश किसमें ओत-प्रोत है, वह यह है, ब्रह्मवेत्ता तो उस तत्त्वको अक्षर कहते हैं, वह अस्थूल, अनणु, अह्रस्व, अदीर्घ, अलोहित और अस्नेह है) इत्यादि श्रुति कहती है। उसी प्रकार आथर्वणमें 'अथ परा०'

### सत्यानन्दी-दीपिका

* 'तत्त्वमसि' ( तत्-तस्य, त्वम्, असि-भविष्यसि' तू उपासना करके मरणानन्तर उस ब्रह्मका होगा ) इस श्रुति वाक्यका यह अर्थ नहीं हो सकता, क्योंकि वर्तमानकालके उपदेशमें भविष्यत्‌का और जीवित दशामें मरणका अध्याहार अयुक्त है और कल्पना गौरव भी है। इसलिए 'तत्त्वमसि' 'अहंब्रह्मास्मि' इत्यादि वेदान्तवाक्योंसे आत्मज्ञानके उत्पत्तिकालमें ही विद्वान्‌को सर्वात्मभाव फल प्राप्त होता है। अतः निर्गुणविद्यामें सगुण विद्याके समान अर्चिरादि मार्गका उपसंहार नहीं है॥ ३२॥

ॐ इस अधिकरणमें अक्षर ब्रह्मकी प्रमिति करानेवाले निषेध शब्द विषय हैं, उन श्रुतियोंमें जहाँपर जितने निषेधोंका श्रवण है वे सम्पूर्ण द्वैतका निषेध कर सकते हैं कि नहीं? इस प्रकार संभव और असंभव होनेके कारण 'तासाम्' इत्यादिसे संशय कहते हैं। पूर्वपक्षमें लाघव फल है अर्थात् उन निषेध शब्दोंकी तत्-तत् शाखामें व्यवस्था है, सिद्धान्तमें दोनों दोषोंका अभाव फल है, क्योंकि यदि श्रुत निषेध शब्दोंसे अश्रुत निषेध शब्द भी लक्ष्य हों, तो लक्षणा प्रसक्त होगी, यदि ये लक्ष्य न हों

गम्यते यत्तदद्रेश्यमग्राह्यमगोत्रमवर्णम्' (मु० १।१।५) इत्यादि, तथैवान्यत्रापि विशेषनिराकरणद्वारेणाक्षरं परं ब्रह्म श्राव्यते। तत्र च कचित्केचिदतिरिक्ता विशेषाः प्रतिषिध्यन्ते। तासां विशेषप्रतिषेधबुद्धीनां किं सर्वासां सर्वत्र प्राप्तिरुत व्यवस्थेति संशये, श्रुतिविभागाद्व्यवस्थाप्राप्तावुच्यते—अक्षरविषयास्तु विशेषप्रतिषेधबुद्धयः सर्वाः सर्वत्रावरोद्धव्याः सामान्यतद्भावाभ्याम्—समानो हि सर्वत्र विशेषनिराकरणरूपो ब्रह्मप्रतिपादनप्रकारः। तदेव च सर्वत्र प्रतिपाद्यं ब्रह्माभिन्नं प्रत्यभिज्ञायते। तत्र किमित्यन्यत्र कृता बुद्धयोऽन्यत्र न स्युः? तथा च 'आनन्दादयः प्रधानस्य' (ब्रह्मसूत्र ३।३।११) इत्यत्र व्याख्यातम्। तत्र विधिरूपाणि विशेषणानि चिन्तितानीह प्रतिषेधरूपाणीति विशेषः। प्रपञ्चार्थश्चायं चिन्ताभेदः। * औपसदवदिति निदर्शनम्। यथा जामदग्न्येऽहीने पुरोडाशिनीषूपसत्सु चोदितासु पुरोडाशप्रदानमन्त्राणाम् 'अग्नेर्वेहोंत्रं वेरध्वरम्' इत्येवमादीनामुद्गातृवेदोत्पन्नानामप्यध्वर्युभिरभिसंबन्धो भवति, अध्वर्युकर्तृकत्वात्पुरोडाशप्रदानस्य प्रधानतन्त्रत्वाच्चाङ्गानाम्।

---

(तथा जिससे वह अक्षर परमात्मा अधिगत होता है, वह परा विद्या है। वह जो अद्रेश्य—सब बुद्धि इन्द्रियोंका अविषय, अग्राह्य-कर्मेन्द्रियोंका अविषय, अगोत्र-अनन्वय और अवर्ण है) इत्यादि श्रुति कहती है। इसी प्रकार अन्य शाखामें भी विशेष निराकरण द्वारा अक्षर पर ब्रह्मका श्रवण कराया जाता है। उनमें कहींपर कुछ अतिरिक्त-अधिक विशेषोंका प्रतिषेध होता है। क्या उन विशेष प्रतिषेधक बुद्धियोंकी सर्वत्र प्राप्ति है अथवा व्यवस्था है, ऐसा संशय होनेपर श्रुतियोंके विभागसे निषेध बुद्धियोंकी तत्-तत् शाखामें व्यवस्था प्राप्त होनेपर कहा जाता है—अक्षर विषयक सब विशेष प्रतिषेधक बुद्धियोंका सर्वत्र उपसंहार होना चाहिए, क्योंकि सामान्य और तद्भाव है। विशेष निराकरणात्मक ब्रह्मका प्रतिपादन प्रकार सर्वत्र समान है। और वही प्रतिपाद्य ब्रह्म सर्वत्र अभिन्नरूपसे प्रत्यभिज्ञात होता है। वहाँ एक शाखामें की गई बुद्धियाँ अन्य शाखामें क्यों नहीं होनी चाहिए। उसी प्रकार 'आनन्दादयः प्रधानस्य' इस सूत्रमें व्याख्यान किया गया है। उसमें विधि रूप विशेषणोंका विचार किया गया है और यहाँ निषेधरूप विशेषणोंका विचार किया जाता है, इतना इन दोनों अधिकरणोंमें विशेष (भेद) है। और यह पुनः किये जानेवाला विचार विशेष उसीके विस्तारके लिए है। औपसदके समान। यह दृष्टान्त है। जैसे जमदग्नि द्वारा किये गये अहीन ( चार दिनमें अनुष्ठित अहीन नामक सोमयाग में पुरोडाश युक्त उपसद इष्टियोंका विधान होनेपर 'अग्नेर्वेहोंत्रं वेरध्वरम्' ( देवताओंका होत्र और अध्वर कर्म अग्निसे ही सम्पन्न होते हैं ) इत्यादि उद्गाताके वेदमें उत्पन्न हुए पुरोडाश प्रदान मन्त्रोंका भी अध्वर्युके साथ सम्बन्ध होता है, क्योंकि पुरोडाश प्रदान अध्वर्यु कर्तृक होता है और अङ्ग प्रधानके अधीन होते हैं। वैसे ही यहाँ भी अक्षरके अधीन होनेसे जहाँ कहींपर भी उत्पन्न हुए उसके विशेषणोंका सर्वत्र अक्षरके साथ सम्बन्ध है, ऐसा अर्थ है। वह प्रथम काण्डमें 'गुणमुख्य-

## सत्यानन्दी-दीपिका

तो सम्पूर्ण द्वैतका निषेध असिद्ध होनेसे निर्विशेष ब्रह्मज्ञानका अभाव दोष होगा, अतः एक शाखागत निषेध वाक्योंका अन्य शाखागत विषेध वाक्योंके साथ एक वाक्यता होनेसे उपसंहार युक्त है।

* जमदग्निः पुष्टिकामश्चतूरात्रेणायजत' ( पुष्टिकी कामनावाले जमदग्निने चार दिनमें अनुष्ठित अहीन नामक सोम याग किया ) जमदग्निकृत होनेसे इस यज्ञका नाम भी जामदग्न्यहीन पड़ा है। उसमें 'पुरोडाशिन्य उपसदो भवन्ति' इससे पुरोडाश साध्य उपसद इष्टियोंका तैत्तिरीयमें विधान है, इन इष्टियोंका कर्ता अध्वर्यु है, अतः 'अग्नेर्वेहोंत्रं वेरध्वरम्' इत्यादि सामवेदमें उत्पन्न हुए मन्त्रोंका इन उपसद् इष्टियोंमें विनियोग होनेसे अध्वर्युसे ही उनका प्रयोग होना चाहिए, उद्गातासे नहीं। मन्त्रोंका सामवेदमें उत्पन्न होनेसे उद्गातासे प्रयोग हो और विनियोग विधिसे अध्वर्युसे प्रयोग हो

एवमिहाप्यक्षरतन्त्रत्वात्तद्विशेषणानां यत्र कचिदप्युत्पन्नानामक्षरेण सर्वत्राभिसंबन्ध इत्यर्थः। तदुक्तं प्रथमे काण्डे—'गुणमुख्यव्यतिक्रमे तदर्थत्वान्मुख्येन वेदसंयोगः' ( जै० सू० ३।३।८ ) इत्यत्र ॥ ३३ ॥

( २१ इयदधिकरणम्। सू० ३४ )

## इयदामननात् ॥ ३४ ॥

सूत्रार्थ—विद्या एक ही है, क्योंकि 'द्वा सुपर्णा' और 'ऋतं पिबन्तौ' इन दोनों मन्त्रोंमें भी इयत्तासे परिच्छिन्न वेद्य एक ही है।

* द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते। तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्न्यो अभिचाकशीति' ( मु० ३।१।१ ) इत्यध्यात्माधिकारे मन्त्रमाथर्वणिकाः श्वेताश्वतराश्च पठन्ति। तथा कठाः 'ऋतं पिबन्तौ सुकृतस्य लोके गुहां प्रविष्टौ परमे परार्धे। छायातपौ ब्रह्मविदो वदन्ति पञ्चाग्नयो ये च त्रिणाचिकेताः' (क० ३।१) इति। किमत्र विद्यैकत्वमुत विद्यानानात्वमिति संशयः। किं तावत्प्राप्तम् ? विद्यानानात्वमिति। कुतः ? विशेषदर्शनात्। द्वा सुपर्णेत्यत्र ह्येकस्य भोक्तृत्वं दृश्यते एकस्य चाभोक्तृत्वं दृश्यते। 'ऋतं पिबन्तौ' इत्यत्रोभयोरपि भोक्तृत्वमेव दृश्यते तद्वेद्यरूपं भिद्यमानं विद्यां भिन्द्यादित्येवं प्राप्ते ब्रवीति—विद्यैकत्वमिति।

---

व्यतिक्रमे०' ( गुण और मुख्यका विरोध होनेपर मन्त्रात्मक वेदका मुख्य-बलवत्तर अध्वर्युके साथ संप्रयोग है, क्योंकि उत्पत्ति विधि विनियोगके लिए होती है ) यहाँपर कहा गया है ॥ ३३ ॥

'द्वा सुपर्णा०' ( सुन्दर पंखवाले नियम्यनियामक भाववाले सर्वदा साथ ही रहनेवाले, सखा-समान आख्यानवाले दो पक्षी शरीर नामक समान-एक वृक्षका आश्रयकर रहते हैं उनमेंसे एक तो क्षेत्रज्ञ स्वादिष्ट कर्मफलका भोग करता है और दूसरा भोग न कर केवल साक्षीरूपसे देखता रहता है ) इसप्रकार अध्यात्मप्रकरणमें आथर्वणिक और श्वेताश्वतर मन्त्र पढ़ते हैं। और 'ऋतं पिबन्तौ०' ( ब्रह्मवेत्ता कहते हैं कि शरीरमें बुद्धिरूप गुहाके भीतर प्रकृष्ट ब्रह्म स्थानमें प्रविष्ट हुए अपने कर्म-फलको भोगनेवाले छाया और आतपके समान परस्पर विलक्षण दो [ तत्त्व ] हैं। यही बात जिन्होंने तीन वार नाचिकेताग्निका चयन किया है वे पञ्चाग्निकी उपासना करनेवाले भी कहते हैं ) इसप्रकार कठ शाखावाले कहते हैं। क्या यहाँपर विद्या एक है अथवा नाना है, ऐसा संशय होता है, तब क्या प्राप्त होता है ? पूर्वपक्षी—विद्या नाना है। किससे ? इससे कि विशेषका दर्शन है। 'द्वा सुपर्णा' यहाँ एकमें भोक्तृत्व देखा जाता है और दूसरेमें अभोक्तृत्व देखा जाता है। और 'ऋतं पिबन्तौ' इसमें दोनोंमें भी भोक्तृत्व ही देखा जाता है। इसलिए वेद्यका रूप भिन्न होता हुआ विद्याको भिन्न करेगा। सिद्धान्ती—ऐसा प्राप्त होनेपर कहते हैं—विद्या एक है, किससे ? इससे कि दोनों इन

### सत्यानन्दी-दीपिका

इसप्रकार गुण और मुख्यका विरोध होनेपर मुख्य-बलवत्तर अध्वर्युके साथ मन्त्रात्मक वेदका संप्रयोग है, क्योंकि उत्पत्ति विधि विनियोगके लिए होती है, यह सूत्रका अर्थ है। सामवेदीय मन्त्र उत्पत्तिपरक हैं और उनका विनियोग यजुर्वेदमें है, अतः उत्पद्यमान विनियुज्यमानके लिए होता है, इससे उनका अध्वर्युसे ही संप्रयोग होना युक्त है। अधिक शाबरभाष्यमें देखना चाहिए ॥ ३३ ॥

* इन दोनों मन्त्रोंमें प्रतिपादनका प्रकार भिन्न है और ज्ञेय एक मान होता है, अतः 'किम्' इत्यादिसे संशय कहते हैं। 'ऋतं पिबन्तौ' इस ऋतपान वाक्यमें 'अक्षरं ब्रह्म यत्परम्' (कठ० १।३।२) ( जो परम अक्षर ब्रह्म है ) इन गुणोंका श्रवण है। और 'द्वा सुपर्णा' इस सुपर्णवाक्यमें अनुपभोग आदि धर्म हैं। पूर्वपक्षमें इन धर्मोंका परस्पर अनुपसंहार फल है, सिद्धान्तमें धर्मोंका उपसंहार माननेपर ब्रह्मस्वरूप प्रतिपादक वाक्योंका एक अर्थ होनेसे उपसंहार है ॥ ३४ ॥

कुतः ? यत उभयोरप्यनयोर्मन्त्रयोरियत्तापरिच्छिन्नं द्वित्वोपेतं वेद्यरूपमभिन्नमामनन्ति। ननु दर्शितो रूपभेदः—नेत्युच्यते, उभावप्येतौ मन्त्रौ जीवद्वितीयमीश्वरं प्रतिपादयतः, नार्थान्तरम्। 'द्वा सुपर्णा' इत्यत्र तावत् 'अनश्नन्नन्यो अभिचाकशीति' इत्यशनायाद्यतीतः परमात्मा प्रतिपाद्यते। वाक्यशेषेऽपि च स एव प्रतिपाद्यमानो दृश्यते। 'जुष्टं यदा पश्यत्यन्यमीशमस्य महिमानम्' ( श्वे० ४।७ ) इति। 'ऋतं पिबन्तौ' इत्यत्र तु जीवे पिबत्यशनायाद्यतीतः परमात्मापि साहचर्याच्छत्रिन्यायेन पिबतीत्युपचर्यते, परमात्मप्रकरणं ह्येतत्—'अन्यत्र धर्मादन्यत्राधर्मात्' (क० २।१४) इत्युपक्रमात्। तद्विषय एव चात्रापि वाक्यशेषो भवति—'यः सेतुरीजानानामक्षरं ब्रह्म यत्परम्' ( क० ३।२ ) इति। 'गुहां प्रविष्टावात्मानौ हि' ( ब्रह्मसूत्र १।२।११) इत्यत्र चैतत्प्रपञ्चितम्। तस्मान्नास्ति वेद्यभेदस्तस्माच्च विद्यैकत्वम्। अपि च त्रिष्वप्येतेषु वेदान्तेषु पौर्वापर्यालोचने परमात्मविद्यैवावगम्यते। तादात्म्यविवक्षयैव जीवोपादानं नार्थान्तरविवक्षया। नच परमात्मविद्यायां भेदाभेदविचारावतारोऽस्तीत्युक्तम्। तस्मात्प्रपञ्चार्थ एवैष योगः। तस्माच्चाधिकधर्मोपसंहार इति ॥ ३४ ॥

( २२ अन्तराधिकरणम्। सू० ३५-३६ )

## अन्तरा भूतग्रामवत्स्वात्मनः ॥ ३५ ॥

पदच्छेद—अन्तरा, भूतग्रामवत्, स्वात्मनः।

सूत्रार्थ—'यत्साक्षादपरोक्षाद् ब्रह्म' 'य आत्मा सर्वान्तरः' इन दोनों श्रुतियोंमें भी (स्वात्मनः) स्वात्माके ( अन्तरा ) सर्वान्तरत्वका कथन है। इससे विद्या एक ही है। ( भूतग्रामवत् ) जैसे भूतसमुदायमें एक ही सर्वान्तर आत्मा प्रतिपादित है।

* 'यत्साक्षादपरोक्षाद्ब्रह्म' 'य आत्मा सर्वान्तरः' (बृह० ३।४।१-३।५।१) इत्येवं द्विरुषस्तकहोलप्रश्नयोर्नैरन्तर्येण वाजसनेयिनः समामनन्ति। तत्र संशयः—विद्यैकत्वं वा स्याद्विद्या-

---

मन्त्रोंमें भी इयत्तासे परिच्छिन्न, द्वित्व युक्त वेद्यरूप अभिन्न ही कहते हैं। परन्तु रूपका भेद दिखलाया गया है ? नहीं, ऐसा कहते हैं—ये दोनों मन्त्र भी जीव और द्वितीय ईश्वरका प्रतिपादन करते हैं, भिन्न अर्थका नहीं। 'द्वा सुपर्णा' इस मन्त्रमें तो 'अनश्नन्नन्यो अभिचाकशीति' बुभुक्षा आदिसे अतीत परमात्माका प्रतिपादन होता है, और 'जुष्टं यदा०' ( जब अनेक योगमार्गोंसे सेवित और देह आदिसे भिन्न परमात्मा और उसकी महिमाको देखता है उस समय शोक रहित हो जाता है ) इस वाक्यशेषमें भी वही परमात्मा प्रतिपाद्यमान देखा जाता है। 'ऋतं पिबन्तौ' इस मन्त्रमें तो जीवके पान करनेपर भूख आदिसे अतीत परमात्मा भी साहचर्यसे छत्रिन्यायसे पान करता है, ऐसा उपचार होता है, क्योंकि 'अन्यत्र धर्माद०' ( शास्त्रीय धर्मानुष्ठान तथा उसके फल, कर्ता, करण आदिसे पृथक् है, अधर्मसे पृथक् है ) इस उपक्रमसे यह परमात्माका प्रकरण है। आथर्वणिक आदि वाक्यके समान यहां भी 'यः सेतुरीजानानामक्षरम्' ( जो यजन करनेवालोंके लिए सेतुके समान है, जो अक्षर परब्रह्म है ) यह वाक्यशेष परमात्मविषयक ही है। 'गुहा प्रविष्टावात्मानौ हि' इस सूत्रमें इस विषयका विस्तार पूर्वक विचार किया गया है। इसीसे वेद्यका भेद नहीं है और इससे विद्या एक है। किञ्च पूर्वापरका विचार करनेपर इन तीनों (आथर्वणिक, श्वेताश्वतर और काठक) वेदान्तोंमें परमात्मविद्या ही अवगत होती है और जीवका ग्रहण तो तादात्म्यविवक्षासे है अन्य अर्थकी विवक्षासे नहीं है। इससे परमात्मविद्यामें भेद अथवा अभेदके विचार करनेका अवतरण नहीं है, ऐसा कहा जा चुका है। इसलिए यह सूत्र विस्तारके लिए ही है और इससे अधिक धर्मोंका उपसंहार है ॥ ३४ ॥

'यत्साक्षादपरोक्षाद्ब्रह्म' ( जो साक्षात् अपरोक्ष ब्रह्म है ) 'य आत्मा सर्वान्तरः' ( जो आत्मा

नानात्वं वेति ? विद्यानानात्वमिति तावत्प्राप्तम्, अभ्याससामर्थ्यात्। अन्यथा ह्यन्यूनानतिरिक्तार्थे द्विराम्नानमनर्थकमेव स्यात्। तस्माद्यथाऽभ्यासात्कर्मभेद एवमभ्यासाद्विद्याभेद इत्येवं प्राप्ते प्रत्याह—अन्तराम्नानाविशेषात्स्वात्मनो विद्यैकत्वमिति। सर्वान्तरो हि स्वात्मोभयत्राप्यविशिष्टः पृच्छ्यते च प्रत्युच्यते च। न हि द्वावात्मानावेकस्मिन्देहे सर्वान्तरौ संभवतः। तदा ह्येकस्याञ्जसं सर्वान्तरत्वमवकल्प्येत, एकस्य तु भूतग्रामवन्नैव सर्वान्तरत्वं स्यात्। यथा च पञ्चभूतसमूहे देहे पृथिव्या आपोऽन्तरा अद्भ्यस्तेजोऽन्तरमिति सत्यप्यापेक्षिकेऽन्तरत्वे नैव मुख्यं सर्वान्तरत्वं भवति, तथेहापीत्यर्थः। अथवा—भूतग्रामवदिति श्रुत्यन्तरं निदर्शयति। यथा—'एको देवः सर्वभूतेषु गूढः सर्वव्यापी सर्वभूतान्तरात्मा' ( श्वे० ६।११ ) इत्यस्मिन्मन्त्रे समस्तेषु भूतग्रामेष्वेक एव सर्वान्तर आत्माम्नायते, एवमनयोरपि ब्राह्मणयोरित्यर्थः। तस्माद्वेद्यैक्याद्विद्यैकत्वमिति ॥ ३५ ॥

## अन्यथा भेदानुपपत्तिरिति चेन्नोपदेशान्तरवत् ॥ ३६ ॥

पदच्छेद—अन्यथा, भेदानुपपत्तिः, इति, चेत्, न, उपदेशान्तरवत्।

सूत्रार्थ—( अन्यथा ) यदि विद्याका भेद न माना जाय, तो ( भेदानुपपत्तिः ) श्रुतिभेद अनुपपन्न होता है, ( इति चेन्न ) ऐसा यदि कहो तो युक्त नहीं है, क्योंकि ( उपदेशान्तरवत् ) जैसे छान्दोग्यमें 'तत्त्वमसि' इसका नौ वार अभ्यास होनेपर भी विद्याभेद और अनुपपत्ति नहीं है, वैसे प्रकृतमें भी समझना चाहिए।

---

सर्वान्तर है ) इसप्रकार उषस्त और कहोलके दो वार प्रश्नोंमें नैरन्तर्यसे वाजसनेयी कहते हैं। यहां संशय होता है कि विद्या एक है अथवा विद्या नाना है ? पूर्वपक्षी—विद्याएँ अनेक हैं, ऐसा प्राप्त होता है, क्योंकि अभ्यासकी सामर्थ्य है। अन्यथा न्यूनता और अधिकतासे रहित अर्थमें दो वार कथन निरर्थक होगा। इससे जैसे 'यजति' पदके अभ्याससे कर्मका भेद है, वैसे ही अभ्याससे विद्याका भेद है। सिद्धान्ती—ऐसा प्राप्त होनेपर निराकरण करते हैं—स्वात्मामें सर्वान्तरत्व दोनों श्रुतियोंमें समानरूपसे कहा गया है, अतः विद्या एक है, क्योंकि सबके आभ्यन्तर स्वात्माके विषयमें दोनों स्थलोंमें भी समानरूपसे प्रश्न और प्रतिवचन है। एक देहमें दो आत्माओंका सर्वान्तरत्व संभव नहीं है, यदि एकका कहो तो सर्वान्तरत्व मुख्यरूपसे हो सकता है और दूसरेका भूतग्रामके समान सर्वान्तरत्व नहीं होगा। जैसे पांच भूतोंके समूहदेहमें पृथिवीसे जल आभ्यन्तर है और जलसे तेज आन्तर है इसप्रकार आपेक्षिक आन्तरत्व होनेपर भी उनमें मुख्य सर्वान्तरत्व नहीं है, वैसे यहां भी समझना चाहिए, ऐसा अर्थ है। अथवा भूतग्रामवत् अन्य श्रुतिका दृष्टान्त कहते हैं—जैसे 'एको देवः०' ( सम्पूर्ण प्राणियोंमें स्थित एक देव है, वह सर्वव्यापक और समस्त भूतोंका अन्तरात्मा है ) इस मन्त्रमें समस्त भूत समुदायमें एक ही सर्वान्तर आत्मा कहा जाता है, वैसे इन दोनों ब्राह्मणोंमें भी एक ही आत्माका सर्वान्तरत्व है, ऐसा अर्थ है। इसलिए वेद्यके एक होनेसे विद्या भी एक है ॥ ३५ ॥

### सत्यानन्दी-दीपिका

* 'यत्साक्षादपरोक्षाद्ब्रह्म य आत्मा सर्वान्तरस्तं मे व्याचक्ष्व' ( बृह० ३।४।१ ) इसप्रकार उषस्त चाक्रायणने याज्ञवल्क्यसे प्रश्न किया उसके उत्तरमें याज्ञवल्क्यने प्राण आदिके प्रेरक सबके साक्षी आत्माका प्रतिपादन किया, और 'यदेव साक्षादपरोक्षाद्ब्रह्म' (बृह० ३।५।१) इसतरह कहोलके प्रश्नके उत्तरमें याज्ञवल्क्यने भूख आदिसे अतीत ब्रह्मका प्रतिपादन किया है। इसप्रकार इन दोनों ब्राह्मणोंमें प्रश्न आदिके अभ्याससे और सर्वान्तरके प्रत्यभिज्ञानसे एक विद्या है अथवा अनेक ? इस प्रकार संशय होनेपर पूर्वपक्षमें अनेक विद्याएँ हैं, क्योंकि 'समिधो यजति' 'स्वाहाकारं यजति' जैसे यहां 'यजति' के अभ्याससे

अथ यदुक्तम्—अनभ्युपगम्यमाने विद्याभेद आम्नानभेदानुपपत्तिरिति, तत्परिहर्तव्यम्। अत्रोच्यते—नायं दोषः, उपदेशान्तरवदुपपत्तेः। यथा ताण्डिनामुपनिषदि षष्ठे प्रपाठके 'स आत्मा तत्त्वमसि श्वेतकेतो' (छा० ६।८।७) इति नवकृत्वोऽप्युपदेशो न विद्याभेदो भवत्येवमिहापि भविष्यति। कथं च नवकृत्वोऽप्युपदेशे विद्याभेदो न भवति? उपक्रमोपसंहाराभ्यामेकार्थतावगमात्, 'भूय एव मा भगवान्विज्ञापयतु' (छा० ६।८।७) इति चैकस्यैवार्थस्य पुनः पुनः प्रतिपिपादयिषितव्यत्वेनोपक्षेपात्, आशङ्कान्तरनिराकरणेन चासकृदुपदेशोपपत्तेः। एवमिहापि प्रश्नरूपाभेदात् 'अतोऽन्यदार्तम्' (बृह० ३।४।२-३।५।१) इति च परिसमाप्त्यविशेषादुपक्रमोपसंहारौ तावदेकार्थविषयौ दृश्येते। 'यदेव साक्षादपरोक्षाद्ब्रह्म' (बृह० ३।५।१) इति द्वितीये प्रश्न एवकारं प्रयुञ्जानः पूर्वप्रश्नगतमेवार्थमुत्तरत्रानुकृष्यमाणं दर्शयति। पूर्वस्मिंश्च ब्राह्मणे कार्यकरणव्यतिरिक्तस्यात्मनः सद्भावः कथ्यते, उत्तरस्मिंस्तु तस्यैवाशनायादिसंसारधर्मातीतत्वं कथ्यते, इत्येकार्थतोपपत्तिः। तस्मादेका विद्येति ॥ ३६ ॥

( २३ व्यतिहाराधिकरणम्। सू० ३७ )

## व्यतिहारो विशिंषन्ति हीतरवत् ॥ ३७ ॥

पदच्छेद—व्यतिहारः, विशिंषन्ति, हि, इतरवत्।

सूत्रार्थ—( इतरवत् ) सर्वात्मत्व आदि गुणोंके समान ( व्यतिहारः ) यह व्यतिहार भी उपासनाके लिए कहा गया है, ( हि ) क्योंकि श्रुतिको कहनेवाले 'त्वं वा अहमस्मि' इस प्रकार उभयका निर्देशकर ( विशिंषन्ति ) उन्हें विशिष्ट करते हैं।

* तथा—'तद्योऽहं सोऽसौ योऽसौ सोऽहम्' इत्यादित्यपुरुषं प्रकृत्यैतरेयिणः समा-

---

जो यह कहा गया है कि विद्याभेद स्वीकार न करनेपर मन्त्रोंके भेदकी अनुपपत्ति होती है, उसका परिहार करना चाहिए। इसपर कहते हैं—यह दोष नहीं है, क्योंकि अन्य उपदेशके समान उपपत्ति होती है। जैसे ताण्डियोंके उपनिषद्के छठे अध्यायमें 'स आत्मा तत्त्वमसि' ( वह आत्मा है, श्वेतकेतु ! वह तू है ) इसप्रकार पिता उद्दालक द्वारा नौ बार उपदेश किये जानेपर भी विद्याका भेद नहीं है, वैसे यहाँ भी होगा। परन्तु नौ बार उपदेश किये जानेपर भी विद्याका भेद क्यों नहीं होता? इससे नहीं होता कि उपक्रम और उपसंहारसे एक अर्थ अवगत होता है। 'भूय एव०' ( हे भगवन् ? आप मुझे फिर समझाइये ) इसप्रकार एक ही अर्थकी पुनः पुनः प्रतिपादनकी इच्छाका विषय होनेसे और अन्य आशङ्काके निवारणसे वार-वार उपदेश उपपन्न होता है, अतः विद्याका भेद नहीं होता। वैसे ही यहाँ भी प्रश्नरूपके अभेद होनेसे विद्याका भेद नहीं है। 'अतोऽन्यदार्तम्' ( उस आत्मासे भिन्न विनाशी है ) इसप्रकार परिसमाप्तिका भी एकरूप होनेसे उपक्रम और उपसंहार एकार्थविषयक देखनेमें आते हैं। 'यदेव साक्षादपरोक्षाद्ब्रह्म' इसप्रकार द्वितीय प्रश्नमें भी 'एव' का प्रयोग करनेवाले ऋषि पूर्वप्रश्नगत अर्थका उत्तर प्रश्नमें अनुकर्षणकर दिखलाते हैं। पूर्व ब्राह्मणमें कार्य-करणसे भिन्न आत्माका अस्तित्व कहा जाता है और उत्तर ब्राह्मणमें उसको ही भूख आदि संसार धर्मोंसे अतीत कहा जाता है, इसप्रकार एकार्थता उपपन्न होती है, इससे एक विद्या है ॥ ३६ ॥

जैसे 'तद्योऽहं०' ( जो मैं हूँ वही आदित्य मण्डलस्थ पुरुष है और जो वह है वह मैं हूँ ) इस

### सत्यानन्दी-दीपिका

कर्मका भेद है, वैसे आत्माके अभ्याससे यहाँ विद्यामें भेद है। इसलिए इनके परस्पर धर्मोंका अनुपसंहार है, सिद्धान्तमें इनके धर्मोंका परस्पर उपसंहार है। सिद्धान्ती—एक विद्या है, क्योंकि दोनों ब्राह्मणोंमें प्रश्न और प्रतिवचन एक आत्मविषयक है। इसलिए वेद्य एक होनेसे विद्या भी एक है ॥ ३५ ॥

मनन्ति, तथा जाबालाः—'त्वं वा अहमस्मि भगवो देवतेऽहं वै त्वमसि' इति। तत्र संशयः—किमिह व्यतिहारेणोभयरूपा मतिः कर्तव्योतैकरूपैवेति ? एकरूपैवेति तावदाह। न ह्यत्रात्मन ईश्वरेणैकत्वं मुक्त्वाऽन्यत्किञ्चिच्चिन्तयितव्यमस्ति। यदि चैवं चिन्तयितव्यो विशेष परिकल्प्येत, संसारिणश्चेश्वरात्मत्वमीश्वरस्य संसार्यात्मत्वमिति। तत्र संसारिणस्तावदीश्वरात्मत्वे उत्कर्षो भवेत्, ईश्वरस्य तु संसार्यात्मत्वे निकर्षः कृतः स्यात्, तस्मादैकरूप्यमेव मतेः। व्यतिहाराम्नायस्त्वेकत्वदृढीकारार्थ इति। ॐ एवं प्राप्ते प्रत्याह—व्यतिहारोऽयमाध्यानायाम्नायते, इतरवत्। यथेतरे गुणाः सर्वात्मत्वप्रभृतय आध्यानायाम्नायन्ते, तद्वत्। तथा हि विशिंषन्ति समाम्नातार उभयोच्चारणेन 'त्वमहमस्म्यहं च त्वमसि' इति। तच्चोभयरूपायां मतौ कर्तव्यायामर्थवद्भवति। अन्यथा हीदं विशेषेणोभयाम्नानमनर्थकं स्यात्, एकेनैव कृतत्वात्। ननूभयाम्नानस्यार्थविशेषे परिकल्प्यमाने देवतायाः संसार्यात्मत्वापत्तेर्निकर्षः प्रसज्येतेत्युक्तम्—नैष दोषः, ऐकात्म्यस्यैवानेन प्रकारेणानुचिन्त्यमानत्वात्। नन्वेवं सति स एवैकत्वदृढीकार आपद्येत। न वयमेकत्वदृढीकारं वारयामः। किं तर्हि ? व्यतिहारेणेह द्विरूपा मतिः कर्तव्या, वचनप्रामाण्यात्, नैकरूपे-

---

प्रकार आदित्य पुरुषको प्रस्तुतकर ऐतरेयशाखावाले कहते हैं, और 'त्वं वा०' ( हे देवता ! तू ही मैं हूँ और मैं ही तू है ) इस प्रकार जाबाल कहते हैं। यहाँ संशय होता है कि क्या यहाँ व्यतिहार ( विशेषणविशेष्यभाव ) से उभयरूप मति करनी चाहिए अथवा एकरूप ही ? पूर्वपक्षी—कहते हैं—एकरूप ही मति करनी चाहिए, क्योंकि इस व्यतिहारमें आत्माका ईश्वरके साथ एकत्वके बिना अन्य कुछ भी चिन्तनीय नहीं है। यदि जीवको ईश्वररूपता और ईश्वरमें जीवरूपता इस प्रकार चिन्तन योग्य विशेषकी कल्पनाकी जाय तो संसारी जीवको ईश्वरात्मत्व होनेपर उसका उत्कर्ष होगा और ईश्वरको जीवात्मत्व स्वीकार करनेपर उसका अपकर्ष होगा, इसलिए मति एकरूप ही है। 'त्वं वा' यह व्यतिहार श्रुति तो एकत्वको दृढ करनेके लिए है। सिद्धान्ती—ऐसा प्राप्त होनेपर निराकरण करते हैं—यह व्यतिहार उपासनाके लिए कहा जाता है, अन्यके समान, जैसे सर्वात्मत्व आदि अन्य गुण उपासनाके लिए कहे गये हैं, वैसे यह व्यतिहार भी कहा गया है। क्योंकि श्रुति कहनेवाले 'त्वमहमस्म्यहं च त्वमसि' इसी प्रकार दोनोंके उच्चारणसे उन्हें इस तरह विशिष्ट करते हैं। और वह उभयोच्चारण उभयरूपसे मति करनेपर सार्थक होता है, नहीं तो इस विशेषसे उभय श्रुति अनर्थक होगी, क्योंकि एकके उच्चारणसे ही एकरूप मति सिद्ध होगी। परन्तु यह कहा गया है कि उभय श्रुतिमें अर्थ विशेषकी कल्पनाकी जानेपर देवतामें संसारी जीवात्मत्व आजानेसे अपकर्षत्व प्रसक्त होगा। यह दोष नहीं है, क्योंकि एक स्वरूपताका ही इस प्रकारसे अनुचिन्तन है। परन्तु ऐसा होनेपर वही एकत्वका

## सत्यानन्दी-दीपिका

ॐ जीव और ईश्वर दोनोंके परस्पर विशेषण-विशेष्यभावको व्यतिहार कहा जाता है। यह व्यतिहार श्रुति प्रतिपादित होनेसे और 'उत्कृष्टदृष्टिर्निकृष्टे कृता फलवती' 'निकृष्टमें की गई उत्कृष्ट दृष्टि फलवाली होती है' इस न्यायसे संशय होनेपर उक्त न्यायसे जीवमें ईश्वर बुद्धि करनी चाहिए। पूर्वपक्षमें लाघव फल है, सिद्धान्तमें उभयश्रुति सार्थक है।

सिद्धान्ती—"त्वं वा अहमस्मि भगवो देवतेऽहं वै त्वमसि" इन दोनोंका अनुवादकर इतरेतर भावका विधान होता है, अतः दोनोंमें दो प्रकारके चिन्तनका विधान किया जाता है। यदि एक बुद्धिका विधान होता तो 'तत्त्वमसि' के समान 'योऽसौ सोऽहम्' ( जो वह है वह मैं हूँ ) 'त्वमहमस्मि' इस प्रकार एक उच्चारण ही पर्याप्त था, तो पुनः 'यथोऽहं सोऽसौ' ( जो मैं हूँ सो वह है ) 'अहं त्वमसि' ( मैं तू है ) यह उच्चारण व्यर्थ होगा, अतः दोनों उच्चारणोंकी सार्थकताके लिए दो मति करनी चाहिए। संदिग्ध अर्थमें तो उक्त न्याय चरितार्थ हो सकता है, परन्तु यहाँ तो श्रुति प्रमाण है, अतः

त्येतावदुपपादयामः । फलतस्त्वेकत्वमपि दृढीभवति । यथाऽऽध्यानार्थेऽपि सत्यकामादिगुणोपदेशो तद्‌गुण ईश्वरः प्रसिद्ध्यति, तद्वत् । तस्मादयमाध्यातव्यो व्यतिहारः समाने च विषय उपसंहर्तव्यो भवतीति ॥ ३७ ॥

( २४ सत्याद्यधिकरणम् । सू० ३८ )

## सैव हि सत्यादयः ॥ ३८ ॥

पदच्छेद—सा, एव, हि, सत्यादयः ।

सूत्रार्थ—( सैव ) सत्यविद्या एक ही है, ( हि ) क्योंकि 'तद्यत्तत्सत्यम्' इसमें प्रकृत उपास्य हिरण्यगर्भका आकर्षण है, अतः विद्याका भेद नहीं है, इसलिए सभी ( सत्यादयः ) सत्य आदि गुणोंका अन्यत्र भी उपसंहार होना चाहिए ।

* 'स यो हैतं महद्यक्षं प्रथमजं वेद सत्यं ब्रह्म' (बृह० ५।४।१) इत्यादिना वाजसनेयके सत्यविद्यां सनामाक्षरोपासनां विधायानन्तरमाम्नायते–'तद्यत्तत्सत्यमसौ स आदित्यो य एष एतस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेऽक्षन्पुरुषः' (बृह० ५।५।२) इत्यादि । तत्र संशयः—किं द्वे एते सत्यविद्ये किंवैकैवेति ? द्वे इति तावत्प्राप्तम् । भेदेन हि फलसंयोगो भवति–'जयतीमाँल्लोकान्' ( बृह० ५।४।१ ) इति पुरस्तात्, 'हन्ति पाप्मानं जहाति च' (बृह० ५।५।३।४) इत्युपरिष्टात् । प्रकृताकर्षणं तूपास्यैकत्वादिति । * एवं प्राप्ते ब्रूमः–एकैवेयं सत्यविद्येति । कुतः ?

---

दृढीकरण प्रसक्त होगा । हम एकत्वके दृढीकरणका वारण नहीं करते, किन्तु यहाँ श्रुतिवचन प्रामाण्यसे व्यतिहारसे द्विरूप मति करनी चाहिए एकरूप नहीं, केवल यही हम उपपादन करते हैं । फलतः-अर्थतः तो एकत्व भी दृढ होता है । जैसे सत्यकामत्व आदि गुणोंका उपदेश आध्यानके लिए होनेपर भी उन गुणोंवाला ईश्वर प्रसिद्ध होता है, वैसे यहाँ भी समझना चाहिए । इसलिए यह व्यतिहार ध्यान करने योग्य है और समान विषयमें उपसंहार करने योग्य है ॥ ३७ ॥

'स यो हैतं०' ( जो भी इस महत्, यक्ष-पूज्य प्रथम उत्पन्न हुएको 'यह सत्य ब्रह्म है' ऐसा जानता है वह इन लोकोंको जीत लेता है ) इत्यादिसे वाजसनेयकमें नाम अक्षरको उपासनाके साथ सत्यविद्याका विधानकर अनन्तर 'तद्यत्तत्सत्यमसौ०' ( वह जो सत्य है वह यह आदित्य है । जो इस आदित्य मण्डलमें पुरुष है और जो भी यह दक्षिण नेत्रमें पुरुष है ) इत्यादि श्रुति है । उसमें संशय होता है कि क्या ये दो सत्य विद्याएँ हैं अथवा एक ही है ? पूर्वपक्षी —दो हैं, ऐसा प्राप्त होता है । क्योंकि 'जयतीमाँल्लोकान्' (वह इन लोकोंको जीत लेता है अर्थात् प्राप्त करता है) इस प्रकार पूर्वकी उपासनामें और 'हन्ति पाप्मानं०' ( जो ऐसा जानता है वह पापका नाश करता है और उसे त्याग देता है ) ऐसा अन्तिम उपासनामें फलका संयोग भिन्नरूपसे है । प्रकृतका आकर्षण तो उपास्यके एकत्वसे है । सिद्धान्ती–ऐसा प्राप्त होनेपर हम कहते हैं–यह सत्य विद्या एक ही है, किससे ? इससे कि

### सत्यानन्दी-दीपिका

अन्योन्यात्मत्वका ध्यान करना चाहिए । ब्रह्ममें मनोमयत्व आदिके समान, जीवात्मत्वका ध्यानके लिए आरोप होनेपर भी अपकर्षत्व प्रसक्त नहीं होता । जहाँ उभय मति होती है, वहाँ एकत्व अर्थसे सिद्ध होता है । इसलिए अहंग्रहोपासनामें इस व्यतिहारका उपसंहार करना चाहिए ॥ ३७ ॥

* 'सत्यम्' यह नाम 'तत्, यत्, तत्' इन तीन अक्षरोंका है । प्रथम और अन्तिम अक्षर सत्य हैं और मध्य अक्षर अनृत है । वह दोनों ओरसे सत्यके साथ संपुटित होनेसे सत्य प्रायः ही होता है, ऐसी सत्यविद्याके अङ्गरूपसे नाम अक्षरकी उपासना की गई है । जो वह पूर्वमें कहा गया हृदयाख्य है, वह पूर्वोक्त यक्षत्व आदि गुणवाला ब्रह्म है, वह आदित्य मण्डलमें अक्षिमें जो पुरुष है वह है ।

'तद्यत्तत्सत्यम्' ( बृ० ५।५।२ ) इति प्रकृताकर्षणात्। ननु विद्याभेदेपि प्रकृताकर्षणमुपास्यैकत्वादुपपद्यत इत्युक्तम्। नैतदेवम्, यत्र तु विस्पष्टात्कारणान्तराद्विद्याभेदः प्रतीयते तत्रैतदेवं स्यात्। अत्र तूभयथा संभवे तद्यत्तत्सत्यमिति प्रकृताकर्षणात्पूर्वविद्यासंबद्धमेव सत्यमुत्तरत्राकृष्यत इत्येकविद्यात्वनिश्चयः। यत्पुनरुक्तं फलान्तरश्रवणाद्विद्यान्तरमिति, अत्रोच्यते-तस्योपनिषदहरहमिति चाङ्गान्तरोपदेशस्य स्तावकमिदं फलान्तरश्रवणमित्यदोषः। अपि चार्थवादादेव फले कल्पयितव्ये सति विद्यैकत्वे चावयवेषु श्रूयमाणानि बहून्यपि फलान्यवयविन्यामेव विद्यायामुपसंहर्तव्यानि भवन्ति। तस्मात्सैवेयमेका सत्यविद्या तेन तेन विशेषेणोपेताम्नातेत्यतः सर्व एव सत्यादयो गुणा एकस्मिन्नेव प्रयोगे उपसंहर्तव्याः। ❀ केचित्पुनरस्मिन्सूत्र इदं च वाजसनेयकमक्ष्यादित्यपुरुषविषयं वाक्यम्, छान्दोग्ये च-'अथ य एषोऽन्तरादित्ये हिरण्मयः पुरुषो दृश्यते (छा० १।६।६), 'अथ य एषोऽक्षिणि पुरुषो दृश्यते ( छा० ४।१५।१ ) इत्युदाहृत्य सैवेयमक्ष्यादित्यपुरुषविषया विद्योभयत्रैकैवेति कृत्वा सत्यादीन्गुणान्वाजसनेयिभ्यश्छन्दोगानामुपसंहार्यान्मन्यन्ते। तत्र

---

'तद्यत्तत्सत्यम्' इस प्रकार प्रकृतका आकर्षण है। परन्तु ऐसा कहा गया है कि विद्याका भेद होनेपर भी प्रकृतका आकर्षण उपास्यके एक होनेसे उपपन्न होता है। किन्तु ऐसा नहीं, जहाँ तो विस्पष्ट अन्य कारण (प्रकरण) से विद्याका भेद प्रतीत होता है, वहाँ प्रकृतका आकर्षण उपास्यके एक होनेसे भले ही हो, परन्तु यहाँ तो विद्याका भेद और अभेद दोनों प्रकारोंसे संभव होनेपर 'तद्यत्तत्सत्यम्' इस प्रकारका प्रकृतका आकर्षण होनेसे पूर्व विद्यासे सम्बद्ध सत्यका ही उत्तर विद्यामें आकर्षण होता है, इससे एक विद्याका निश्चय होता है। और जो यह कहा गया है कि अन्य फलकी श्रुति होनेसे विद्याका भेद है, उसपर कहा जाता है-उसके रहस्य नाम 'अहः' और 'अहम्' इसप्रकार अन्य अङ्गके उपदेशमें यह अन्य फलका श्रवण केवल स्तुतिमात्र है, अतः दोष नहीं है। किञ्च अर्थवादसे ही फलकी कल्पना होनेपर विद्याके एकत्वमें अवयवों ( अङ्गों ) में श्रूयमाण बहुत फलोंका भी अवयविनी विद्यामें उपसंहार होना चाहिए। इसलिए वही एक सत्य विद्या तत् तत् विशेषणसे युक्त कही जाती है, अतः सत्य आदि सभी गुणोंका एक ही प्रयोगमें उपसंहार होना चाहिए। दूसरे कई टीकाकार इस सूत्रमें वाजसनेयियोंका यह वाक्य अक्षिपुरुष और आदित्यपुरुष विषयक है, और छान्दोग्यमें 'अथ य एषो०' ( तथा यह जो आदित्य मण्डलके अन्तर्गत सुवर्णमय-सा पुरुष दिखाई देता है ) 'अथ एषो०' ( जो यह अक्षिमें पुरुष दिखाई देता है ) इन दोनों वाक्योंका उदाहरण देकर वही यह अक्षिपुरुष और आदित्यपुरुष विषयक विद्या दोनों स्थलोंमें एक ही है, ऐसा मानकर वाजसनेयियोंके उपसंहार योग्य सत्य

### सत्यानन्दी-दीपिका

उसके 'अहः' और 'अहम्' दो रहस्य नाम जाननेसे पापक्षयरूप फल होता है। यहाँ पूर्ववाक्यमें और उत्तरवाक्यमें फल भिन्न-भिन्न है। इस प्रकार श्रुति प्रमाण होनेसे और पूर्व वाक्यमें जो प्रकृत है उसका उत्तर वाक्यमें आकर्षण होनेसे 'तत्र' इत्यादिसे संशय कहते हैं। पूर्वपक्षमें गुणोंकी व्यवस्थासे अनुष्ठान है, सिद्धान्तमें एक अनुष्ठान है।

* सिद्धान्ती—केवल विशेष्य ब्रह्मका आकर्षण ठीक नहीं है, क्योंकि 'तत्, यत्, तत्' इन सर्वनामोंसे पूर्वोक्त गुणोंसे युक्त ब्रह्मका आकर्षण कर आदित्यस्थान और अक्षिस्थान आदि गुणोंका विधान है। इसलिए उपास्यके एक होनेसे विद्या एक है।

❀ इसप्रकार दोनों शाखाओंमें उपक्रमके भेदसे विद्याका भेद है। इसलिए अङ्गभूत विद्यासे सत्य विद्या-हिरण्यगर्भ विद्या भिन्न होनेसे सत्य आदि गुणोंका उपसंहार नहीं है, यह एक देशीका आशय है। सिद्धान्त तो पूर्वमें कहा गया है॥ ३८॥

साधु लक्ष्यते, छान्दोग्ये हि ज्योतिष्टोमकर्मसंबन्धिनीयमुद्गीथव्यपाश्रया विद्या विज्ञायते। तत्र ह्यादिमध्यावसानेषु हि कर्मसंबन्धिचिह्नानि भवन्ति 'इयमेवर्गग्निः साम' (छा० १।६।८) इत्युपक्रमे, 'तस्यर्क्च साम च गेष्णौ तस्मादुद्गीथः' (छा० १।६।८) इति मध्ये, 'य एवंविद्वान्साम गायति' ( छा० १।७।९ ) इत्युपसंहारे। नैवं वाजसनेयके किंचित्कर्मसंबन्धि चिह्नमस्ति। तत्र प्रक्रमभेदाद्विद्याभेदे सति गुणव्यवस्थैव युक्तेति ॥ ३८ ॥

( २५ कामाद्यधिकरणम् । सू० ३९ )

## कामादीतरत्र तत्र चायतनादिभ्यः ॥ ३९ ॥

**पदच्छेद**—कामादि, इतरत्र, तत्र, च, आयतनादिभ्यः।

**सूत्रार्थ**—( कामादि ) सत्यकामत्व आदि गुण समूहका ( इतरत्र ) अन्यत्र-बृहदारण्यकमें सर्व वशित्व आदि गुण समूहका भी ( तत्र ) छान्दोग्यमें उपसंहार होना चाहिए, ( आयतनादिभ्यः ) क्योंकि उन दोनोंमें आयतन आदि समान हैं।

'अथ यदिदमस्मिन्ब्रह्मपुरे दहरं पुण्डरीकं वेश्म दहरोऽस्मिन्नन्तराकाशः' (छा० ८।१।१) इति प्रस्तुत्य छन्दोगा अधीयते—'एष आत्माऽपहतपाप्मा विजरो विमृत्युर्विशोको विजिघत्सोऽपिपासः सत्यकामः सत्यसंकल्पः' ( छा० ८।१।५ ) इत्यादि। तथा वाजसनेयिनः—'स वा एष महानज आत्मा योऽयं विज्ञानमयः प्राणेषु य एषोऽन्तर्हृदय आकाशस्तस्मिञ्छेते सर्वस्य वशी' (बृह० ४।४।२२) इत्यादि। तत्र विद्यैकत्वं परस्परगुणयोगश्च, किं वा नेति संशये विद्यैकत्वमिति। तत्रेदमुच्यते—कामादीति सत्यकामादीत्यर्थः। यथा देवदत्तो दत्तः, सत्यभामा भामेति। यदेतच्छान्दोग्ये हृदयाकाशस्य सत्यकामत्वादिगुणजातमुपलभ्यते, तदितरत्र वाजसनेयके 'स वा एष महाजन आत्मा' इत्यत्र संबध्यते, यच्च वाजसनेयके वशित्वाद्युपलभ्यते तदपीतरत्र

---

आदि गुणोंका छन्दोगोंको उपसंहार करना चाहिए, ऐसा मानते हैं। परन्तु यह ठीक ज्ञात नहीं होता, क्योंकि छान्दोग्यमें ज्योतिष्टोम कर्म सम्बन्धी यह उद्गीथाश्रित विद्या ज्ञात होती है, कारण कि उसमें आदि, मध्य और अन्तमें कर्म सम्बन्धी चिह्न है—'इयमेवर्गग्निः सामः' ( यह पृथिवी ऋक् और अग्नि साम है ) यह उपक्रममें, 'तस्यर्क्च०' ( ऋक् और साम उसके पर्व हैं, इसीसे वह देव उद्गीथरूप है) यह मध्यमें और 'य एवं विद्वान्०' ( जो इसप्रकार जाननेवाला होकर साम गान करता है ) इसप्रकार उपसंहारमें है। किन्तु इसप्रकार वाजसनेयकमें कोई कर्म सम्बन्धी चिह्न नहीं है। इसलिए यहाँ उपक्रमके भेदसे विद्याका भेद होनेपर गुणोंकी व्यवस्था ही युक्त है ॥ ३८ ॥

'अथ यदिदम०' ( अब इस ब्रह्मपुरके भीतर जो यह सूक्ष्म कमलाकार स्थान है, इसमें जो सूक्ष्म आकाश है ) इसप्रकार उपक्रम कर छन्दोग 'एष आत्मा०' ( यह आत्मा धर्माधर्मसे शून्य, जराहीन, मृत्युरहित, शोकातीत, भोजनेच्छारहित, पिपासा रहित, सत्यकाम और सत्यसङ्कल्प है ) इत्यादि पाठ करते हैं। उसीप्रकार वाजसनेयी 'स वा एष महानज०' ( वह यह महान् अजन्मा आत्मा जो यह प्राणोंमें विज्ञानमय है, जो यह हृदयमें आकाश है उसमें शयन करता है, वह सबको वशमें रखनेवाला है ) इत्यादि अध्ययन करते हैं। उनमें विद्याका एकत्व और परस्पर गुणोंका योग-उपसंहार है अथवा नहीं ? ऐसा संशय होनेपर विद्या एक है, यह सिद्धान्त है। उसपर यह कहते हैं—'कामादि' सत्यकाम आदि, ऐसा अर्थ है। जैसे कि 'देवदत्त' 'दत्त' कहा जाता है और सत्यभामा भामा कही जाती है। छान्दोग्यमें हृदयाकाशके जो यह सत्यकामत्व आदि गुण समूह उपलब्ध होता है वह अन्यत्र 'स वा एष महानज आत्मा' इस वाजसनेयकमें सम्बद्ध होता है और जो वाजसनेयकमें वशित्व आदि गुण समूह उपलब्ध होता है वह भी अन्यत्र-छान्दोग्यमें 'य आत्माऽपहतपाप्मा' यहाँ

छान्दोग्ये 'एष आत्माऽपहतपाप्मा' (छा० ८।१।५) इत्यत्र संबध्यते। कुतः ? आयतनादिसामान्यात्। समानं ह्युभयत्रापि हृदयमायतनं समानश्च वेद्य ईश्वरः समानं च तस्य लोकासंभेदप्रयोजनमित्येवमादि बहु सामान्यं दृश्यते। ननु विशेषोऽपि दृश्यते छान्दोग्ये हृदयाकाशस्य गुणयोगो वाजसनेयके त्वाकाशाश्रयस्य ब्रह्मण इति। न। 'दहर उत्तरेभ्यः' (ब्रह्मसूत्र १।३।१४) इत्यत्र छान्दोग्येऽप्याकाशशब्दं ब्रह्मैवेति प्रतिष्ठापितत्वात्। अयं त्वत्र विद्यते विशेषः—सगुणा हि ब्रह्मविद्या छान्दोग्य उपदिश्यते, 'अथ य इहात्मानमनुविद्य व्रजन्त्येतांश्च सत्यान्कामान्' ( छा० ८।१।६ ) इत्यात्मवत्कामानामपि वेद्यत्वश्रवणात्। वाजसनेयके तु निर्गुणमेव परं ब्रह्मोपदिश्यमानं दृश्यते, 'अत ऊर्ध्वं विमोक्षाय ब्रूहि' ( बृह० ४।३।१४ ), 'असङ्गो ह्ययं पुरुषः' ( बृह० ४।३।१५ ) इत्यादिप्रश्नप्रतिवचनसमन्वयात्। वशित्वादि तु तत्स्तुत्यर्थमेव गुणजातं वाजसनेयके संकीर्त्यते। तथा चोपरिष्टात् 'स एष नेति नेत्यात्मा' ( बृह० ३।९।२६ ) इत्यादिना निर्गुणमेव ब्रह्मोपसंहरति। गुणवतस्तु ब्रह्मण एकत्वाद्विभूतिप्रदर्शनायायं गुणोपसंहारः सूत्रितो नोपासनायेति द्रष्टव्यम् ॥ ३९ ॥

( २६ आदराधिकरणम्। सू० ४०-४१ )

## आदरादलोपः ॥ ४० ॥

पदच्छेद—आदरात्, अलोपः।

सूत्रार्थ—भोजनका लोप होनेपर भी अग्निहोत्रका ( अलोपः ) लोप नहीं है, ( आदरात् ) क्योंकि 'पूर्वोऽतिथिभ्योऽश्नीयात्' इत्यादि जाबाल श्रुतिने प्राणाग्नि होत्रका आदर किया है।

छान्दोग्ये वैश्वानरविद्यां प्रकृत्य श्रूयते—'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयं स यां प्रथमामाहुतिं जुहुयात्तां जुहुयात्प्राणाय स्वाहा' ( छा० ५।१९।१ ) इत्यादि। तत्र पञ्च प्राणाहुतयो विहिताः, तासु च परस्तादग्निहोत्रशब्दः प्रयुक्तः—'य एतदेवं विद्वानग्निहोत्रं जुहोति' ( छा०

---

सम्बन्धित होता है, किससे? इससेकि दोनोंमें आयतन आदि समान हैं। दोनों शाखाओंमें हृदय स्थान समान ही है, वेद्य ईश्वर समान है और लोक मर्यादाके असंकर प्रयोजनवाला उसका सेतुत्व समान है, इत्यादि बहुत सामान्य देखा जाता है। परन्तु विशेष भी दिखाई देता है—छन्दोग्यमें हृदयाकाशमें गुणोंका योग है और वाजसनेयकमें आकाशके आश्रय ब्रह्ममें गुणोंका योग है। ऐसा नहीं, क्योंकि 'दहर उत्तरेभ्यः' इस सूत्रमें छान्दोग्यमें भी आकाशशब्द ब्रह्म वाचक ही है, ऐसा सिद्धान्त प्रतिष्ठापित किया गया है। परन्तु यहाँ यह विशेष विद्यमान है—छान्दोग्यमें सगुण ब्रह्मविद्या उपदिष्ट है—'अथ य०' ( जो यहाँ आत्मको और सत्यकामोंको जानकर परलोक जाते हैं ) इसप्रकार आत्माके समान सत्यकामोंमें वेद्यत्वका श्रवण है। वाजसनेयकमें तो 'अत ऊर्ध्वं०' ( अब आगे मुझे मोक्षके लिए उपदेश कीजिए ) 'असङ्गो ह्ययं पुरुषः' ( यह पुरुष असङ्ग है ) इत्यादि प्रश्न और प्रतिवचनके समन्वयसे निर्गुण परब्रह्म ही उपदिश्यमान दिखाई देता है। इसलिए वशित्व आदि गुण समूह तो उसकी स्तुतिके लिए वाजसनेकमें कहा गया है। उसीप्रकार आगे भी 'स एष०' ( नेति नेति, ऐसा कहकर जो निरूपण किया गया है, वह यह आत्मा है ) इत्यादिसे श्रुति निर्गुण ब्रह्मका ही उपसंहार करती है। सगुण ब्रह्मके एक होनेसे उसकी विभूति प्रदर्शनके लिए यह गुणोपसंहार सूत्रित किया गया है। उपासनाके लिए नहीं, ऐसा समझना चाहिए ॥ ३९ ॥

छान्दोग्यमें वैश्वानरविद्याको प्रस्तुतकर 'तद्यद्भक्तं०' (अतः भोजनके समय जो अन्न पहले आवे, उसका हवन करना चाहिए, उस समय वह भोक्ता जो पहली आहुति दे उसे 'प्राणाय स्वाहा' ऐसा कहकर दे ) इत्यादि श्रुति है। उसमें पाँच प्राण आहुतियाँ विहित हैं। और उनमें आगे 'य एतदेवं०'

५।२४।२) इति, 'यथेह क्षुधिता बाला मातरं पर्युपासते। एवं सर्वाणि भूतान्यग्निहोत्रमुपासते' (छा० ५।२४।५) इति च। तत्रेदं विचार्यते–किं भोजनलोपे लोपः प्राणाग्निहोत्रस्योतालोप इति। तद्यद्भक्तमिति भक्तागमनसंयोगश्रवणाद्भक्तागमनस्य च भोजनार्थत्वाद्भोजनलोपे लोपः प्राणाग्निहोत्रस्येति। एवं प्राप्ते न लुप्येतेति तावदाह। कस्मात्? आदरात्। तथा हि वैश्वानरविद्यायामेव जाबालानां श्रुतिः–'पूर्वोऽतिथिभ्योऽश्नीयात्। यथा ह वै स्वयमहुत्वाऽग्निहोत्रं परस्य जुहुयादेवं तत्' इत्यतिथिभोजनस्य प्राथम्यं निन्दित्वा स्वामिभोजनं प्रथमं प्रापयन्ती प्राणाग्निहोत्रे आदरं करोति। या हि न प्राथम्यलोपं सहते नेतरां सा प्राथम्यवतोऽग्निहोत्रस्य लोपं सहेतेति मन्यते। * ननु भोजनार्थभक्तागमनसंयोगाद्भोजनलोपे लोपः प्रापितः—न, तस्य द्रव्यविशेषविधानार्थत्वात्। प्राकृते ह्यग्निहोत्रे पयःप्रभृतीनां द्रव्याणां नियतत्वादिहाप्यग्निहोत्रशब्दात्कौण्डपायिनामयनवत्तद्धर्मप्राप्तौ सत्यां भक्तद्रव्यैकतागुणविशेषविधानार्थमिदं वाक्यं तद्यद्भक्तमिति। अतो गुणलोपे न मुख्यस्येत्येवं प्राप्तम्, भोजनलोपेऽप्यद्भिर्वाऽन्येन वा द्रव्येणाविरुद्धेन प्रतिनिधानन्यायेन प्राणाग्निहोत्रस्यानुष्ठानमिति ॥ ४० ॥

अत उत्तरं पठति—

---

(जो इस-वैश्वानरको उस प्रकार जाननेवाला पुरुष अग्निहोत्र करता है) और 'यथेह क्षुधिता बाला०' ( जिस प्रकार इस लोकमें भूखे बालक सब प्रकार माताकी उपासना करते हैं उसी प्रकार सम्पूर्ण प्राणी इस ज्ञानीके भोजनरूप अग्निहोत्रकी उपासना करते हैं कि यह भोजन कब करेगा ) इस प्रकार अग्निहोत्र शब्द प्रयुक्त है। उसपर यह विचार किया जाता है कि भोजनका लोप होनेपर क्या अग्निहोत्र होमका लोप होता है अथवा लोप नहीं होता? परन्तु 'तद्यद्भक्तम्' इस प्रकार अन्न आगमन सम्बन्धका श्रवण होनेसे और अन्न आगमनको भोजनके लिए होनेसे भोजनका लोप होनेपर प्राणाग्नि होत्रका लोप होना चाहिए? ऐसा प्राप्त होनेपर पूर्वपक्षी कहते हैं—प्राणाग्निहोत्रका लोप नहीं होना चाहिए, किससे? इससे कि उसका श्रुतिमें आदर है। उसी प्रकार वैश्वानरविद्यामें जाबालोंकी 'पूर्वोऽतिथिभ्यो०' ( उसको अतिथियोंसे पूर्व भोजन करना चाहिए, जैसे वह अपना अग्निहोत्र होम न कर अन्यका अग्निहोत्र होम करे, वैसे ही वह है ) यह श्रुति अतिथि भोजनकी प्रथमताकी निन्दाकर स्वामी भोजनको प्रथम प्राप्त कराती हुई प्रणाग्नि होत्रहोममें आदर करती है, क्योंकि जो श्रुति प्रथमताका लोप नहीं सह सकती ऐसे प्रथमतावाले अग्निहोत्रका लोप तो बिल्कुल नहीं सह सकेगी, ऐसा माना जाता है। परन्तु भोजनके लिए अन्नके आगमनका प्राणाग्निहोत्रके साथ सम्बन्ध होनेसे भोजन लोप होनेपर उसका लोप प्राप्त है? नहीं, क्योंकि वह द्रव्य विशेषके विधानके लिए है। प्राकृत अग्निहोत्रमें दूध आदि द्रव्योंके नियत होनेसे यहाँ भी अग्निहोत्र शब्दसे कुण्डपायियोंके अयनके समान उसके धर्मकी प्राप्ति होनेपर अन्नरूप द्रव्यके एकतारूप गुण विशेषके विधानके लिए 'तद्यद्भक्तम्' यह वाक्य है। इसलिए गुणके लोप होनेपर मुख्यका लोप नहीं है, ऐसा प्राप्त हुआ। भोजनका लोप होनेपर भी जलसे अथवा अविरुद्ध अन्य द्रव्यसे प्रतिनिधि न्यायसे प्राणाग्निहोत्रका अनुष्ठान है ॥ ४० ॥

इसपर उत्तर कहते हैं—

## सत्यानन्दी-दीपिका

* जैसे कुण्डपायियोंके सत्रगत 'मासमग्निहोत्रं जुहोति' इस मास अग्निहोत्र होममें नित्य अग्निहोत्र वाचक गौण अग्निहोत्रशब्दसे नित्य अग्निहोत्रके धर्म पयः, दधि द्रव्य आदि अतिदेशसे प्राप्त होते हैं, वैसे यहाँ भी प्राणाहुतिमें अग्निहोत्र शब्दके बलसे पयः, दधि द्रव्य आदि उत्सर्गसे प्राप्त होनेपर भोजनार्थ अन्न द्रव्यकी विधिसे उसका अपवाद किया जाता है, अतः अन्न विधिके अपवादार्थक होनेसे अन्नका लोप होनेपर मुख्य अग्निहोत्रका लोप नहीं होता, क्योंकि अपवादके अभाव-

## उपस्थितेऽतस्तद्वचनात् ॥ ४१ ॥

पदच्छेद—उपस्थिते, अतः, तद्वचनात् ।

सूत्रार्थ—( उपस्थिते ) भोजन द्रव्यके उपस्थित होनेपर ( अतः ) इसी प्रथम प्राप्त भोजन द्रव्यसे प्राणाग्निहोत्र करना चाहिए, ( तद्वचनात् ) क्योंकि 'तद्यद्भक्तम्' इत्यादि वाक्य है, और आदर वचन तो भोजन प्राप्ति दशाको लेकर है ।

* उपस्थिते भोजनेऽतस्तस्मादेव भोजनद्रव्यात्प्रथमोपनिपतितात्प्राणाग्निहोत्रं निर्वर्तयितव्यम् । कस्मात् ? तद्वचनात् । तथा हि—'तद्यद्भक्तं प्रथममागच्छेत्तद्धोमीयम्' ( छा० ५।१९।१ ) इति । सिद्धवद्भक्तोपनिपातपरामर्शेन परार्थद्रव्यसाध्यतां प्राणाहुतीनां विदधाति । ता अप्रयोजकलक्षणापन्नाः सत्यः कथं भोजनलोपे द्रव्यान्तरं प्रतिनिधापयेयुः । न चात्र प्राकृताग्निहोत्रधर्मप्राप्तिरस्ति । कुण्डपायिनामयने हि 'मासमग्निहोत्रं जुहोति' इति विध्युद्देशगतोऽग्निहोत्रशब्दस्तद्वद्भावं विधापयेदिति युक्ता तद्धर्मप्राप्तिः । इह पुनरर्थवादगतोऽग्निहोत्रशब्दो न तद्वद्भावं विधापयितुमर्हति । तद्धर्मप्राप्तौ चाभ्युपगम्यमानायामग्न्युद्धरणादयोऽपि प्राप्येरन् । न चास्ति संभवः । अग्न्युद्धरणं तावद्धोमाधिकरणभावाय । न चायमग्नौ होमः, भोजनार्थताव्याघातप्रसङ्गात् । भोजनोपनीतद्रव्यसंबन्धाच्चास्य एवैष होमः । तथा च जाबालश्रुतिः 'पूर्वोऽतिथिभ्योऽश्नीयात्'

---

सिद्धान्ती—भोजनके उपस्थित होनेपर उस प्रथम प्राप्त भोजन द्रव्यसे ही अग्निहोत्र सम्पन्न करना चाहिए, क्योंकि उसका वचन है । जैसे कि 'तद्यद्भक्तं०' ( अतः जो अन्न-भोजन प्रथम प्राप्त हो उसका हवन करना चाहिए ) यह श्रुति सिद्धवत्-भक्त प्राप्त भक्त-भोजनका जो आगमन उसके ( तत् शब्दसे ) परामर्शसे परार्थ ( भोजनार्थ-तृप्तिके लिए ) द्रव्यसे साध्य प्राण आहुतियोंका विधान करती है । वे आहुतियाँ तृप्तिरूप अर्थकी अप्रयोजक[1]-प्रयोजक लक्षण ( आक्षेपत्व ) के अभावसे युक्त होती हुई भोजनके लोप होनेपर किस प्रकार अन्य द्रव्यका प्रतिनिधापन ( प्रतिनिधिन्यायसे आक्षेप ) कर सकेंगी । और यहाँ प्राकृत अग्निहोत्र धर्मकी प्राप्ति नहीं है । कुण्डपायियोंके अयनमें तो 'मासपर्यन्त अग्निहोत्र होम करे' इस विधिके उद्देश्यमें प्राप्त जो अग्निहोत्र शब्द है वह 'तद्वद्भाव' प्राकृत अग्निहोत्रके समान भाव-धर्म विधान कराएगा, इससे उसमें उसके धर्मकी प्राप्ति युक्त है । परन्तु यहाँ-प्राणाग्नि होत्रमें अर्थवाद गत अग्निहोत्र शब्द प्रकृत अग्निहोत्रके सदृश धर्मोंका विधान नहीं करा सकता । यदि प्रकृत अग्निहोत्रके धर्मकी प्राप्ति स्वीकार की जाय तो उस अग्निके उद्धरण आदि भी प्राप्त होने चाहिए । किन्तु यहाँ ( प्राणाग्निहोत्रमें ) उनका संभव नहीं है, क्योंकि अग्निका उद्धरण होमके अधिकरणत्वके लिए है, और यह द्रव्यरूप होम प्रकृत अग्निमें नहीं होता, क्योंकि भोजनके लिए है, उसका [ प्रकृत

### सत्यानन्दी-दीपिका

में उत्सर्गसे प्राप्त पय आदि द्रव्यसे अग्निहोत्रकी निष्पत्ति संभव है । 'गुणलोपे न मुख्यस्य' ( अङ्गके लोप होनेपर मुख्यका लोप नहीं होता ) यह जैमिनि सूत्र है । आरब्ध नित्य आदि कर्म अवश्य अनुष्ठेय होते हैं । यदि उनमें श्रुत द्रव्यकी प्राप्ति न हो तो प्रतिनिधि द्रव्यसे भी कर्म कर्तव्य है । जैसे श्रुत कुशाके अभावमें घासे कर्म किया जाता है, यह प्रतिनिधि न्याय है । अतः भोजनके लोप होनेपर भी अन्य पय आदि द्रव्यसे प्राणाग्निहोत्रका अनुष्ठान करना युक्त है । पूर्वपक्षमें भोजन लोप होनेपर भी अन्य द्रव्यसे प्राणाग्निहोत्रका अनुष्ठान है, सिद्धान्तमें उसका लोप है ॥ ४० ॥

* 'तद्धोमीयम्' यहाँ 'तत्' शब्दसे भोजनके लिए जो सिद्ध अन्न है उसका आश्रयकर मुखगत होमका विधान है । इसलिए प्रकृत अन्नका 'तत्' पदसे परामर्शकर भोजनके लिए प्राप्त द्रव्यसे

---

१. उद्देश्याभावे सत्युपादेयस्याप्रवृत्तेर्भोजनार्थद्रव्यलोपे लोप एव प्राणाग्निहोत्रस्य ।

इत्यस्याधारामेवेमां होमनिर्वृत्तिं दर्शयति । * अत एव चेहापि सांपादिकान्येवाग्निहोत्राङ्गानि दर्शयति—'उर एव वेदिर्लोमानि बर्हिर्हृदयं गार्हपत्यो मनोऽन्वाहार्यपचन आस्यमाहवनीयः' ( छा० ५।१८।२ ) इति । वेदिश्रुतिश्चात्र स्थण्डिलमात्रोपलक्षणार्था द्रष्टव्या, मुख्याग्निहोत्रे वेद्यभावात्, तदङ्गानां चेह संपिपादयिषितत्वात् । भोजनेनैव च कृतकालेन संयोगान्नाग्निहोत्रकालावरोधसंभवः । एवमन्येऽप्युपस्थानादयो धर्माः केचित्कथंचिद्विरुध्यन्ते । तस्माद्भोजनपक्ष एवैते मन्त्रद्रव्यदेवतासंयोगात्पञ्च होमा निर्वर्तयितव्याः । यत्त्वादरदर्शनवचनं, तद्भोजनपक्षे प्राथम्यविधानार्थम् । न ह्यस्ति वचनस्यातिभारः । न त्वनेनास्य नित्यता शक्यते दर्शयितुम् । तस्माद्भोजनलोपे लोप एव प्राणाग्निहोत्रस्येति ।

( २७ तन्निर्धारणाधिकरणम् । सू० ४२ )

## तन्निर्धारणानियमस्तद्दृष्टेः पृथग्घ्यप्रतिबन्धः फलम् ॥ ४२ ॥

**पदच्छेद**—तन्निर्धारणानियमः, तद्दृष्टेः, पृथक्, हि, अप्रतिबन्धः, फलम् ।

**सूत्रार्थ**—( तन्निर्धारणानियमः ) कर्माङ्गोंके आश्रित उपासनाओंका नित्यके समान अनुष्ठान नहीं है, क्योंकि यह अनियम ( तद्दृष्टेः ) 'तेनोभौ कुरुतः' इत्यादि श्रुतिमें प्रतिपादित है । (पृथग्घ्यप्रतिबन्धः फलम्) उन उपासनाओंका कर्मफलसे पृथक् अप्रतिबन्ध फल विशेष उपलब्ध होता है ।

---

अग्निके सदृश धर्मोंके स्वीकार करनेपर ] व्याघात प्रसङ्ग होगा, इसलिए भोजनार्थ प्राप्त द्रव्यके साथ सम्बन्ध होनेसे मुखमें ही यह होम होता है । उसी प्रकार 'पूर्वोऽतिथिभ्योऽश्नीयात्' यह जाबाल श्रुति भी मुखमें ही इस होमकी निष्पत्ति दिखलाती है । इसीसे यहाँ भी कल्पनासे संपादन किये गये अग्निहोत्रके अङ्गोंको 'उर एव०' ( इस वैश्वानर उपासकका वक्षःस्थल वेदी है, लोम दर्भ हैं, हृदय गार्हपत्याग्नि है, मन अन्वाहार्यपचन ( दक्षिणाग्नि ) और मुख आहवनीय अग्नि है ) यह श्रुति दिखलाती है । यहाँ प्राणाग्निहोत्रमें वेदीकी श्रुति स्थण्डिलमात्र उपलक्षणार्थक समझनी चाहिए, क्योंकि मुख्य अग्निहोत्रमें वेदीका अभाव है और प्राणाग्निहोत्रमें उसके अङ्गोंका संपादन करना अभीष्ट है । भोजनके द्वारा ही निश्चित होनेवाले कालके साथ [ प्राणाग्निहोत्रका ] सम्बन्ध होनेसे मुख्य अग्निहोत्रके कालके साथ अवरोध सम्भव नहीं है । इसी प्रकार उपस्थान आदि अन्य भी कई एक धर्म कथंचित् विरुद्ध होते हैं । इसलिए मन्त्र, द्रव्य और देवताके सम्बन्धसे भोजन पक्षमें ये पाँच होम निष्पन्न होने चाहिए । और जो आदरदर्शन वचन है, वह तो भोजन पक्षमें प्रथमता विधान करनेके लिए है । इसमें वचनका कोई भार नहीं है, क्योंकि इस ( प्रथमतावचन ) से इस प्राणाग्निहोत्रकी नित्यता नहीं दिखाई जा सकती । इसलिए भोजनके लोप होनेपर प्राणाग्निहोत्रका लोप ही होता है ॥ ४१ ॥

### सत्यानन्दी-दीपिका

'प्राणाय स्वाहा, अपानाय स्वाहा' इत्यादि पाँच आहुतियाँ सिद्ध होती हैं । भोजनके लोप होनेपर उनका भी लोप ही होता है, इससे ये आहुतियाँ अन्य द्रव्यका आक्षेप नहीं करतीं । जैसे क्रतुसे प्रयुक्त अप् आनयनके आश्रित गोदोहनपात्रका क्रतुके लोप होनेपर लोप ही होता है ।

अतएव-नित्य अग्निहोत्रके धर्मोंकी प्राप्ति न होनेसे ही प्राणाग्निहोत्रमें कल्पनासे अग्निहोत्रके अङ्गोंका संपादन किया गया है, अन्यथा संपादन व्यर्थ हो जायगा । परन्तु जिन श्रुति और स्मृतियोंमें स्वामी ( उपासक ) का भोजनकाल अतिथि भोजनकालके पश्चात् विहित है, वह 'पूर्वोऽतिथिभ्योऽश्नीयात्' इस वचनसे कैसे बाधित होगा ? इस विशेषवाक्यसे सामान्यवाक्य बाधित होता है, क्योंकि विशेष वचनको सामान्य वचनके बाधमें कोई भार नहीं है । सामान्य वचन उपासकसे भिन्न भोक्ताके लिए है । इस प्राथम्यवचनसे प्राणाग्निहोत्रकी नित्यता सिद्ध नहीं होती । प्राण उपासकको भोजन प्राप्त होनेपर प्राथम्यके अर्थमें आदर होनेसे आदर शब्द अन्यथासिद्ध है । इससे यह सिद्ध हुआ कि भोजनके लोप होनेपर प्राणाग्निहोत्रका लोप ही होता है ॥ ४१ ॥

सन्ति कर्माङ्गव्यपाश्रयाणि विज्ञानानि-'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा० १।१।१) इत्येवमादीनि। किं तानि नित्यान्येव स्युः कर्मसु, पर्णमयीत्वादिवदुतानित्यानि, गोदोहनादिवदिति विचारयामः। किं तावत्प्राप्तम् ?-नित्यानीति। कुतः ? प्रयोगवचनपरिग्रहात्। अनारभ्याधीतान्यपि ह्येतान्युद्गीथादिद्वारेण क्रतुसंबन्धात्क्रतुप्रयोगवचननेनैवाङ्गान्तरवत्संस्पृश्यन्ते। यत्त्वेषां स्ववाक्येषु फलश्रवणम्-'आपयिता ह वै कामानां भवति' (छा० १।१।७) इत्यादि, तद्वर्तमानापदेशरूपत्वादर्थवादमात्रमेवापापश्लोकश्रवणादिवन्न फलप्रधानम्। तस्माद्यथा 'यस्य पर्णमयी जुहूर्भवति न स पापं श्लोकं शृणोति' इत्येवमादीनामप्रकरणपठितानामपि जुह्वादिद्वारेण क्रतुप्रवेशात्प्रकरणपठितवन्नित्यतैवमुद्गीथाद्युपासनानामपीति। एवं प्राप्ते ब्रूमः-तन्निर्धारणानियम इति। यान्येतान्युद्गीथादिकर्मगुणयाथात्म्यनिर्धारणानि रसतम आप्तिः समृद्धिर्मुख्यप्राण आदित्य इत्येवमादीनि नैतानि नित्यवत्कर्मसु नियम्येरन्। कुतः ? तद्दृष्टेः। तथाह्यनियतत्वमेवंजातीयकानां दर्शयति श्रुतिः-'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' (छा० १।१।१०) इत्यविदुषोऽपि क्रियाभ्यनुज्ञानात्। प्रस्तावादिदेवताविज्ञानविहीनानामपि प्रस्तोत्रादीनां याजनाध्यवसानदर्शनात् 'प्रस्तोतर्या देवता प्रस्तावमन्वायत्ता तां चेदविद्वान्प्रस्तोष्यसि' (छा० १।१०।९), 'तां चेदविद्वानुद्गास्यति' (छा० १।१०।१०) 'तां चेदविद्वान्प्रतिहरिष्यसि' (छा० १।१०।११) इति च। अपि चैवंजातीयकस्य कर्मव्यपा-

---

'ओमित्येतदक्षरमु०' (उद्गीथके अवयव इस ॐ अक्षरकी उपासना करनी चाहिए) इत्यादि कर्म-ज्योतिष्टोम आदिके अङ्गोंका आश्रयण करनेवाली उपासनाएँ हैं। क्या ये उपासनाएँ कर्मोंमें पर्णमयीत्व आदिके समान नित्य हैं अथवा गोदोहन आदिके समान अनित्य हैं ? इस विषयपर हम विचार करते हैं, तो क्या प्राप्त होता है ? पूर्वपक्षी—नित्य हैं। किससे ? इससे कि प्रयोग वचनका परिग्रह है। क्रतुके प्रकरणमें न पठित होनेवाली इन उपासनाओंका उद्गीथ आदि द्वारा क्रतुके साथ सम्बन्ध होनेसे क्रतुके प्रयोग वचनसे ही अन्य अङ्गके समान ये भी सम्बन्धवाली होती हैं। जो इन विज्ञानोंका अपने वाक्योंमें 'आपयिता ह वै०' (जो विद्वान्-उपासक इस प्रकार इस उद्गीथरूप अक्षरकी उपासना करता है वह (यजमानकी) (सम्पूर्ण कामनाओंको प्राप्त करानेवाला होता है) इत्यादि फलका श्रवण है। वह फल श्रवण वाक्यमें वर्तमान कालका उपदेश होनेसे अर्थवाद मात्र ही है—अपापश्लोक श्रवण आदिके समान फल प्रधान नहीं है। इसलिए जैसे 'यस्य पर्णमयी०' (जिसकी पर्णमयी (पलाशकी) जुहू होती है वह लोकमें पाप श्लोकका श्रवण नहीं करता) इत्यादि क्रतुके प्रकरणमें अपठितोंका भी जुहू आदि द्वारा क्रतुमें प्रवेश-सम्बन्ध होनेसे प्रकरणमें पठितके समान नित्यत्व है, वैसे उद्गीथ आदि उपासनाओंको भी समझना चाहिए।

सिद्धान्ती—ऐसा प्राप्त होनेपर हम कहते हैं—उपासनाके निर्धारणका अनियम है, 'रसोंमें वह श्रेष्ठ, कामनाओंकी प्राप्ति करानेवाला, समृद्धि देनेवाला, मुख्य प्राण आदित्य है' इत्यादि उद्गीथ आदि कर्माङ्गोंके यथावत् स्वरूप 'रसतमत्व आदि' का निर्धारण करनेवाली जो ये उपासनाएँ हैं, वे नित्य कर्माङ्गोंके समान [ पर्णमयीत्वके समान ] कर्मोंमें नियमित नहीं होनी चाहिए, क्योंकि श्रुतिमें ऐसा ही दृष्ट है। कारण कि इसीप्रकारकी उपासनाएँ अनित्य हैं, श्रुति दिखलाती है— 'तेनोभौ कुरुतः०' (जो उद्गीथावयव भूत इस ॐ अक्षरको रसतमत्व आदि विशिष्ट जानता है और जो नहीं जानता है वे दोनों ही उसके द्वारा कर्म करते हैं) इसप्रकार अविद्वान्के लिए भी कर्मकी अनुज्ञा है। और 'प्रस्तोतर्या०' (हे प्रस्तोता! जो देवता प्रस्ताव-भक्तिमें अनुगत है यदि तू उसे बिना जाने प्रस्तवन करेगा तो तेरा मस्तक गिर जायगा) 'तां चेदविद्वानुद्गास्यति०' (हे उद्गाता! यदि तू

अयस्य विज्ञानस्य पृथगवे कर्मणः फलमुपलभ्यते कर्मफलसिद्धयप्रतिबन्धस्तत्समृद्धिरतिशयविशेषः कश्चित् 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद। नाना तु विद्या चाविद्या च यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छा० १।१।१०) इति। तत्र 'नाना तु' इति विद्वदविद्वत्प्रयोगयोः पृथक्करणाद्वीर्यवत्तरमिति च तरप्प्रत्ययप्रयोगाद्विद्याविहीनमपि कर्म वीर्यवदिति गम्यते। तच्चानित्यत्वे विद्याया उपपद्यते। नित्यत्वे तु कथं तद्विहीनं कर्म वीर्यवदित्यनुज्ञायेत। सर्वाङ्गोपसंहारे हि वीर्यवत्कर्मेति स्थितिः। ॐ तथा लोकसामादिषु प्रतिनियतानि प्रत्युपासनं फलानि शिष्यन्ते—'कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च' ( छा० २।२।३ )इत्येवमादीनि, नचेदं फलश्रवणमर्थवादमात्रं युक्तं प्रतिपत्तुम्। तथा हि गुणवाद आपद्येत। फलोपदेशे तु मुख्यवादोपपत्तिः। प्रयाजादिषु त्वितिकर्तव्यताकाङ्क्षस्य क्रतोः प्रकृतत्वात्तादर्थ्ये सति युक्तं फलश्रुतेरर्थवादत्वम्। तथानारभ्याधीतेष्वपि पर्णमयीत्वादिषु।

उसे बिना जाने उद्गान करेगा ) और 'तां चेदविद्वान्प्रतिहरिष्यसि०' ( हे प्रतिहर्ता ! यदि तू उसे बिना जाने प्रतिहार भक्तिका गान करेगा तो तेरा मस्तक गिर जायगा ) इसप्रकार प्रस्ताव आदिके देवताके विज्ञानसे रहित प्रस्तोता आदिमें याजनका निश्चय देखा जाता है। और इसप्रकारके कर्मके आश्रित विज्ञानका कर्मफलसे पृथक् फल उपलब्ध होता है—कर्मफल सिद्धिके प्रतिबन्धसे रहित उसका कोई समृद्धिरूप अतिशय विशेष फल विज्ञानमें उपलब्ध होता है—'तेनोभौ कुरुतो०' ( जो उद्गीथके अवयव भूत इस ॐ अक्षरको रसतमत्वादि विशिष्ट जानता है अथवा जो नहीं जानता वे दोनों ही उसके द्वारा कर्म करते हैं, किन्तु विद्या और अविद्या दोनों भिन्न भिन्न हैं। जो कर्म विद्या-श्रद्धा और योगसे युक्त होकर किया जाता है वही अविद्वान् कर्मसे वीर्यवत्तर—अधिक फलवाला होता है ) इस श्रुतिमें 'नाना तु' इस शब्दसे विद्वान् और अविद्वान् कृत प्रयोगोंमें पृथक्करण होनेसे 'वीर्यवत्तरम्' इसमें तरप्प्रत्ययका प्रयोग होनेके कारण उपासना हीन कर्म भी वीर्यवत् फलवाला होता है, ऐसा ज्ञात होता है। वह विद्याके अनित्य होनेपर उपपन्न होता है। यदि विद्या नित्य हो तो उससे विहीन कर्म वीर्यवत् है, ऐसी अनुज्ञा किस प्रकार होगी, क्योंकि सब अङ्गोंका उपसंहार होनेपर कर्म वीर्यवत् होता है, ऐसी स्थिति है। तथा लोकदृष्टि आदिसे साम आदिकी प्रत्येक उपासनामें—'कल्पन्ते हास्मै०' ( इससे जो इसप्रकार जाननेवाला पुरुष लोकोंमें पञ्चविध सामकी उपासना करता है उसके प्रति ऊर्ध्व और अधोमुख लोक भोग्यरूपसे उपस्थित होते हैं ) इत्यादि प्रतिनियत फल उपदिष्ट हैं। और यह फल श्रुति अर्थवाद मात्र समझना युक्त नहीं है, क्योंकि उसे अर्थवाद माननेपर गुणवाद प्रसक्त होगा। किन्तु फलके उपदेशमें तो मुख्यवाद उपपन्न होता है। प्रयाज आदिमें तो इतिकर्तव्यताकी आकाङ्क्षा रखनेवाले क्रतुके प्रकृत होनेसे प्रयाज आदि क्रतुके लिए होनेपर उनमें फल श्रुति अर्थवाद हो यह युक्त है। इसीप्रकार कर्मप्रकरणके आरम्भमें पठित न होनेवाले पर्णमयीत्व आदिमें भी फलश्रुति अर्थवाद है। अक्रियात्मक पर्णमयीत्व आदिमें आश्रयके बिना फल सम्बन्ध नहीं हो सकता।

## सत्यानन्दी-दीपिका

ॐ 'तेनोभौ कुरुतः' इसके भी विद्या कर्मका अङ्ग नहीं है। और साम आदिमें 'यह पृथिवी ऋक् है अग्नि साम है' इसप्रकार लोक दृष्टिरूप उपासनाओंमें कर्म-समृद्धिसे भिन्न लोक आदि फल श्रुतिमें प्रतिपादित हैं। किन्च यूपके लिए प्रथम 'खादिरो यूपो भवति' इस विधिसे यूप विहित होनेके कारण क्रतुको अङ्गरूप यूपकी आकाङ्क्षा नहीं है, 'बैल्वमन्नाद्यकामस्य खादिरं वीर्यकामस्य' ( अन्नाद्य कामनावालेका बैल्वयूप और वीर्यकामनावालेका खादिर यूप हो ) अतः यूपके लिए पुनः बैल्व आदिका विधान फलके लिए ही है। इसलिए यह फलार्थ विधि है अर्थवाद नहीं है। इसके अतिरिक्त पर्णमयीत्वको कोई प्रकृतका आश्रय नहीं है, यह जुहूको आश्रय मानें तो जुहूको प्रकृति द्रव्यकी आकाङ्क्षा

नहि पर्णमयीत्वादीनामक्रियात्मकानामाश्रयमन्तरेण फलसंबन्धोऽवकल्पते। गोदोहनादीनां हि प्रकृताप्प्रणयनाद्याश्रयलाभादुपपन्नः फलविधिः। तथा बैल्वादीनामपि प्रकृतयूपाद्याश्रयलाभादुपपन्नः फलविधिः, नतु पर्णमयीत्वादिष्वेवंविधः कश्चिदाश्रयः प्रकृतोऽस्ति। वाक्येनैव तु जुह्वाद्याश्रयतां विवक्षित्वा फलेऽपि विधिं विवक्षतो वाक्यभेदः स्यात्। उपासनानां तु क्रियात्मकत्वाद्विशिष्टविधानोपपत्तेरुद्गीथाद्याश्रयाणां फले विधानं न विरुध्यते। तस्माद्यथा क्रत्वाश्रयाण्यपि गोदोहनादीनि फलसंयोगादनित्यान्येवमुद्गीथाद्युपासनान्यपीति द्रष्टव्यम्। अत एव च कल्पसूत्रकारा नैवंजातीयकान्युपासनानि क्रतुषु कल्पयांचक्रुः ॥४२॥

(२८ प्रदानाधिकरणम्। सू० ४३)

## प्रदानवदेव तदुक्तम् ॥ ४३ ॥

पदच्छेद—प्रदानवत्, एव, तत्, उक्तम्।

सूत्रार्थ—( प्रदानवत् ) 'यथेन्द्राय राज्ञे' इससे उक्त इन्द्र देवताके एक होनेपर भी राजा, अधिराज आदि गुणभेदसे देवताका भेद होता है, वैसे एक विद्यामें भी वायु, प्राणके स्वरूप अभेद होनेपर भी आध्यात्मिक आदि अवस्था भेदसे गुणभेद है, अतः प्रयोग भेद है। ( तदुक्तम् ) 'नाना वा' इत्यादि सूत्रसे जैमिनि मुनिने पूर्वकाण्डमें कहा है।

* वाजसनेयके—'वदिष्याम्येवाहमिति वाग्दध्रे (बृह० १।५।२१) इत्यत्राध्यात्मं वागादीनां प्राणः श्रेष्ठोऽवधारितोऽधिदैवतमग्न्यादीनां वायुः। तथा छान्दोग्ये—'वायुर्वाव संवर्गः' ( छा० ४।३।१ ) इत्यत्राधिदैवतमग्न्यादीनां वायुः संवर्गोऽवधारितः 'प्राणो वाव

---

किन्तु गोदोहन आदिमें तो प्रकृत जल प्रणयन आदि आश्रय लाभ होनेसे फलार्थ विधि उपपन्न है। उसीप्रकार बैल्व आदिमें भी प्रकृत यूप आदि आश्रय लाभ होनेसे फलार्थ विधि उपपन्न है, परन्तु पर्णमयीत्व आदिमें इसप्रकारका कोई आश्रय प्रकृत नहीं है, वाक्यसे ही जुहू आदिको आश्रय कहनेकी इच्छाकर फलमें भी विधिकी विवक्षा करनेवालेको वाक्य भेद होगा। क्रियात्मक होनेसे उपासनाओंका विशिष्ट विधान हो सकता है, अतः उद्गीथ आदिके आश्रित इन उपासनाओंका विधान कर्म फलमें विरुद्ध नहीं है। इसलिए जैसे यज्ञके आश्रित गोदोहन आदि पृथक् फलके सम्बन्धसे अनियमित हैं, वैसे ही उद्गीथ आदि उपासनाएँ भी अनियमित हैं, ऐसा समझना चाहिए। अतएव-अनित्य होनेसे ही कल्पसूत्रकारोंने इसप्रकारकी उपासनाओंकी क्रतुमें कल्पना नहीं की है ॥ ४२ ॥

वाजसनेयकमें 'वदिष्याम्येवाहमिति०' ( ऐसा वाणीने व्रत किया कि 'मैं बोलती ही रहूँगी' ) यहाँ अध्यात्म वाणी आदिमें प्राण श्रेष्ठ अवधारित है और अधिदैवत अग्नि आदिमें वायु श्रेष्ठ अवधारित है। तथा छान्दोग्यमें 'वायुर्वाव संवर्गः' ( वायु ही संवर्ग है ) यहाँ अधिदैवत अग्नि आदिमें वायु संवर्गरूपसे अवधारित है और 'प्राणो वाव संवर्गः' ( प्राण ही संवर्ग है ) यहाँ अध्यात्म वाग्

### सत्यानन्दी-दीपिका

होनेके कारण इसी वाक्यसे क्रतुके अङ्गरूपमें जुहूका प्रकृति द्रव्यके साथ सम्बन्ध विधेय होता है पश्चात् निराकांक्ष जुहूका आश्रयण कर उसी प्रकृति जुहू द्रव्यका फल सम्बन्ध विधेय होता है, इसप्रकार वाक्यभेद हो जायगा। और जैसे स्वयं क्रियात्मक होनेसे यागका विधान है, वैसे उपासनाओंका भी क्रियात्मक ( मानसिक क्रियारूप ) होनेसे विशिष्ट विधान युक्त है। इसलिए उपासनाएँ गोदोहन आदिके समान अनित्य होनेसे याग आदि कर्मोंके अङ्ग नहीं हो सकतीं। पूर्वपक्षमें उपासनाएँ प्रयोगमें नित्य हैं और सिद्धान्तमें अनित्य हैं ॥ ४२ ॥

* 'वायुर्वाव संवर्गः' 'प्राणो वाव संवर्गः' इत्यादि श्रुतिवाक्योंसे वायु और प्राण दोनोंका भेद और 'य प्राणः स वायुः' इत्यादि श्रुतिवाक्यसे दोनोंका अभेद प्रतिपादित होनेसे 'तत्र' इत्यादिसे

संवर्गः' ( छा० ४।३।२ ) इत्यत्राध्यात्मं वागादीनां प्राणः। तत्र संशयः—किं पृथगेवेमौ वायुप्राणावुपगन्तव्यौ स्यातामपृथग्वेति। अपृथगेवेति तावत्प्राप्तम्, तत्त्वाभेदात्। न ह्यभिन्ने तत्त्वे पृथगनुचिन्तनं न्याय्यम्। दर्शयति च श्रुतिरध्यात्ममधिदैवतं च तत्त्वाभेदम्—'अग्निर्वाग्भूत्वा मुखं प्राविशत्' ( ऐ० २।४ ) इत्यारभ्य तथा 'त एते सर्व एव समाः सर्वेऽनन्ताः' ( बृह० १।५।१३ ) इत्याध्यात्मिकानां प्राणानामाधिदैविकीं विभूतिमात्मभूतां दर्शयति। तथाऽन्यत्रापि तत्र तत्राध्यात्ममधिदैवतं च बहुधा तत्त्वाभेददर्शनं भवति। क्वचिच्च 'यः प्राणः स वायुः' इति स्पष्टमेव वायुं प्राणं चैकं करोति। तथोदाहृतेऽपि वाजसनेयिब्राह्मणे 'यतश्चोदेति सूर्यः' ( बृह० १।५।२३ ) इत्यस्मिन्नुपसंहारश्लोके 'प्राणाद्वा एष उदेति प्राणेऽस्तमेति' ( बृह० १।५।२३ ) इति प्राणेनैवोपसंहरन्नेकत्वं दर्शयति। 'तस्मादेकमेव व्रतं चरेत्प्राण्याच्चैवापान्याच्च' ( बृह० १।५।२३ ) इति च प्राणव्रतेनैकेनोपसंहरन्नेतदेव द्रढयति। तथा छान्दोग्येऽपि परस्तात् 'महात्मनश्चतुरो देव एकः कः स जगार भुवनस्य गोपाः' ( छा० ४।३।६ ) इत्येकमेव संवर्गं गमयति, न ब्रवीत्येक एकेषां चतुर्णां संवर्गोऽपरोऽपरेषामिति। तस्मादपृथक्त्वमुपगमनस्येति। ॐ एवं प्राप्ते ब्रूमः—पृथगेव वायु-

---

आदिमें प्राण संवर्गरूपसे अवधारित है। यहाँ संशय होता है कि क्या ये वायु और प्राण पृथक् स्वीकार करने चाहिए अथवा अपृथक्-एक ही ? पूर्वपक्षी—स्वरूपके अभेदसे अपृथक् ही है, ऐसा प्राप्त होता है। अभिन्न तत्त्व ( एक स्वरूप ) में पृथग्रूपसे अनुचिन्तन युक्त नहीं है, 'अग्निर्वाग्भूत्वा०' ( अग्निने वागिन्द्रिय होकर मुखमें प्रवेश किया ) ऐसा आरम्भकर श्रुति अध्यात्म और अधिदैवतका स्वरूपाभेद दिखलाती है। उसीप्रकार 'त एते सर्व०' (ये वाक्, मन और प्राण सभी तुल्य हैं, अध्यात्म और अधिभूत समस्त जगत् इन तीनोंसे व्याप्त है, इन तीनोंसे अतिरिक्त कार्यात्मक अथवा करणात्मक कुछ नहीं है, ये सब अनन्त हैं ) यह श्रुतिवाक्य आध्यात्मिक प्राणोंकी स्वरूपभूत आधिदैविक विभूति दिखलाता है। इसीप्रकार अन्यत्र भी तत् तत् स्थलमें अध्यात्म और अधिदैवतका बहुधा तत्त्वाभेद दर्शन होता है। और कहींपर 'यः प्राणः स वायुः' ( जो प्राण है वह वायु है ) यह श्रुतिवाक्य स्पष्टरूपसे प्राण और वायुमें एकत्वका प्रतिपादन करता है। इसप्रकार उदाहृत वाजसनेयी ब्राह्मणमें भी 'यतश्चोदेति सूर्यः' ( जिस वायुसे सूर्य उदय होता है ) इस उपसंहारश्लोकमें 'प्राणाद्वा०' ( यह प्राणसे उदित होता है यह प्राणमें अस्त होता है ) इसप्रकार प्राणसे ही उपसंहार करते हुए एकत्व दिखलाता है। 'तस्मादेकमेव०' ( अतः एक ही व्रतका आचरण करे, प्राण व्यापार करे और अपान व्यापार करे ) इसप्रकार एक प्राणव्रतसे ही उपसंहार करते हुए उसको ही दृढ करता है। इसप्रकार छान्दोग्यमें भी आगे 'महात्मनश्चतुरो देव०' ( भुवनोंके रक्षक उस एक प्रजापतिने चार [ अग्नि, सूर्य, दिक्, चन्द्रमा और वाक्, चक्षु, श्रोत्र और मन ] महात्माओंको ग्रस लिया ) यह श्रुति एक ही संवर्गका बोध कराती है ऐसा नहीं कहती है कि एक चारोंका एक संवर्ग है और दूसरे चारोंका दूसरा, इसलिए उपगमन-अनुचिन्तन पृथक् नहीं है।

सिद्धान्ती—ऐसा प्राप्त होनेपर हम कहते हैं—वायु और प्राणका पृथक् ही अनुचिन्तन स्वीकार

## सत्यानन्दी-दीपिका

संशय कहते हैं। 'अग्निर्वाग्भूत्वा मुखं प्राविशत्' ऐसा आरम्भकर 'वायु प्राणो भूत्वा नासिके प्राविशत्' ( वायुने प्राण होकर नासिकामें प्रवेश किया ) इसप्रकार पूर्वापरका विचार करनेपर वायु और प्राण एक ही तत्त्व प्रतीत होते हैं। अतः दोनोंका अपृथग्रूपसे ही अनुचिन्तन है।

ॐ सिद्धान्ती—जैसे 'अग्निहोत्रं जुहोति' इससे उत्पन्न एक ही अग्निहोत्रका दधि, तण्डुल आदि भेदसे और सायं प्रातः कालभेदसे प्रयोगका भेद है, वैसे 'अन्नादो भवति य एवं वेद' (तै० ३।९।१) इसप्रकार उत्पन्न संवर्गविद्या एक है, तो भी उत्पन्न विशिष्ट वायु और प्राण नामक गुणोंका भेद

( बृह० २।४।५ ) 'यः प्राणेन प्राणिति स त आत्मा सर्वान्तरः (बृह० ३।४। )'य एषोऽक्षिणि पुरुषो दृश्यते' ( छा० ८।७।४ ) इत्युपक्रम्य 'एतं त्वेव ते भूयोऽनुव्याख्यास्यामि' ( छा० ८।९।३ ) इति चैवमादि, तदपि 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' (बृह० २।४।१०) 'योऽशनायापिपासे शोकं मोहं जरां मृत्युमत्येति' (बृह० ३।५।१) 'परं ज्योतिरुपसंपद्य स्वेन रूपेणाभिनिष्पद्यते स उत्तमः पुरुषः' (छा० ८।१२।३) इत्येवमादिभिर्वाक्यशेषैः सत्यामेवाधिकोपदिदिक्षायामत्यन्ताभेदाभिप्रायमित्यविरोधः। पारमेश्वरमेव हि शारीरस्य पारमार्थिकं स्वरूपम्, उपाधिकृतं तु शारीरत्वम्, 'तत्त्वमसि' (छा० ६।८।७) 'नान्यदतोऽस्ति द्रष्टृ' (बृह० ३।८।११) इत्यादिश्रुतिभ्यः। सर्वं चैतद्विस्तरेणास्माभिः पुरस्तात्तत्र तत्र वर्णितम् ॥ ८ ॥

## तुल्यं तु दर्शनम् ॥ ९ ॥

पदच्छेद—तुल्यम्, तु, दर्शनम्।

सूत्रार्थ—तत्त्वज्ञान कर्मका अङ्ग नहीं है, क्योंकि इसमें भी 'एतद्ध स्म वै०' इत्यादि श्रुतिसे ( तुल्यम् ) समान ही ( दर्शनम् ) आचारदर्शन है। ( तु ) शब्द कर्माङ्ग लिङ्गदर्शनका प्राबल्य सूचित करता है।

* यत्तूक्तम्—आचारदर्शनात्कर्मशेषो विद्येति, अत्र ब्रूमः—तुल्यमाचारदर्शनमकर्मशेषत्वेऽपि विद्यायाः। तथा हि श्रुतिर्भवति—'एतद्ध स्म वै तद्विद्वांस आहुरृषयः कावषेयाः किमर्था वयमध्येष्यामहे किमर्था वयं यक्ष्यामहे। एतद्ध स्म वै तत्पूर्वे विद्वांसोऽग्निहोत्रं न जुहवाञ्चक्रिरे',

---

जनके लिए सब प्रिय होते हैं, हे मैत्रेयी! आत्माका दर्शन करना चाहिए ) 'यः प्राणेन' ( मुख-नासिका संचारी प्राणसे जो चेष्टा करता है वह तेरा आत्मा सर्वान्तर है ) 'य एषोऽक्षिणि ( यह जो पुरुष नेत्रोंसे दिखाई देता है, यह आत्मा है ) इस प्रकार उपक्रम 'एतं त्वेव' ( मैं तुम्हारे प्रति उस आत्माका पुनः व्याख्यान करूँगा ) इत्यादि श्रुतिमें प्रिय आदिसे संसूचित संसारी आत्माका ही वेद्य रूपसे जो अनुकर्षण है, वह भी 'अस्य महतो' ( हे मैत्रेयी! यह जो ऋग्वेद है वह इस महद्भूतका निःश्वास है ) 'योऽशनायापिपासे' ( याज्ञवल्क्य—जो बुभुक्षा, पिपासा, शोक, मोह, जरा और मृत्युसे परे है ) 'परं ज्योतिरुपसंपद्य' ( इस शरीरसे समुत्थानकर परं ज्योतिको प्राप्त हो अपने स्वरूपमें स्थित हो जाता है वह उत्तम पुरुष है ) इत्यादि वाक्यशेषोंसे अधिक उपदेशकी इच्छा होनेपर ही अत्यन्त अभेदके अभिप्रायसे है, अतः विरोध नहीं है, क्योंकि परमेश्वरका स्वरूप ही जीवात्माका पारमार्थिक स्वरूप है, शारीरत्व तो उपाधिकृत है, कारण कि 'तत्त्वमसि' 'नान्यदतोऽस्ति द्रष्टृ' (उससे अन्य द्रष्टा नहीं है) इत्यादि श्रुतियाँ हैं। इन सबका तत् तत् स्थलमें विस्तारसे हम वर्णन कर चुके हैं ॥ ८ ॥

जो यह कहा गया है कि 'आचारदर्शनात्' आचारदर्शनसे ज्ञान कर्मका अङ्ग है। इसपर हम कहते हैं—विद्याके अकर्मशेषत्वमें भी आचारदर्शन समान है, क्योंकि 'एतद्ध स्म०' ( यह जानकर कवषके पुत्र ऋषियोंने कहा कि हम अध्ययन किस लिए करेंगे, हम किसलिए यज्ञ करेंगे, निःसन्देह इस वाक् और प्राणके परस्पर होमात्मक अग्निहोत्रको जाननेवाले प्राचीन उपासकोंने अग्निहोत्र होम

### सत्यानन्दी-दीपिका

इत्यादि श्रुतिमें प्रिय आदि संसारी धर्मोंसे लोक प्रसिद्ध कर्ता भोक्ता जीवात्माका जो अनुकर्षण है वह केवल अभेद प्रतिपादनके अभिप्रायसे है, कारण कि उसका ही 'आत्मा वा अरे द्रष्टव्यः' इत्यादि श्रुतिसे उपदेश है ॥ ८ ॥

* जैसे जनक आदि ब्रह्मवेत्ताओंका कर्माचरण दर्शन है, वैसे याज्ञवल्क्य, शुकदेव आदि ब्रह्मज्ञानियोंका अकर्माचरण दर्शन है। इससे कर्म दर्शनात्मक लिङ्ग लोकसंग्रहके लिए होनेसे अन्यथा

'एतं वै तमात्मानं विदित्वा ब्राह्मणाः पुत्रैषणायाश्च वित्तैषणायाश्च लोकैषणायाश्च व्युत्थायाथ भिक्षाचर्यं चरन्ति' ( बृह० ३।५।१ ) इत्येवंजातीयका। याज्ञवल्क्यादीनामपि ब्रह्मविदामकर्मनिष्ठत्वं दृश्यते—'एतावदरे खल्वमृतत्वमिति होक्त्वा याज्ञवल्क्यः प्रवव्राज' ( बृह० ४।५।१५ ) इत्यादिश्रुतिभ्यः। अपि च 'यक्ष्यमाणो वै भगवन्तोऽहमस्मि' ( छा० ५।११।५ ) इत्येतल्लिङ्गदर्शनं वैश्वानरविद्याविषयम्। संभवति च सोपाधिकायां ब्रह्मविद्यायां कर्मसाहित्यदर्शनम्। नत्वत्रापि कर्माङ्गत्वमस्ति, प्रकरणाद्यभावात् ॥ ९ ॥

यत्पुनरुक्तम्—'तच्छ्रुतेः' ( ब्रह्मसूत्र ३।४।४ ) इति, अत्र ब्रूमः—

## असार्वत्रिकी ॥ १० ॥

सूत्रार्थ—'यदेव विद्यया करोति' यह श्रुति सर्वविद्या विषयक नहीं है, किन्तु केवल उद्गीथविद्या विषयक है।

'यदेव विद्यया करोति' (छा० १।१।१०) इत्येषा श्रुतिर्न सर्वविद्याविषया, प्रकृतविद्याभिसंबन्धात्। प्रकृता चोद्गीथविद्या—'ओमित्येतदक्षरमुद्गीथमुपासीत' (छा० १।१।१) इत्यत्र॥१०॥

## विभागः शतवत् ॥ ११ ॥

पदच्छेद—विभागः, शतवत्।

सूत्रार्थ—( विभागः ) 'तं विद्याकर्मणी' इस श्रुतिमें प्रतिपादित विद्या अन्य पुरुषका और कर्म अन्य पुरुषका अनुगमन करते हैं, इसप्रकार विभाग है। ( शतवत् ) जैसे इन दो मनुष्योंको सौ मुद्रा दिये जायँ, ऐसा कहनेपर पचास-पचास मुद्रा बाँट दिये जाते हैं।

* यदप्युक्तम्—'तं विद्याकर्मणी समन्वारभेते' (बृह० ४।४।२) इत्येतत्समन्वारम्भवचनमस्वातन्त्र्ये विद्याया लिङ्गमिति, तत्प्रत्युच्यते। विभागोऽत्र द्रष्टव्यो विद्याऽन्यं पुरुषमन्वा-

---

नहीं किया था ) 'एतं वै०' ( इस आत्माको मैं ही परब्रह्म परमात्मा हूँ, ऐसा जानकर ब्राह्मण पुत्रैषणा, वित्तैषणा और लोकैषणासे अलग हटकर भिक्षाचर्यासे विचरते हैं ) इसप्रकारकी श्रुति है। 'एतावदरे०' ( अरी मैत्रेयी ! निश्चय जान इतना ही अमृतत्व है, ऐसा कहकर याज्ञवल्क्यने संन्यास ग्रहण किया ) इत्यादि श्रुतियोंसे ब्रह्मज्ञानी याज्ञवल्क्य आदि भी अकर्मनिष्ठ देखे जाते हैं। और 'यक्ष्यमाणो०' ( हे पूज्य ऋषियो ! मैं भी यज्ञ करनेवाला हूँ ) यह लिङ्गदर्शन वैश्वानर विद्याविषयक है। सोपाधिक-सगुणब्रह्म विद्यामें तो कर्म साहित्यदर्शन संभव है। परन्तु यहाँ तो विद्यामें कर्माङ्गत्व नहीं है, क्योंकि प्रकरण आदिका अभाव है ॥ ९ ॥

'तच्छ्रुतेः' इस सूत्रमें जो पूर्वपक्षीसे कहा गया है, उसपर हम कहते हैं—

'यदेव विद्यया करोति' ( पुरुष विद्यासे युक्त होकर जो कर्म करता है ) यह श्रुति सर्वविद्याविषयक नहीं है, क्योंकि उसका प्रकृत विद्याके साथ सम्बन्ध है। 'ओमित्येदक्षर०' ( ॐ इस अक्षर उद्गीथकी उपासना करनी चाहिए ) यहाँ उद्गीथ विद्या प्रकृत है ॥ १० ॥

और 'तं विद्याकर्मणी०' ( विद्या और कर्म परलोकमें जानेवालेका अनुगमन करते हैं ) यह सहानुगमन वचन विद्याकी अस्वतन्त्रतामें लिङ्ग है, ऐसा जो कहा गया है, उसका निराकरण किया

### सत्यानन्दी-दीपिका

सिद्ध है। हमको 'तुल्यं तु दर्शनम्' इससे कहते हैं। जो कर्मठ है वह ब्रह्मवित् नहीं है, ऐसा भाष्यकार 'अपि च' इत्यादिसे कहते हैं। वस्तुतः वैश्वानरविद्या भी कर्मका अङ्ग नहीं है, क्योंकि उसकी स्वतन्त्र फलश्रुति है, और उसमें कर्माङ्गत्व प्रतिपादक प्रकरण आदि नहीं है ॥ ९ ॥

* 'तं विद्याकर्मणी' श्रुति प्रतिपादित यह सहानुगमन वचन मुमुक्षुको भी विषय करता है, ऐसा

रभते, कर्मान्यमिति। शतवत्। यथा शतमाभ्यां दीयतामित्युक्ते विभज्य दीयते पञ्चाशदेकस्मै पञ्चाशदपरस्मै, तद्वत्। न चेदं समन्वारम्भवचनं मुमुक्षुविषयम्, 'इति नु कामयमानः' (बृह० ४।४।६) इति 'संसारिविषयत्वोपसंहारात्, अथाकामयमानः' (बृह० ४।४।६) इति च मुमुक्षोः पृथगुपक्रमात्। तत्र संसारिविषये विद्या विहिता प्रतिषिद्धा च परिगृह्यते, विशेषाभावात्। कर्मापि विहितं प्रतिषिद्धं च, यथाप्राप्तानुवादित्वात्। एवं सत्यविभागेनापीदं समन्वारम्भ वचनमवकल्पते ॥ ११ ॥

यच्चैतत्—'तद्वतो विधानात्' ( ब्रह्मसूत्र ३।४।६ ) इति, अत उत्तरं पठति—

**अध्ययनमात्रवतः ॥ १२ ॥**

सूत्रार्थ—'आचार्यकुलाद्वेदमधीत्य' इस वाक्यमें केवल वेद अध्ययन करनेवालेके लिए विधान किया जाता है, औपनिषद् आत्मज्ञानवालेके लिए नहीं।

'आचार्यकुलाद्वेदमधीत्य' ( छा० ८।१५।१ ) इत्यत्राध्ययनमात्रस्य श्रवणादध्ययनमात्रवत एव कर्मविधिरित्यध्यवस्यामः। नन्वेवं सत्यविद्यत्वादनधिकारः कर्मसु प्रसज्येत, नैष दोषः, न वयमध्ययनप्रभवं कर्मावबोधनमधिकारकारणं वारयामः, किं तर्हि ? औपनिषदमात्मज्ञानं स्वातन्त्र्येणैव प्रयोजनवत्प्रतीयमानं न कर्माधिकारकारणतां प्रतिपद्यते इत्येतावत्प्रतिपादयामः। यथा च न क्रत्वन्तरज्ञानं क्रत्वन्तराधिकारेणापेक्ष्यत एवमेतदपि द्रष्टव्यमिति ॥ १२ ॥

यदप्युक्तम्—'नियमाच्च' ( ब्रह्मसूत्र ३।४।७ ) इति, अत्राभिधीयते—

---

जाता है। विद्या अन्य पुरुषका अनुगमन करती है और कर्म अन्य पुरुषका, इसप्रकार यहाँ विभाग समझना चाहिए। शतके समान। जैसे इन दोनोंको सौ मुद्रा दीजिए, ऐसा कहनेपर विभाग कर पचास मुद्रा एकको और पचास मुद्रा अन्यको दिये जाते हैं, वैसे ही प्रकृतमें समझना चाहिए। और यह सहानुगमन वचन मुमुक्षुविषयक नहीं है, क्योंकि 'इति नु कामयमानः' (इसप्रकार कामना करने वाला पुरुष ऐसा करता है अर्थात् संसारमें कर्म करनेको आता है) इसप्रकार संसारिविषयत्वका उपसंहार है, और 'अथाकामयमानः' ( अब जो कामना न करनेवाला पुरुष है, वह ब्रह्मको प्राप्त होता है ) इसप्रकार मुमुक्षुका पृथक् उपक्रम है। उस संसारिविषयक वाक्यमें उद्‌गीथ आदि विषयक विहित विद्या और नग्नस्त्रीदर्शनरूप प्रतिषिद्ध विद्याका ग्रहण किया जाता है, क्योंकि विद्याविशेषका अभाव है। उसीप्रकार कर्म भी विहित और प्रतिषिद्ध हैं, क्योंकि वह वाक्य यथाप्राप्तका अनुवादक है। ऐसा होनेपर यह सहानुगमन वचन अविभागसे भी उपपन्न हो सकता है ॥ ११ ॥

और 'तद्वतो विधानात्' इस सूत्रसे पूर्वपक्षीने जो कहा है, उसका उत्तर कहते हैं—

'आचार्यकुलाद्०' ( आचार्य कुलसे वेदका अध्ययन करके ) इस श्रुतिमें अध्ययनमात्रका श्रवण होनेसे केवल वेद अध्ययन करनेवालेके लिए ही कर्म विधि है, ऐसा हम निश्चय करते हैं। परन्तु ऐसा होनेपर विद्याहीन ( वेदार्थ ज्ञानशून्य ) होनेसे उसका कर्मोंमें अनधिकार प्रसक्त होगा ? यह दोष नहीं है, हम वेदाध्ययनसे उत्पन्न होनेवाले कर्मोंमें अधिकारके कारणभूत कर्मावबोधका वारण नहीं करते, किन्तु औपनिषद आत्मज्ञान स्वतन्त्ररूपसे प्रयोजनवाला प्रतीत होता हुआ कर्मोंमें अधिकारकारणत्वको प्राप्त नहीं होता, इतनामात्र हम प्रतिपादन करते हैं। जैसे एक क्रतुका ज्ञान अन्य क्रतुके अधिकारके द्वारा अपेक्षित नहीं है, ऐसे यह भी समझना चाहिए ॥ १२ ॥

**सत्यानन्दी-दीपिका**

मानकर विद्या मुमुक्षुको अमृतरूपसे और कर्म अन्यको परलोक फलोपभोगार्थ अनुगमन करते हैं। इसप्रकार सूत्रकारने विभाग किया है। वस्तुतः यह सहानुगमन वचन मुमुक्षु विषयक नहीं है, इसको 'नच' इत्यादिसे कहते हैं ॥ ११ ॥

## नाविशेषात् ॥ १३ ॥

पदच्छेद—न, अविशेषात् ।

सूत्रार्थ—( न ) 'कुर्वन्नेवेह कर्माणि' इत्यादि श्रुति तत्त्वज्ञानी विषयक नहीं है, (अविशेषात्) क्योंकि 'विद्वान्' विशेषका अभाव है ।

'कुर्वन्नेवेह कर्माणि जिजीविषेत्' ( ईशा० २ ) इत्येवमादिषु नियमश्रवणेषु न विदुष इति विशेषोऽस्ति, अविशेषेण नियमविधानात् ॥१३॥

## स्तुतयेऽनुमतिर्वा ॥ १४ ॥

पदच्छेद—स्तुतये, अनुमतिः, वा ।

सूत्रार्थ—( वा ) अथवा (अनुमतिः) तत्त्वज्ञानीके लिए जो अनुमति-कर्मानुज्ञा है, (स्तुतये) वह केवल स्तुतिके लिए है ।

* 'कुर्वन्नेवेह कर्माणि' (ईशा० २) इत्यत्रापरो विशेष आख्यायते । यद्यप्यत्र प्रकरण-सामर्थ्याद्विद्वानेव कुर्वन्निति संबध्येत, तथापि विद्यास्तुतये कर्मानुज्ञानमेतद्द्रष्टव्यम् । 'न कर्म लिप्यते नरे' (ईशा० २) इति हि वक्ष्यति । एतदुक्तं भवति—यावज्जीवं कर्म कुर्वत्यपि विदुषि पुरुषे न कर्म लेपाय भवति, विद्यासामर्थ्यादिति तदेवं विद्या स्तूयते ॥१४॥

## कामकारेण चैके ॥ १५ ॥

पदच्छेद—कामकारेण, च, एके ।

सूत्रार्थ—( च ) और ( एके ) 'एतद्ध स्म वै०' इत्यादि श्रुतिसे ज्ञात होता है कि कुछ विद्वानोंने भी ( कामकारेण ) स्वेच्छासे कर्मके साधनभूत प्रजा आदिका त्याग किया है ।

* अपि चैके विद्वांसः प्रत्यक्षीकृतविद्याफलाः सन्तस्तदवष्टम्भात्फलान्तरसाधनेषु प्रजादिषु प्रयोजनाभावं परामृशन्ति । कामकारेणेति श्रुतिर्भवति वाजसनेयिनाम् 'एतद्ध स्म वै तत्पूर्वे विद्वांस प्रजां न कामयन्ते किं प्रजया करिष्यामो येषां नोऽयमात्माऽयं लोकः'(बृह० ४।४।२२)

---

और 'नियमाच्च' इस सूत्रसे जो पूर्वपक्षीसे कहा गया है, उसपर कहा जाता है ।

'कुर्वन्नेवेह०' (इस लोकमें अग्निहोत्र आदि कर्म करता हुआ सौ वर्ष जीनेकी इच्छा करे) इत्यादि नियमोंके श्रवणमें विद्वान्‌के लिए है ऐसा विशेष नहीं है, क्योंकि अविशेष रूपसे नियमका विधान है ॥१३॥

'कुर्वन्नेवेह कर्माणि०' इस श्रुतिमें अन्य विशेष कहा जाता है । यद्यपि यहाँ प्रकरणकी सामर्थ्यसे विद्वान् ही 'करता हुआ' इस प्रकार सम्बन्धित किया जाय, तो भी यह कर्मानुज्ञा विद्यास्तुतिके लिए समझनी चाहिए, क्योंकि आगे 'न कर्म लिप्यते नरे' ऐसा ही श्रुति कहेगी । तात्पर्य यह है—जीवन पर्यन्त कर्म करते हुए भी तत्त्ववित् पुरुषमें विद्याकी सामर्थ्यसे कर्म लेप ( फलबन्धन ) के लिए नहीं होता । इससे इस प्रकार विद्याकी स्तुति की जाती है ॥ १४ ॥

और विद्याके फलका साक्षात्कार करनेवाले कुछ एक विद्वान् लोग विद्याका अवलम्बनकर अन्य फलके साधन प्रजा आदिमें प्रयोजनाभावका परामर्श करते हैं अर्थात् प्रयोजनाभाव देखते हैं, क्योंकि 'एतद्ध स्म वै०' ( पूर्ववर्ती विद्वान् सन्तान तथा कर्म आदिकी इच्छा नहीं करते थे, वे सोचते कि हम इस प्रजासे क्या करेंगे अर्थात् इनसे क्या प्रयोजन है, जिन हमको यह आत्मलोक अभीष्ट है )

### सत्यानन्दी-दीपिका

* 'कुर्वन्नेवेह कर्माणि' यह नियम श्रुति केवल अविद्वान्‌के लिए है, ऐसा कहा गया है । अब इस श्रुतिको विद्वद् विषयक मानकर उसका 'स्तुतये' इस सूत्रसे परिहार करते हैं ॥ १४ ॥

* स्वेच्छासे अग्निहोत्र आदि कर्मके साधनभूत प्रजा आदिके त्याग रूप लिङ्गसे भी विद्या स्वतन्त्र फलवाली होनेसे कर्माङ्ग नहीं है, ऐसा 'कामकारेण चैके' इस सूत्रसे कहते हैं । आत्मविद्याका अनुभव सिद्ध अनावृत्त आत्मस्वरूप मोक्ष फल है । यह कर्मफलके समान कालान्तरभावी, सातिशय और

इति। अनुभवारूढमेव च विद्याफलं न क्रियाफलवत्कालान्तरभावीत्यसकृदवोचाम। अतोऽपि न विद्यायाः कर्मशेषत्वं नापि तद्विषयायाः फलश्रुतेरयथार्थत्वं शक्यमाश्रयितुम् ॥

## उपमर्दं च ॥ १६ ॥

पदच्छेद—उपमर्दम्, च।

सूत्रार्थ—और 'यत्र वा अस्य' इत्यादिसे ज्ञात होता है कि तत्त्वज्ञान कर्मानुष्ठानके हेतु भूत अविद्याकृत क्रिया, कारक, फल विभागका उपमर्दन करता है।

अपि च कर्माधिकारहेतोः क्रियाकारकफललक्षणस्य समस्तस्य प्रपञ्चस्याविद्याकृतस्य विद्यासामर्थ्यात्स्वरूपोपमर्दमामनन्ति—'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्तत्केन कं जिघ्रेत्' ( बृह० ।४।१४ ) इत्यादिना। वेदान्तोदितात्मज्ञानपूर्विकां तु कर्माधिकारसिद्धिं प्रत्याशासानस्य कर्माधिकारोच्छित्तिरेव प्रसज्येत। तस्मादपि स्वातन्त्र्यं विद्यायाः ॥१६॥

## ऊर्ध्वरेतःसु च शब्दे हि ॥ १७ ॥

पदच्छेद—ऊर्ध्वरेतःसु, च, शब्दे, हि।

सूत्रार्थ—(च) और (ऊर्ध्वरेतःसु) संन्यासाश्रममें ही ब्रह्मविद्याका श्रवण है, इससे भी विद्या कर्माङ्ग नहीं है, (हि) क्योंकि (शब्दे) 'त्रयो धर्मस्कन्धाः' इत्यादि श्रुतिमें संन्यासाश्रम प्रतिपादित है।

* ऊर्ध्वरेतःसु चाश्रमेषु विद्या श्रूयते। न च तत्र कर्माङ्गत्वं विद्याया उपपद्यते, कर्माभावात्। न ह्यग्निहोत्रादीनि वैदिकानि कर्माणि तेषां सन्ति। स्यादेतत्—ऊर्ध्वरेतस आश्रमा न श्रूयन्ते वेद इति तदपि नास्ति। तेऽपि हि वैदिकेषु शब्देष्ववगम्यन्ते—'त्रयो धर्मस्कन्धाः' (छा० २।२३।१), 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' (छा० ५।१०।१), 'तपःश्रद्धे ये ह्युपवसन्त्यरण्ये' (मुण्ड० १।२।११), 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' ( बृह० ४।४।२२ ), 'ब्रह्मचर्यादेव

---

ऐसी अपनी इच्छासे त्याग करनेकी वाजसनेयी शाखावालोंकी श्रुति है। विद्या फल तो अनुभव सिद्ध ही है, कर्मफलके समान कालान्तर-जन्मान्तर भावी नहीं है, ऐसा हम अनेक वार कह चुके हैं। इससे भी विद्या कर्मशेष नहीं है और विद्या-विषयक फल श्रुति अयथार्थ है, ऐसा भी आश्रयण नहीं किया जा सकता ॥ १५ ॥

और कर्माधिकारके हेतु क्रिया, कारक और फलरूप अविद्याकृत समस्त प्रपञ्चकी विद्याकी सामर्थ्यसे स्वरूप निवृत्ति 'यत्र त्वस्य०' ( जिस विद्यावस्थामें इस ब्रह्मवेत्ताके लिए सब आत्मा ही हो गया उस अवस्थामें किस करणसे किस विषयको देखे और किस करणसे किस विषयको सूंघे ) इत्यादि श्रुतिसे कहते हैं। वेदान्तसे उत्पन्न आत्मज्ञानसे जो पूर्व है ऐसे कर्माधिकार सिद्धिकी प्रत्याशा रखनेवालेको तो कर्माधिकारका उच्छेद ही प्रसक्त होगा। इससे भी विद्या स्वतन्त्र है ॥ १६ ॥

और ऊर्ध्वरेतः संन्यासाश्रमोंमें विद्याका श्रवण है। वहाँ विद्यामें कर्माङ्गत्व उपपन्न नहीं होता, क्योंकि उक्त आश्रमोंमें कर्मका अभाव है—अग्निहोत्र आदि वैदिक कर्म उन आश्रमोंमें नहीं है। ऐसा हो। परन्तु ऊर्ध्वरेतः आश्रम वेदमें नहीं सुने जाते, यह भी नहीं है, क्योंकि वे भी 'त्रयो धर्मस्कन्धाः'

### सत्यानन्दी-दीपिका

अनित्य नहीं है। और 'तरति शोकमात्मवित्' इत्यादि विद्याफल श्रुति भी अर्थवाद नहीं है, किन्तु यथार्थ है ॥ १५ ॥

विद्याकी स्वतन्त्रतामें 'ऊर्ध्वरेतःसु' इत्यादिसे अन्य हेतु कहते हैं। 'कर्मतत्त्वज्ञाने नाङ्गाङ्गिभूते भिन्नाधिकारिस्थितत्वात् राजसूयबृहस्पतिसववत्' ( कर्म और तत्त्वज्ञान अङ्गाङ्गिभूत नहीं हैं, क्योंकि भिन्न-भिन्न अधिकारी स्थित हैं, जैसे राजसूय और बृहस्पतिसव ) इसलिए कर्म विधिसे रहित संन्यासाश्रममें ही विद्याका श्रवण होनेसे ब्रह्मज्ञान कर्मका अङ्ग नहीं है। अब संन्यासाश्रमके अभावकी आशङ्काको

प्रव्रजेत्' (जा० ४) इत्येवमादिषु। प्रतिपन्नाप्रतिपन्नगार्हस्थ्यानामपाकृतानपाकृतर्णत्रयाणां चोर्ध्वरेतस्त्वं श्रुतिस्मृतिप्रसिद्धम्। तस्मादपि स्वातन्त्र्यं विद्यायाः ॥ १७ ॥

( २ परामर्शाधिकरणम्। सू० १८-२० )

## परामर्शं जैमिनिरचोदना चापवदति हि ॥ १८ ॥

पदच्छेद—परामर्शम्, जैमिनिः, अचोदना, च अपवदति, हि।

सूत्रार्थ—'ब्रह्मसंस्थोऽमृतत्वमेति' इत्यादि शास्त्र ( परामर्शम् ) अन्य परम्परान्यायसे प्राप्त संन्यासाश्रमका अनुवादक है, ( जैमिनिः ) ऐसा आचार्य जैमिनिका मत है, ( हि ) क्योंकि ( अचोदना ) इस वाक्यमें विधायक लिङ् आदि नहीं है, ( च ) और ( अपवदति ) 'वीरहा' इत्यादि शास्त्र भी संन्यासाश्रमका प्रतिषेध करता है।

❀ 'त्रयो धर्मस्कन्धाः' ( छा० २।२३।१ ) इत्यादयो ये शब्दा ऊर्ध्वरेतसामाश्रमाणां सद्भावायोदाहृताः न ते तत्प्रतिपादनाय प्रभवन्ति। यतः परामर्शमेषु शब्देष्वाश्रमान्तराणां जैमिनिराचार्यो मन्यते, न विधिम्। कुतः ? न ह्यत्र लिङादीनामन्यतमश्चोदनाशब्दोऽस्ति। अर्थान्तरपरत्वं चैषु प्रत्येकमुपलभ्यते। त्रयो धर्मस्कन्धा इत्यत्र तावद्यज्ञोऽध्ययनं दानमिति प्रथमस्तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयोऽत्यन्तमात्मानमाचार्यकुलेऽवसादयन्सर्व एते पुण्यलोका भवन्तीति परामर्शपूर्वकमाश्रमाणामनात्यन्तिकफलत्वं

---

( धर्मके तीन स्कन्ध-प्रविभाग हैं ) 'ये चेमे०' ( वे जो कि ज्ञान युक्त वानप्रस्थ और संन्यासी अरण्यमें श्रद्धा और तप इनकी उपासना करते हैं ) 'तप श्रद्धे०' ( जो विद्वान् लोग अरण्यमें तपः और श्रद्धाका सेवन करते हैं ) 'एतमेव०' ( इसी आत्मलोकको चाहते हुए संन्यासी सब कर्मोंका संन्यास करते हैं ) 'ब्रह्मचर्यादेव०' ( ब्रह्मचर्यसे ही संन्यास ग्रहण करे ) इत्यादि वैदिक शब्दोंमें अवगत होते हैं। प्राप्त गार्हस्थ्य अप्राप्त गार्हस्थ्य, अपाकृत तीन ऋण और अनपाकृत तीन ऋण वालोंका ऊर्ध्वरेतस्त्व श्रुति और स्मृतिमें प्रसिद्ध है। इससे भी विद्या स्वतन्त्र है ! ॥ १७ ॥

'त्रयो धर्मस्कधाः' ( धर्मके तीन स्कन्ध-प्रविभाग हैं ) इत्यादि श्रुतियाँ जो संन्यासाश्रमोंके सद्भावके लिए उदाहृत हैं, वे उनके प्रतिपादन करनेमें समर्थ नहीं है, क्योंकि जैमिनि आचार्य इन

### सत्यानन्दी-दीपिका

'त्रयो धर्मस्कन्धाः' इत्यादिसे निवृत्त करते हैं। 'तीन कर्म प्रधान आश्रम हैं और चौथा ब्रह्मसंस्थ-संन्यासाश्रम है' 'ब्रह्मचर्येण ऋषिभ्यो यज्ञेन देवेभ्यः प्रजया पितृभ्य एष वा अनृणः' ( ब्रह्मचर्य युक्त वेदाध्ययनसे ऋषिऋण, यज्ञ आदिसे देवऋण और प्रजा द्वारा पितृऋणसे मुक्त होकर यह ऋण रहित होता है ) ब्रह्मचर्याश्रम, गृहस्थाश्रम और वानप्रस्थाश्रम इनके लिए श्रौत और स्मार्त कर्मोंका विधान है और केवल ब्रह्म प्राप्तिके लिए गृहीत संन्यासके लिए कर्मका विधान नहीं है। परन्तु 'ऋणानि त्रीण्यपाकृत्य मनो मोक्षे निवेशयेत्। अनापकृत्य मोक्षं तु सेवमानो व्रजत्यधः॥' (तीनों ऋणोंका अपाकरणकर मनको मोक्षमें प्रविष्ट करे। ऋणोंका अपाकरण किये बिना मोक्षका सेवन करनेवाला अधोगतिको प्राप्त होता है ) इस प्रकारकी मनुस्मृति है। इसका अभिप्राय यह है—कि गृहस्थाश्रममें रहकर तीनों ऋणोंसे मुक्त हो संन्यास ग्रहण करे ? 'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेत् गृहाद्वा वनाद्वा' 'यदहरेव विरजेत्तदहरेव प्रव्रजेत्' (जाबा० ३।४) इत्यादि श्रुति है। श्रुति और स्मृतिमें विरोध हो तो स्वतन्त्र प्रमाणभूत श्रुति बलवती होती है। और 'द्वितीयमाश्रममिच्छेत्तमावसेद्' (द्वितीय आश्रमकी इच्छा करे और उसमें रहे) यह स्मृति है। इस प्रकार श्रुतिमें और स्मृतिमें संन्यासाश्रम प्रसिद्ध है। इसलिए ब्रह्मविद्या संन्यासाश्रम निष्ठ होनेसे स्वतन्त्र है ॥ १७ ॥

❀ पूर्व अधिकरणमें 'त्रयो धर्मस्कन्धाः' इत्यादि श्रुति जो यति आश्रमके सद्भावमें प्रमाणरूपसे कही गई है, उसका असंभव है, इसप्रकार आक्षेप संगतिसे 'परामर्शं जैमिनिः' इत्यादिसे पूर्वपक्ष

संकीर्त्यात्यन्तिकफलतया ब्रह्मसंस्थता स्तूयते—'ब्रह्मसंस्थोऽमृतत्वमेति' ( छा० २।२३।१ ) इति। ननु परामर्शेऽप्याश्रमा गम्यन्त एव। सत्यं गम्यन्ते, स्मृत्याचाराभ्यां तु तेषां प्रसिद्धिर्न प्रत्यक्षश्रुतेः। अतश्च प्रत्यक्षश्रुतिविरोधे सत्यनादरणीयास्ते भविष्यन्ति, अनधिकृतविषया वा। ननु गार्हस्थ्यमपि सहैवोर्ध्वरेतोभिः परामृष्टं यज्ञोऽध्ययनं दानमिति प्रथम इति। सत्यमेवम्, तथापि तु गृहस्थं प्रत्येवाग्निहोत्रादीनां कर्मणां विधानाच्छ्रुतिप्रसिद्धमेव हि तदस्तित्वम्। तस्मात्स्तुत्यर्थ एवायं परामर्शो न चोदनार्थः। अपि चापवदति हि प्रत्यक्षा श्रुतिराश्रमान्तरम्—'वीरहा वा एष देवानां योऽग्निमुद्वासयते', 'आचार्याय प्रियं धनमाहृत्य प्रजातन्तुं मा व्यवच्छेत्सी' (तै० १।११।१), 'नापुत्रस्य लोकोऽस्तीति तत्सर्वे पशवो विदुः' इत्येवमाद्या। तथा 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' ( छा० ५।१०।१ ) 'तपःश्रद्धे ये

---

श्रुतियोंमें अन्य आश्रमोंका परामर्श मानते हैं, विधि नहीं, किससे ? इससे कि लिङ् आदिमेंसे एक भी विधिशब्द यहां नहीं है। और इनमें प्रत्येक अन्य अर्थपरक उपलब्ध होता है। 'त्रयो धर्मस्कन्धाः' यहां तो 'यज्ञोऽध्ययनं दानमिति' ( यज्ञ, वेदाध्ययन और दान यह प्रथम धर्मस्कन्ध है, तप द्वितीय धर्मस्कन्ध और आचार्यकुलमें वास करनेवाला, जीवनपर्यन्त नियमपूर्वक आचार्यकुलमें देहको क्षीण करनेवाला नैष्ठिक ब्रह्मचारी, यह तृतीय धर्म स्कन्ध है, ये सब तीनों आश्रमी यथोक्त धर्मसे पुण्यलोक वाले होते हैं ) इसप्रकार आश्रमोंका परामर्शपूर्वक व्यभिचरित फल कहकर 'ब्रह्मसंस्थोऽमृतत्वमेति' ( ब्रह्ममें सम्यक् प्रकारसे स्थित चतुर्थाश्रमी संन्यासी अमृतत्वको प्राप्त होता है ) इसप्रकार अव्यभिचरित फलत्वसे ब्रह्मसंस्थताकी स्तुतिकी जाती है। परन्तु परामर्शमें भी आश्रम अवगत होते ही हैं। ठीक, अवगत होते हैं, परन्तु उनकी स्मृति और आचारसे तो प्रसिद्धि है, प्रत्यक्ष श्रुतिसे प्रसिद्धि नहीं है, अतः प्रत्यक्ष श्रुतिके विरोध होनपर वे अनादरणीय होंगे अथवा अनधिकारी विषयक होंगे अर्थात् अग्निहोत्र आदि कर्मोंमें अनाधिकारी लूले लंगड़े होंगे। परन्तु 'यज्ञोऽध्ययनं दानमिति प्रथमः' इसप्रकार गार्हस्थ्यका भी संन्यासियोंके साथ परामर्श किया गया है। ऐसा ठीक है, तो भी गृहस्थाश्रमके प्रति तो अग्निहोत्र आदि कर्मोंका विधान होनेसे उसका अस्तित्व श्रुति प्रसिद्ध ही है। इसलिए यह परामर्श स्तुत्यर्थक ही है विध्यर्थक नहीं है। और 'वीरहा वा एष०' (जो अग्निका उद्वासन (बुझाना) करता है वह देवोंका वीरहा-पुत्रघाती होता है) 'आचार्याय०' ( आचार्यको अभीष्ट धन लाकर [ उसकी आज्ञासे स्त्री परिग्रह कर ] सन्तान परम्पराका उच्छेद न करे ) 'नापुत्रस्य०' ( अपुत्रवालेको लोकप्राप्त नहीं होता, ऐसा सब पशु भी जानते हैं ) इत्यादि प्रत्यक्ष श्रुति आश्रमान्तरका प्रतिषेध करती है। इसी

## सत्यानन्दी-दीपिका

करते हैं। ऊर्ध्वरेतः शब्दसे यहां संन्यासाश्रम समझना चाहिए। भाष्यमें 'आश्रमान्तराणां' यह बहुवचन अवान्तर भेदके अभिप्रायसे है, इसलिए काण्वायन स्मृतिसे अर्थतः अनुवृत्ति करते हैं—गायत्र, ब्राह्म, प्रजापत्य और बृहन् भेदसे ब्रह्मचारी चार प्रकारके हैं। उपनयनानन्तर तीनरात्रि तक लवणका भक्षण न कर गायत्रीका अध्ययन करनेवाला गायत्र, वेदाध्ययन तक ब्रह्मचर्यव्रती ब्राह्म, ऋतुकालमें स्वस्त्री अनुगामी परस्त्रीविमुख रहनेवाला अथवा संवत्सरपर्यन्त वेदव्रती वटुक प्राजापत्य और मरणपर्यन्त गुरुकुलवासी नैष्ठिक ब्रह्मचारी बृहन् कहा जाता है। वार्त्तांक, यायावर, शालीन और घोरसंन्यासिक भेदसे गृहस्थ भी चार प्रकारका है। कृषि, गोरक्षा आदि वैश्यवृत्तिसे निर्वाही तथा नित्य आदि क्रियापरक वार्त्ताकवृत्ति, जो सदा आयाचितवृत्ति हो याजन, अध्यापन और प्रतिग्रहसे विमुख वह यायावर, षट्कर्मोंमें रत याजनादि वृत्ति सञ्चयी शालीन और उद्धृत पवित्र जलसे कर्मकरता प्रतिदिन उच्छवृत्ति हिंसादिरहित ग्रामवासी घोरसंन्यासिक कहा जाता है। वैखानस, औदुम्बर, बालखिल्य और फेनप भेदसे वानप्रस्थ चार प्रकारका है। ग्रामके बाहर बिना जोते ओषधियोंसे अग्नि-

ह्युपवसन्त्यरण्ये' (मुण्ड० १।२।११) इति च देवयानोपदेशो नाश्रमान्तरोपदेशः। संदिग्धं चाश्रमान्तराभिधानम्—'तप एव द्वितीयः' (छा० २।२।३।१) इत्येवमादिषु। तथा 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' (बृह० ४।४।२२) इति लोकसंस्तवोऽयं न पारिव्राज्यविधिः। ननु ब्रह्मचर्यादेव प्रव्रजेदिति विस्पष्टमिदं प्रत्यक्षं पारिव्राज्यविधानं जाबालानाम्। सत्यमेवमेतत्, अनपेक्ष्य त्वेतां श्रुतिमयं विचार इति द्रष्टव्यम् ॥ १८ ॥

## अनुष्ठेयं बादरायणः साम्यश्रुतेः ॥ १९ ॥

पदच्छेद—अनुष्ठेयम्, बादरायणः, साम्यश्रुतेः।

सूत्रार्थ—( बादरायणः ) बादरायणका मत है कि ( अनुष्ठेयम् ) संन्यासाश्रम अनुष्ठेय है, ( साम्यश्रुतेः ) क्योंकि 'त्रयो धर्मस्कन्धाः' इसप्रकार गृहस्थाश्रमके साथ संन्यासाश्रमकी भी समान परामर्श श्रुति है।

* अनुष्ठेयमाश्रमान्तरं बादरायण आचार्यो मन्यते, वेदे श्रवणात्। अग्निहोत्रादीनां चावश्यानुष्ठेयत्वात्तद्विरोधादनधिकृतानुष्ठेयमाश्रमान्तरमिति हीमां मतिं निराकरोति, गार्हस्थ्यवदेवाश्रमान्तरमप्यनिच्छता प्रतिपत्तव्यमिति मन्यमानः। कुतः? साम्यश्रुतेः। समा हि गार्हस्थ्येनाश्रमान्तरस्य परामर्शश्रुतिर्दृश्यते—'त्रयो धर्मस्कन्धाः' ( छा० २।२३।१ ) इत्याद्या। यथेह श्रुत्यन्तरविहितमेव गार्हस्थ्यं परामृष्टमेवमाश्रमान्तरमपीति प्रतिपत्तव्यम्। यथा च शास्त्रान्तरप्राप्तयोरेव निवीतप्राचीनावीतयोः परामर्श उपवीतविधिपरे

---

प्रकार 'ये चेमेऽरण्ये०' ( जो ये अरण्यमें श्रद्धा और तपकी उपासना करते हैं ) 'तपः श्रद्धे०' (जो तप और श्रद्धाका अरण्यमें रहकर सेवन करते हैं, ) यह देवयान मार्गका उपदेश है, आश्रमान्तरका उपदेश नहीं है। और 'तप एव द्वितीयः' ( तप ही द्वितीय धर्म है ) इत्यादि श्रुतियोंमें अन्य आश्रमों का कथन संदिग्ध है। उसीप्रकार 'एतमेव०' ( उसी आत्मलोकके अभिलाषी परिव्राजक सब कर्मोंका त्याग करते हैं ) यह आत्मलोककी स्तुति है पारिव्राज्य विधि नहीं है। परन्तु 'ब्रह्मचर्यादेव' ( ब्रह्मचर्य से ही संन्यास ग्रहण करे ) इसप्रकार जाबालोंमें यह स्पष्टरूपसे प्रत्यक्ष परिव्राज्यका विधान है। यह ठीक है। परन्तु इस श्रुतिकी अपेक्षा किये बिना यह विचार है, ऐसा समझना चाहिए ॥ १८ ॥

सिद्धान्ती—बादरायण आचार्यका मत है अन्य आश्रम अनुष्ठेय है, क्योंकि उसका वेदमें श्रवण है। अग्निहोत्र आदिके अवश्य अनुष्ठेय होनेसे उसके विरोधसे अन्य आश्रमकी इच्छा न करनेवालोंको भी स्वीकार करना चाहिए, ऐसा माननेवाले आचार्य बादरायण निराकरण करते हैं। किससे? इससे कि साम्यश्रुति है। गार्हस्थ्यके साथ अन्य आश्रयको भी 'त्रयो धर्मस्कन्धाः' इत्यादि समान परामर्श श्रुति देखी जाती है। जैसे यहाँ अन्य श्रुति विहित ही गार्हस्थ्यका परामर्श किया गया है, वैसे ही अन्य श्रुतिमें विहित अन्य आश्रमका भी परामर्श किया गया है, ऐसा समझना चाहिए। जैसे अन्य शास्त्रसे ही प्राप्त निवीत और प्राचीनावीतका उपवीतविधि परक वाक्योंमें परा-

### सत्यानन्दी-दीपिका

होत्र करनेवाला वैखानस, प्रातः उठकर जिस दिशाको देखे उसी दिशाके औदुम्बर, बेर, निवार और सामासे कार्य चलानेवाला औदम्बर, आठ मासतक उपार्जनकर चातुर्मासमें भोजन करे, कार्तिकपूर्णिमामें संगृहीत पुष्प फलादिका त्यागी जटा वल्कलधारी वालखिल्य और गिरे फल पत्र आदि खाकर क्वचिद्वासकर और कर्मपरायण वह फेनप कहा जाता है। कुटीचक, बहूदक, हंस और परमहंस भेदसे परिव्राजक चार प्रकारके हैं। उनमें स्वपुत्रके घरमें भिक्षा करते त्रिदण्डधारी वह कुटीचक, झोली, कमण्डलु पवित्र, पादुका, आसन, शिखा, यज्ञोपवीत, कौपीन, कषायवस्त्रधारी, तीर्थोंमें भ्रमण करनेवाले, भिक्षावृत्तिसे रहकर आत्माभिलाषी त्रिदण्डी बहूदक है, शिखा त्यागकर यज्ञोपवीतधारी हाथमें झोली कमण्डलु, ग्राममें एक रातवासी कृच्छ्र चान्द्रायण आदि व्रती एक दण्डधारी हंस है,

वाक्ये। तस्मात्तुल्यमनुष्ठेयत्वं गार्हस्थ्येनाश्रमान्तरस्य। तथा 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' (बृह० ४।४।२२) इत्यस्य वेदानुवचनादिभिः समभिव्याहारः। 'ये चेमेऽरण्ये श्रद्धा तप इत्युपासते' ( छा० ५।१०।१ ) इत्यस्य च पञ्चाग्निविद्यया। यत्तूक्तम्—'तप एव द्वितीयः' ( छा० २।२३।१ ) इत्यादिष्वाश्रमान्तराभिधानं संदिग्धमिति, नैष दोषः, निश्चयकारणसद्भावात्। 'त्रयो धर्मस्कन्धाः' ( छा० २।२३।१ ) इति हि धर्मस्कन्धत्रित्वं प्रतिज्ञातम्। नच यज्ञादयो भूयांसो धर्मा उत्पत्तिभिन्नाः सन्तोऽन्यत्राश्रमसंबन्धात्त्रित्वेऽन्तर्भावयितुं शक्यन्ते। तत्र यज्ञादिलिङ्गो गृहाश्रम एको धर्मस्कन्धो निर्दिष्टो ब्रह्मचारीति च स्पष्ट आश्रमनिर्देशस्तप इत्यपि कोऽन्यस्तपःप्रधानादाश्रमाद्धर्मस्कन्धोऽभ्युपगम्येत ? 'ये चेमेऽरण्ये' ( छा० ५।१०।१ ) इति चारण्यलिङ्गाच्छ्रद्धातपोभ्यामाश्रमगृहीतिः। तस्मात्परामर्शेऽप्यनुष्ठेयमाश्रमान्तरम् ॥ १९ ॥

## विधिर्वा धारणवत् ॥ २० ॥

पदच्छेद—विधिः, वा, धारणवत्।

सूत्रार्थ—( वा ) अथवा ( विधिः ) अन्य आश्रमकी विधि माननी चाहिए, ( धारणवत् ) जैसे 'अधस्तात् समिधम्' इत्यादि श्रुतिमें समिध् धारणकी विधि है।

---

मर्श होता है। इसलिए अन्य आश्रमका गार्हस्थ्यके साथ अनुष्ठेयत्व समान है। उसीप्रकार 'एतमेव०' ( इस आत्मलोककी इच्छा करनेवाले संन्यासी सब कुछ त्यागकर चले जाते हैं ) इसका वेदके अनुवचन आदिके साथ सहोच्चारण है। 'ये चेमेऽरण्ये०' ( ये जो कि वनमें श्रद्धा और तप इनकी उपासना करते हैं ) इसका पञ्चाग्निविद्याके साथ सहोच्चारण है। और यह जो कहा गया है कि 'तप एव द्वितीयः' इत्यादिमें अन्य आश्रमका विधान संदिग्ध है। यह दोष नहीं है, क्योंकि निश्चय कारणका सद्भाव है। 'त्रयो धर्मस्कन्धाः' इसप्रकार धर्मस्कन्ध तीन हैं, ऐसी प्रतिज्ञा की गई है। बहुत-से यज्ञ आदि धर्म उत्पत्तिविधि [ यजेत इत्यादि ] से भिन्न होते हुए आश्रम सम्बन्धसे अन्यत्र त्रित्वमें अन्तर्भाव नहीं किये जा सकते। उनमें यज्ञादि-लिङ्गक गृहस्थाश्रम यह एक धर्मस्कन्ध निर्दिष्ट है। 'ब्रह्मचारी' इसप्रकार स्पष्ट आश्रमका निर्देश है, 'तपः' यह भी तप प्रधान आश्रमसे कौन-सा दूसरा धर्मस्कन्ध स्वीकार किया जाता है। 'ये चेमेऽरण्ये' इसमें अरण्यलिङ्गसे-श्रद्धा और तपसे आश्रमका ज्ञान होता है। इसलिए परामर्शमें भी अन्य आश्रम अनुष्ठेय है ॥ १९ ॥

### सत्यानन्दी-दीपिका

एक दण्डधारी मुण्डित यज्ञोपवीत रहित सर्व कर्मत्यागी आत्मनिष्ठ परमहंस कहा जाता है। परन्तु ऊपर वर्णित पूर्वपक्षमें संन्यासका अभाव होनेसे ज्ञानमें स्वतन्त्र मोक्षरूपफल की असिद्धि है और सिद्धान्तमें संन्यासाश्रमके सिद्ध होनेपर ज्ञानमें फलकी सिद्धि है ॥ १८ ॥

* जैसे अन्य श्रुतिमें विहित गार्हस्थ्यका 'त्रयो धर्मस्कन्धाः' यहाँ परामर्श ( अनुवाद ) किया गया है, वैसे ही यहाँ अन्य श्रुतिसे विहित अन्य आश्रमोंका भी परामर्श है। अनुवाद अन्यत्र विहितका होता है। जैसे 'निवीतं मनुष्याणां प्राचीनावीतं पितॄणामुपवीतं देवानाम्' ( निवीत मनुष्योंका, प्राचीनावीत पितरोंका और उपवीत देवोंका होता है ) इत्यादि वाक्यमें देवकर्ममें उपवीतका विधान है और उसकी स्तुतिके लिए इन दोका अनुवाद है, क्योंकि मनुष्य सम्बन्धी क्रियामें निवीत-अर्थ देहका वस्त्रसे बन्धन प्राप्त है और पितृ-सम्बन्धी क्रियामें प्राचीनावीत भी अन्य विधिसे प्राप्त है। इस प्रकार 'त्रयो धर्मस्कन्धाः' यह वाक्य भले 'यज्ञोऽध्ययनं दानमिति' इसप्रकार अन्य अर्थ परक हो, परन्तु इस वाक्यमें परामर्शसे अन्य आश्रमोंकी प्रतीतिका वारण नहीं किया जा सकता है। 'एतमेव प्रव्राजिनो लोकमिच्छन्तः प्रव्रजन्ति' इत्यादि साक्षात् श्रुति पारिव्राज्य आश्रमका विधान करती है। वेदानुवचन आदि विधेयोंके साथ सहोच्चारण होनेसे पारिव्राज्यमें भी विधेयता है। 'ये चेमे०' इत्यादि श्रुतिसे वानप्रस्थका विधान है, क्योंकि पञ्चाग्निविद्यारूप विधेयके साथ कथन होनेसे वानप्रस्थ भी विधेय है।

* विधिर्वाऽयमाश्रमान्तरस्य, न परामर्शमात्रम्। ननु विधित्वाभ्युपगमे एकवाक्यताप्रतीतिरुपरुध्येत, प्रतीयते चात्रैकवाक्यता—पुण्यलोकफलास्त्रयो धर्मस्कन्धा ब्रह्मसंस्थता त्वमृतत्वफलेति। सत्यमेतत्, सतीमपि त्वेकवाक्यताप्रतीतिं परित्यज्य विधिरेवाभ्युपगन्तव्यः, अपूर्वत्वात्, विध्यन्तरस्यादर्शनात्, विस्पष्टाच्चाश्रमान्तरप्रत्ययाद्गुणवादकल्पनयैकवाक्यत्वयोजनानुपपत्तेः। धारणवत्। यथा—अधस्तात्समिधं धारयन्ननुद्रवेदुपरि हि देवेभ्यो धारयति' इत्यत्र सत्यामप्यधोधारणेनैकवाक्यताप्रतीतौ विधीयत एवोपरिधारणम्, अपूर्वत्वात्। तथा चोक्तं शेषलक्षणे—'विधिस्तु धारणेऽपूर्वत्वात्' इति, तद्वदिहाप्याश्रमपरामर्शश्रुतिर्विधिरेवेति कल्प्यते॥ यदापि परामर्श एवायमाश्रमान्तराणाम्, तदापि ब्रह्मसंस्थता तावत्संस्तवसामर्थ्यादवश्यं विधेयाऽभ्युपगन्तव्या। सा च किं चतुर्ष्वाश्रमेषु यस्य कस्यचिदाहोस्वित्परिव्राजकस्यैवेति विवेक्तव्यम्। यदि च ब्रह्मचर्यान्तेष्वाश्र-

---

अथवा यह अन्य आश्रमकी विधि है केवल अनुवाद नहीं है। परन्तु विधित्व स्वीकार करनेपर एकवाक्यताकी प्रतीतिका बाध होगा और यहाँ तीन धर्मस्कन्ध पुण्यलोक फलवाले हैं और ब्रह्मसंस्थता अमृतत्व फलवाली है, इसप्रकार यहाँ एकवाक्यता प्रतीत होती है। यह ठीक है। सिद्धान्ती—परन्तु यहाँ एकवाक्यताकी प्रतीति होनेपर भी उसका परित्यागकर अपूर्व होनेसे विधि ही स्वीकार करनी चाहिए, क्योंकि इनकी अन्य विधि नहीं देखी जाती। कारण कि अन्य आश्रमोंका स्पष्ट ज्ञान होनेसे गुणवाद कल्पनासे एकवाक्यताकी योजना नहीं हो सकती। धारणके समान। जैसे 'अधस्तात्समिधम्' (स्रुवामें रखी हुई हविष्यके नीचे समिधाको धारणकर अनुद्रवण करे—आहवनीयाग्निके समीप जाय, क्योंकि उन देवताओंके लिए हविपूर्ण जुहूके ऊपर समिधाका धारण करता है) इसमें नीचे धारणके साथ एकवाक्यता प्रतीत होनेपर भी अपूर्व होनेसे ऊपर धारणका विधान किया जाता है अर्थात् ऊपर धारणकी विधि मानी जाती है। जैसे कि 'विधिस्तु धारणेऽपूर्वत्वात्' (दैविक हविष्यमें जुहू-स्रुवाके ऊपर समिधाका धारण अपूर्व होनेसे विधि है) इसप्रकार शेषलक्षणमें कहा गया है। वैसे ही यहाँ भी आश्रमकी परामर्श श्रुति विधि ही है ऐसी कल्पनाकी जाती है। यद्यपि यह अन्य आश्रमोंका परामर्श ही है, तो भी ब्रह्मसंस्थता स्तुतिकी सामर्थ्यसे विधेयरूपसे स्वीकार करनी चाहिए। और वह स्तुति क्या चार आश्रमोंमें चाहे जिस किसी आश्रमकी है अथवा परिव्राजककी ही है? इसका विवेचन करना चाहिए। यदि ब्रह्मचारी पर्यन्त अनुवाद किए जानेवाले आश्रमोंमें परिव्राजक

## सत्यानन्दी-दीपिका

इसलिए श्रुतिमें त्रित्वकी अन्यथा अनुपपत्ति होनेसे स्कन्धशब्दको आश्रमपरक मानना चाहिए। और 'स्वर्गकामो यजेत' 'दद्यात्' 'अध्येतव्यम्' इत्यादि उत्पत्ति विधिसे भिन्न बहुत-से यज्ञ आदि धर्म हैं, उनका आश्रम सम्बन्धके विना 'त्रयो धर्मस्कन्धाः' इसमें तीन संख्यामें अन्तर्भाव नहीं हो सकता। इसलिए इनमें यज्ञादि लिङ्गवाला गृहस्थाश्रम एक धर्मस्कन्ध है। 'ब्रह्मचारीति द्वितीयः' 'तपः' इससे तप प्रधान तृतीय वानप्रस्थ आश्रमका ग्रहण है। इसप्रकार 'ब्रह्मसंस्थोऽमृतत्वमेति' यहाँ परिशेषसे 'ब्रह्मसंस्थ' से संन्यासका ही ग्रहण होता है। पूर्वपक्षीने अन्य आश्रमके प्रतिषेधमें जो 'वीरहा वा एष' यह श्रुति प्रमाण दिया है, वह भी गृहस्थाश्रम युक्त पुरुषके लिए है अर्थात् जो गृहस्थ अज्ञान अथवा प्रमाद आदिसे यज्ञीय अग्निको बुझा देता है वह देवोंका पुत्रघाती होता है, यह अभिप्राय है। इस श्रुतिसे अविरोध और परामर्श होनेसे (संन्यासाश्रम) का अनुष्ठान करना चाहिए॥ १९॥

* 'त्रयो धर्मस्कन्धाः' यह श्रुति अन्य आश्रमोंकी अनुवादक कही गई है विधि नहीं है। अब इसे अन्य आश्रमोंमें विधि कहते हैं अनुवादक नहीं है, क्योंकि इसमें लाघव है। पूर्वपक्षी—यदि 'त्रयो धर्मस्कन्धाः' इसको अन्याश्रमोंका विधि माने तो 'त्रयो०' और 'ब्रह्मसंस्थो०' इन दोनोंकी एक वाक्यताका बाध होगा, अतः इसको चारों आश्रमोंकी विधि मानना अयुक्त है। सिद्धान्ती—अन्य

मेषु परामृश्यमानेषु परिव्राजकोऽपि परामृष्टस्ततश्चतुर्णामप्याश्रमाणां परामृष्टत्वाविशेषादनाश्रमित्वानुपपत्तेश्च यः कश्चिच्चतुर्ष्वाश्रमेषु ब्रह्मसंस्थो भविष्यति। अथ न परामृष्टस्ततः परिशिष्यमाणः परिव्राडेव ब्रह्मसंस्थ इति सेत्स्यति। तत्र तपःशब्देन वैखानसग्राहिणा परामृष्टः परिव्राडपीति केचित्। तदयुक्तम्, नहि सत्यां गतौ वानप्रस्थविशेषणेन परिव्राजको ग्रहणमर्हति, यथाऽत्र ब्रह्मचारिगृहमेधिनावसाधारणेनैव स्वेन स्वेन विशेषणेन विशेषितावेवं भिक्षुवैखानसावपीति युक्तम्। तपश्चासाधारणो धर्मो वानप्रस्थानाम्, कायक्लेशप्रधानत्वात्, तपःशब्दस्य तत्र रूढेः। भिक्षोस्तु धर्म इन्द्रियसंयमादिलक्षणो नैव तपःशब्देनाभिलप्यते। चतुष्ट्वेन च प्रसिद्धा आश्रमास्त्रित्वेन परामृश्यन्त इत्यन्याय्यम्। अपि च भेदव्यपदेशोऽत्र भवति–'त्रय एते पुण्यलोकभाज एकोऽमृतत्वभाक्' इति। पृथक्त्वे चैष भेदव्यपदेशोऽवकल्पते। न ह्येवं भवति देवदत्तयज्ञदत्तौ मन्दप्रज्ञावन्यतरस्त्वनयोर्महाप्रज्ञ इति। भवति त्वेवं देवदत्तयज्ञदत्तौ मन्दप्रज्ञौ, विष्णुमित्रस्तु महाप्रज्ञ इति। तस्मात्पूर्वे त्रय आश्रमिणः पुण्यलोकभाजः, परिशिष्यमाणः परिव्राडेवामृतत्वभाक्। * कथं पुनर्ब्रह्मसंस्थशब्दो योगात्प्रवर्तमानः सर्वत्र संभवन्परिव्राजक एवावतिष्ठेत? रूढ्यभ्युपगमे चाश्रममात्रादमृतत्वप्राप्तेर्ज्ञानानर्थक्यप्रसङ्ग इति। अत्रोच्यते–ब्रह्मसंस्थ इति हि ब्रह्मणि परिसमाप्तिरनन्यव्यापारतारूपं तन्निष्ठत्वमभिधीयते। तच्च त्रयाणामाश्रमाणां न संभवति, स्वाश्रमविहि-

भी परामृष्ट हो तो चारों आश्रमोंका भी समानरूपसे परामर्श हो जानेसे और अनाश्रमित्व [ अनाश्रमी न तिष्ठेत् ] की अनुपपत्ति होनेसे चारों आश्रमोंमें जो कोई ब्रह्मसंस्थ होगा। और यदि परिव्राजकका परामर्श न हो तो अवशिष्ट परिव्राजक ही ब्रह्मसंस्थ है, ऐसा सिद्ध होगा। उनमें वैखानसग्राही तपःशब्दसे परिव्राजकका भी परामर्श होता है, ऐसा कुछ लोग कहते हैं। वह युक्त नहीं है, क्योंकि गतिके होनेपर वानप्रस्थके विशेषणसे (तपःशब्दसे) परिव्राजकका ग्रहण नहीं हो सकता। जैसे यहाँ ब्रह्मचारी और गृहस्थो अपने-अपने आसाधारण विशेषणसे विशेषित होते हैं, वैसे भिक्षु और वानप्रस्थ भी विशेषित हों, यह युक्त है। तपः वानप्रस्थोंका असाधारण धर्म है, क्योंकि उनमें कायक्लेश प्रधान हैं। तपः शब्द कायक्लेश आदिमें रूढ है। परन्तु परिव्राजकका इन्द्रिय संयम आदि रूप धर्म तपः शब्दसे नहीं कहा जाता। और चाररूपसे प्रसिद्ध आश्रमोंका तीनरूपसे अनुवाद अयुक्त है। और 'यत्र एते०' ( जहाँ ये तीन पुण्यलोकके भागी हैं और एक अमृतत्वका भागी है) इस प्रकार यहाँ भेदका व्यपदेश भी है और ( वानप्रस्थ और परिव्राजक ) पृथक् होनेपर यह भेद व्यपदेश भी उपपन्न होता है। देवदत्त और यज्ञदत्त मन्दबुद्धि हैं किन्तु इन दोनोंमें से एक महाप्राज्ञ है, ऐसा कभी नहीं होता। परन्तु ऐसा तो होता है कि देवदत्त और यज्ञदत्त मन्दबुद्धि हैं पर विष्णुमित्र महाप्राज्ञ है। इसलिए पूर्वके तीन आश्रमी पुण्यलोकके भागी होते हैं और परिशिष्यमाण परिव्राजक ही अमृतत्वका भागी होता है। पू०—किन्तु योगसे प्रवृत्त होता हुआ ब्रह्मसंस्थ शब्द सब आश्रमोंमें सम्भव होता हुआ फिर परिव्राजकमें ही क्यों अवस्थित हो? और रूढ़िके स्वीकार होनेपर केवल आश्रममात्रसे अमृतत्वकी प्राप्ति होनेसे ज्ञानमें अनर्थक प्रसङ्ग होगा? सि०—इसपर कहते हैं—'ब्रह्मसंस्थः' इस शब्दसे ब्रह्ममें परि-

## सत्यानन्दी-दीपिका

आश्रमोंकी किसी अन्य विधिसे पूर्व सिद्धि न होनेसे उनका अनुवाद भी सम्भव नहीं है। 'ब्रह्मसंस्थो०' इस वाक्यको स्तुति परक माननेसे लक्षणा दोष है, इसलिए एकवाक्यता प्रतीतिका त्यागकर अन्य आश्रमोंकी प्रथम किसी अन्य विधिसे सिद्धि न होनेके कारण उनकी विधि मानना युक्त है। जैसे 'धारणवत्' यजमानकी मृत्यु होनेपर आहिताग्निमें अग्निहोत्र होमकर उस अग्निसे उसका दाह संस्कार किया जाता है, अतः उसे प्रेताग्निहोत्र कहते हैं। उसमें जुहूमें हविको भरकर हवनके लिए जब आहवनीय अग्निके पास ले जाय, तब उस हविको 'अधस्तात्समिधम्, इससे विहित अधोधारणका

तकर्माननुष्ठाने प्रत्यवायश्रवणात्, परिव्राजकस्य तु सर्वकर्मसंन्यासात्प्रत्यवायो न संभवत्यननुष्ठाननिमित्तः। शमदमादिस्तु तदीयो धर्मो ब्रह्मसंस्थताया उपोद्बलको न विरोधी। ब्रह्मनिष्ठत्वमेव हि तस्य शमदमाद्युपबृंहितं स्वाश्रमविहितं कर्म, यज्ञादीनि चेतरेषां, तद्व्यतिक्रमे च तस्य प्रत्यवायः। तथा च 'न्यास इति ब्रह्मा ब्रह्मा हि परः परो हि ब्रह्मा। तानि वा एतान्यवराणि तपांसि न्यास एवात्यरेचयत्' ( नारा० ), 'वेदान्तविज्ञानसुनिश्चितार्थाः संन्यासयोगाद्यतयः शुद्धसत्त्वाः' ( मुण्ड० ३।२।६, नारा० १२।३, कैवल्य० ३ ) इत्याद्याः श्रुतयः। स्मृतयश्च—'तद्बुद्धयस्तदात्मानस्तन्निष्ठास्तत्परायणाः' ( गी० ५।१७ ) इत्याद्या ब्रह्मसंस्थस्य कर्माभावं दर्शयन्ति। तस्मात्परिव्राजकस्याश्रममात्रादमृतत्वप्राप्तेर्ज्ञानानर्थक्यप्रसङ्ग इत्येषोऽपि दोषो नावतरति। तदेवं परामर्शेऽपीतरेषामाश्रमाणां पारिव्राज्यं तावद्ब्रह्मसंस्थतालक्षणं लभ्येतैव। अनपेक्ष्यैव जाबालश्रुतिमाश्रमान्तरविधायिनीमयमाचार्येण विचारः प्रवर्तितः। विद्यत एव त्वाश्रमान्तरविधिश्रुतिः प्रत्यक्षा—'ब्रह्मचर्यं परिसमाप्य गृही भवेद्गृही भूत्वा वनी भवेद्वनी भूत्वा प्रव्रजेत्। यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद्गृहाद्वा वनाद्वा' ( जाबा० ४ ) इति। न चेयं श्रुतिरनधिकृतविषया शक्या वक्तुम्, अविशेषश्रवणात्। पृथग्विधानाच्चानधिकृतानाम् 'अथ पुनरेव व्रती वाऽव्रती वा स्नातको वाऽस्नातको वोत्सन्नाग्निरनग्निको वा' (जाबा० ४) इत्यादिना।

---

समाप्ति-अनन्य व्यापारतारूप ब्रह्मनिष्ठत्व कहा है। वह तीनों आश्रमोंमें नहीं हो सकता, क्योंकि अपने आश्रम विहित कर्मानुष्ठान न होनेपर प्रत्यवायका श्रवण है। परन्तु परिव्राजकमें सब कर्मोंका संन्यास होनेसे कर्माननुष्ठान निमित्तक प्रत्यवाय-पापका संभव नहीं है। शम, दम आदि तो उस परिव्राजकका धर्म है वह ब्रह्मसंस्थताका पोषक है विरोधी नहीं है, क्योंकि शम, दम आदिसे सुदृढ ब्रह्मनिष्ठत्व ही उसका स्वाश्रम-विहित कर्म है और यज्ञ आदि अन्य आश्रमोंके कर्म हैं। स्वाश्रम विहित कर्मके उल्लङ्घन होनेपर उसको प्रत्यवाय होता है, क्योंकि 'न्यास इति०' (यह संन्यास ब्रह्मा है, क्योंकि ब्रह्मा ही श्रुति स्मृतिमें श्रेष्ठ है इसलिए ब्रह्मा-संन्यास ही श्रेष्ठ है, ये जो तप हैं वे अल्प हैं, संन्यास ही इन सबसे अधिक श्रेष्ठ है) 'वेदान्तविज्ञान०' ( जिन्होंने वेदान्त जनित विज्ञानसे ज्ञेय अर्थका अच्छी तरह निश्चय कर लिया है वे संन्यासयोगसे यत्न करनेवाले समस्त शुद्ध चित्त पुरुष ब्रह्मलोकमें देह त्याग करते समय परम अमर भावको प्राप्त हो सब ओरसे मुक्त हो जाते हैं ) इत्यादि श्रुतियाँ और 'तद्बुद्धयः०' (तद्रूप 'मैं ब्रह्म हूँ' बुद्धिवाले, तद्रूप मनवाले, तत् निष्ठावाले और तत् परायण पुरुष परम गतिको प्राप्त होते हैं) इत्यादि स्मृतियाँ ब्रह्मसंस्थमें कर्मका अभाव दिखलाती हैं। इससे परिव्राजकको आश्रममात्रसे मोक्षकी प्राप्ति होनेसे ज्ञानमें अनर्थ प्रसङ्ग है यह दोष भी अवतरित नहीं होता, अपितु इस प्रकार अन्य आश्रमोंका परामर्श होनेपर ब्रह्मसंस्थतारूप पारिव्राज्य प्राप्त ही होना चाहिए। अन्य आश्रमका विधान करनेवाली जाबाल श्रुतिकी अपेक्षा किये विना ही आचार्य जैमिनिने यह विचार प्रवृत्त किया है। 'ब्रह्मचर्यं परिसमाप्य०' ( ब्रह्मचर्य भली-भाँति समाप्त कर गृहस्थाश्रमी हो, गृहस्थ होकर वानप्रस्थ हो, वानप्रस्थ होकर परिव्राजक हो, अथवा इसके विपरीत ब्रह्मचर्यसे, गृहस्थसे

## सत्यानन्दी-दीपिका

स्तावक मानकर 'ऊपरि हि' इस वाक्यकी एकवाक्यता हो सकती है, तो भी दैवहोममें जुहू दण्डके ऊपर समिधाके धारणमें ही अपूर्व होनेसे विधि है। इसप्रकार जैमिनि आचार्यने वाक्यभेद तृतीयाध्यायमें कहा है। इसप्रकार यहाँ भी चारों आश्रमोंकी विधि है। अब तीन आश्रमोंका अनुवादकर पारिव्राज्य विधिमें 'यदापि' इत्यादिसे अन्य पक्ष कहा जाता है।

* क्या यह 'ब्रह्मसंस्थः' शब्द यौगिक है कि रूढि ? इसको 'कथम्' आदिसे कहते हैं। यद्यपि 'ब्रह्मसंस्थः' शब्द संन्यासाश्रममें रूढ़ नहीं है, तो भी यौगिक अर्थसे उसी अर्थकी उपस्थिति करता है, क्योंकि अन्य आश्रमोंमें यौगिक अर्थका संभव नहीं है ॥ २० ॥

ब्रह्मज्ञानपरिपाकाङ्गत्वाच्च पारिव्राज्यस्य नानधिकृतविषयत्वम्। तच्च दर्शयति—'अथ परिव्राड्विवर्णवासा मुण्डोऽपरिग्रहः शुचिरद्रोही भैक्षाणो ब्रह्मभूयाय भवति' (जाबा० ५) इति। तस्मात्सिद्धा ऊर्ध्वरेतसामाश्रमाः। सिद्धं चोर्ध्वरेतःसु विधानाद्विद्यायाः स्वातन्त्र्यमिति ॥२०॥

( ३ स्तुतिमात्राधिकरणम्। सू० २१-२२ )

## स्तुतिमात्रमुपादानादिति चेन्नापूर्वत्वात् ॥ २१ ॥

पदच्छेद—स्तुतिमात्रम्, उपादानात्, इति, चेत्, न, अपूर्वत्वात्।

सूत्रार्थ—उद्गीथ आदि उपासनाओंमें श्रूयमाण 'स एष रसानां' इत्यादि श्रुतियाँ ( स्तुतिमात्रम् ) केवल स्तुतिमात्र हैं, ( उपादानात् ) क्योंकि उद्गीथ आदि कर्माङ्गोंका ग्रहण है, ( इतिचेन्न ) ऐसा यदि कहो तो युक्त नहीं है, ( अपूर्वत्वात् ) क्योंकि वे अपूर्व हैं, अतः उनका विधान है।

* 'स एष रसानां रसतमः परमः परार्ध्योऽष्टमो यदुद्गीथः' (छा० १।१।३) 'इयमेवर्गग्निः साम' ( छा० १।६।१ ) 'अयं वाव लोक एषोऽग्निश्चितः। तदिदमेवोक्थमियमेव पृथिवी' इत्येवंजातीयकाः श्रुतयः किमुद्गीथादेः स्तुत्यर्था आहोस्विदुपासनाविध्यर्था इत्यस्मिन्संशये—स्तुत्यर्था इति युक्तम्, उद्गीथादीनि कर्माङ्गान्युपादाय श्रवणात्। यथा—'इयमेव जुहूरादित्य कूर्मः स्वर्गो लोक आहवनीयः' इत्याद्या जुह्वादिस्तुत्यर्थास्तद्वदिति चेत्, नेत्याह, नहि स्तुतिमात्रमासां श्रुतीनां प्रयोजनं युक्तम्, अपूर्वत्वात्। विध्यर्थतायां ह्यपूर्वोऽर्थो विहितो भवति, स्तुत्यर्थतायां त्वानर्थक्यमेव स्यात्। विधायकस्य हि शब्दस्य वाक्यशेषभावं प्रतिपद्यमाना स्तुतिरुपयुज्यत इत्युक्तम्—'विधिना त्वेकवाक्यत्वात्स्तुत्यर्थेन विधीनां स्युः' इत्यत्र। प्रदेशान्तरविहितानां तूद्गीथादीनामियं प्रदेशान्तरपठिता स्तुतिर्वाक्यशेषभा-

---

अथवा वानप्रस्थसे हो परिव्राजक हो ) इस प्रकार अन्य-सन्यास आश्रमकी प्रत्यक्ष विधि श्रुति विद्यमान है। यह श्रुति अनधिकृत विषयक नहीं कही जा सकती, क्योंकि यह अविशेष श्रुति है। 'अथ पुनरेव व्रती०' ( व्रती अथवा अव्रती, स्नातक अथवा अस्नातक, उत्सन्नाग्नि-नष्ट हुई अग्निवाला विधुर वा अग्निरहित पुरुष संन्यास ग्रहण करे ) इत्यादिसे कर्ममें अनधिकारियोंका पृथक् विधान है। और पारिव्राज्य ब्रह्मज्ञान परिपाक द्वारा ब्रह्म साक्षात्कारका अङ्ग होनेसे अनधिकृत विषयक नहीं है। उसे 'अथ परिव्राड्०' ( वर्ण रहित वस्त्रवाला, मुण्डी, परिग्रह रहित, पवित्र, द्रोह रहित, भिक्षा करनेवाला परिव्राजक ब्रह्मसाक्षात्कारके लिए समर्थ होता है ) यह श्रुति दिखलाती है। इसलिए ऊर्ध्वरेताओंके आश्रम सिद्ध हैं और विद्याका ऊर्ध्व रेताओंके लिए विधान होनेसे विद्यामें स्वातन्त्र्य सिद्ध है ॥ २० ॥

'स एष रसानां०' ( यह जो उद्गीथ संज्ञक ओंकार है वह सम्पूर्ण भूतादि रसोंमें रसतम, उत्कृष्ट, परमात्माका प्रतीक होनेसे परम परमात्माके समान उपास्य होनेसे परमात्माके स्थानके योग्य यह उद्गीथ पृथिवी आदि रसोंमें आठवाँ है ) 'इयमेवर्गग्निः०' ( यह पृथिवी ही ऋक् है और साम अग्नि है अर्थात् ऋक्में पृथिवी दृष्टि और साममें अग्निदृष्टि करनी चाहिए ) 'अयं वाव लोकः०' ( यही लोक निश्चित यह अग्निचित है ) 'तदिदमेवोक्थ०' ( वह उक्थ यही है जो यह पृथिवी है ) इसप्रकारकी श्रुतियाँ क्या उद्गीथ आदिकी स्तुतिके लिए हैं अथवा उपासनाविधिके लिए हैं? ऐसा संशय होनेपर स्तुतिके लिए हैं, यह युक्त है, क्योंकि उद्गीथ आदि कर्माङ्गोंको लेकर इनका श्रवण है। जैसे 'इयमेव०' ( यह पृथिवी जुहू है, आदित्य चयनस्थ कूर्म-पुरोडाश है और स्वर्गलोक आहवनीय अग्नि है ) इत्यादि श्रुति जुहू आदिकी स्तुतिके लिए हैं, वैसे प्रकृतमें भी। ऐसा यदि कहो तो युक्त नहीं है, ऐसा [ सूत्रकार ] कहते हैं। इन श्रुतियोंका केवल स्तुतिमात्र प्रयोजन मानना युक्त नहीं है, क्योंकि

### सत्यानन्दी-दीपिका

* पृथिवी, जल, ओषधि, पुरुष, वाक्, ऋक् और साम इन सात रसोंका आठवाँ उद्गीथका अवयव ओंकार परम रसतम है, क्योंकि वह परमात्माकी प्रतीक है। और पर-ब्रह्मके अर्ध-स्थानको

वमप्रतिपद्यमानाऽनर्थिकैव स्यात्। इयमेव जुहूरित्यादि तु विधिसंनिधावेवाम्नातमिति वैषम्यम्। तस्माद्विध्यर्था एवैवंजातीयकाः श्रुतयः ॥ २१ ॥

## भावशब्दाच्च ॥ २२ ॥

पदच्छेद—भावशब्दात्, च।

सूत्रार्थ—और 'उद्गीथमुपासीत' इत्यादि विधि वाक्योंके होनेसे 'स एष' इत्यादि श्रुतिवाक्य विधि परक ही हैं।

'उद्गीथमुपासीत' ( छा० १।१।१ ), 'सामोपासीत' ( छा० २।२।१ ) 'अहमुक्थमस्मीति विद्यात्' इत्यादयश्च विधिशब्दाः श्रूयन्ते। ते च स्तुतिमात्रप्रयोजनतायां व्याहन्येरन्। तथा च न्यायविदां स्मरणम्—'कुर्यात्क्रियेत कर्तव्यं भवेत्स्यादिति पञ्चमम्। एतत्स्यात्सर्ववेदेषु नियतं विधिलक्षणम्' इति, लिङाद्यर्थो विधिरिति मन्यमानास्त एवं स्मरन्ति। प्रतिप्रकरणं च फलानि श्राव्यन्ते—'आपयिता ह वै कामानां भवति' ( छा० १।१।७ ), 'एष ह्येव कामागानस्येष्टे' ( छा० १।७।९ ), 'कल्पन्ते हास्मै लोका ऊर्ध्वाश्चावृत्ताश्च' ( छा० २।२।३ ) इत्यादीनि। तस्मादप्युपासनविधानार्था उद्गीथादिश्रुतयः ॥ २२ ॥

( ४ पारिप्लवाधिकरणम्। सू० २३-२४ )

## पारिप्लवार्था इति चेन्न विशेषितत्वात् ॥ २३ ॥

पदच्छेद—पारिप्लावार्थाः, इति, चेत्, न, विशेषितत्वात्।

सूत्रार्थ—( पारिप्लवार्थाः ) 'अथ ह याज्ञवल्क्यस्य द्वे भार्ये' इत्यादि आख्यायिकाएँ पारिप्लव

---

वे अपूर्व हैं। इन श्रुतियोंको विध्यर्थक होनेपर अपूर्व अर्थका विधान होता है। इनको स्तुत्यर्थक माननेपर तो अनर्थक ही होंगी, क्योंकि विध्यर्थक शब्दके वाक्यशेषत्वको प्राप्त होनेवाली स्तुति उपयुक्त होती है, ऐसा 'विधिना त्वेकवाक्यत्वात्०' ( विधियोंके स्तावकरूपसे विधिवाक्योंके साथ एक वाक्यता होनेसे अर्थवाद वाक्योंकी सार्थकता होती है ) इस सूत्रमें कहा गया है। परन्तु अन्य स्थलमें विहित उद्गीथ आदिकी अन्य प्रदेशमें पठित यह स्तुति वाक्यशेषत्वको न प्राप्त होती हुई अनर्थक ही होगी। 'इयमेव जुहूः०' ( यह पृथिवी ही जुहू है ) इत्यादि तो विधिकी सन्निधिमें कहा गया है, यह वैलक्षण्य है। इसलिए इसप्रकारकी श्रुतियाँ विधिके लिए ही हैं ॥ २१ ॥

'उद्गीथमुपासीत' ( उद्गीथकी उपासना करनी चाहिए ) 'सामोपासीत' ( सामकी उपासना करनी चाहिए ) 'अहमुक्थमस्मीति विद्यात्' ( मैं उक्थ हूँ, ऐसा ध्यान करे ) इत्यादि स्पष्टरूपसे विधिश्रुतियाँ सुनी जाती हैं, वे केवल स्तुति प्रयोजनवाली माननेपर बाधित होंगी। और 'कुर्यात् क्रियेत०' ( कुर्यात्–करे, क्रियेत–किया जाय, कर्तव्यम्–करना चाहिए, भवेत्–हो और पाँचवा स्यात्–हो, सब वेदोंमें यह निश्चित विधि लक्षण है ) इसप्रकार यह न्यायवेत्ताओंकी स्मृति है। लिङ् आदिका अर्थ विधि है ऐसा मानते हुए वे इसप्रकार स्मरण करते हैं, और प्रत्येक प्रकरणमें 'आपयिता ह वै०' ( जो विद्वान् आप्तिगुणविशिष्ट इस उद्गीथ अक्षरकी उपासना करता है, वह यजमानकी सम्पूर्ण कामनाओंकी प्राप्ति करानेवाला होता है ) 'एष ह्येव०' (क्योंकि यह उद्गाता कामना सम्बन्धी आगानके उद्गानसे उन कामनाओंको सम्पन्न करनेमें समर्थ होता है) 'कल्पन्ते हास्मै०' ( उस उपासकके

### सत्यानन्दी-दीपिका

पाता है, अतः ओंकार परार्घ्य है अर्थात् परब्रह्मके समान उपास्य है। इन उद्धृत श्रुतियोंमें ओंकारके उपादान और अपूर्वार्थता होनेसे 'किम्' इत्यादिसे संशय कहते हैं। इसपर 'न हि' इत्यादिसे सिद्धान्त कहते हैं। पूर्वपक्षमें इनको स्तावक होनेसे अनुष्ठानका अभाव है, सिद्धान्तमें इनमें विधायक होनेसे अनुष्ठान है ॥ २१ ॥

नामक कर्मके अङ्ग हैं, ( इति चेन्न ) ऐसा यदि कहो तो युक्त नहीं है, ( विशेषितत्वात् ) क्योंकि 'पारिप्लवमाचक्षीत' इसप्रकार श्रुतिमें विशेषित की गई हैं।

※ 'अथ ह याज्ञवल्क्यस्य द्वे भार्ये बभूवतुर्मैत्रेयी च कात्यायनी च' ( बृह० ४।५।१ ), 'प्रतर्दनो ह वै दैवोदासिरिन्द्रस्य प्रियं धामोपजगाम' ( कौषी० ३।१ ) 'जानश्रुतिर्ह पौत्रायणः श्रद्धादेयो बहुदायी बहुपाक्य आस' ( छा० ४।१।१ ) इत्येवमादिषु वेदान्तपठितेष्वाख्यानेषु संशयः— किमिमानि पारिप्लवप्रयोगार्थान्याहोस्वित्संनिहितविद्याप्रतिपत्त्यर्थानीति। पारिप्लवार्था इमा आख्यानश्रुतयः, आख्यानसामान्यात्, आख्यानप्रयोगस्य च पारिप्लवे चोदितत्वात्। ततश्च विद्याप्रधानत्वं वेदान्तानां न स्यात्, मन्त्रवत्प्रयोगशेषत्वादिति चेत्। तन्न, कस्मात्? विशेषितत्वात्। 'पारिप्लवमाचक्षीत' इति हि प्रकृत्य 'मनुर्वैवस्वतो राजा' इत्येवमादीनि कानिचिदेवाख्यानानि तत्र विशेष्यन्ते। आख्यानसामान्याच्चेत्सर्वगृहीतिः स्यादनर्थकमेवेदं विशेषणं भवेत्। तस्मान्न पारिप्लवार्था एता आख्यानश्रुतयः ॥ २३ ॥

## तथा चैकवाक्यतोपबन्धात् ॥ २४ ॥

पदच्छेद—तथा, च एकवाक्यतोपबन्धात्।

---

प्रति ऊर्ध्व और अधोमुख लोक भोग्यरूपसे उपस्थित होते हैं ) इत्यादि फलोंका श्रवण कराया जाता है। उससे भी उद्गीथ आदि श्रुतियाँ उपासनाका विधान करनेके लिए हैं ॥ २२ ॥

'अथ ह०' (यह प्रसिद्ध है कि याज्ञवल्क्यकी मैत्रेयी और कात्यायनी ये दो भार्याएँ थीं ) 'प्रतर्दनो ह०' ( दिवोदासका पुत्र प्रतर्दन इन्द्रके प्रिय स्थान-स्वर्गमें गया ) 'जानश्रुतिः हि पौत्रायणः०' ( जनश्रुतिकी सन्तान-परम्परामें उत्पन्न एवं उसके पुत्रका पौत्र श्रद्धापूर्वक देनेवाला एवं बहुत दान करनेवाला था और उसके यहाँ भोजनार्थियोंके लिए बहुत-सा अन्न पकाया जाता था ) इत्यादि वेदान्त पठित आख्यानोंमें संशय होता है कि क्या ये आख्यान पारिप्लवके प्रयोगके लिए हैं अथवा सन्निहित विद्याकी प्रतिपत्तिके लिए हैं ? ये आख्यानश्रुतियाँ पारिप्लवार्थक हैं, क्योंकि इनमें आख्यानत्व समान है। और आख्यानका प्रयोग पारिप्लवमें विहित है। उससे वेदान्तवाक्योंमें मन्त्रों ( देवस्य त्वा सवितुः ) के समान प्रयोगका शेष होनेसे विद्या प्रधानत्व नहीं है। सिद्धान्ती—ऐसा यदि कहो तो यह युक्त नहीं है, किससे ? इससे कि विशेषित होनेसे। कारण कि 'पारिप्लवमाचक्षीत०' ( पारिप्लव कहे ) ऐसा उपक्रम कर 'मनुर्वैवस्वतो राजा' ( विवस्वान्का पुत्र राजा मनु ) इत्यादि कितने ही आख्यान श्रुतिमें विशेषित किये जाते हैं। यदि आख्यानत्व समान धर्मसे सब आख्यानोंका ग्रहण हो तो [ पारिप्लवमाचक्षीत ] यह विशेषण निष्फल ही होगा। इसलिए ये आख्यानश्रुतियाँ पारिप्लवार्थक नहीं हैं ॥२३॥

### सत्यानन्दी-दीपिका

※ अश्वमेध यागमें पुत्र आदि परिवार सहित राजाको रातमें सन्मुख बैठाकर अध्वर्यु 'पारिप्लवमाचक्षीत' ( पारिप्लव-अनेक प्रकारके वैदिक उपाख्यान कहे ) इसप्रकार पारिप्लव नामक प्रयोगका विधान किया गया है। उसीप्रकार वेदान्तोंमें उक्त कथाएँ भी इन आख्यानोंके समान हैं और विद्याका संनिधान भी है, अतः 'किम्' इत्यादिसे संशय होनेपर पूर्वपक्षी—'पारिप्लवार्थाः' आदिसे कहते हैं। सिद्धान्ती—कथाएँ गुरु और शिष्यके समाचार प्रदर्शनसे बुद्धिमें सरलतासे बोधद्वारा संनिहित विद्याके अङ्ग हैं, अतः पारिप्लवार्थक नहीं हैं, क्योंकि सामर्थ्यरूप लिङ्ग विद्यमान है, इससे विद्याका ही प्राधान्य है। अध्वर्यु प्रथम दिनमें 'मनुर्वैवस्वतो राजा' दूसरे दिन 'यमो वैवस्वत ' तीसरे दिन 'वरुण आदित्यः' इत्यादि आख्यायिका कहे। इसप्रकार वाक्यशेषमें विशेष आख्यायिकाओं कथन है। यद्यपि 'सर्वाण्याख्यानानि पारिप्लवे' इस सर्वशब्दसे समस्त आख्यानोंका ग्रहण हो सकता है, तो भी 'पारिप्लवमाचक्षीत' इस विशेषके ग्रहणसे यह सिद्ध होता है कि आख्यान श्रुतियाँ पारिप्लवार्थक नहीं हैं, किन्तु विद्याकी स्तुतिके लिए हैं ॥ २३ ॥

फलं च कर्तर्युपासनानां श्रूयते—'वर्षति हास्मै वर्षयति ह य एतदेवं विद्वान्वृष्टौ पञ्चविधं सामोपास्ते' इत्यादि। नन्वृत्विजोऽपि फलं दृष्टम्—'आत्मने वा यजमानाय वा यं कामं कामयते तमागायति' (बृह १।३।२८) इति। न, तस्य वाचनिकत्वात्। तस्मात्स्वामिन एव फलवत्सूपासनेषु कर्तृत्वमित्यात्रेय आचार्यो मन्यते ॥ ४४ ॥

## आर्त्विज्यमित्यौडुलोमिस्तस्मै हि परिक्रीयते ॥ ४५ ॥

पदच्छेद—आर्त्विज्यम्, इति, औडुलोमिः, तस्मै, हि, परिक्रीयते।

सूत्रार्थ—( आर्त्विज्यम् ) इन उपासनाओंका कर्ता ऋत्विक् है, ( इति औडुलोमिः ) ऐसा औडुलोमि आचार्यका मत है, ( हि ) क्योंकि ( तस्मै ) उस साङ्ग कर्मके लिए ( परिक्रीयते ) दक्षिणासे ऋत्विक् खरीदा जाता है।

नैतदस्ति—स्वामिकर्माण्युपासनानीति, ऋत्विक्कर्माण्येतानि स्युरित्यौडुलोमिराचार्यो मन्यते। किं कारणम्? तस्मै हि साङ्गाय कर्मणे यजमानेनर्त्विक्परिक्रीयते, तत्प्रयोगान्तःपातीनि चोद्गीथाद्युपासनान्यधिकृताधिकारत्वात्। तस्माद्गोदोहनादिनियमवदेवर्त्विग्भिर्निर्वर्त्येरन्। तथा च 'तं ह बको दाल्भ्यो विदाञ्चकार स ह नैमिशीयानामुद्गाता बभूव' ( छा० १।२।१३ ) इत्युद्गातृकर्तृकतां विज्ञानस्य दर्शयति। यत्तूक्तम्—कर्त्राश्रयं फलं श्रूयत इति—नैष दोषः, परार्थत्वादृत्विजोऽन्यत्र वचनात्फलसंबन्धानुपपत्तेः ॥४५॥

## श्रुतेश्च ॥ ४६ ॥

पदच्छेद—श्रुतेः, च।

सूत्रार्थ—क्योंकि 'यां वै काञ्चन' इत्यादि श्रुति ऋत्विक् कर्तृक उपासनाका फल यजमानके लिए दिखलाती है।

---

लिए मेघ यथेष्ट वृष्टि करता है ) इत्यादि फल उपासनाओंके कर्तामें सुना जाता है। परन्तु 'आत्मने वा यजमानाय०' ( अपने लिए अथवा यजमानके लिए जिस मनोरथकी वह उद्गाता कामना करता है उसे सामके उद्गानसे सिद्ध करता है ) इसप्रकार ऋत्विक्को भी फल प्राप्त हुआ देखा गया है। नहीं, क्योंकि वह वाचनीक है, इसलिए यजमान ही फलवाली उपासनाओंका कर्ता है, ऐसा आत्रेय आचार्य मानते हैं ॥ ४४ ॥

सिद्धान्ती—उपासनाएँ स्वामी कर्म हैं, ऐसा नहीं है, ये ऋत्विक्के कर्म होने चाहिए, ऐसा औडुलोमि आचार्य मानते हैं, क्योंकि उस साङ्ग कर्मके लिए यजमानसे ऋत्विक्का परिक्रयण किया जाता है। और उद्गीथ आदि उपासनाएँ उस प्रयोगके अन्तर्भूत हैं, क्योंकि अधिकृतका अधिकार है। इसलिए गोदोहन आदिके समान ही वे साङ्ग उपासनाएँ ऋत्विजोंसे ही संपादन होनी चाहिए। उसी प्रकार 'तं ह बको दाल्भ्यो०' ( अतः दाल्भ्यके पुत्र बकने उसे जाना—पूर्वोक्त प्रकारसे प्राणदृष्टिसे उद्गीथकी उपासनाकी वह नैमिषारण्यमें यज्ञ करनेवालोंका उद्गाता हुआ) यह श्रुति विज्ञानको उद्गाता कर्तृक दिखलाती है। जो यह कहा गया है कि कर्ता आश्रय फलश्रुति है, यह दोष नहीं है, क्योंकि ऋत्विक् यजमानके लिए है, अतः वचनसे अन्यत्र ऋत्विक्का फल सम्बन्ध अनुपपन्न है ॥ ४५ ॥

### सत्यानन्दी-दीपिका

होता है। पूर्वपक्षमें इन उपासनाओंका कर्ता यजमान है, क्योंकि 'वर्षति हास्मै' इत्यादि फलश्रुति है, कारण कि कर्तृत्व और भोक्तृत्व एकमें ही युक्त है। जैसे साङ्ग क्रतुमें अधिकृतका अधिकार होनेसे गोदोहनका फल क्रतुके अधिकारीको प्राप्त होता है, वैसे अङ्गाश्रित उपासनाओंका फल भी यजमानको प्राप्त होता है, क्योंकि अधिकृत अधिकारी है। यद्यपि ऋत्विक्के लिए भी फलका श्रवण है, तो भी यजमान कर्तृक भोक्तृक फलका बाधक न होनेसे उपासनाओंका फल कर्ता यजमान को ही प्राप्त होता है ॥ ४४ ॥

'यां वै कांचन यज्ञे ऋत्विज आशिषमाशासत इति यजमानायैव तामाशासत इति होवाच' इति, 'तस्मादु हैवंविदुद्गाता ब्रूयात्कं ते काममागायानि' (छा० १।७।८-९) इति। तच्चर्त्विक्कर्तृकस्य विज्ञानस्य यजमानगामि फलं दर्शयति। तस्मादङ्गोपासनानामृत्विक्कर्मत्वसिद्धिः॥४६॥

## ( १४ सहकार्यन्तरविध्यधिकरणम्। सू० ४७-४९ )

## सहकार्यन्तरविधिः पक्षेण तृतीयं तद्वतो विध्यादिवत् ॥ ४७ ॥

पदच्छेद—सहकार्यन्तरविधिः, पक्षेण, तृतीयम्, तद्वतः, विध्यादिवत्।

सूत्रार्थ—( सहकार्यन्तरविधिः ) 'बाल्यं च पाण्डित्यं०' इस श्रुतिमें विद्याके सहकारी मौनको अपूर्व होनेसे विधि समझना चाहिए, ( तृतीयम् ) और श्रवण आदि साधनोंमें तृतीय साधन निदिध्यासन मौनशब्दसे विहित है, ( तद्वतः ) परोक्ष ज्ञानयुक्त संन्यासियोंके लिए साक्षात्कार निमित्त यह विधि है, ( पक्षेण ) जिस पक्षमें भेद दर्शनकी प्राप्ति है उस पक्षसे साक्षात्कारकी प्राप्ति न होनेसे यह विधि सार्थक है। ( विध्यादिवत् ) जैसे दर्शपूर्णमास प्रधान विधिमें अन्वाधान अङ्गोंकी विधि होती है, वैसे यहाँ मौनकी विधि है।

* 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेद् बाल्यं च पाण्डित्यं च निर्विद्याथ मुनिरमौनं च मौनं च निर्विद्याथ ब्राह्मणः' (बृह० ३।५।१) इति बृहदारण्यके श्रूयते। तत्र संशयः—मौनं विधीयते न वेति। न विधीयत इति तावत्प्राप्तम्, बाल्येन तिष्ठासेदित्यत्रैव विधेरवसितत्वात्। न ह्यथ मुनिरित्यत्र विधायिका विभक्तिरुपलभ्यते, तस्मादयमनुवादो युक्तः। कुतः प्राप्तिरिति चेत्-मुनिपण्डितशब्दयोर्ज्ञानार्थत्वात्पाण्डित्यं निर्विद्येत्येवं प्राप्तं मौनम्।

---

'यां वै कांचन०' ( ऋत्विक् यज्ञमें जिस किसी कामकी प्रार्थना करते हैं यजमानके लिए ही उसकी प्रार्थना करते हैं, ऐसा उसने कहा ) 'तस्मादु०' ( अतः इस प्रकार जाननेवाला उद्गाता यजमानसे इस प्रकार कहे कि मैं तेरे लिए किन इष्ट कामनाओंका आगान करूँ ) इस प्रकार श्रुतियाँ ऋत्विक् कर्तृक उपासनाका फल यजमानगामी दिखलाती हैं। इसलिए अङ्गोपासनाओंमें ऋत्विक् कर्मत्व सिद्ध होता है ॥ ४६ ॥

'तस्माद्ब्राह्मणः०' ( अतः ब्राह्मण आत्मज्ञानका पूर्णतया संपादन कर आत्मज्ञानरूप बलसे स्थित रहनेकी इच्छा करे। फिर बाल्य और पाण्डित्यको पूर्णतया प्राप्तकर वह मुनि होता है। तथा अमौन और मौनका पूर्णतया संपादनकर ब्राह्मण कृतकृत्य होता है ) ऐसी बृहदारण्यकमें श्रुति है। उसमें संशय होता है कि मौनका विधान किया जाता है अथवा नहीं? पूर्वपक्षी—मौनका विधान नहीं किया जाता, ऐसा प्राप्त होता है। क्योंकि 'बाल्येन तिष्ठासेत्' यहाँपर ही विधि समाप्त हो जाती है। कारण कि 'अथ मुनिः' इसमें विधायक विधि प्रतिपादक विभक्ति उपलब्ध नहीं होती, इससे यह अनुवाद युक्त है। ऐसा यदि कहो कि मौनकी कहाँसे प्राप्ति हुई, तो मुनि और पाण्डित्य शब्दोंके ज्ञानार्थक होनेसे 'पाण्डित्यं निर्विद्य' इससे मौन प्राप्त होता है। और 'अमौनं च मौनं च०' ( अमौन और मौनका पूर्णतया संपादनकर ब्राह्मण कृतकृत्य होता है ) यहाँ ब्राह्मणत्वका विधान नहीं किया

### सत्यानन्दी-दीपिका

* विधुर आदि मन्द अधिकारियोंके लिए ज्ञानका साधन जप, तप आदि और मध्यम अधिकारियोंके लिए ज्ञानका साधन अङ्गोपासनाको कहकर अब प्रसङ्गवश उत्तम अधिकारियोंके लिए ज्ञानका साधन 'सहकार्यन्तरविधिः' इत्यादिसे कहते हैं। पूर्वपक्षमें मुमुक्षुको मौन अनुष्ठेय नहीं है, सिद्धान्तमें मौन अनुष्ठेय है ॥ ४७ ॥

अपि च—'अमौनं च मौनं च निर्विद्याथ ब्राह्मणः' इत्यत्र तावन्न ब्राह्मणत्वं विधीयते, प्रागेव प्राप्तत्वात्। तस्मात् 'अथ ब्राह्मणः इति प्रशंसावादस्तथैवाथ मुनिरित्यपि भवितुमर्हति, समाननिर्देशत्वादिति। एवं प्राप्ते ब्रूमः—सहकार्यन्तरविधिरिति। विद्यासहकारिणो मौनस्य बाल्यपाण्डित्यवद्विधिरेवाश्रयितव्यः, अपूर्वत्वात्। ननु पाण्डित्यशब्देनैव मौनस्यावगतत्वमुक्तम्। नैष दोषः, मुनिशब्दस्य ज्ञानातिशयार्थत्वात्, मननान्मुनिरिति च व्युत्पत्तिसंभवात्, 'मुनीनामप्यहं व्यासः' ( गी० १०।३७ ) इति च प्रयोगदर्शनात्। ननु मुनिशब्द उत्तमाश्रमवचनोऽपि श्रूयते—'गार्हस्थ्यमाचार्यकुलं मौनं वानप्रस्थम्' इत्यत्र, न, 'वाल्मीकिर्मुनिपुंगवः' इत्यादिषु व्यभिचारदर्शनात्। इतराश्रमसंनिधानात्तु पारिशेष्यात्तत्रोत्तमाश्रमोपादानं ज्ञानप्रधानत्वादुत्तमाश्रमस्य। तस्माद्बाल्यपाण्डित्यापेक्षया तृतीयमिदं मौनं ज्ञानातिशयरूपं विधीयते। यत्तु बाल्य एव विधेः पर्यवसानमिति, तथाप्यपूर्वत्वान्मुनित्वस्य विधेयत्वमाश्रीयते—मुनिः स्यादिति। निर्वेदनीयत्वनिर्देशादपि मौनस्य बाल्यपाण्डित्यवद्विधेयत्वाश्रयणम्। तद्वतो विद्यावतः संन्यासिनः, कथं विद्यावतः संन्यासिन इत्यवगम्यते? तदधिकारात्, 'आत्मानं विदित्वा पुत्राद्येषणाभ्यो व्युत्थायाथ भिक्षाचर्यं चरन्ति' इति। ननु सति विद्यावत्त्वे प्राप्नोत्येव तत्रातिशयः किं मौनविधिनेत्यत आह—पक्षेणेति। एतदुक्तं भवति—यस्मिन्पक्षे भेददर्शनप्राबल्यान्न प्राप्नोति, तस्मिन्नेष विधिरिति। विध्यादिवत्। यथा—'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इत्येवंजातीयके विध्यादौ सहकारित्वेनाग्न्यन्वाधानादिकमङ्गजातं विधीयते। एवमविधिप्रधानेऽप्यस्मिन्विद्यावाक्ये मौनविधिरित्यर्थः ॥ ४७ ॥

---

जाता, क्योंकि वह [विविदिषन्ति ब्राह्मणाः] पूर्वसे प्राप्त है। इसलिए 'अथ ब्राह्मणः' यह प्रशंसावाद ही है। इसीप्रकार 'अथ मुनिः' यह भी प्रशंसावाद ही हो सकता है, क्योंकि दोनोंमें समानरूपसे निर्देश है।

सिद्धान्ती—ऐसा प्राप्त होनेपर हम कहते हैं—'सहकार्यन्तरविधिः' विद्याके सहकारी मौनकी बाल्य और पाण्डित्यके समान विधि ही आश्रयण करनी चाहिए, क्योंकि वह अपूर्व है। परन्तु यह कहा गया है कि पाण्डित्यशब्दसे ही मौन अवगत है? यह दोष नहीं है, क्योंकि मुनि शब्द ज्ञानातिशयार्थक है और 'मननसे मुनि' इस व्युत्पत्तिका संभव है, और 'मुनीनामप्यहं व्यासः' ( मुनियोंमें भी मैं व्यास हूँ ) इस प्रकार प्रयोग देखनेमें आता है। परन्तु "गार्हस्थ्यमाचार्यकुलं०' ( गार्हस्थ्य, आचार्य कुल, मौन और वानप्रस्थ ) इस श्रुतिमें मुनिशब्द उत्तमाश्रमका वाचक भी है? नहीं, क्योंकि 'वाल्मीकिर्मुनिपुङ्गव' इत्यादिमें व्यभिचार दिखाई देता है। परन्तु अन्य आश्रमोंके सन्निधानसे और परिशेषसे इस वचनमें उत्तम आश्रमका ग्रहण है, कारण कि उत्तम आश्रम ज्ञान प्रधान है। इसलिए बाल्यमें ही विधिका पर्यवसान किया गया है, तो भी मुनित्वका अपूर्व होनेसे 'मुनिः स्यात्' इस प्रकार विधेयत्व आश्रयण किया जाता है। मौनका निर्वेदनीयरूपसे निर्देश होनेसे भी बाल्य और पाण्डित्यके समान विधेयत्व आश्रयण है। 'तद्वतो' विद्यावान्-संन्यासीका। विद्यावान्-संन्यासीका, ऐसा किससे अवगत होता है? इससे कि 'आत्मानं विदित्वा०' ( आत्माको जानकर पुत्र आदि एषणाका त्यागकर अनन्तर भिक्षाचर्य करते हैं ) इस प्रकार संन्यासीका अधिकार है। परन्तु विद्यावत्त्व होनेपर उसमें अतिशय प्राप्त होता ही है, तो मौन विधिका क्या प्रयोजन? इसपर कहते हैं—'पक्षेण' अभिप्राय यह है—जिस पक्षमें भेद दर्शनकी प्रधानतासे [ ज्ञानातिशय ] प्राप्त नहीं होता उस पक्षमें यह विधि है। विधि आदिके समान। जैसे 'दर्शपूर्णमासाभ्यां स्वर्गकामो यजेत' इस प्रकारकी विधि आदिमें सहकारिरूपसे अग्निके अन्वाधान आदि अङ्ग समूहका विधान किया जाता है। इस प्रकार अविधि प्रधान इस विद्यावाक्यमें भी मौन विधि है, ऐसा अर्थ है ॥ ४७ ॥

एवं बाल्यादिविशिष्टे कैवल्याश्रमे श्रुतिमति विद्यमाने कस्माच्छान्दोग्ये गृहिणोपसंहारः 'अभिसमावृत्य कुटुम्बे' ( छा० ८।१५।१ ) इत्यत्र ? तेन ह्युपसंहरंस्तद्विषयमादरं दर्शयतीति । अत उत्तरं पठति—

**कृत्स्नभावात्तु गृहिणोपसंहारः ॥ ४८ ॥**

पदच्छेद—कृत्स्नभावात्, तु, गृहिणा, उपसंहारः ।

सूत्रार्थ—( कृत्स्नभावात् ) गृहस्थाश्रममें विशेषरूपसे विद्यमान हैं, अतः यज्ञ आदि और आश्रमान्तर विहित शम आदिका ( गृहिणा ) गृहस्थाश्रमसे ( उपसंहारः ) उपसंहार किया गया है, ( तु ) शब्द विशेषणार्थक है ।

* तुशब्दो विशेषणार्थः । कृत्स्नभावोऽस्य विशेष्यते। बहुलायासानि हि बहून्याश्रमकर्माणि यज्ञादीनि तं प्रति कर्तव्यतयोपदिष्टानि, आश्रमान्तरकर्माणि च यथासंभवमहिंसेन्द्रियसंयमादीनि तस्य विद्यन्ते । तस्माद्गृहमेधिनोपसंहारो न विरुध्यते ॥४८॥

**मौनवदितरेषामप्युपदेशात् ॥ ४९ ॥**

पदच्छेद—मौनवत्, इतरेषाम्, अपि, उपदेशात् ।

सूत्रार्थ—(मौनवत्) जैसे मौन और गृहस्थाश्रम श्रुति सम्मत हैं, वैसे (इतरेषामपि) वानप्रस्थ और ब्रह्मचार्याश्रम भी श्रुति सम्मत हैं, ( उपदेशात् ) क्योंकि चारों आश्रमोंका श्रुतिमें उपदेश है ।

* यथा मौनं गार्हस्थ्यं चैतावाश्रमौ श्रुतिमन्तावेवमितरावपि वानप्रस्थगुरुकुलावासौ । दर्शिता हि पुरस्ताच्छ्रुतिः—'तप एव द्वितीयो ब्रह्मचार्याचार्यकुलवासी तृतीयः' ( छा० २।२३।१ ) इत्याद्या । तस्माच्चतुर्णामप्याश्रमाणामुपदेशाविशेषात्तुल्यवद्विकल्पसमुच्चयाभ्यां प्रतिपत्तिः । इतरेषामिति द्वयोराश्रमयोर्बहुवचनं वृत्तिभेदापेक्षयाऽनुष्ठातृभेदापेक्षया वेति द्रष्टव्यम् ॥ ४९ ॥

---

इस प्रकार बाल्य आदि विशिष्ट श्रुति प्रतिपादित कैवल्याश्रमके विद्यमान होनेपर छान्दोग्योपनिषद्में 'अभिसमावृत्य कुटुम्बे' ( आचार्यकुलसे समावर्तनकर कुटुम्ब-गृहस्थाश्रममें स्थित हो पवित्र स्थानमें स्वाध्याय करता हुआ ) इस वाक्यमें गृहीसे किस प्रकार उपसंहार किया जाता है ? इससे उपसंहार करता हुआ श्रुतिवाक्य गृहस्थाश्रम विषयक आदर दिखलाता है । अतः उत्तर कहते हैं—

सूत्रस्थ 'तु' शब्द विशेषणार्थक है । उससे गृहस्थाश्रमकी पूर्णता विशेषण विशिष्ट की जाती है, क्योंकि बहुत आयासवाले बहुतसे यज्ञ आदि आश्रमकर्म गृहस्थाश्रमके लिए कर्तव्यरूपसे उपदिष्ट हैं और अहिंसा, इन्द्रियसंयम आदि अन्य आश्रमके कर्म भी यथासंभव उसमें विद्यमान हैं, अतः गृहस्थाश्रमसे उपसंहार विरुद्ध नहीं है ॥ ४८ ॥

जैसे मौन-संन्यासाश्रम और गृहस्थाश्रम ये दो आश्रम श्रुतिसम्मत हैं, वैसे वानप्रस्थ और गुरुकुलवास-ब्रह्मचर्याश्रम ये अन्य दो आश्रम भी श्रुतिसम्मत हैं, क्योंकि 'तप एव द्वितीयो०' ( तप ही द्वितीय धर्मस्कन्ध है और ब्रह्मचारी आचार्य कुलवासी यह तृतीय धर्मस्कन्ध है ) इत्यादि श्रुति पूर्वमें दिखलाई गई है । इसलिए चारों आश्रमोंका भी अविशेष उपदेश होनेसे उनकी समानरूपसे विकल्प और समुच्चयसे प्रतीति होती है । इतरेषाम् ( अन्योंका ) इसप्रकार दो आश्रमोंके लिए बहुवचन वृत्तिभेदसे अथवा अनुष्ठाताके भेदसे है, ऐसा समझना चाहिए ॥ ४९ ॥

## सत्यानन्दी-दीपिका

* यहाँ संन्यासाश्रमके अभावको लेकर गृहस्थाश्रमसे उपसंहार नहीं है, क्योंकि संन्यासाश्रम प्रतिपादक अनेक श्रुति, स्मृतिवाक्य हैं ॥ ४८ ॥

* सूत्रकारने प्रथम दो सूत्रोंसे संन्यास और गृहस्थ आश्रमोंका प्रतिपादन किया है, अतः

( १५ अनाविष्काराधिकरणम् । सू० ५० )

अनाविष्कुर्वन्नन्वयात् ॥ ५० ॥

पदच्छेद—अनाविष्कुर्वन्, अन्वयात् ।

सूत्रार्थ—( अनाविष्कुर्वन् ) बालकके समान अपने ज्ञान आदिको लोगोंमें प्रकट न करता हुआ 'केवल शुद्ध भाव हो' इतना ही 'अव्यक्तलिङ्गः' इत्यादि श्रुतिसे विहित है । ( अन्वयात् ) क्योंकि तावन्मात्र ही ज्ञानके अभ्यासमें अनुगत है ।

ॐ 'तस्माद्ब्राह्मणः पाण्डित्यं निर्विद्य बाल्येन तिष्ठासेत्' ( बृह० ३।५।१ ) इति बाल्यमनुष्ठेयतया श्रूयते । तत्र बालस्य भावः कर्म वा बाल्यमिति तद्धिते सति बालभावस्य वयोविशेषस्येच्छया संपादयितुमशक्यत्वाद्यथोपपादमूत्रपुरीषत्वादि बालचरितमन्तर्गता वा भावविशुद्धिरप्ररूढेन्द्रियत्वं दम्भदर्पादिरहितत्वं वा बाल्यं स्यादिति संशयः । किं तावत्प्राप्तम्? कामचारवादभक्षणता यथोपपादमूत्रपुरीषत्वं च प्रसिद्धतरं लोके बाल्यमिति तद्ग्रहणं युक्तम् । ननु पतितत्वादिदोषप्राप्तेर्न युक्तं कामचारताद्याश्रयणम्, न, विद्यावतः संन्यासिनो वचनसामर्थ्याद्दोषनिवृत्तिः, पशुहिंसादिष्विवेति । एवं प्राप्तेऽभिधीयते—न, वचनस्य गत्यन्तरसंभवात् । अविरुद्धे ह्यन्यस्मिन्बाल्यशब्दाभिलप्ये लभ्यमाने न विध्यन्तरव्याघातकल्पना युक्ता । प्रधानोपकाराय चाङ्गं विधीयते । ज्ञानाभ्यासश्च प्रधानमिह यतीनामनुष्ठे-

---

'तस्माद्ब्राह्मणः०' ( इसलिए ब्राह्मणको पाण्डित्य-आत्मज्ञानका पूर्णतया सम्पादनकर बाल्य-ज्ञानबलभावसे स्थित रहना चाहिए ) इसप्रकार बाल्यकी अनुष्ठानरूपसे श्रुति है । यहाँ बालका भाव अथवा बालका कर्म बाल्य है इसप्रकार तद्धित प्रत्यय होनेपर बालभाव-वयोविशेषका इच्छासे सम्पादन नहीं किया जा सकता, अतः यथासम्भव मूत्र, पुरीषत्वका त्याग आदि बालचरित बाल्य है अथवा अन्तर्गत भावविशुद्धि अथवा दम्भ दर्प और इन्द्रिय प्ररूढ आदिसे रहित बाल्य होना चाहिए, ऐसा संशय होता है । तब क्या प्राप्त होता है ? पूर्वपक्षी—इच्छानुसार वदन, भक्षण, यथेच्छ मूत्र, पुरीषका त्याग, ऐसा बाल्य लोकमें अतिप्रसिद्ध है, उसका ग्रहण युक्त है । परन्तु पतितत्व आदि दोषकी प्राप्ति होनेसे कामचारता आदिका आश्रयण युक्त नहीं है । ऐसा नहीं, क्योंकि विद्यावान् संन्यासीका वचनकी सामर्थ्यसे दोष निवृत्त हो जाता है, जैसे विधि प्राप्त पशुहिंसा आदिमें दोष नहीं होता है ।

सिद्धान्ती—ऐसा प्राप्त होनेपर कहते हैं—नहीं, क्योंकि [ बाल्येन तिष्ठासेत् ] इस वचनकी अन्य गति हो सकती है । बाल्य शब्द वाच्य अन्य अविरुद्ध अर्थके उपलब्ध होनेपर अन्य विधिके व्याघातकी कल्पना युक्त नहीं है । प्रधानके उपकारके लिए अङ्गका विधान किया जाता है । यहाँ ज्ञानाभ्यास यतियोंके लिए प्रधान अनुष्ठेय है । परन्तु सम्पूर्ण बालचर्या अङ्गीकार किये जानेपर ज्ञानाभ्यास

सत्यानन्दी-दीपिका

इनसे अतिरिक्त अन्य दो आश्रमोंके न होनेका यदि किसीको भ्रम हो तो 'मौनवत्' इत्यादिसे निवृत्त करते हैं । प्रत्येक आश्रमका भेद ( ब्रह्मसूत्र ३, ४, १८ ) इस सूत्रकी 'सत्यानन्दी-दीपिका' में द्रष्टव्य है । इसप्रकार चार आश्रमोंका विशेषरूपसे उपदेश होनेसे 'यदि वेतरथा ब्रह्मचर्यादेव प्रव्रजेद् गृहाद्वा-वनाद्वा' यह विकल्प और 'ब्रह्मचर्यं समाप्य गृही भवेद्गृहीभूत्वा वनी भवेत्, वनीभूत्वा प्रव्रजेत्' यह समुच्चय समानरूपसे समझना चाहिए ॥ ४९ ॥

ॐ पूर्वपक्षमें—'बाल्येन तिष्ठासेत्' इस विधि वाक्यमें बाल्यशब्दसे लोक प्रसिद्ध यथेच्छ खान, पान आदि ग्राह्य है । इसलिए इसप्रकारका यथेच्छ बालव्यवहार विद्वान् द्वारा विद्याके अङ्गरूपसे अनुष्ठेय है, सिद्धान्तमें—बाल्यशब्दसे भावशुद्धि विद्वान्‌के लिए अनुष्ठेय है ।

यम् । नच सकलायां बालचर्यायामङ्गीक्रियमाणायां ज्ञानाभ्यासः संभाव्यते। तस्मादान्तरो भावविशेषो बालस्याप्ररूढेन्द्रियत्वादिरिह बाल्यमाश्रीयते। * तदाह–अनाविष्कुर्वन्निति। ज्ञानाध्ययनधार्मिकत्वादिभिरात्मानमविख्यापयन्दम्भदर्पादिरहितो भवेत्। यथा बालोऽप्ररूढेन्द्रियतया न परेषामात्मानमाविष्कर्तुमीहते, तद्वत्। एवं ह्यस्य वाक्यस्य प्रधानोपकार्यर्थानुगम उपपद्यते। तथा चोक्तं स्मृतिकारैः–'यं न सन्तं न चासन्तं नाश्रुतं न बहुश्रुतम्। न सुवृत्तं न दुर्वृत्तं वेद कश्चित्स ब्राह्मणः। गूढधर्माश्रितो विद्वानज्ञातचरितं चरेत्। अन्धवज्जडवच्चापि मूकवच्च महीं चरेत्' ॥ अव्यक्तलिङ्गोऽव्यक्ताचारः' इति चैवमादि ॥५०॥

( १६ ऐहिकाधिकरणम् । सू० ५१ )

## ऐहिकमप्यप्रस्तुतप्रतिबन्धे तद्दर्शनात् ॥ ५१ ॥

पदच्छेद—ऐहिकम्, अपि, अप्रस्तुतप्रतिबन्धे, तद्दर्शनात् ।

सूत्रार्थ—( अप्रस्तुतप्रतिबन्धे ) प्रस्तुत प्रतिबन्धके न होनेपर ( ऐहिकमपि ) इस जन्ममें भी विद्याकी उत्पत्ति होती है, ( तद्दर्शनात् ) क्योंकि 'गर्भ एवैतच्छयानो वामदेवः' इत्यादि श्रुतियोंमें उसे देखा जाता है ।

* 'सर्वापेक्षा च यज्ञादिश्रुतेरश्ववत्' (ब्रह्मसूत्र ३।४।२६) इत्यत आरभ्योच्चावचं विद्यासाधनमवधारितम्, तत्फलं विद्या सिध्यन्ती किमिहैव जन्मनि सिध्यत्युत कदाचिदमुत्रापीति चिन्त्यते। किं तावत्प्राप्तम्? इहैवेति। किं कारणम्? श्रवणादिपूर्विका हि विद्या। नच कश्चिदमुत्र मे विद्या जायतामित्यभिसंधाय श्रवणादिषु प्रवर्तते। समान एव तु जन्मनि

---

की संभावना नहीं होगी । इसलिए बालका आन्तर भावविशेष अप्ररूढ इन्द्रियत्व आदि बाल्य यहाँ आश्रयण किया जाता है । उसे कहते हैं—'अनाविष्कुर्वन्' ज्ञान, अध्ययन, धार्मिकत्व आदिसे अपनी ख्याति न करता हुआ दम्भ दर्प आदिसे रहित हो, जैसे बालक इन्द्रियोंके प्ररूढ न होनेसे अपनेको अन्योंके आगे प्रकट करनेकी चेष्टा नहीं करता, वैसे विद्वान्‌के विषयमें समझना चाहिए । इसप्रकार [ बाल्येन तिष्ठासेत् ] इस वाक्यका प्रधानोपकारी-ज्ञानाभ्यासोपकारी अर्थानुगम उपपन्न होता है । और इसीप्रकार 'यं न सन्तं०' ( जिसे कोई न सत्, न असत्, न अश्रुत, न बहुश्रुत, न सुवृत्त और न दुर्वृत्त जानता है वह ब्राह्मण है । गूढ धर्मका आश्रय करता हुआ विद्वान् दूसरोंसे अज्ञात चरित होकर विचरण करे । अन्धके समान, जड़के समान और मूकके समान पृथिवी पर विचरण करे ) ( अव्यक्तलिङ्ग और अव्यक्त आचारवाला हो ) इत्यादि स्मृतिकारोंने कहा है ॥ ५० ॥

'सर्वापेक्षा च' इस सूत्रसे आरम्भकर नाना प्रकारके विद्यासाधनोंका निश्चय किया गया है । उन साधनोंके फलरूपसे सिद्ध होती हुई विद्या इसी जन्ममें सिद्ध होती है अथवा कदाचित् अन्य जन्ममें भी ? इसपर विचार किया जाता है । तब क्या प्राप्त होता है ? पूर्वपक्षी—इसी जन्ममें विद्या सिद्ध होती है, क्योंकि विद्या श्रवण आदि पूर्विका है । मुझे अन्य जन्ममें विद्या उत्पन्न हो ऐसा संकल्पकर कोई भी श्रवण आदिमें प्रवृत्त नहीं होता । किन्तु इसी जन्ममें विद्याजन्मका संकल्पकर इन साधनोंमें

### सत्यानन्दी-दीपिका

* सिद्धान्ती—बालके यावत् बाह्य चरित ग्राह्य नहीं हैं, क्योंकि 'यस्त्वविज्ञानवान्भवत्यमनस्कः सदाऽशुचिः' ( कठ० १।३।७ ) ( किन्तु जो बुद्धि युक्त नहीं है, स्थिर चित्त नहीं है और सदा अपवित्र रहता है वह उस ब्रह्मलोकको प्राप्त नहीं होता ) इत्यादि शौच आदिका नियामक शास्त्र है ॥ ५० ॥

★ ऐहिक और पारलौकिक साधनोंका फल दो प्रकारका होता है । जैसे कारीरियागका ऐहिक वृष्टि फल है और दर्शपूर्णमास आदि यागका अदृष्टद्वारा जन्मान्तरमें फल है । इस प्रकार विद्या भी

विद्याजन्माभिसंधायैतेषु प्रवर्तमानो दृश्यते। यज्ञादीन्यपि श्रवणादिद्वारेणैव विद्यां जनयन्ति, प्रमाणजन्यत्वाद्विद्यायाः। तस्मादैहिकमेव विद्याजन्मेति। एवं प्राप्ते वदामः—ऐहिकं विद्याजन्म भवत्यसति अप्रस्तुतप्रतिबन्ध इति। एतदुक्तं भवति—यदा प्रक्रान्तस्य विद्यासाधनस्य कश्चित्प्रतिबन्धो न क्रियत उपस्थितविपाकेन कर्मान्तरेण, तदेहैव विद्योत्पद्यते, यदा तु खलु तत्प्रतिबन्धः क्रियते तदामुत्रेति। उपस्थितविपाकत्वं च कर्मणो देशकालनिमित्तोपनिपाताद्भवति। यानि चैकस्य कर्मणो विपाचकानि देशकालनिमित्तानि, तान्येवान्यस्यापीति न नियन्तुं शक्यते। यतो विरुद्धफलान्यपि कर्माणि भवन्ति। शास्त्रमप्यस्य कर्मण इदं फलं भवतीत्येतावति पर्यवसितम्, न देशकालनिमित्तविशेषमपि संकीर्तयति। साधनवीर्यविशेषात्त्वतीन्द्रिया कस्यचिच्छक्तिराविर्भवति, तत्प्रतिबद्धा परस्य तिष्ठति न चाविशेषेण विद्यायामभिसंधिर्नोत्पद्यते, इहामुत्र वा मे विद्या जायतामित्यभिसंधेर्निरङ्कुशत्वात्। श्रवणादिद्वारेणापि विद्योत्पद्यमाना प्रतिबन्धक्षयापेक्षयैवोत्पद्यते। *तथा च श्रुतिर्दुर्बोधत्वमात्मनो दर्शयति—'श्रवणायापि बहुभिर्यो न लभ्यः श्रृण्वन्तोऽपि बहवो यं न विद्युः। आश्चर्योऽस्य वक्ता कुशलोऽस्य लब्धाश्चर्यो ज्ञाता कुशलानुशिष्टः' (कठ० २।७) इति। गर्भस्थ एव च वामदेवः प्रतिपेदे ब्रह्मभावमिति वदन्ती जन्मान्तरसंचितात्साधनाज्जन्मान्तरे विद्योत्पत्तिं दर्शयति। नहि

---

प्रवृत्त होता हुआ देखा जाता है। यज्ञ आदि भी श्रवण आदि द्वारा ही विद्याको उत्पन्न करते हैं, क्योंकि विद्या प्रमाणजन्य है। इसलिए विद्याका जन्म इसी जन्ममें ही है। सिद्धान्ती—ऐसा प्राप्त होनेपर हम कहते हैं—प्रस्तुत प्रतिबन्धके न होनेपर इसी जन्ममें विद्या उत्पन्न होती है। अभिप्राय यह है—जब प्रक्रान्त-पूर्ववर्णित विद्यासाधनका उपस्थित विपाकवाले अन्य कर्मसे कोई प्रतिबन्ध नहीं किया जाता, तब इसी जन्ममें विद्या उत्पन्न होती है और यदि उसका प्रतिबन्ध किया जाता है तो अन्य जन्ममें उत्पन्न होती है। कर्ममें उपस्थित विपाकत्व देश, काल और निमित्तोंके प्राप्त होनेसे होता है। जो देश, काल और निमित्त एक कर्मके विपाचक हैं, वे अन्य कर्मके भी हैं, ऐसा नियम नहीं किया जा सकता, क्योंकि विरुद्ध फलवाले भी कर्म होते हैं। शास्त्र भी इस कर्मका यह फल होता है, इतने मात्रमें पर्यवसित होता है। देश, काल और निमित्त विशेषका संकीर्तन नहीं करता है। साधन सामर्थ्यविशेषसे किसीकी अतीन्द्रिय शक्ति आविर्भूत होती है और अन्यकी उससे प्रतिबद्ध होती हुई स्थित रहती है। और अविशेषरूपसे विद्यामें अभिसन्धि उत्पन्न नहीं होती, ऐसा भी नहीं है, क्योंकि इस जन्ममें अथवा अन्य जन्ममें मुझे विद्या उत्पन्न हो, ऐसी अभिसन्धि निरङ्कुश है। श्रवण आदि द्वारा भी उत्पन्न होनेवाली विद्या प्रतिबन्धक्षयकी अपेक्षासे ही उत्पन्न होती है। और इसी प्रकार श्रुति आत्माका दुर्बोधत्व दिखलाती है—'श्रवणायापि०' ( जो बहुतोंको श्रवणके लिए भी प्राप्त होने योग्य नहीं है, जिसे बहुत श्रवण करते हुए भी नहीं समझते उस आत्मतत्त्वका निरूपण करनेवाला भी आश्चर्यरूप है, उसे प्राप्त करनेवाला भी निपुण पुरुष ही होता है तथा कुशल आचार्य द्वारा उपदेश किया हुआ ज्ञाता भी आश्चर्यरूप ही है ) और गर्भस्थित ही वामदेवने ब्रह्मभाव प्राप्त किया, ऐसा

## सत्यानन्दी-दीपिका

इसी जन्ममें उत्पन्न होती है अथवा जन्मान्तरमें? पूर्वपक्षमें कारीरियागफलके समान विद्या इसी जन्म में उत्पन्न होती है। यज्ञ आदि भी चित्तशुद्धि द्वारा विविदिषा उत्पन्नकर श्रवणादिसे विद्याको उत्पन्न करते हैं। यदि इसी जन्ममें विद्याकी उत्पत्ति न माने तो श्रवण आदि विद्याके हेतु सिद्ध नहीं होंगे।

* प्रतिबन्धके सद्भावमें 'श्रृण्वन्तोऽपि बहवो यं न विद्युः०' (कठ० २, ७) (बहुतसे लोग सुनते हुए भी उस आत्मतत्त्वको यथार्थरूपसे नहीं जानते) 'श्रुत्वाप्येनं वेद न चैव कश्चित्' ( गीता २।२९ ) ( कोई-कोई सुनकर भी इस आत्मतत्त्वको नहीं जानता )इत्यादि श्रुति और स्मृति प्रमाण हैं॥ ५१॥

गर्भस्थस्यैवैहिकं किंचित्साधनं संभाव्यते। स्मृतावपि—'अप्राप्य योगसंसिद्धिं कां गतिं कृष्ण गच्छति' (गी० ६।३७) इत्यर्जुनेन पृष्टो भगवान्वासुदेवः 'नहि कल्याणकृत्कश्चिद्दुर्गतिं तात गच्छति' (गी० ६।४०) इत्युक्त्वा पुनस्तस्य पुण्यलोकप्राप्तिं साधुकुले संभूतिं चाभिधायानन्तरम्—'तत्र तं बुद्धिसंयोगं लभते पौर्वदेहिकम्' (गी० ६।४३) इत्यादिना 'अनेकजन्मसंसिद्धस्ततो याति परां गतिम्' (गी० ६।४५) इत्यन्तेनैतदेव दर्शयति। तस्मादैहिकमामुष्मिकं वा विद्याजन्म प्रतिबन्धक्षयापेक्षयेति स्थितम् ॥५१॥

( १७ मुक्तिफलाधिकरणम्। सू० ५२ )

**एवं मुक्तिफलानियमस्तदवस्थावधृतेस्तदवस्थावधृतेः ॥ ५२ ॥**

पदच्छेद—एवम्, मुक्तिफलानियमः, तदवस्थावधृतेः, तदवस्थावधृतेः।

सूत्रार्थ—( एवम् ) ब्रह्म साक्षात्कारके समान, ( मुक्तिफलानियमः ) मुक्तिफलमें भी विशेष नियम नहीं है, ( तदवस्थावधृतेः ) क्योंकि उस मुक्त्यवस्थाका सब वेदान्तोंमें एकरूप ही अवधारण किया गया है। 'तदवस्थावधृतेः' इस पदका दो बार उच्चारण अध्यायकी परिसमाप्तिका सूचक है।

* यथा मुमुक्षोर्विद्यासाधनावलम्बिनः साधनवीर्यविशेषाद्विद्यालक्षणे फल ऐहिकामुष्मिकफलत्वकृतो विशेषप्रतिनियमो दृष्टः। एवं मुक्तिलक्षणेऽप्युत्कर्षापकर्षकृतः कश्चिद्विशेषप्रतिनियमः स्यादित्याशङ्क्याह-एवं मुक्तिफलानियम इति। न खलु मुक्तिफले कश्चिदेवंभूतो विशेषप्रतिनियम आशङ्कितव्यः। कुतः? तदवस्थावधृतेः। मुक्त्यवस्था हि सर्ववेदान्तेष्वेकरूपैवावधार्यते। ब्रह्मैव हि मुक्त्यवस्था, नच ब्रह्मणोऽनेकाकारयोगोऽस्ति, एकलिङ्गत्वावधारणात्, 'अस्थूलमनणु' (बृह० ३।८।८), 'स एष नेति नेत्यात्मा' (बृह० ३।९।२६), 'यत्र नान्यत्पश्यति' (छा० ७।२४।१) 'ब्रह्मैवेदममृतं पुरस्तात्' (मुण्ड० २।२।११), 'इदं सर्वं

---

कहती हुई श्रुति जन्मान्तर संचित साधनसे भी जन्मान्तरमें विद्याकी उत्पत्ति दिखलाती है। गर्भस्थितमें किसी ऐहिक साधनकी संभावना नहीं की जाती। स्मृतिमें भी 'अप्राप्य योगसंसिद्धिं०' ( हे कृष्ण ! योगफल-सम्यग्दर्शनको प्राप्त किए बिना वह किस गतिको प्राप्त होता है ) इस प्रकार अर्जुन द्वारा पूछे गए भगवान् वासुदेव 'नहि कल्याणकृत्०' ( हे तात ! कोई भी कल्याणकृत् कुत्सित गतिको प्राप्त नहीं होता ) ऐसा कहकर पुनः उसकी पुण्यलोक प्राप्ति और साधुकुलमें उत्पत्ति कहकर अनन्तर 'तत्र तं०' ( उस योगी कुलमें पूर्व देहमें स्थित बुद्धि संयोगको प्राप्त करता है ) इत्यादिसे लेकर 'अनेकजन्मसंसिद्धस्ततो०' ( अनेक जन्मोंमें उपचित हुए संस्कारोंसे सम्यग्ज्ञानी होकर श्रेष्ठगतिको प्राप्त होता है ) यहाँ तक यही बात दिखलाते हैं। इसलिए इस जन्ममें अथवा अन्य जन्ममें प्रतिबन्ध क्षयकी अपेक्षासे विद्याजन्म होता है, यह सिद्ध हुआ ॥ ५१ ॥

जैसे विद्याके साधनका अवलम्बन करनेवाले मुमुक्षुका साधनके सामर्थ्यविशेषसे विद्यारूप फलमें ऐहिक फलत्व और जन्मान्तरीय फलत्व कृत विशेष प्रतिनियम देखा गया है, वैसे मुक्ति लक्षणमें भी उत्कर्ष और अपकर्षकृत कोई विशेष प्रतिनियम होना चाहिए, ऐसी आशङ्काकर कहते हैं—'एवं मुक्तिफलानियमः' मुक्तिफलमें इसी प्रकारके किसी भी विशेष प्रतिनियमकी आशङ्का नहीं करनी चाहिए, किससे ? उसी अवस्थाका अवधारण होनेसे। मुक्ति अवस्था सब वेदान्तोंमें एक रूप ही निश्चित की जाती है। ब्रह्म ही मुक्ति अवस्था है, ब्रह्ममें अनेक आकारोंका सम्बन्ध नहीं है, क्योंकि 'अस्थूलमनणु०' ( न स्थूल है और न अणु है ) 'स एष०' (यह आत्मा ऐसा नहीं, ऐसा नहीं, इस प्रकार निर्दिष्ट है) 'यत्र नान्यत्पश्यति' (जिसमें अन्य नहीं देखता है) 'ब्रह्मैवेदममृतं०' (यह अमृत ब्रह्म ही आगे है) 'इदं सर्वं०' ( यह सब जो कुछ भी है यह सब आत्मा ही है ) 'स वा एष०' ( वही यह

यदयमात्मा' ( बृह० २।४।६ ), 'स वा एष महानज आत्माऽजरोऽमरोऽमृतोऽभयो ब्रह्म' ( बृह० ४।४।२५ ), 'यत्र त्वस्य सर्वमात्मैवाभूत्तत्केन कं पश्येत्' ( बृ० ४।५।१५ ) इत्यादिश्रुतिभ्यः। * अपि च विद्यासाधनं स्ववीर्यविशेषात्स्वफल एव विद्यायां कंचिदतिशयमासञ्जयेन्न विद्याफले मुक्तौ। तद्धयसाध्यं नित्यसिद्धस्वभावमेव विद्ययाधिगम्यत इत्यसकृदवादिष्म। न च तस्यामप्युत्कर्षनिकर्षात्मकोऽतिशय उपपद्यते, निकृष्टाया विद्यात्वाभावादुत्कृष्टैव हि विद्या भवति। तस्मात्तस्यां चिराचिरोत्पत्तिरूपोऽतिशयो भवन्भवेत्, नतु मुक्तौ कश्चिदतिशयसंभवोऽस्ति। विद्याभेदाभावादपि तत्फलभेदनियमाभावः, कर्मफलवत्। नहि मुक्तिसाधनभूताया विद्यायाः कर्मणामिव भेदोऽस्तीति। सगुणासु तु विद्यासु—'मनोमयः प्राणशरीरः ( छा० ३।१४।२ ) इत्याद्यासु गुणावापोद्वापवशाद्भेदोपपत्तौ सत्यामुपपद्यते यथास्वं फलभेदनियमः, कर्मफलवत्। तथा च लिङ्गदर्शनम्—'तं यथा यथोपासते तदेव भवति' इति। नैवं निर्गुणायां विद्यायाम्, गुणाभावात्। तथा च स्मृतिः—'नहि गतिरधिकास्ति कस्यचित्सति हि गुणे प्रवदन्त्यतुल्यताम्' इति। तदवस्थावधृतेस्तदवस्थावधृतेरिति पदाभ्यासोऽध्यायपरिसमाप्तिं द्योतयति ॥५२॥

इति श्रीमच्छङ्करभगवत्पादकृतौ शारीरकमीमांसाभाष्ये तृतीयाध्यायस्य चतुर्थः पादः ॥४॥

---

महान् अज आत्मा अजर, अमृत, अमर एवं अभय ब्रह्म है ) 'यत्र त्वस्य०' ( जहाँ उसका सब आत्मा ही हो गया वहाँ किससे किसे देखे ) इत्यादि श्रुतियोंसे उसका एक लिङ्गत्व ( रूप ) निश्चय होता है। और विद्याका साधन अपने सामर्थ्य विशेषसे अपने फल विद्यामें ही किसी एक अतिशयका आधान करेगा किन्तु विद्याके फल मुक्तिमें नहीं, क्योंकि वह असाध्य है और नित्य सिद्ध स्वभाव विद्यासे अधिगत होता है, ऐसा हम अनेक वार कह चुके हैं। उस विद्यामें भी उत्कर्षात्मक और निकृष्टात्मक अतिशय उपपन्न नहीं होता, क्योंकि निकृष्टमें विद्यात्व नहीं है, किन्तु उत्कृष्ट ही विद्या होती है, इसलिए उस विद्यामें विलम्ब और अविलम्बरूप अतिशय होता हो तो भले हो, किन्तु मुक्तिमें कोई अतिशय संभव नहीं है। विद्याके भेदका अभाव होनेसे भी उसके फलभेद नियमका अभाव है, कर्म फलके समान। मुक्तिके साधनभूत विद्यामें कर्मोंके समान भेद नहीं है। परन्तु 'मनोमयः प्राणशरीर' इत्यादि सगुण विद्याओंमें गुणोंके आवाप और उद्वापके वशसे भेदकी उपपत्ति होनेपर उसके अनुसार कर्मफलके समान फलभेदका नियम उपपन्न होता है। उसीप्रकार 'तं यथा०' ( उसकी जिस प्रकार उपासना करता है वही होता है ) ऐसा लिङ्गदर्शन है। परन्तु इसप्रकार निर्गुण विद्यामें फलभेदका नियम नहीं है, क्योंकि उसमें गुणोंका अभाव है। और 'नहि गतिरधिका०' ( किसी निर्गुणवेत्ताकी अधिक गति नहीं है, क्योंकि गुणके होनेपर ही अतुल्यता कहते हैं ) इसप्रकार स्मृति भी है। 'तदवस्थावधृतेः' इस पदका दो वार कथन अध्यायकी परिसमाप्तिका द्योतन करता है ॥५२॥

स्वामी सत्यानन्द सरस्वती कृत शाङ्करभाष्य-भाषानुवादके तृतीयाध्यायका चतुर्थ पाद समाप्त ॥४॥

## सत्यानन्दी-दीपिका

* पूर्वपक्षी मुक्तिमें अतिशय विशेष मानकर उसे कर्म साध्य सिद्ध करना चाहते हैं। परन्तु सिद्धान्तमें मुक्ति सभी उपनिषदोंमें एक रूप प्रतिपादित है, क्योंकि ब्रह्मरूप ही तो मुक्ति है। निरवयव एक ब्रह्ममें उत्कर्ष और अपकर्षका असम्भव है। केवल विद्यासे अविद्याकी निवृत्तिद्वारा ब्रह्मस्वरूप मोक्षकी अभिव्यक्तिमात्र होती है। यहाँ तो विद्याकी निवृत्ति भी ब्रह्मरूप है। अतः ब्रह्मरूप मोक्षमें किसी प्रकारका अतिशय विशेष नहीं है।

* जैसे वायु आदि प्रतिबन्ध होनेपर दीपोत्पत्तिमें विलम्ब होता है, परन्तु उसके उत्पन्न होनेपर अन्धकार निवृत्तिरूप फलमें नहीं, वैसे तत्त्वज्ञान होनेपर अज्ञानकी निवृत्तिरूप फलमें विलम्ब नहीं

## अथ चतुर्थोऽध्यायः ।

[ अत्रास्मिन् फलाध्याये प्रथमपादे जीवन्मुक्तिनिरूपणम् । ]

( इस फल अध्यायके प्रथम पादमें जीवन मुक्तिका निरूपण है )

( १ आवृत्त्यधिकरणम् । सू० १-२ )

### आवृत्तिरसकृदुपदेशात् ॥ १ ॥

पदच्छेद—आवृत्तिः, असकृत्, उपदेशात् ।

सूत्रार्थ—( आवृत्तिः ) प्रत्ययकी आवृत्ति करनी चाहिए, ( असकृदुपदेशात् ) क्योंकि 'श्रोतव्यो मन्तव्यः' आदि श्रुतियोंमें इसप्रकारका वार-वार उपदेश है ।

* तृतीयेऽध्याये परापरासु विद्यासु साधनाश्रयो विचारः प्रायेणात्यगात् । अथेह चतुर्थे फलाश्रय आगमिष्यति । प्रसङ्गागतं चान्यदपि किंचिच्चिन्तयिष्यते । प्रथमं तावत्कतिभिश्चिदधिकरणैः साधनाश्रयविचारशेषमेवानुसरामः । 'आत्मा वा अरे द्रष्टव्यः श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृह० ४।५।६), 'तमेव धीरो विज्ञाय प्रज्ञां कुर्वीत' (बृह० ४।४।२१), 'सोऽन्वेष्टव्यः स विजिज्ञासितव्यः' (छा० ८।७।१), इति चैवमादिश्रवणेषु संशयः–किं सकृत्प्रत्ययः कर्तव्यः, आहोस्विदावृत्त्येति । किं तावत्प्राप्तम् ? सकृत्प्रत्ययः स्यात्प्रयाजादिवत्, तावता शास्त्रस्य कृतार्थत्वात् । अश्रूयमाणायां ह्यावृत्तौ क्रियमाणायामशास्त्रार्थः कृतो भवेत् । नन्वसकृदुपदेशा उदाहृताः–'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्येवमादयः । एवमपि यावच्छब्द-

---

तृतीय अध्यायमें पर और अपर विद्याओंमें साधनाश्रय विचार प्रायः किया जा चुका है । अब इस चतुर्थ अध्यायमें फलाश्रय विचार आयेगा । और प्रसंगतः कुछ अन्य विषयक भी विचार किया जायेगा । प्रथम तो कुछ अधिकरणोंसे साधनाश्रय अवशिष्ट विचारका हम अनुसरण करते हैं । 'आत्मा वा अरे द्रष्टव्यः०' ( अरे मैत्रेयी ! आत्माका दर्शन करना चाहिए, श्रवण करना चाहिए, मनन करना चाहिए और निदिध्यासन करना चाहिए ) 'तमेव धीरो०' ( बुद्धिमान् ब्राह्मण उपदेश और शास्त्रसे उस आत्माका परोक्षज्ञान प्राप्त कर प्रज्ञा ( साक्षात्कार ) के लिए शम दम आदि साधन करे ) 'सोऽन्वेष्टव्यः०' ( उसका अन्वेषण करना चाहिए, उसकी विशेष जिज्ञासा करनी चाहिए ) इत्यादि श्रवणोंमें संशय होता है कि क्या एक वार ही प्रत्यय करना चाहिए अथवा आवृत्तिसे-इन श्रवण आदि साधनोंका एक वार ही अनुष्ठान करना चाहिए अथवा साक्षात्कार पर्यन्त उनकी पुनः पुनः आवृत्ति करनी चाहिए ? तब क्या प्राप्त होता है ? पूर्वपक्षी—प्रयाज आदिके समान एक ही वार प्रत्यय करना चाहिए, क्योंकि, इतनेमें ही शास्त्र कृतार्थ होता है, आवृत्तिके अश्रूयमाण होनेपर भी उसकी आवृत्ति किये जानेपर तो शास्त्रार्थसे विरुद्ध किया जायगा । परन्तु 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादि असकृत् उपदेश उदाहृत हैं ? ऐसा होनेपर भी जिसका शब्द है

सत्यानन्दी-दीपिका

होता । इसलिए विद्यामें अन्य प्रकारका कोई अतिशय नहीं है । जैसे गुणभेदसे कर्म और उपासनाके असमान होनेसे उनके अनुष्ठाताओंकी भी असमान गति होती है, वैसे निर्गुण विद्यामें नहीं होती, क्योंकि उसमें कोई गुण नहीं है । इसलिए ब्रह्मवेत्ताओंकी ब्रह्म प्राप्तिरूप एक-सी गति होती है ॥ ५२ ॥

स्वामी सत्यानन्द सरस्वती कृत 'सत्यानन्दी-दीपिका' के तृतीयाध्यायका चतुर्थ पाद समाप्त ॥ ४ ॥

* तृतीय अध्यायमें पर विद्या–ब्रह्मात्मसाक्षात्कार साधनीभूत ब्रह्मविद्या और अपर-सगुण-विद्यामें साधन सम्बन्धी विचार प्रायः समाप्त किया गया है । अब हेतुहेतुमद्भाव संगतिसे इस चतुर्थ अध्यायमें तत्फल सम्बन्धी विचार किया जाता है । और फलके प्रसङ्गसे उत्क्रान्ति एवं अचिरादि

मावर्तयेत्सकृच्छ्रवणं सकृन्मननं सकृन्निदिध्यासनं चेति, नातिरिक्तम्। सकृदुपदेशेषु तु वेदोपासीतेत्येवमादिष्वनावृत्तिरिति। एवं प्राप्ते ब्रूमः—प्रत्ययावृत्तिः कर्तव्या। कुतः? असकृदुपदेशात्, 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्येवंजातीयको ह्यसकृदुपदेशः प्रत्ययावृत्तिं सूचयति। ननूक्तं—यावच्छब्दमेवावर्तयेन्नाधिकमिति—न, दर्शनपर्यवसितत्वादेषाम्। दर्शनपर्यवसानानि हि श्रवणादीन्यावर्त्यमानानि दृष्टार्थानि भवन्ति। यथाऽवघातादीनि तण्डुलादिनिष्पत्तिपर्यवसानानि हि तद्वत्। अपि चोपासनं निदिध्यासनं चेत्यन्तर्णीतावृत्तिगुणैव क्रियाभिधीयते। तथा हि—लोके गुरुमुपास्ते राजानमुपास्त इति च यस्तात्पर्येण गुर्वादीननुवर्तते स एवमुच्यते। तथा ध्यायति प्रोषितनाथा पतिमिति या निरन्तरस्मरणा पतिं प्रति सोत्कण्ठा, सैवमभिधीयते। विद्युपास्त्योश्च वेदान्तेष्वव्यतिरेकेण प्रयोगो दृश्यते। क्वचिद्धि विदिनोपक्रम्योपासिनोपसंहरति, यथा—'यस्तद्वेद यत्स वेद स मयैतदुक्तः' (छा० ४।१।४) इत्यत्र 'अनु म एतां भगवो देवतां शाधि यां देवतामुपास्से' (छा० ४।२।२) इति। क्वचिच्चोपासिनोपक्रम्य विदिनोपसंहरति, यथा—'मनो ब्रह्मेत्युपासीत' (छा० ३।१८।१) इत्यत्र 'भाति च तपति च कीर्त्या यशसा ब्रह्मवर्चसेन य एवं वेद' (छा० ३।१८।३) इति। तस्मात्सकृदुपदेशेष्वप्यावृत्तिसिद्धिः। असकृदुपदेशस्त्वावृत्तेः सूचकः ॥ १ ॥

---

उसकी आवृत्ति करनी चाहिए—एक वार श्रवण, एक वार मनन और एक वार निदिध्यासन, इससे अधिक नहीं, 'वेद' 'उपासीत' इत्यादि सकृत् उपदेशोंमें आवृत्ति नहीं है। सिद्धान्ती—ऐसा प्राप्त होनेपर हम कहते हैं—प्रत्ययकी आवृत्ति करनी चाहिए। किससे? इससे कि असकृत् उपदेश है। 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इस प्रकारका अनेक वार उपदेश प्रत्यय आवृत्ति सूचित करता है। परन्तु ऐसा कहा गया है कि श्रुतिके अनुसार ही आवृत्ति करनी चाहिए, अधिक नहीं। ऐसा नहीं, क्योंकि ये दर्शन पर्यवसायी हैं। साक्षात्कार पर्यवसायी वार-वार आवृत्ति किये जानेवाले श्रवण आदि साधन दृष्ट फलवाले होते हैं। जैसे अवघात आदि तण्डुल आदि निष्पत्ति ( अभिव्यक्ति ) पर्यवसायी होते हैं, वैसे प्रकरणमें भी समझना चाहिए। और उपासना और निदिध्यासन आवृत्ति गुण गर्भित क्रिया का ही अभिधान करते हैं। जैसे कि लोकमें 'गुरुमुपास्ते०' (गुरुकी उपासना करता है, राजाकी उपासना करता है ) जो तत्परतासे गुरु आदिका अनुवर्तन करता है वह ऐसा ही कहा जाता है। वैसे 'ध्यायति' 'जिसका पति परदेश गया है वह स्त्री पतिका ध्यान करती है' जो निरन्तर स्मरण करती पतिके प्रति सोत्कण्ठा है वह ऐसी कही जाती है। विद् और उप पूर्वक अस् धातुका उपनिषदोंमें ( समान अर्थमें ) प्रयोग देखा जाता है। कहीं 'विदि' से आरम्भकर उपास्तिसे उपसंहार करते हैं। जैसे कि 'यस्तद्वेद०' ( जिसे रैक्व जानता है उसे जो जानता है वह मैंने जैसे कहा है वैसे ही रैक्व सदृश होता है ) इसमें विदिसे उपक्रम है और 'अनु मे एतां०' ( हे भगवन् रैक्व! आप मुझे उस देवताका उपदेश कीजिए जिसकी आप उपासना करते हैं ) इसप्रकार उपास्तिसे उपसंहार है। और कहीं उपास्तिसे उपक्रम कर विदिसे उपसंहार करते हैं—जैसे 'मनो ब्रह्मेत्युपासीत' ( मन ब्रह्म है ऐसी उपासना करनी चाहिए ) इसमें उपास्तिसे उपक्रम है और 'भाति च०' ( जो ऐसा जानता है वह कीर्ति-यश और ब्रह्मतेजके कारण देदीप्यमान होता और तपता है ) इसप्रकार विदिसे उपसंहार है। इससे एक वार उपदेशोंमें भी आवृत्ति सिद्ध होती है, वार वार उपदेश तो आवृत्तिका सूचक है ॥ १ ॥

## सत्यानन्दी-दीपिका

शांकाका भी विचार किया जायगा। प्रथम साक्षात् श्रुतिमें कथित संन्यास आदि साधनोंका विचार किया जा चुका है। अब 'अघाश्लेष' इस अधिकरणके पूर्वतक फलार्थापत्तिसे गम्य आवृत्ति आदिका विचार है। 'अघाश्लेष' अधिकरणसे लेकर पाद समाप्तितक जीवनमुक्तिका, द्वितीय पादमें उत्क्रान्तिका,

## लिङ्गाच्च ॥२॥

पदच्छेद—लिङ्गात्, च।

सूत्रार्थ—और 'रश्मींस्त्वं पर्यावर्तयात्' यह लिङ्ग प्रमाण भी बहुत-सी किरणोंका विधान करता हुआ प्रत्ययोंकी आवृत्ति दिखलाता है, इससे श्रवण आदि प्रत्ययोंकी भी आवृत्ति होनी चाहिए।

* लिङ्गमपि प्रत्ययावृत्तिं प्रत्याययति। तथा ह्युद्गीथविज्ञानं प्रस्तुत्य 'आदित्य उद्गीथः' (छा० १।५।१) इत्येतदेकपुत्रतादोषेणापोद्य 'रश्मींस्त्वं पर्यावर्तयात्' (छा० १।५।२) इति रश्मिबहुत्वविज्ञानं बहुपुत्रतायै विदधत्सिद्धवत्प्रत्ययावृत्तिं दर्शयति। तस्मात्तत्सामान्यात्सर्वप्रत्ययेष्वावृत्तिसिद्धिः। अत्राह—भवतु नाम साध्यफलेषु प्रत्ययेष्वावृत्तिः, तेष्वावृत्तिसाध्यस्यातिशयस्य संभवात्। यस्तु परब्रह्मविषयः प्रत्ययो नित्यशुद्धबुद्धमुक्तस्वभावमेवात्मभूतं परं ब्रह्म समर्पयति, तत्र किमर्थावृत्तिरिति? सकृच्छ्रुतौ च ब्रह्मात्मत्वप्रतीत्यनुपपत्तेरावृत्त्यभ्युपगम इति चेत्—न, आवृत्तावपि तदनुपपत्तेः। यदि हि 'तत्त्वमसि' (छा० ६।८।७) इत्येवंजातीयकं वाक्यं सकृच्छ्रूयमाणं ब्रह्मात्मत्वप्रतीतिं नोत्पादयेत्, ततस्तदेवावर्त्यमानमुत्पादयिष्यतीति का प्रत्याशा स्यात्? * अथोच्येत—न केवलं वाक्यं कंचिदर्थं साक्षात्कर्तुं शक्नोत्यतो युक्त्य-

---

लिङ्ग भी प्रत्ययोंकी आवृत्तिका ज्ञान कराता है, क्योंकि 'आदित्य उद्गीथः' इसप्रकार उद्गीथ विज्ञानको प्रस्तुत कर एवं एक पुत्रताके दोषसे उसका प्रतिषेध कर 'रश्मींस्त्वं पर्यावर्तयात्' (अतः हे पुत्र! तू सूर्य रश्मियोंका आदित्यसे भेदरूपसे चिन्तन कर) इसप्रकार बहुत पुत्रता प्राप्तिके लिए बहुत रश्मियोंके विज्ञानका विधान करता हुआ लिङ्ग सिद्धवत् प्रत्ययोंकी आवृत्ति दिखलाता है। प्रकृत उद्गीथ प्रत्ययके साथ सब प्रत्ययोंकी साक्षात्कार हेतुरूपसे अथवा ध्यानरूपसे समानता होनेके कारण अहंग्रहोपासना और श्रवण आदि सब प्रत्ययोंमें आवृत्तिकी सिद्धि होती है। पू०—यहाँ कहते हैं कि साध्य फलवाले प्रत्ययोंमें आवृत्ति भले हो, क्योंकि उनमें आवृत्तिसे साध्य अतिशयका संभव है। परन्तु जो परब्रह्मविषयक प्रत्यय नित्य, शुद्ध, बुद्ध, मुक्तस्वभाव आत्मभूत परब्रह्मका बोध कराता है, उसमें आवृत्तिका क्या प्रयोजन? यदि कहो कि केवल एक वार श्रवण होनेपर ब्रह्मात्मत्व प्रतीतिकी अनुपपत्ति होनेसे आवृत्तिका स्वीकार है। तो यह ठीक नहीं है, क्योंकि आवृत्ति होनेपर भी उसकी उपपत्ति नहीं होती। यदि 'तत्त्वमसि' इसप्रकारका एक वार श्रूयमाण वाक्य ब्रह्मात्मत्व प्रतीतिको उत्पन्न नहीं कर सका तो वही आवृत्यमान हुआ प्रतीतिको उत्पन्न करेगा इसकी क्या आशा हो सकती है? यदि कहो कि केवल वाक्य किसी अर्थका साक्षात्कार करनेके लिए समर्थ नहीं है, अतः युक्तिकी अपेक्षा रखता हुआ वाक्य ब्रह्मात्मत्वका अनुभव कराएगा। तथापि—ऐसा माननेपर भी श्रवण

### सत्यानन्दी-दीपिका

तृतीयपादमें अर्चिरादि गन्तव्य मार्गके निर्णयका और चतुर्थ पादमें ज्ञान और उपासनाके फलके निर्णयका विचार है। पू०—असकृत् उपदेश होनेपर भी उसका आवृत्तिमें तात्पर्य नहीं है। सिद्धान्तमें श्रवण आदिको दृष्टार्थ होनेसे ब्रह्म साक्षात्कारपर्यन्त आवृत्ति होनी चाहिए। ॥१॥

* विषय साक्षात्कार फलवाले श्रवण आदि प्रत्ययोंकी आवृत्तिमें 'लिङ्गाच्च' यह दूसरा हेतु कहते हैं। निर्गुण ब्रह्मके साक्षात्कार उत्पन्न करनेकी 'तत्त्वमसि' आदि वाक्योंमें शक्ति है कि नहीं? प्रथम पक्ष तो एक वार श्रवण किये गये वाक्यसे साक्षात्कार सिद्ध होनेसे आवृत्ति निष्फल है। द्वितीय पक्ष—तो उसकी वार वार आवृत्ति भी निष्फल है।

* 'मैं आत्मा हूँ और परमात्मासे भिन्न हूँ' इस प्रकारका सामान्य ज्ञान तो प्रायः सभीको है, किन्तु उससे अविद्याकी निवृत्ति नहीं होती, उसकी निवृत्ति तो 'तत्त्वमसि' 'अहं ब्रह्मास्मि' इत्यादि

पेक्षं वाक्यमनुभावयिष्यति ब्रह्मात्मत्वमिति, तथाप्यावृत्त्यानर्थक्यमेव। साऽपि हि युक्तिः सकृत्प्रवृत्तैव स्वमर्थमनुभावयिष्यति। अथापि स्याद्युक्त्या वाक्येन च सामान्यविषयमेव विज्ञानं क्रियते, न विशेषविषयम्। यथास्ति मे हृदये शूलमित्यतो वाक्याद्गात्रकम्पादि-लिङ्गाच्च शूलसद्भावसामान्यमेव परः प्रतिपद्यते, न विशेषमनुभवति, यथा स एव शूली। विशेषानुभवश्चाविद्याया निवर्तकस्ततस्तदर्थावृत्तिरिति चेत्—न, असकृदपि तावन्मात्रे क्रियमाणे विशेषविज्ञानोत्पत्त्यसंभवात्। नहि सकृत्प्रयुक्ताभ्यां शास्त्रयुक्तिभ्यामनवगतो विशेषः शतकृत्वोऽपि प्रयुज्यमानाभ्यामवगन्तुं शक्यते। तस्माद्यदि शास्त्रयुक्तिभ्यां विशेषः प्रतिपाद्येत यदि वा सामान्यमेव, उभयथापि सकृत्प्रवृत्ते एव ते स्वकार्यं कुरुत इत्यावृत्त्यनुपयोगः। न च सकृत्प्रयुक्ते शास्त्रयुक्ती कस्यचिदप्यनुभवं नोत्पादयत इति शक्यते नियन्तुम्, विचित्रप्रज्ञत्वात्प्रतिपत्तॄणाम्। अपि चानेकांशोपेते लौकिके पदार्थे सामान्यविशेषवत्येकेनावधानेनैकमंशमवधारयत्यपरेणापरमिति स्यादप्यभ्यासोपयोगो यथा दीर्घप्रपाठकग्रहणादिषु, नतु निर्विशेषे ब्रह्मणि सामान्यविशेषरहिते चैतन्यमात्रात्मके प्रमोत्पत्तावभ्यासापेक्षा युक्तेति। *अत्रोच्यते—भवेदावृत्त्यानर्थक्यं तं प्रति यस्तत्त्वमसीति सकृदुक्तमेव ब्रह्मात्मत्वमनुभवितुं शक्नु-

---

वादि प्रत्ययोंकी आवृत्ति निरर्थक ही है। क्योंकि वह युक्ति भी एक वार प्रवृत्त हुई अपने अर्थका बोध करायेगी। और यदि ऐसी शंका करो कि युक्ति और वाक्यसे सामान्य विषयक ही ज्ञान किया जाता है विशेष विषयक नहीं। जैसे मेरे हृदयमें शूल है, इस वाक्यसे और गात्रकम्पन आदि लिंगसे शूलके अस्तित्वका सामान्य ज्ञान अन्यको होता है विशेष अनुभव नहीं होता, जैसा कि वही शूलवान् विशेष शूलका स्वयं अनुभव करता है। यदि कहो कि विशेष अनुभव अविद्याका निवर्तक है, अतः उसके लिए आवृत्ति है। तो ठीक नहीं है, क्योंकि कितने ही पुनः पुनः भी श्रवण आदि किये जायँ तो भी विशेष विज्ञानकी उत्पत्तिका संभव नहीं है। कारण कि एक वार प्रयुक्त शास्त्र और युक्तिसे अनवगत विशेष सौवार प्रयुक्त हुए शास्त्र और युक्तिसे भी विशेष अवगत नहीं किया जा सकता। इसलिए यदि कहो कि शास्त्र और युक्तिसे विशेष प्रतिपादन किया जाता है अथवा यदि कहो कि उनके योगसे सामान्यका प्रतिपादन किया जाता है, तो भी दोनों प्रकारसे एक वार प्रवृत्त होनेपर ही वे अपना कार्य करते हैं, इसलिए वृत्तिका उपयोग नहीं है। एक वार प्रयुक्त हुए शास्त्र और युक्ति किसीके भी अनुभवको उत्पन्न नहीं करते, ऐसा नियमन नहीं किया जा सकता। क्योंकि अनुभवितालोंकी बुद्धि विचित्र है। और इसीप्रकार अनेक अंशोंसे युक्त सामान्य और विशेषवाले लौकिक पदार्थमें एक अवधान ( एक वार मनकी एकाग्रता ) से एक अंशका और दूसरे अवधानसे दूसरे अंशका निश्चय करनेवालोंमें आवृत्तिका उपयोग भले ही हो। जैसे दीर्घ प्रपाठकके ग्रहण आदिमें आवृत्तिका उपयोग होता है। परन्तु सामान्य विशेषसे रहित चैतन्यमात्ररूप निर्विशेष ब्रह्ममें प्रमाकी उत्पत्तिके लिए आवृत्तिकी अपेक्षा युक्त नहीं है। सिद्धान्ती—इसपर कहते हैं—जो पुरुष 'तत्त्वमसि' इसप्रकार एक वार ही उक्त ब्रह्मात्मत्व अनुभव करनेमें समर्थ हो उसके प्रति आवृत्ति भले निरर्थक हो।

## सत्यानन्दी-दीपिका

वेदान्त वाक्योंके श्रवण आदिके अभ्याससे उत्पन्न हुए 'मैं ब्रह्मात्मा हूँ' इस विशेष ज्ञानसे होती है। इसलिए आवृत्ति सार्थक है। पू०—'न, 'असकृदपि' आदिसे कहता है।

* जैसे उद्दालकने श्वेतकेतुको 'तत्त्वमसि' का नौ वार उपदेश किया है। जैसे षड्ज आदि स्वर भेदके साक्षात्कारके लिए श्रोत्र समर्थ हैं, तो भी उसके अभ्यासकी अपेक्षा है, वैसे ही ब्रह्म साक्षात्कार करनेकी वाक्यमें सामर्थ्य होनेपर भी अभ्यासकी अपेक्षा है। इस विषयमें अनुभव प्रमाण भी है। जैसे अध्ययन आदिमें एक वार श्रवणसे अल्पज्ञान होता है वार-वार वाक्यार्थका अभ्यास करनेपर विशेष ज्ञान

यात्। यस्तु न शक्नोति तं प्रत्युपयुज्यत एवावृत्तिः। तथा हि छान्दोग्ये 'तत्त्वमसि श्वेतकेतो' ( छा० ६।८।७ ) इत्युपदिश्य 'भूय एव मा भगवान्विज्ञापयतु' ( छा० ६।८।७ ) इति पुनः पुनः परिचोद्यमानस्तत्तदाशङ्काकारणं निराकृत्य तत्त्वमसीत्येवासकृदुपदिशति। तथा च 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' (बृ० ४।५।६) इत्यादि दर्शितम्। ननूक्तं-सकृच्छ्रुतं चेत्तत्त्वमसिवाक्यं स्वमर्थमनुभावयितुं न शक्नोति, तत आवर्त्यमानमपि नैव शक्ष्यतीति, नैष दोषः, नहिं दृष्टेऽनुपपन्नं नाम। दृश्यन्ते हि सकृच्छ्रुताद्वाक्यान्मन्दप्रतीतं वाक्यार्थमावर्तयन्तस्तत्तदाभासव्युदासेन सम्यक्प्रतिपद्यमानाः। अपि च 'तत्त्वमसि' इत्येतद्वाक्यं त्वंपदार्थस्य तत्पदार्थभावमाचष्टे। तत्पदेन च प्रकृतं सद्ब्रह्मेक्षितृ जगतो जन्मादिकारणमभिधीयते—'सत्यं ज्ञानमनन्तं ब्रह्म' ( तै २।१।१ ) 'विज्ञानमानन्दं ब्रह्म' (बृ० ३।९।२८), 'अदृष्टं द्रष्टृ' (बृ० ३।८।११), 'अविज्ञातं विज्ञातृ' (बृ० ३।८।११), 'अजमजरममरम्' 'अस्थूलमनण्वह्रस्वमदीर्घम्' (बृ० ३।८।८) इत्यादिशास्त्रप्रसिद्धम्।* तत्राजादिशब्दैर्जन्मादयो भावविकारा निवर्तिताः। अस्थूलादिशब्दैश्च स्थौल्यादयो द्रव्यधर्माः। विज्ञानादिशब्दैश्च चैतन्यप्रकाशात्मकत्वमुक्तम्। एष व्यावृत्तसर्वसंसारधर्मकोऽनुभवात्मको ब्रह्मसंज्ञकस्तत्पदार्थो वेदान्ताभियुक्तानां प्रसिद्धः

---

परन्तु जो इस प्रकार समर्थ न हो उसके प्रति आवृत्ति उपयुक्त ही है। जैसे कि छान्दोग्यमें 'तत्त्वमसि श्वेतकेतो' इस प्रकार उपदेश कर 'भूय एव०' (श्वेतकेतु—हे भगवन्! पुनः मुझे समझाइए) इस प्रकार पुनः पुनः प्रेरित होते हुए तत्-तत् आशङ्का कारणका निराकरण कर 'तत्त्वमसि' इस प्रकार अनेक वार उपदेश करते हैं। और उसी प्रकार 'श्रोतव्यो मन्तव्यो निदिध्यासितव्यः' इत्यादि दिखलाया गया है। परन्तु ऐसा कहा गया है कि यदि एक वार श्रुत 'तत्त्वमसि' वाक्य अपने अर्थ अनुभव करानेमें समर्थ नहीं है तो आवर्त्यमान होनेपर भी समर्थ नहीं होगा? यह दोष नहीं है, क्योंकि दृष्ट-अनुभवमें आनेपर कुछ भी अनुपपन्न नहीं है। एक वार श्रुत वाक्यसे मन्दप्रतीत-सामान्य ज्ञात वाक्यार्थकी आवृत्ति करनेवाले तत्-तत् आभासोंका निराकरणकर सम्यग्ज्ञान करते हुए देखे जाते हैं। और 'तत्त्वमसि' यह वाक्य 'त्वम्' पदार्थका 'तत्' पदार्थभाव कहता है, और 'तत्' पदसे प्रकृत ईक्षितृ सद्ब्रह्म जगत्के जन्म आदिका कारण कहा जाता है, जो 'सत्यं ज्ञानमनन्तं ब्रह्म' 'विज्ञानमानन्दं ब्रह्म' 'अदृष्टं द्रष्टृ' 'अविज्ञातं०' (यह अक्षर ब्रह्म स्वयं दृष्टिका विषय नहीं है, किन्तु स्वयं द्रष्टा है, स्वयं अविज्ञात रहकर दूसरोंका विज्ञाता है) 'अजमजरममरम्०' (ब्रह्म अज, अजर और अमर है) 'अस्थूलम०' (वह न स्थूल है, न अणु है, न ह्रस्व है और न दीर्घ है) इत्यादि शास्त्रसे प्रसिद्ध है। उस ब्रह्ममें अज आदि शब्दोंसे जन्म आदि भाव विकार निवृत्त किये गये हैं, अस्थूल आदि शब्दोंसे स्थौल्य आदि द्रव्यके धर्म निवृत्त किये गये हैं। विज्ञान आदि शब्दोंसे ब्रह्म चैतन्य प्रकाशात्मक कहा गया है। समस्त संसारके धर्मोंसे

## सत्यानन्दी-दीपिका

* अब 'त्वम्' पदका अर्थ 'तथा' इत्यादिसे कहते हैं—स्थूल देह अन्नमय कोशसे लेकर आनन्दमय कोश पर्यन्त 'यह मैं नहीं हूँ' इस प्रकार सबकी निवृत्तिकर 'शुद्ध ब्रह्मात्मा हूँ' यह निश्चय 'त्वम्' पदका लक्ष्यार्थ है। इसी अर्थको 'तत्त्वमसि' आदि वेदान्त महावाक्य प्रतिपादन करते हैं। किन्तु जिनको 'तत्' और 'त्वम्' पदका वाच्यार्थ और लक्ष्यार्थ अविद्याकृत संशय आदिसे प्रतिबद्ध हैं, उनके प्रति 'तत्त्वमसि' आदि वाक्य अपने वाच्य और लक्ष्यार्थ आत्मैकत्वका बोध करानेमें समर्थ नहीं हैं। उनके प्रति शास्त्र और युक्तिका अभ्यास अपेक्षित है। इस प्रकार प्रथम 'तत्' पदका लक्ष्यार्थ निश्चित होनेपर पश्चात् 'त्वम्' पदका लक्ष्यार्थ निश्चित होता है। इस प्रकार क्रमिक ज्ञान आत्मज्ञानमें हेतु है।

होता है। और 'तत्त्वमसि' इस वाक्यमें 'तत्' पदसे 'तत्' पद वाच्य ईक्षितृ सद्ब्रह्म जगत्के जन्म आदिका कारण कहा गया है, और 'सत्यं ज्ञानमनन्तं ब्रह्म' इससे 'तत्' पदका लक्ष्यार्थ कहा गया है।

तथा त्वंपदार्थोऽपि प्रत्यगात्मा श्रोता देहादारभ्य प्रत्यगात्मतया संभाव्यमानश्चैतन्यपर्यन्तत्वेनावधारितः। तत्र येषामेतौ पदार्थावज्ञानसंशयविपर्ययप्रतिबद्धौ तेषां 'तत्त्वमसी' त्येतद्वाक्यं स्वार्थे प्रमां नोत्पादयितुं शक्नोति, पदार्थज्ञानपूर्वकत्वाद्वाक्यार्थस्येत्यतस्तान्प्रत्येष्टव्यः पदार्थविवेकप्रयोजनः शास्त्रयुक्त्यभ्यासः। यद्यपि च प्रतिपत्तव्य आत्मा निरंशस्तथाप्यध्यारोपितं तस्मिन्बह्वंशत्वं देहेन्द्रियमनोबुद्धिविषयवेदनादिलक्षणम्। तत्रैकेनावधानेनैकमंशमपोहत्यापरेणापरमिति, युज्यते तत्र क्रमवती प्रतिपत्तिः। तत्तु पूर्वरूपमेवात्मप्रतिपत्तेः। * येषां पुनर्निपुणमतीनां नाज्ञानसंशयविपर्ययलक्षणः पदार्थविषयः प्रतिबन्धोऽस्ति, ते शक्नुवन्ति सकृदुक्तमेव तत्त्वमसिवाक्यार्थमनुभवितुमिति, तान्प्रत्यावृत्त्यानर्थक्यमिष्टमेव। सकृदुत्पन्नैव ह्यात्मप्रतिपत्तिरविद्यां निवर्तयतीति, नात्र कश्चिदपि क्रमोऽभ्युपगम्यते। सत्यमेवं युज्येत—यदि कस्यचिदेवं प्रतिपत्तिर्भवेत्। बलवती ह्यात्मनो दुःखित्वादि प्रतिपत्तिः। अतो न दुःखित्वाद्यभावं कश्चित्प्रतिपद्यत इति चेत्—न, देहाद्यभिमानवद्दुःखित्वाद्यभिमानस्य मिथ्याभिमानत्वोपपत्तेः। प्रत्यक्षं हि देहे छिद्यमाने दह्यमाने वाऽहं छिद्ये दह्ये इति च मिथ्याभिमानो दृष्टः। तथा बाह्यतरेष्वपि पुत्रमित्रादिषु संतप्यमानेष्वहमेव संतप्य इत्यध्यारोपो दृष्टः। तथा दुःखित्वाद्यभिमानोऽपि स्यात्। देहादिवदेव चैतन्याद्बहिरुप

---

रहित ज्ञानात्मक 'तत्' पद वाच्य यह ब्रह्म वेदान्तियोंमें प्रसिद्ध है। इसीप्रकार 'त्वम्' पदार्थ भी प्रत्यगात्मा, श्रोताके देहसे आरम्भ कर प्रत्यगात्मरूपसे संभाव्यमान चैतन्यावधित्वसे निश्चित किया गया है। ऐसी अवस्थामें जिनके ये दोनों पदार्थ अज्ञान, संशय और विपर्ययसे प्रतिबद्ध होते हैं, उनके लिए 'तत्त्वमसि' यह वाक्य स्वार्थमें प्रमा उत्पन्न करनेमें समर्थ नहीं है, क्योंकि वाक्यार्थज्ञान पदार्थज्ञानपूर्वक होता है, अतः उनके प्रति पदार्थोंके विवेक प्रयोजनवाले शास्त्र और युक्तिका अभ्यास होना चाहिए। यद्यपि प्रतिपत्तिके योग्य आत्मा निरंश है, तो भी देह, इन्द्रिय, मन, बुद्धि, विषय, वेदना आदिरूप बहुतसे अंश उसमें अध्यारोपित हैं, उनमें एक अवधानसे एक अंशका और दूसरेसे दूसरे अंशका निषेधकर उसमें क्रमिक प्रतिपत्ति युक्त है। वह आवृत्ति आत्मप्रतिपत्तिका पूर्वरूप है अर्थात् आत्मज्ञानमें कारण है। परन्तु जिन निपुण मतिवालोंके अज्ञान, संशय और विपर्यय 'तत्' 'त्वम्' पदार्थ विषयक प्रतिबन्ध नहीं है वे एक बार ही उक्त 'तत्त्वमसि' वाक्यार्थ ज्ञान करनेमें समर्थ होते हैं। उनके प्रति आवृत्तिकी अनर्थकता इष्ट ही है, क्योंकि एक बार उत्पन्न हुआ ज्ञान ही अविद्याकी निवृत्ति करता है, इससे इसमें कोई क्रम स्वीकार नहीं किया जाता। ठीक है, यदि किसीको इस प्रकार आत्मज्ञान हो तो आवृत्ति की निरर्थकता युक्त है। यदि कहो कि आत्मामें दुःखित्व आदिका ज्ञान बलवान् है, अतः कोई भी दुःखित्व आदि अभावको प्राप्त नहीं होता, तो यह ठीक नहीं है, क्योंकि आत्मामें देह आदि अभिमानके समान दुःखित्व अभिमानमें भी मिथ्याभिमानत्व उपपन्न होता है। देहका छेदन किये जानेपर अथवा दहन किये जानेपर मैं काटा जाता हूँ, मैं जलाया जाता हूँ, इस प्रकार प्रत्यक्ष मिथ्याभिमान देखा गया है। इसी प्रकार देहसे भिन्न बाह्य पुत्र, मित्र आदिके संतप्त होनेपर 'मैं ही संतप्य हूँ' ऐसा अध्यारोप देखा जाता है। उसी प्रकार दुःखित्व आदि अभिमान होना चाहिए, क्योंकि देह आदिके समान ही दुःखित्व आदि चैतन्यरूपसे बाहर (पृथक्) उपलब्ध होते हुए सुषुप्ति आदिमें अनुवृत्त नहीं होते।

### सत्यानन्दी-दीपिका

* मन्द और मध्यम अधिकारियोंके लिए अभ्यास सार्थक कहकर अब उत्तम अधिकारियोंके लिए 'येषाम्' इत्यादिसे कहते हैं। जैसे एक बार उत्पन्न हुआ रज्जुज्ञान सर्प आदि भ्रान्तिको निवृत्त करता है, वैसे उत्तम अधिकारियोंके लिए एक बार 'तत्त्वमसि' आदि महावाक्योंसे उत्पन्न ज्ञान अविद्याको निवृत्त करता है।

लभ्यमानत्वाद्दुःखित्वादीनाम्, सुषुप्तादिषु चाननुवृत्तेः। चैतन्यस्य तु सुषुप्तेऽप्यनुवृत्तिमामनन्ति—'यद्वै तन्न पश्यति पश्यन्वै तन्न पश्यति' ( बृ० ४।३।२३ ) तस्मात्सर्वदुःखविनिर्मुक्तैकचैतन्यात्मकोऽहमित्येष आत्मानुभवः।* न चैवमात्मानमनुभवतः किंचिदन्यत्कृत्यमवशिष्यते। तथा च श्रुतिः—'किं प्रजया करिष्यामो येषां नोऽऽयमात्माऽयं लोकः' ( बृ० ४।४।२२ ) इत्यात्मविदः कर्तव्याभावं दर्शयति। स्मृतिरपि—'यस्त्वात्मरतिरेव स्यादात्मतृप्तश्च मानवः। आत्मन्येव च संतुष्टस्तस्य कार्यं न विद्यते' ( गी० ३।१७ ) इति। यस्य तु नैषोऽनुभवो द्रागिव जायते तं प्रत्यनुभवार्थ एवावृत्त्यभ्युपगमः। तत्रापि न तत्त्वमसिवाक्यार्थात्प्रच्याव्यावृत्तौ प्रवर्तयेत्। नहि वरघाताय कन्यामुद्वाहयन्ति। नियुक्तस्य चास्मिन्नधिकृतोऽहं कर्ता मयेदं कर्तव्यमित्यवश्यं ब्रह्मप्रत्ययाद्विपरीतप्रत्यय उत्पद्यते। यस्तु स्वयमेव मन्दमतिरप्रतिभानात्तं वाक्यार्थं जिहासेत्तस्यैतस्मिन्नेव वाक्यार्थे स्थिरीकार आवृत्त्यादिवाचोयुक्त्याऽभ्युपेयते। तस्मात्परब्रह्मविषयेऽपि प्रत्यये तदुपायोपदेशेष्वावृत्तिसिद्धिः॥ २॥

( २ आत्मत्वोपासनाधिकरणम्। सू० ३ )

## आत्मेति तूपगच्छन्ति ग्राहयन्ति च॥ ३॥

पदच्छेद—आत्मा, इति, तु, उपगच्छन्ति, ग्राहयन्ति, च

---

परन्तु 'यद्वै०' ( वह जो सुषुप्तिमें नहीं देखता सो निश्चय देखता हुआ नहीं देखता ) इत्यादि श्रुतिसे चैतन्यकी अनुवृत्ति सुषुप्तिमें कहते हैं। इसलिए सब दुःखोंसे विनिमुक्त एक चैतन्य स्वरूप मैं हूं यह आत्मानुभव है। और इस प्रकार आत्माका अनुभव करनेवालोंके लिए कुछ अन्य कृत्य अवशिष्ट नहीं होता। जैसे कि 'किं प्रजया०' ( परमार्थदर्शी जिन हम लोगोंका यह आत्मा ही लोक है वे हम इस प्रजा-संततिसे क्या करेंगे ) यह श्रुति आत्मवेत्ताके लिए कर्तव्याभाव दिखलाती है। और 'यस्त्वात्मरतिरेव०' ( परन्तु जो मनुष्य आत्मामें ही रति-प्रीतिवाला है विषयमें नहीं, और आत्मामें ही तृप्त है अन्न रस आदिसे नहीं, आत्मामें ही सन्तुष्ट है बाह्यार्थ लाभसे नहीं उसके लिए कोई कर्तव्य नहीं है ) यह स्मृति भी है। परन्तु जिसको [ तत्त्वमसि आदि वाक्योंसे मैं ब्रह्म हूं ] यह अनुभव शीघ्र नहीं होता, उसके प्रति अनुभवके लिए ही आवृत्तिका स्वीकार है। उसमें भी उसको 'तत्त्वमसि' वाक्यार्थसे प्रच्युतकर आवृत्तिमें प्रवृत्त नहीं करना चाहिए, क्योंकि वर नाशके लिए कन्याका विवाह नहीं करते। इसमें अधिकृत हुआ मैं कर्ता हूं, यह मेरा कर्तव्य है, इस प्रकार नियुक्त पुरुषको ब्रह्मज्ञानसे अवश्य विपरीत ज्ञान उत्पन्न होता है। किन्तु जो स्वयं ही मन्दमति वाक्यार्थके प्रतिभान न होनेसे उसके त्याग करनेकी इच्छा करता हो तो उसको इसी वाक्यार्थमें आवृत्ति आदि वचन [ श्रोतव्यः ] और युक्तिसे स्थिर करना स्वीकार है। इसलिए परब्रह्म विषयक ज्ञानमें भी उसके साधनभूत उपदेशोंमें आवृत्ति सिद्ध होती है॥ २॥

### सत्यानन्दी-दीपिका

* जिसको 'तत्त्वमसि' आदि महावाक्योंसे 'मैं ब्रह्म हूं' ऐसा शीघ्र ज्ञान उत्पन्न नहीं होता उसके लिए आवृत्ति स्वीकृत है। परन्तु जो 'तत्त्वमसि' वाक्यार्थ ज्ञानमें संलग्न है उसको वहांसे हटाकर 'श्रोतव्यो मन्तव्यः' इस प्रकार आवृत्तिमें प्रवृत्त नहीं करना चाहिए, क्योंकि 'श्रोतव्यः' आदिकी आवृत्ति भी तो प्रधान 'तत्त्वमसि' वाक्यार्थ ज्ञानके लिए है। यहांपर 'तत्त्वमसि' आदि वाक्यार्थ ज्ञान प्रधान है और 'श्रोतव्यः' आदि उसके अङ्ग हैं। अङ्गोंका ग्रहण प्रधानकी सिद्धिके लिए होता है। इस प्रकार सगुण और निर्गुण ब्रह्मसाक्षात्कार फलके साधन भूत अहंग्रहोपासना और श्रवण आदिमें आवृत्ति सिद्ध होती है॥२॥

इति। नन्वेवं सति प्रायश्चित्तोपदेशोऽनर्थकः प्राप्नोति, नैष दोषः, प्रायश्चित्तानां नैमित्तिकत्वोपपत्तेर्गृहदाहेष्ट्यादिवत्। अपि च प्रायश्चित्तानां दोषसंयोगेन विधानाद्भवेदपि दोषक्षपणार्थता, नत्वेवं ब्रह्मविद्यायां विधानमस्ति। नन्वनभ्युपगम्यमाने ब्रह्मविदः कर्मक्षये तत्फलस्यावश्यंभोक्तव्यत्वादनिर्मोक्षः स्यात्। नेत्युच्यते। देशकालनिमित्तापेक्षो मोक्षः कर्मफलवद्भविष्यति। तस्मान्न ब्रह्माधिगमे दुरितनिवृत्तिरिति। एवं प्राप्ते ब्रूमः–तदधिगमे ब्रह्माधिगमे सत्युत्तरपूर्वयोरघयोरश्लेषविनाशौ भवतः, उत्तरस्याश्लेषः, पूर्वस्य विनाशः। कस्मात्? तद्व्यपदेशात्। तथा हि–ब्रह्मविद्याप्रक्रियायां संभाव्यमानसंबन्धस्यागामिनो दुरितस्यानभिसंबन्धं विदुषो व्यपदिशति–'यथा पुष्करपलाश आपो न श्लिष्यन्त एवमेवंविदि पापं कर्म न श्लिष्यते' ( छा० ४।१४।३ ) इति। तथा विनाशमपि पूर्वोपचितस्य दुरितस्य व्यपदिशति–'तद्यथेषीकातूलमग्नौ प्रोतं प्रदूयेतैवं हास्य सर्वे पाप्मानः प्रदूयन्ते' (छा० ५।२४।३) इति। अयमपरः कर्मक्षयव्यपदेशो भवति—'भिद्यते हृदयग्रन्थिश्छिद्यन्ते सर्वसंशयाः। क्षीयन्ते चास्य कर्माणि तस्मिन्दृष्टे

---

( कर्म क्षय नहीं होता ) इस प्रकार स्मृतिकार भी कहते हैं। परन्तु ऐसा होनेपर प्रायश्चित्तका उपदेश अनर्थक हो जायगा? यह दोष नहीं है, क्योंकि प्रायश्चित्तोंको गृहदाहेष्टि आदिके समान नैमित्तिकत्व उपपन्न होता है। और दोषके संयोगसे प्रायश्चित्तोंका विधान होनेसे दोष नाश प्रयोजनवत्ता उनमें भले हो, परन्तु इसप्रकार ब्रह्मविद्यामें विधान नहीं है। परन्तु ब्रह्मज्ञानीके कर्मका क्षय स्वीकार न करनेपर उसका फल अवश्य भोक्तव्य होनेसे मोक्ष नहीं होगा। नहीं, ऐसा कहते हैं–देश, काल और निमित्त की अपेक्षा करनेवाला मोक्ष कर्मफलके समान होगा। इससे तो ब्रह्मसाक्षात्कार होनेपर भी पापकी निवृत्ति नहीं होती है। ऐसा प्राप्त होनेपर हम कहते हैं—'तदधिगमे' ब्रह्मज्ञान होनेपर उत्तर और पूर्व पापोंका अश्लेष और विनाश होता है। उत्तर—देह धारणकर किये जानेवाले पापोंका अश्लेष और पूर्व पापोंका विनाश होता है, किससे? इससे कि उसका व्यपदेश है। जैसे कि 'यथा पुष्करपलाश०' ( जैसे कमलका पत्ता जलसे सम्बन्धित नहीं होता, वैसे 'एवंवित्' 'मैं ब्रह्म हूँ' ऐसा जाननेवाले विद्वान्‌को पापका सम्बन्ध नहीं होता ) यह श्रुति ब्रह्मविद्याके प्रकरणमें संभाव्यमान सम्बन्धवाले आगामी पापके सम्बन्धका अभाव विद्वान्‌के लिए कहती है। इसी प्रकार 'तद्यथेषीका० ( जिस प्रकार सींकका अग्रभाग अग्निमें प्रक्षिप्त करनेसे तत्काल जल जाता है, इसी प्रकार इस विद्वान्‌के सब पाप दग्ध हो जाते हैं ) यह श्रुति

### सत्यानन्दी-दीपिका

कृतं कर्म शुभाशुभम्' ( पुण्य अथवा पापकर्म अवश्य ही भोक्तव्य है ) और 'क्षीयन्ते चास्य कर्माणि' ( ब्रह्मवित्‌के समस्त कर्म क्षीण हो जाते हैं ) इस प्रकार शास्त्र द्वारा विरोध उपस्थित होनेपर सन्देह होता है कि ब्रह्मज्ञान होनेपर कर्मका क्षय होता है कि नहीं? पूर्वपक्षी—कर्म फलवाला होता है। क्योंकि 'मा हिंस्यात्सर्वा भूतानि' 'ब्राह्मणो न हन्तव्यः' इत्यादि निषेध श्रुतिसे ज्ञात होता है कि पाप कर्ममें फल देनेकी शक्ति है। और 'नाभुक्तं क्षीयते कर्म' यह स्मृति वाक्य भी है। अतः कर्म फलोपभोगके विना ज्ञानसे नष्ट नहीं होता. अन्यथा फल श्रुति बाधित होगी। सि०–परन्तु 'ब्रह्महा द्वादशिकवार्षिकं चरेत्' इत्यादि प्रायश्चित्त विधायक शास्त्र निष्फल होगा? पू०—जैसे आहिताग्निद्वारा गृहदाह निमित्तको लेकर आहिताग्नि पुरुष 'अग्नये क्षामवते पुरोडाशमष्टाकपालं निर्वपेत्' ( क्षामवति अग्निके लिए अष्टकपालवाले पुरोडाशका होम करना चाहिए) इस प्रकार क्षामवति इष्टिका विधान है, वैसे दोषके निमित्तमात्रसे प्रायश्चित्तका विधान है। सि०—तो भी 'दोषवान् प्रायश्चित्तं कुर्यात्' ( दोष युक्त व्यक्ति प्रायश्चित्त करे) और 'तरति ब्रह्महत्यां योऽश्वमेधेन यजते' ( जो अश्वमेध याग करता है वह ब्रह्महत्यासे मुक्त हो जाता है ) इस प्रकार प्रायश्चित्तसे पापनिवृत्तिके श्रवणसे प्रायश्चित्तकर्मको नैमित्तिक कहना असङ्गत है। पू०—'अपि च' आदिसे कहते हैं।

परावरे' ( मु० २।२।८ ) इति। यदुक्तम्—अनुपभुक्तफलस्य कर्मणः क्षयकल्पनायां शास्त्रं कदर्थितं स्यादिति—नैष दोषः, नहि वयं कर्मणः फलदायिनीं शक्तिमवजानीमहे, विद्यत एव सा, सा तु विद्यादिना कारणान्तरेण प्रतिबध्यत इति वदामः। शक्तिसद्भावमात्रे च शास्त्रं व्याप्रियते, न प्रतिबन्धाप्रतिबन्धयोरपि। *'नहि कर्म क्षीयते' इत्येतदपि स्मरणमौत्सर्गिकं न भोगादृते कर्म क्षीयते तदर्थत्वादिति। इष्यत एव तु प्रायश्चित्तादिना तस्य क्षयः-'सर्वं पाप्मानं तरति', तरति ब्रह्महत्यां योऽश्वमेधेन यजते' 'य उ चैनमेवं वेद' इत्यादिश्रुतिस्मृतिभ्यः। यत्तूक्तम्-नैमित्तिकानि प्रायश्चित्तानि भविष्यन्तीति-तदसत्, दोषसंयोगेन चोद्यमानानामेषां दोषनिर्घातफलसंभवे फलान्तरकल्पनानुपपत्तेः। यत्पुनरेतदुक्तम्-न प्रायश्चित्तवद्दोषक्षयोद्देशेन विद्याविधानमस्तीति, अत्र ब्रूमः—सगुणासु तावद्विद्यासु विद्यत एव विधानम्। तासु च वाक्यशेष ऐश्वर्यप्राप्तिः पापनिवृत्तिश्च विद्यावत उच्यते। तयोश्चाविवक्षाकारणं नास्तीत्यतः पाप्मप्रहाणपूर्वकैश्वर्यप्राप्तिस्तासां फलमिति निश्चीयते। निर्गुणायां तु विद्यायां यद्यपि विधानं नास्ति, तथाप्यकर्त्रात्मत्वबोधात्कर्मप्रदाहसिद्धिः। अश्लेष इति

---

पूर्वोपचित-पूर्व सञ्चित पापका विनाश भी कहती है। और 'भिद्यते हृदयग्रन्थि०' ( उस परावर ब्रह्मका साक्षात्कार होनेपर इस जीवकी हृदय ग्रन्थि टूट जाती है, सम्पूर्ण संशय नष्ट हो जाते हैं और इसके कर्म क्षीण हो जाते हैं ) यह दूसरा कर्मक्षयका व्यपदेश है। और यह जो कहा गया है कि अभुक्त फलवाले कर्मके क्षयकी कल्पना होनेपर फल बोधक शास्त्र बाधित होगा। यह दोष नहीं है, क्योंकि हम कर्मकी फल देनेवाली शक्तिकी अवहेलना नहीं करते, वह भले विद्यमान हो, परन्तु वह विद्या आदि अन्य कारणसे प्रतिबद्ध होती है, केवल हम ऐसा कहते हैं। कर्ममें फलदायक शक्तिके सद्भावमात्रमें शास्त्रका व्यापार है न कि शक्तिके प्रतिबन्ध और अप्रतिबन्धमें भी। 'न हि कर्म क्षीयते०' ( कर्म क्षय नहीं होता ) यह स्मृति भी औत्सर्गिक-सामान्य नियमरूप है, कर्म भोगके लिए है, अतः भोगके बिना कर्म क्षय नहीं होता। क्योंकि 'सर्वं पाप्मानं तरति' ( सम्पूर्ण पापोंको तैरता है ) 'तरति ब्रह्महत्यां०' ( जो अश्वमेध यज्ञ करता है और जो इसे इस प्रकार जानता है वह ब्रह्महत्यासे मुक्त हो जाता है ) इत्यादि श्रुति और स्मृतिसे प्रायश्चित्त आदि द्वारा दुरितका क्षय इष्ट ही है। जो यह कहा गया है कि प्रायश्चित्त नैमित्तिक होंगे। वह ठीक नहीं है, क्योंकि दोषके सम्बन्धसे शास्त्र द्वारा विहित इन प्रायश्चित्तों का दोष नाशरूप फलके संभव होनेपर अन्य फलकी कल्पना अनुपपन्न है। और जो पुनः यह कहा गया है कि प्रायश्चित्तके समान दोषक्षयके उद्देश्यसे विद्याका विधान नहीं है। उसपर हम कहते हैं—सगुण विद्याओंमें तो विधान विद्यमान ही है, क्योंकि उन सगुण विद्याओंके वाक्यशेषमें विद्यावान्‌की ऐश्वर्यप्राप्ति और पापनिवृत्ति कही जाती है। और उन दोनोंकी अविवक्षाका कारण नहीं है, अतः पापक्षयपूर्वक ऐश्वर्य प्राप्ति उनका फल है, ऐसा निश्चय किया जाता है। निर्गुणविद्यामें तो यद्यपि

### सत्यानन्दी-दीपिका

* 'न हि क्षीयते कर्म' यह सामान्य शास्त्र 'सर्वं पाप्मानं तरति०' 'क्षीयन्ते चास्य कर्माणि०' इत्यादि विशेष शास्त्रसे बाधित हो जाता है। यद्यपि ऐश्वर्यप्राप्ति और पापनिवृत्तिका विधान सगुणविद्या के समान निर्गुणविद्यामें दोष निवृत्तिका स्पष्ट विधान नहीं है, तो भी विद्यात्व दोनोंमें समान होनेसे निर्गुणविद्यामें भी पापनिवृत्तिरूप फल मानना युक्त है, क्योंकि कर्तृत्व आदि अभिमान पाप आदि कर्मका कारण है। ब्रह्मज्ञानसे अविद्याकी निवृत्ति होनेपर तत्कृत कर्तृत्व आदिकी निवृत्तिसे तदाश्रित पापकर्मका क्षय भी हो जाता है। इसविषयमें 'ज्ञानिनः सर्वपापानि क्षीयन्ते नात्र संशयः। क्रीडन्नपि न लिप्येत पापैर्नानाविधैरपि ॥' ( ज्ञानसे समस्त पाप नष्ट हो जाते हैं, इस विषयमें संशय नहीं है। ज्ञानी संसारमें क्रीडा करता हुआ भी नानाप्रकारके पापोंसे लिप्त नहीं होता है) यह स्मृति प्रमाण भी है।

चागामिषु कर्मसु कर्तृत्वमेव न प्रतिपद्यते ब्रह्मविदिति दर्शयति। * अतिक्रान्तेषु तु यद्यपि मिथ्याज्ञानात्कर्तृत्वं प्रतिपेद इव, तथापि विद्यासामर्थ्यान्मिथ्याज्ञाननिवृत्तेस्तान्यपि प्रविलीयन्त इत्याह-विनाश इति। पूर्वसिद्धकर्तृत्वभोक्तृत्वविपरीतं हि त्रिष्वपि कालेष्वकर्तृत्वाभोक्तृत्वस्वरूपं ब्रह्माहमस्मि नेतः पूर्वमपि कर्ता भोक्ता वाऽहमासं नेदानीं नापि भविष्यत्काल इति ब्रह्मविदवगच्छति। एवमेव च मोक्ष उपपद्यते। अन्यथा ह्यनादिकालप्रवृत्तानां कर्मणां क्षयाभावे मोक्षाभावः स्यात्। नच देशकालनिमित्तापेक्षो मोक्षः कर्मफलवद्भवितुमर्हति, अनित्यत्वप्रसङ्गात्। परोक्षत्वानुपपत्तेश्च ज्ञानफलस्य। तस्माद्ब्रह्माधिगमे दुरितक्षय इति स्थितम् ॥१३॥

( १० इतरासंश्लेषाधिकरणम्। सू० १४ )

## इतरस्याप्येवमसंश्लेषः पाते तु ॥१४॥

पदच्छेद—इतरस्य, अपि, एवम्, असंश्लेषः, पाते, तु।

सूत्रार्थ—( इतरस्यापि ) ज्ञानवान्के पुण्यका भी ( एवम् ) पापके समान ( असंश्लेषः ) असंश्लेष और विनाश होता है, ( पाते तु ) इसप्रकार ब्रह्मज्ञानसे बन्धके हेतुभूत पुण्य और पापके असम्बन्ध और विनाश सिद्ध होनेसे ब्रह्मवेत्ताका शरीरपात होनेपर ही मोक्ष होता है।

* पूर्वस्मिन्नधिकरणे बन्धहेतोरघस्य स्वाभाविकस्याश्लेषविनाशौ ज्ञाननिमित्तौ शास्त्रव्यपदेशान्निरूपितौ। धर्मस्य पुनः शास्त्रीयत्वाच्छास्त्रीयेण ज्ञानेनाविरोध इत्याशङ्क्य तन्नि-

---

विधान नहीं है, तो भी अकर्ता आत्मत्व ( आत्मा अकर्ता है ) ज्ञानसे कर्म प्रदाह सिद्ध होता है। 'अश्लेषः' यह शब्द आगामी कर्मोंमें ब्रह्मवित् कर्तृत्वको ही प्राप्त नहीं होता, ऐसा दिखलाता है और अतिक्रान्त-अतीत कर्मोंमें यद्यपि मिथ्याज्ञानसे कर्तृत्वको मानो प्राप्त हुआ-सा है, तो भी ज्ञानकी सामर्थ्यसे मिथ्याज्ञानकी निवृत्ति होनेसे वे अतीत कर्म भी प्रविलीन हो जाते हैं, ऐसा सूत्रस्थ 'विनाश' शब्दसे कहते हैं। पूर्वसिद्ध कर्तृत्व, भोक्तृत्वसे विपरीत, तीनों कालमें भी अकर्तृत्व, अभोक्तृत्व स्वरूप ब्रह्म मैं हूँ, इससे पूर्व भी कर्ता वा भोक्ता मैं नहीं था, अब भी नहीं हूँ, इसी प्रकार भविष्यत्कालमें भी नहीं होऊँगा, इसप्रकार ब्रह्मवित् जानता है, और इसप्रकार मोक्ष उपपन्न होता है। अन्यथा—ब्रह्मज्ञानसे कर्मका क्षय न मानें तो अनादिकालसे प्रवृत्त हुए कर्मोंके क्षयका अभाव होनेसे मोक्षाभाव होगा। और कर्मफलके समान मोक्ष देश, काल निमित्तकी अपेक्षा करनेवाला नहीं हो सकता, क्योंकि ऐसा माननेसे कर्म फलके समान मोक्षमें अनित्यत्व प्रसङ्ग आ जायगा। और ज्ञानके फलमें परोक्षत्व अनुपपन्न है। इससे यह सिद्ध हुआ कि ब्रह्मज्ञान होनेपर पापका क्षय होता है ॥ १३ ॥

पूर्व अधिकरणमें स्वाभाविक बन्धके हेतुभूत पापका ज्ञाननिमित्तक असम्बन्ध और विनाश शास्त्र व्यपदेशसे निरूपित किये गये हैं, और धर्म तो शास्त्रीय है। अतः उसका शास्त्रीय ज्ञानसे अविरोध है। ऐसी आशङ्का कर उसके निराकरण करनेके लिए पूर्व अधिकरणके न्यायका अतिदेश

### सत्यानन्दी-दीपिका

* कर्मोंका दृष्ट फल न होनेसे श्रुतिप्रमाणसे अदृष्ट स्वर्ग आदि फल मानना पड़ता है। परन्तु यहाँ तो केवल ब्रह्मात्मत्व ज्ञानसे अज्ञानकी निवृत्तिमात्र होती है, ब्रह्म तो स्वयं सिद्ध है। अतः अपरोक्ष ज्ञानका मोक्षरूप अपरोक्ष फल जब सम्भव है तो अदृष्ट फलकी कल्पना अन्याय है। इसलिए ब्रह्मज्ञान होनेपर पूर्व सञ्चित कर्मोंका नाश और आगामी कर्मोंका सम्बन्ध नहीं होता, यह श्रुति और स्मृति सिद्ध है ॥ १३ ॥

* तत्त्वज्ञानसे पापकी निवृत्ति कहकर अब पुण्यकी निवृत्तिमें 'इतरस्याप्येवम्' इत्यादिसे अतिदेश करते हैं। जैसे याग आदि अदृष्टद्वारा पापका क्षय करते हैं, वैसे ब्रह्मविद्या नहीं करती, किन्तु

राकरणाय पूर्वाधिकरणन्यायातिदेशः क्रियते। इतरस्यापि पुण्यस्य कर्मण एवमघवद्-संश्लेषो विनाशश्च ज्ञानवतो भवतः। कुतः? तस्यापि स्वफलहेतुत्वेन ज्ञानफलप्रतिबन्धित्वप्रसङ्गात्, 'उभे उ हैवैष एते तरति' (बृ० ४।४।२२) इत्यादिश्रुतिषु च दुष्कृतवत्सुकृतस्यापि प्रणाशव्यपदेशात्। अकर्त्रात्मत्वबोधनिमित्तस्य च कर्मक्षयस्य सुकृतदुष्कृतयोस्तुल्यत्वात्, 'क्षीयन्ते चास्य कर्माणि' (मु० २।२।८) इति चाविशेषश्रुतेः। यत्रापि केवल एव पाप्मशब्दो दृश्यते, तत्रापि तेनैव पुण्यमप्याकलितमिति द्रष्टव्यम्, ज्ञानफलापेक्षया निकृष्टफलत्वात्। अस्ति च श्रुतौ पुण्येऽपि पाप्मशब्दः 'नैतं सेतुमहोरात्रे तरतः' ( छा० ८।४।१ ) इत्यत्र सह दुष्कृतेन सुकृतमप्यनुक्रम्य 'सर्वे पाप्मानोऽतो निवर्तन्ते' इत्यविशेषेणैव प्रकृते पुण्ये पाप्मशब्द-प्रयोगात्। पाते त्विति तुशब्दोऽवधारणार्थः। एवं धर्माधर्मयोर्बन्धहेत्वोर्विद्यासामर्थ्याद-श्लेषविनाशसिद्धेरवश्यंभाविनी विदुषः शरीरपाते मुक्तिरित्यवधारयति ॥ १४ ॥

( ११ अनारब्धाधिकरणम्। सू० १५ )

## अनारब्धकार्ये एव तु पूर्वे तदवधेः ॥१५॥

पदच्छेद—अनारब्धकार्ये, एव, तु, पूर्वे, तदवधेः।

सूत्रार्थ—(अनारब्धकार्ये एव) अनारब्ध फलवाले ही (पूर्वे) पूर्व संचित पुण्य-पापका ही ज्ञान से क्षय होता है, (तदवधेस्तु) क्योंकि 'तस्य तावदेव चिरम्' इत्यादि श्रुतिसे देहपातरूप अवधि श्रुत है।

* पूर्वयोरधिकरणयोर्ज्ञाननिमित्तः सुकृतदुष्कृतयोर्विनाशोऽवधारितः। स किम-विशेषेणारब्धकार्ययोरनारब्धकार्ययोश्च भवत्युत विशेषेणानारब्धकार्ययोरेवेति विचार्यते।

---

किया जाता है। ज्ञानवान्के अन्यका भी—पुण्य कर्मका भी इसप्रकार पापके समान असंश्लेष और विनाश होता है, किससे? इससे कि उसको भी अपने फलके हेतुरूपसे ज्ञानफलमें प्रतिबन्धत्व प्रसङ्ग होगा। 'उभे उ हैवैष०' ( यह ब्रह्मवेत्ता पुण्य और पापरूप इन दोनों कर्मोंको तर जाता है ) इत्यादि श्रुतियों में पापके समान पुण्यका भी प्रणाश व्यपदेश है। आत्मा अकर्ता है, इस बोध निमित्तिक कर्मक्षय सुकृत और दुष्कृत दोनोंमें समान है, कारण कि 'क्षीयन्ते चास्य कर्माणि०' (इसके कर्म क्षीण होते है) ऐसी अविशेष श्रुति है। जहाँ केवल ही पाप्म-पाप शब्द दिखाई देता है वहाँ भी उसीसे पुण्यका भी ग्रहण होता है, ऐसा समझना चाहिए, क्योंकि ज्ञानफलकी अपेक्षासे पुण्य निकृष्ट फलवाला है। और श्रुतिमें पुण्यमें भी पापशब्दका प्रयोग है, 'नैतं सेतुमहोरात्रे०' ( इस सेतुरूप आत्माका दिन-पुण्य और रात-पाप अतिक्रमण नहीं करते अर्थात् आत्माको परिच्छिन्न नहीं करते ) इसमें दुष्कृतके साथ सुकृतका भी उपक्रमकर 'सर्वे पाप्मानोऽतो निवर्तन्ते' ( इस आत्मारूप सेतुसे सब पाप निवृत्त होते हैं ) इसप्रकार अविशेषसे ही प्रकृत पुण्यमें पाप शब्दका प्रयोग है। 'पाते तु' 'तु' शब्द अव-धारणार्थक है। इसप्रकार बन्धके हेतुभूत धर्म और अधर्मका विद्याकी सामर्थ्यसे असंश्लेष और विनाश सिद्ध होनेसे विद्वान्के शरीरपात होनेपर मुक्ति अवश्यंभावी है, ऐसा निश्चय करते हैं ॥ १४ ॥

गत दो अधिकरणोंमें ज्ञानसे सुकृत और दुष्कृतका विनाश निश्चित किया गया है। क्या वह आरब्ध कार्यवाले और अनारब्ध कार्यवाले दोनोंका अविशेषरूपसे होता है अथवा अनारब्ध कार्य-वालोंका ही विशेषरूपसे होता है, इसपर विचार किया जाता है। पूर्वपक्षी—उसमें 'उभे उ हैवैष०'

### सत्यानन्दी-दीपिका

दृष्ट भोक्तृत्व आदिकी निवृत्ति करती है। इसलिए विद्याकी सामर्थ्यसे ब्रह्मज्ञानीके जैसे पापका असंश्लेष और विनाश होता है, वैसे ही पूर्व संचित पुण्यका विनाश और आगामी पुण्यका असंश्लेष होता है।१४।

* पूर्व अधिकरणोंमें ज्ञानसे अशेष कर्मोंका क्षय और असंश्लेष निश्चित किया गया है। परन्तु

तत्र 'उभे उ हैवैष एते तरति' ( बृ० ४।४।२२ ) इत्येवमादिश्रुतिष्वविशेषश्रवणादविशेषेणैव क्षय इति। एवं प्राप्ते प्रत्याह—अनारब्धकार्ये एव त्विति। अप्रवृत्तफले एव पूर्वे जन्मान्तर-संचिते, अस्मिन्नपि च जन्मनि प्राग्ज्ञानोत्पत्तेः संचिते, सुकृतदुष्कृते ज्ञानाधिगमात्क्षीयेते, नत्वारब्धकार्ये सामिभुक्तफले, याभ्यामेतद्ब्रह्मज्ञानायतनं जन्म निर्मितम्। कुत एतत्? 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' ( छा० ६।१४।२ ) इति शरीरपातावधिकरणात्क्षेमप्राप्तेः। इतरथा हि ज्ञानादशेषकर्मक्षये सति स्थितिहेत्वभावाज्ज्ञानप्राप्त्यनन्तरमेव क्षेम-मश्नुवीत। तत्र शरीरपातप्रतीक्षां नाचक्षीत। * ननु वस्तुबलेन वायमकर्त्रात्मावबोधः कर्माणि क्षपयन्कथं कानिचित्क्षपयेत्कानिचिच्चोपेक्षेत? नहि समानेऽग्निबीजसंपर्के केषांचि-द्बीजशक्तिः क्षीयते, केषांचिन्न क्षीयत इति शक्यमङ्गीकर्तुमिति। उच्यते—न तावदनाश्रि-त्यारब्धकार्यं कर्माशयं ज्ञानोत्पत्तिरुपपद्यते। आश्रिते च तस्मिन्कुलालचक्रवत्प्रवृत्तवेगस्या-न्तराले प्रतिबन्धासंभवाद्भवति वेगक्षयप्रतिपालनम्। अकर्त्रात्मबोधोऽपि हि मिथ्याज्ञानबा-

---

( यह ब्रह्मवेत्ता इन दोनों—पुण्य और पाप कर्मोंका अतिक्रमण कर जाता है ) इत्यादि श्रुतियोंमें अवि-शेषरूपसे श्रवण होनेसे अविशेषरूपसे ही क्षय होता है। सिद्धान्ती—ऐसा प्राप्त होनेपर निराकरण कहते हैं—'अनारब्धकार्ये एव तु' पूर्व जन्ममें संचित और ज्ञानोत्पत्तिसे पूर्व तक इस जन्ममें संचित अप्रवृत्त फलवाले सुकृत और दुष्कृत ज्ञानकी प्राप्तिसे क्षय होते हैं, किन्तु आरब्ध कार्य अर्धभुक्त फल वाले जिन पुण्य पापोंसे इस ब्रह्मज्ञानकी प्राप्तिका स्थान यह जन्म निर्मित हुआ है, वे क्षय नहीं होते। यह किससे? इससे कि 'तस्य तावदेव चिरं०' ( उस विद्वान्के मोक्षमें उतना ही विलम्ब है जब तक कि वह देह बन्धनसे मुक्त नहीं होता। उसके अनन्तर तो वह सत्सम्पन्न हो जाता है ) इसप्रकार देहपात मोक्ष प्राप्तिकी अवधि किया गया है, अन्यथा-ज्ञानसे समस्त कर्मोंके क्षय होनेपर शरीर स्थिति का कारण न होनेसे ज्ञान प्राप्तिके अनन्तर ही विद्वान्को मोक्ष प्राप्त होगा, तो फिर शरीरपातकी प्रतीक्षा नहीं कहनी चाहिए। परन्तु 'आत्मा अकर्ता है' यह बोध वस्तु सामर्थ्यसे ही कर्मोंका क्षय करता हुआ कुछ कर्मोंको क्षय करे और कुछ कर्मोंकी उपेक्षा करे, यह कैसे होगा? अग्नि और बीजोंका संपर्क समान होनेपर कुछकी बीजशक्ति क्षय होती है और कुछकी बीजशक्ति क्षय नहीं होती, ऐसा अङ्गीकार नहीं किया जा सकता? कहते हैं—आरब्ध कार्यवाले कर्माशयका आश्रय किए विना ज्ञानकी उत्पत्ति उपपन्न नहीं होती। उसके आश्रित होनेपर कुलालचक्रके समान प्रवृत्त वेग वालेके मध्यमें प्रतिबन्धके सम्भव न होनेसे वेग क्षयकी प्रतीक्षा होती है। अकर्तृ आत्मबोध भी

## सत्यानन्दी-दीपिका

'क्षीयन्ते चास्य कर्माणि०' यह श्रुति ज्ञानीके अशेष कर्मोंका क्षय कहती है और 'तस्य तावदेव चिरं०' यह श्रुति मोक्षके लिए शरीरपातकी प्रतीक्षा कहती है, इससे यह प्रतीत होता है कि कुछ अवशेष कर्म हैं जिनका ज्ञानसे भी नाश नहीं होता। इस संदिग्ध विषयको 'अनारब्धकार्ये' इत्यादिसे स्पष्ट करते हैं। 'क्षीयन्ते चास्य कर्माणि' यह उत्सर्ग श्रुति है, क्योंकि 'तस्य तावदेव चिरम्' यह अपवाद श्रुति विद्यमान है। इससे 'क्षीयन्ते चास्य कर्माणि' इस श्रुतिका प्रारब्ध कर्मोंको छोड़कर शेष कर्मोंके क्षयमें तात्पर्य समझना चाहिए। ऐसा माननेसे दोनों श्रुतियोंका समन्वय होता है।

* यद्यपि अद्वैतात्मज्ञान अनादि अविद्या और तत्कृत समस्त प्रपञ्चका विरोधी होनेसे तन्मध्य-वर्ती अशेष कर्मोंका भी विरोधी है, तो भी जैसे अनारब्ध कार्यवाले कर्मोंका शीघ्रतासे विनाश करता है, वैसे आरब्ध कार्यवाले प्रारब्ध कर्मोंका नहीं। यदि दोनों प्रकारके कर्मोंका ज्ञानद्वारा समानरूपसे विनाश मानें तो हिरण्यगर्भ, याज्ञवल्क्य, वसिष्ट, व्यास, शुकदेव, उद्दालक आदि जीवन मुक्त महा-पुरुषोंका जो श्रुति, स्मृति आदिमें गुरु शिष्य आदिरूपसे संवाद प्रसिद्ध है, वह काल्पनिक सिद्ध होगा।

घनेन कर्माण्युच्छिनत्ति। बाधितमपि तु मिथ्याज्ञानं द्विचन्द्रज्ञानवत्संस्कारवशात्कंचित्कालमनुवर्तत एव। अपि च नैवात्र विवदितव्यम्—ब्रह्मविदा कंचित्कालं शरीरं ध्रियते न वा ध्रियत इति। कथं ह्येकस्य स्वहृदयप्रत्ययं ब्रह्मवेदनं देहधारणं चापरेण प्रतिक्षेप्तुं शक्येत? श्रुतिस्मृतिषु च स्थितप्रज्ञलक्षणनिर्देशेनैतदेव निरुच्यते। तस्मादनारब्धकार्ययोरेव सुकृतदुष्कृतयोर्विद्यासामर्थ्यात्क्षय इति निर्णयः ॥१५॥

( १२ अग्निहोत्राद्यधिकरणम्। सू० १६-१७ )

## अग्निहोत्रादि तु तत्कार्यायैव तद्दर्शनात् ॥१६॥

पदच्छेद—अग्निहोत्रादि, तु, तत्कार्याय, एव, तद्दर्शनात्।

सूत्रार्थ—( अग्निहोत्रादि ) अग्निहोत्र आदि नित्य नैमित्तिक कर्म समुदाय तो (तत्कार्यायैव) तत्त्वज्ञान साध्य मोक्षरूप कार्यके लिए ही है, ( तद्दर्शनात् ) क्योंकि 'तमेतं वेदानुवचनेन०' इत्यादि श्रुतिमें कर्म आदिमें ज्ञान हेतुता देखी जाती है। ( तु ) शब्द शङ्का निवृत्त्यर्थ है।

*पुण्यस्याप्यश्लेषविनाशयोरघन्यायोऽतिदिष्टः, सोऽतिदेशः सर्वपुण्यविषय इत्याशङ्क्य प्रतिवक्ति—अग्निहोत्रादि त्विति। तुशब्द आशङ्कामपनुदति, यन्नित्यं कर्म वैदिकम्-

---

मिथ्याज्ञानके बाधसे कर्मोंका उच्छेद करता है। बाधित हुआ भी मिथ्याज्ञान दो चन्द्रज्ञानके समान संस्कारके बलसे कुछ समय तक अनुवर्तित होता ही है। और इस विषयमें विवाद नहीं करना चाहिए कि ब्रह्मज्ञानी कितने समय तक शरीर धारण करता है अथवा नहीं धारण करता है। एक ही पुरुषका स्वहृदय-स्वसंवेद्य प्रत्यय-ब्रह्मज्ञान और देह धारण उसपर अन्य पुरुषद्वारा आक्षेप कैसे किया जा सकता है? अर्थात् नहीं किया जा सकता है। श्रुति और स्मृतिमें स्थितप्रज्ञके लक्षणके उपदेशसे यही कहा जाता है। इसलिए अनारब्ध कार्यवाले सुकृत और दुष्कृतका ही विद्याकी सामर्थ्यसे क्षय होता है, ऐसा निर्णय है ॥ १५ ॥

पुण्यके भी अश्लेष और विनाशमें पाप न्यायका अतिदेश किया गया है। क्या वह अतिदेश सर्व पुण्य विषयक है? ऐसी आशङ्का कर उसका निराकरण कहते हैं—'अग्निहोत्रादि तु' 'तु' शब्द आशङ्काका परिहार करता है। जो वैदिक अग्निहोत्रादि नित्य कर्म हैं वे तत् तत् कार्यके लिए ही होते

### सत्यानन्दी-दीपिका

इससे अद्वैत आत्मैकत्व ज्ञानका संप्रदाय भी उच्छिन्न हो जायगा। इत्यादि अनेक आपत्तियाँ प्रसक्त होंगी। इससे भगवद्गीताके दूसरे अध्यायमें विस्तार पूर्वक स्थितप्रज्ञके लक्षणोंके उपदेशसे यह सिद्ध होता है कि ज्ञानीके प्रारब्ध कर्मके होनेपर ही उसकी जीवन्मुक्त अवस्था सिद्ध होती है और मुमुक्षु पुरुषोंको उनके उपदेशोंसे लाभ होता है। यदि यह मानें कि ब्रह्मज्ञानसे मिथ्याज्ञानकी निवृत्ति होनेसे अशेष कर्म नष्ट हो जाते हैं, तो उसको 'आश्रिते' आदिसे कहते हैं। किञ्च यह भी एक मत है कि आवरण और विक्षेप नामक अविद्याकी दो शक्तियाँ हैं। आवरणशक्ति तो विद्यासे निवृत्त हो जाती है किन्तु विक्षेपशक्ति नहीं। अतः विक्षेपशक्तिसे निर्मित ब्रह्मवेत्ताका शरीर भी विद्यमान रहता है। वह भोगके समाप्त होनेपर नष्ट हो जाती है, अनन्तर ज्ञानीका मोक्ष होता है, क्योंकि वस्तुकी सामर्थ्य समान होनेपर भी कार्यलिङ्गसे यही सिद्ध होता है कि विद्याकी सामर्थ्यसे अनारब्ध कार्यवाले सुकृत और दुष्कृतका ही क्षय होता है ॥ १५ ॥

* पुण्यका भी पापके समान अश्लेष और विनाश कहा गया। क्या वह सब पुण्य विषयक है अथवा नहीं? ऐसा सन्देह होता है। परन्तु पुण्यका अश्लेष और विनाश होनेसे ज्ञानीको वेदविहित अग्निहोत्र आदि नित्य कर्म भी नहीं करने चाहिएँ, क्योंकि उनका भी पुण्यके समान विद्यासे नाश होगा, इसलिए 'प्रक्षालनाद्धि पङ्कस्य दूरादस्पर्शनं वरम्' ( अङ्गोंको पङ्क लगाकर उसे धोनेकी अपेक्षा

ग्निहोत्रादि, तत्तत्कार्यायैव भवति, ज्ञानस्य यत्कार्यं तदेवास्यापि कार्यमित्यर्थः। कुतः? 'तमेतं वेदानुवचनेन ब्राह्मणा विविदिषन्ति यज्ञेन दानेन' ( बृ० ४।४।२२ ) इत्यादिदर्शनात्। ननु ज्ञानकर्मणोर्विलक्षणकार्यत्वात्कार्यैकत्वानुपपत्तिः, नैष दोषः, ज्वरमरणकार्ययोरपि दधिविषयोर्गुडमन्त्रसंयुक्तयोस्तृप्तिपुष्टिकार्यदर्शनात्, तद्वत्कर्मणोऽपि ज्ञानसंयुक्तस्य मोक्षकार्योपपत्तेः। नन्वनारभ्यो मोक्षः, कथमस्य कर्मकार्यत्वमुच्यते? नैष दोषः, आरादुपकारकत्वात्कर्मणः। ज्ञानस्यैव हि प्रापकं सत्कर्म प्रणाड्या मोक्षकारणमित्युपचर्यते। अत एव चातिक्रान्तविषयमेतत्कार्यैकत्वाभिधानम्। नहि ब्रह्मविद आगाम्यग्निहोत्रादि संभवति, अनियोज्यब्रह्मात्मत्वप्रतिपत्तेः शास्त्रस्याविषयत्वात्। सगुणासु तु विद्यासु कर्तृत्वानतिवृत्तेः संभवत्यागाम्यप्यग्निहोत्रादि। तस्यापि निरभिसंधिनः कार्यान्तराभावाद्विद्यासंगत्युपपत्तिः ॥१६॥

किंविषयं पुनरिदमश्लेषविनाशवचनं, किंविषयं वाऽदो विनियोगवचनमेकेषां शाखिनाम्—'तस्य पुत्रा दायमुपयन्ति सुहृदः साधुकृत्यां द्विषन्तः पापकृत्याम्' इति? अत उत्तरं पठति—

**अतोऽन्यापि ह्येकेषामुभयोः ॥१७॥**

पदच्छेद—अतः, अन्या, अपि, हि, एकेषाम्, उभयोः ।

सूत्रार्थ—( एकेषाम् ) कुछ शाखावालोंके मतमें ( अतः ) अग्निहोत्र आदि नित्य कर्मसे ( अन्या ) स्वर्गादिकी साधनीभूत क्रिया अन्य है । ( उभयोरपि ) वह क्रिया जैमिनि और बादरायण दोनोंको भी सम्मत है ।

* अतोऽग्निहोत्रादेर्नित्यात्कर्मणोऽन्यस्यापि ह्यस्ति साधुकृत्या, या फलमभिसंधाय

---

हैं, जो ज्ञानका कार्य है वही इसका भी कार्य है, ऐसा अर्थ है । किससे ? इससे कि 'तमेतं वेदानुवचनेन०' ( ब्राह्मण उस आत्माको वेदाध्ययनसे, यज्ञसे, और दानसे जाननेकी इच्छा करें ) इत्यादि देखा जाता है । परन्तु ज्ञान और कर्म विलक्षण कार्यवाले होनेसे उनमें कार्यैकत्व उपपत्ति नहीं होती । यह दोष नहीं है, क्योंकि ज्वर और मृत्यु कार्यवाले दधि और विषमें भी गुड़ और मन्त्र संयुक्त होनेपर तृप्ति और पुष्टिरूप कार्य देखे जाते हैं, वैसे ज्ञान संयुक्त कर्मका भी मोक्ष कार्य हो सकता है । परन्तु मोक्ष तो अनारम्य है, उसको कर्मका कार्य कैसे कहा जाता है ? यह दोष नहीं है, क्योंकि कर्म ज्ञानका आराद ( दूरसे ) उपकारक है । ज्ञानका ही प्रापक होता हुआ कर्म परम्परा-अन्तःकरण शुद्धिद्वारा मोक्षका कारण है, ऐसा उपचार किया जाता है । अतएव यह कार्यैकत्वका अभिधान अतिक्रान्त ( ज्ञानसे पूर्व ) कर्म विषयक है । कारण कि ब्रह्मवित्के लिए आगामी अग्निहोत्रादि संभव नहीं हैं। क्योंकि अनियोज्य ब्रह्मात्मत्व ज्ञान शास्त्रका विषय नहीं है । सगुणविद्याओंमें तो कर्तृत्वकी अनिवृत्ति होनेसे आगामी अग्निहोत्र आदि कर्म हो सकते हैं । फल अभिलाषा रहित उस कर्मको भी अन्य कार्यके न होनेसे विद्याकी संगति ( सम्बन्ध ) उपपन्न होती है ॥ १६ ॥

तो फिर यह अश्लेष और विनाश वचन कि विषयक हैं, और इस प्रकार इन शाखावालोंका 'तस्य पुत्रा०' ( उसके पुत्र दाय-धन प्राप्त करते हैं, मित्र साधुकर्म और शत्रु पापकर्म प्राप्त करते हैं ) यह विनियोग वचन किसके लिए है ? इसके लिए उत्तर कहते हैं—

अतः-अग्निहोत्रादि नित्यकर्मसे अन्य भी साधुकृत्य है, जो फलके उद्देश्यसे किया जाता है ।

सत्यानन्दी-दीपिका

उसका दूरसे अस्पर्श ही श्रेष्ठ है ) इसप्रकार पङ्कप्रक्षालन न्यायसे अग्निहोत्र आदि नित्य कर्म न करना श्रेष्ठ है । पूर्वपक्षमें पङ्कप्रक्षालन न्यायसे ज्ञानके लिए नित्य कर्मोंका अनुष्ठान असिद्ध है और सिद्धान्तमें ज्ञानोत्पत्तिके लिए नित्यकर्म अनुष्ठेय हैं ॥ १६ ॥

क्रियते, तस्या एष विनियोग उक्त एकेषां शाखिनाम्—'सुहृदः साधुकृत्यामुपयन्ति' इति। तस्या एव चेदमघवदश्लेषविनाशनिरूपणमितरस्याप्येवमश्लेष इति। तथाजातीयकस्य काम्यस्य कर्मणो विद्यां प्रत्यनुपकारकत्वे संप्रतिपत्तिरुभयोरपि जैमिनिबादरायणयोराचार्ययोः ॥१७॥

( १२ विद्याज्ञानसाधनाधिकरणम् । सू० १८ )

## यदेव विद्ययेति हि ॥१८॥

पदच्छेद—यद्, एव, विद्यया, इति, हि ।

सूत्रार्थ—(विद्यया) विद्या संयुक्त (यद्) अग्निहोत्रादि नित्य कर्म और केवल अग्निहोत्रादि नित्य-कर्म दोनों इस जन्ममें ब्रह्मज्ञानके साधन हो सकते हैं, (एव ही) क्योंकि 'यदेव विद्यया' ऐसी श्रुति है ।

* समधिगतमेतदनन्तराधिकरणे नित्यमग्निहोत्रादिकं कर्म मुमुक्षुणा मोक्षप्रयोजनोद्देशेन कृतमुपात्तदुरितक्षयहेतुत्वद्वारेण सत्त्वशुद्धिकारणतां प्रतिपद्यमानं मोक्षप्रयोजनब्रह्माधिगमनिमित्तत्वेन ब्रह्मविद्यया सहैककार्यं भवतीति। तत्राग्निहोत्रादि कर्माङ्गव्यपाश्रयविद्यासंयुक्तं केवलं चास्ति। 'य एवं विद्वान्यजति', 'य एवं विद्वाञ्जुहोति', 'य एवं विद्वाञ्छंसति', 'य एवं विद्वान्गायति', 'तस्मादेवंविदमेव ब्रह्माणं कुर्वीत नानेवंविदम्' (छा० ४।१७।१०), 'तेनोभौ कुरुतो यश्चैतदेवं वेद यश्च न वेद' (छा० १।१।१०) इत्यादिवचनेभ्यो विद्यासंयुक्तमस्ति, केवलमप्यस्ति। तत्रेदं विचार्यते—किं विद्यासंयुक्तमेवाग्निहोत्रादिकं कर्म मुमुक्षोर्विद्याहेतुत्वेन तया

---

उसका कुछ शाखावालोंके मतमें 'सुहृदः साधुकृत्यामुपयन्ति' ( मित्र इसके साधुकृत्यको प्राप्त होते हैं ) इस प्रकार यह विनियोग कहा गया है । उसका ही पापके समान यह अश्लेष और विनाश है, ऐसा 'इतरस्याप्येवमश्लेष' इस सूत्रमें निरूपण है । इस प्रकारके काम्य कर्मके विद्याके प्रति अनुपकारकत्व होनेमें जैमिनि और बादरायण दोनों आचार्योंको भी सम्मति है ॥ १७ ॥

मुमुक्षु द्वारा मोक्षरूप प्रयोजनके उद्देश्यसे किये गये नित्य अग्निहोत्र आदि कर्म संचित पापक्षय हेतु द्वारा अन्तःकरण शुद्धिकी कारणताको प्राप्त होकर मोक्ष प्रयोजनवाले ब्रह्मज्ञानके निमित्तरूपसे ब्रह्मविद्याके साथ एक कार्यवाले होते हैं, ऐसा गत अधिकरणमें भली-भाँति अधिगत हुआ है । उसमें अग्निहोत्रादि कर्म अङ्गोंसे सम्बद्ध उपासना संयुक्त हैं और केवल-उपासना असंयुक्त भी हैं—'य एवं विद्वान्यजति' ( जो ऐसा जाननेवाला होकर याग करता है, जो ऐसा जाननेवाला होकर होम करता है, जो ऐसा जाननेवाला होकर शंसन करता है, जो ऐसा जाननेवाला होकर उद्गान करता है ) 'तस्मादेवं०' ( अतः इसप्रकार जाननेवालेको ही ब्रह्मा बनावे, ऐसा न जाननेवालेको नहीं ) 'तेनोभौ कुरुतो०' ( जो इस अक्षरको इसप्रकार जानता है और जो नहीं जानता वे दोनों ही उसके द्वारा कर्म करते हैं ) इत्यादि श्रुतिवचनोंसे अग्निहोत्र आदि कर्म विद्या संयुक्त हैं और केवल भी हैं । उसपर यह विचार किया जाता है कि क्या विद्या संयुक्त ही अग्निहोत्र आदि कर्म मुमुक्षुकी विद्याके हेतुरूपसे उसके साथ एककार्यत्वको प्राप्त होते हैं केवल नहीं अथवा अविशेषसे विद्या संयुक्त और

### सत्यानन्दी-दीपिका

* यह अश्लेष और विनाश वचन काम्य कर्मोंके विषयमें है । काण्वशाखावालोंका 'सुहृदः साधुकृत्यामुपयन्ति' यह विनियोगवचन भी काम्यकर्म विषयक है, क्योंकि ज्योतिष्टोमादि काम्य कर्म विद्याके उपकारक नहीं होते, अतः काम्य कर्म विषयक ही अश्लेष, विनाश और विनियोग ये दोनों वचन समझने चाहिए ॥ १७ ॥

* पूर्वपक्षमें विद्या संयुक्त अग्निहोत्र आदि नित्यकर्म विद्योत्पत्तिमें हेतु हैं, क्योंकि वे विद्याहीन कर्मोंसे विशिष्ट अवगत होते हैं । सिद्धान्तमें दोनों प्रकारके कर्म विद्योत्पत्तिमें हेतु हैं ॥ १८ ॥

सहैककार्यत्वं प्रतिपद्यते, न केवलमुत विद्यासंयुक्तं केवलं चाविशेषेणेति। कुतः संशयः? 'तमेतमात्मानं यज्ञेन विविदिषन्ति' इति यज्ञादीनामविशेषेणात्मवेदनाङ्गत्वेन श्रवणात्। विद्यासंयुक्तस्य चाग्निहोत्रादेर्विशिष्टत्वावगमात्। किं तावत्प्राप्तम्? विद्यासंयुक्तमेव कर्माग्निहोत्राद्यात्मविद्याशेषत्वं प्रतिपद्यते, न विद्याहीनम्, विद्योपेतस्य विशिष्टत्वावगमाद्विद्याविहीनात्, 'यदहरेव जुहोति तदहः पुनर्मृत्युमपजयत्येवंविद्वान्' इत्यादिश्रुतिभ्यः। 'बुद्धया युक्तो यया पार्थ कर्मबन्धं प्रहास्यसि' (गी० २।३९), 'दूरेण ह्यवरं कर्म बुद्धियोगाद्धनंजय' (गी० २।४९) इत्यादिस्मृतिभ्यश्चेति। एवं प्राप्ते प्रतिपाद्यते-यदेव विद्ययेति हि, सत्यमेतत्, विद्यासंयुक्तं कर्माग्निहोत्रादिकं विद्याविहीनात्कर्मणोऽग्निहोत्राद्विशिष्टम्, विद्वानिव ब्राह्मणो विद्याविहीनाद्ब्राह्मणात्, तथापि नात्यन्तमनपेक्षं विद्याविहीनं कर्माग्निहोत्रादिकम्। कस्मात्? 'तमेतमात्मानं यज्ञेन विविदिषन्ति' इत्यविशेषेणाग्निहोत्रादेर्विद्याहेतुत्वेन श्रुतत्वात्। ननु विद्यासंयुक्तस्याग्निहोत्रादेर्विद्याविहीनाद्विशिष्टत्वावगमाद्विद्याविहीनमग्निहोत्राद्यात्मविद्याहेतुत्वेनानपेक्षमेवेति युक्तम्, नैतदेवम्। विद्यासहायस्याग्निहोत्रादेर्विद्यानिमित्तेन सामर्थ्यातिशयेन योगादात्मज्ञानं प्रति कश्चित्कारणत्वातिशयो भविष्यति, न तथा विद्याविहीनस्येति युक्तं कल्पयितुम्, नतु 'यज्ञेन विविदिषन्ति' इत्यत्राविशेषेणात्मज्ञानाङ्गत्वेन श्रुतस्याग्निहोत्रादेरनङ्गत्वं शक्यमभ्युपगन्तुम्। तथा हि श्रुतिः-'यदेव विद्यया करोति श्रद्धयोपनिषदा तदेव वीर्यवत्तरं भवति' (छा० १।१।१०) इति विद्यासंयुक्तस्य कर्मणोऽग्निहोत्रादेर्वीर्यवत्तरत्वाभिधानेन स्वकार्यं प्रति कंचिदतिशयं ब्रुवाणा विद्याविहीनस्य तस्यैव तत्प्रयोजनं प्रति वीर्यवत्त्वं

---

केवल कर्म एक कार्यत्वको प्राप्त होते हैं। ऐसा संशय किससे होता है? इससे कि 'तमेतमात्मानं०' (उस इस उपनिषद्गम्य आत्माको यज्ञसे जाननेकी इच्छा करें) इसप्रकार यज्ञ आदिका अविशेषरूपसे आत्मज्ञानके अङ्गरूपसे श्रवण है, अतः विद्या संयुक्त अग्निहोत्र आदिमें विशिष्टत्व अवगत होता है। तब क्या प्राप्त होता है? पूर्वपक्षी—विद्या संयुक्त ही अग्निहोत्र आदि कर्म आत्मविद्या शेषत्वको प्राप्त होते हैं उपासना हीन कर्म नहीं। क्योंकि 'यदहरेव जुहोति०' (जो ऐसा जाननेवाला जिस दिन होम करता है उसी दिन मृत्युको जीत लेता है) इत्यादि श्रुतिसे और 'बुद्धया युक्तो०' (हे पार्थ! जिस बुद्धिसे युक्त हुआ तूं कर्मोंके बन्धनको भली-भाँति नाश करेगा) 'दूरेण ह्यवरं०' (इस समत्वरूप बुद्धियोगसे सकाम कर्म अत्यन्त तुच्छ हैं) इत्यादि स्मृतिसे विद्या युक्त कर्म विद्याहीन कर्मसे विशिष्ट अवगत होते हैं। सिद्धान्ती—ऐसा प्राप्त होनेपर प्रतिपादन किया जाता है—'यदेव विद्ययेति हि' यह ठीक है। विद्या संयुक्त अग्निहोत्र आदि कर्म विद्याहीन अग्निहोत्रादि कर्मोंसे विशिष्ट हैं। जैसे विद्वान् ब्राह्मण विद्याहीन ब्राह्मणसे विशिष्ट है। तो भी विद्या विहीन अग्निहोत्र आदि कर्म अत्यन्त अनपेक्ष नहीं हैं, किससे? इससे कि 'तमेतमात्मानं यज्ञेन विविदिषन्ति' इसप्रकार अविशेषसे अग्निहोत्रादि कर्म विद्याके हेतुरूपसे श्रुत हैं। पू०—परन्तु विद्यासंयुक्त अग्निहोत्रादि कर्मोंमें विद्याविहीन अग्निहोत्र आदि कर्मोंसे विशिष्ट अवगम होनेसे विद्याविहीन अग्निहोत्रादि कर्म आत्मविद्याके हेतुरूपसे अनपेक्ष ही हैं, यह युक्त है। सि०—यह ऐसा नहीं, क्योंकि विद्या सहायवाले अग्निहोत्र आदिमें विद्या निमित्तिक सामर्थ्य अतिशयके योगसे आत्मज्ञानके प्रति कोई कारणरूपसे अतिशय होगा, विद्याविहीन अग्निहोत्र आदिमें ऐसा अतिशय नहीं होगा, ऐसी कल्पना करना युक्त है। परन्तु 'यज्ञेन विविदिषन्ति' इसमें अविशेषसे आत्मज्ञानके अङ्गरूपसे श्रुत अग्निहोत्र आदिमें अनङ्गत्व स्वीकार नहीं किया जा सकता। क्योंकि 'यदेव विद्यया०' (जो कर्म विद्यासे, श्रद्धासे और योग युक्त होकर करता है वह वीर्यवत्तर होता है) यह श्रुति विद्या संयुक्त अग्निहोत्र आदि कर्म अधिक वीर्यमान् हैं, इस कथनसे अपने कार्यके प्रति कुछ अतिशय कहती हुई विद्याविहीन उसी कर्मको उस प्रयोजनके प्रति वीर्यवत्

दर्शयति। कर्मणश्च वीर्यवत्त्वं तत्, यत्स्वप्रयोजनसाधनप्रसहत्वम्। तस्माद्विद्यासंयुक्तं नित्यमग्निहोत्रादि विद्याविहीनं चोभयमपि मुमुक्षुणा मोक्षप्रयोजनोद्देशेनेह जन्मनि जन्मान्तरे च प्राग्ज्ञानोत्पत्तेः कृतं यत्, तद्यथासामर्थ्यं ब्रह्माधिगमप्रतिबन्धकारणोपात्त-दुरितक्षयहेतुत्वद्वारेण ब्रह्माधिगमकारणत्वं प्रतिपद्यमानं श्रवणमननश्रद्धातात्पर्याद्यन्त-रङ्गकारणापेक्षं ब्रह्मविद्यया सहैककार्यं भवतीति स्थितम्॥ १८॥

( १४ इतरक्षपणाधिकरणम्। सू० १९ )

**भोगेन त्वितरे क्षपयित्वा संपद्यते ॥१९॥**

पदच्छेद—भोगेन, तु, इतरे, क्षपयित्वा, सम्पद्यते।

सूत्रार्थ—( इतरे तु ) आरब्ध पुण्यपापोंका तो ( भोगेन ) भोगसे ( क्षपयित्वा ) नाशकर ( सम्पद्यते ) ब्रह्मको प्राप्त होता है।

*अनारब्धकार्ययोः पुण्यपापयोर्विद्यासामर्थ्यात्क्षय उक्तः, इतरे त्वारब्धकार्ये पुण्य-पापे उपभोगेन क्षपयित्वा ब्रह्म संपद्यते, 'तस्य तावदेव चिरं यावन्न विमोक्ष्येऽथ संपत्स्ये' (छन्दो० ६।१४।२) इति 'ब्रह्मैव सन्ब्रह्माप्येति' इति चैवमादिश्रुतिभ्यः। ननु सत्यपि सम्यग्दर्शने यथा प्राग्देहपाताद्भेददर्शनं द्विचन्द्रदर्शनन्यायेनानुवृत्तमेवं पश्चादप्यनुवर्तेत—न, निमित्ता-भावात्। उपभोगशेषक्षपणं हि तत्रानुवृत्तिनिमित्तम्, नच तादृशमत्र किंचिदस्ति। नन्वपरः कर्माशयोऽभिनवमुपभोगमारप्स्यते, न, तस्य दग्धबीजत्वात्। मिथ्याज्ञानावष्टम्भं हि

---

दिखलाती है। वही कर्ममें वीर्यवत्त्व है जो अपने प्रयोजनके सिद्ध करनेमें क्षमता हो। इसलिए विद्या संयुक्त नित्य अग्निहोत्र आदि कर्म और विद्या रहित कर्म दोनों भी मुमुक्षुसे मोक्ष प्रयोजनके उद्देश्यसे इस जन्ममें अथवा जन्मान्तरमें ज्ञानोत्पत्तिके पूर्व जो किये गये हैं वे अपनी सामर्थ्यके अनुसार ब्रह्म-ज्ञानके प्रतिबन्ध कारणरूपसे प्राप्त पापक्षयके हेतुरूप द्वारसे ब्रह्मज्ञानके कारणत्वको प्राप्त होकर श्रवण, मनन, श्रद्धा, तात्पर्य आदि अन्तरङ्ग कारणोंकी अपेक्षासे ब्रह्मविद्याके साथ मोक्षरूप एक कार्य वाले होते हैं, यह सिद्ध होता है॥ १८॥

अनारब्ध कार्यवाले पुण्य और पापका विद्याकी सामर्थ्यसे क्षय कहा गया है। अन्य तो—आरब्ध कार्यवाले पुण्य-पापका उपभोगसे क्षपणकर ब्रह्मको प्राप्त होता है, क्योंकि 'तस्य तावदेव चिरं०' (उसके लिए मोक्ष होनेमें उतना ही विलम्ब है जब तक कि वह देहबन्धनसे मुक्त नहीं होता। उसके अन-न्तर तो वह सत्सम्पन्न-ब्रह्मको प्राप्त हो जाता है) 'ब्रह्मैव सन्०' ( ब्रह्म ही होकर ब्रह्मको प्राप्त होता है ) इत्यादि श्रुतियाँ हैं। पू०—परन्तु सम्यग्दर्शनके होनेपर भी जैसे देहपातके पूर्व भेददर्शन द्विचन्द्रदर्शन न्यायसे अनुवृत्त होता है, वैसे देहपातके पश्चात् भी भेददर्शन अनुवृत्त होना चाहिए ? सि०—नहीं, क्योंकि उसके कारणका अभाव है। उपभोग शेषका क्षपण ही ब्रह्मज्ञानीके भेददर्शनकी अनुवृत्तिमें कारण है। किन्तु देहपात होनेपर ऐसा कोई निमित्त नहीं है। परन्तु दूसरा कर्माशय नवीन उपभोगको आरम्भ करेगा ? सि०—नहीं, क्योंकि उसका बीज दग्ध हो गया है। मिथ्याज्ञानका अवलम्बन करनेवाला

**सत्यानन्दी-दीपिका**

* अनारब्ध कर्म ब्रह्मविद्याकी सामर्थ्यसे क्षय होते हैं, यह पूर्व अधिकरणमें कहा गया है। अब इस अधिकरणमें यह विचार किया जाता है कि ब्रह्मवित्के प्रारब्धकर्म क्षय होते हैं कि नहीं ? इसप्रकार संदेह कर 'भोगेन त्वितरे' इत्यादिसे सिद्धान्त कहते हैं। मिथ्याज्ञान ही कर्मोंका बीज है। 'सति मूले तद्विपाको जात्यायुर्भोगाः' ( यो० सू० २।१३ ) ( कर्मोंके बीजभूत अविद्याके होनेपर ही उसके फल जन्म, आयु और भोग होते हैं ) इसलिए अनारब्ध कर्म ब्रह्मविद्याकी सामर्थ्यसे निवृत्त होते हैं और प्रारब्ध कर्म भोगसे क्षय होते हैं। 'तस्य तावदेव चिरं०' इत्यादि श्रुतिवचनसे सिद्ध

कर्मान्तरं देहपात उपभोगान्तरमारभते, तच्च मिथ्याज्ञानं सम्यग्ज्ञानेन दग्धमित्यतः साध्वेतदारब्धकार्यक्षये विदुषः कैवल्यमवश्यं भवतीति ॥ १९ ॥

इति श्रीमच्छङ्करभगवत्पादकृतौ शारीरकमीमांसाभाष्ये चतुर्थाध्यायस्य प्रथमः पादः ॥१॥

## चतुर्थाध्याये द्वितीयः पादः ।

[ अत्र पादे उत्क्रान्तिगतिनिरूपणम् ]

( इस पादमें उत्क्रान्ति और गतिका निरूपण है )

( १ वागधिकरणम् । सू० १–२ )

### वाङ्मनसि दर्शनाच्छब्दाच्च ॥१॥

पदच्छेद—वाक्, मनसि, दर्शनात्, शब्दात्, च ।

सूत्रार्थ—( वाक् ) वाणीकी वृत्ति ( मनसि ) मनमें लीन होती है, ( दर्शनात् ) क्योंकि मनकी वृत्तिके विद्यमान होनेपर वाग्वृत्तिका लय देखा जाता है, ( च ) और ( शब्दात् ) वृत्ति और वृत्तिमान्के अभेदकी विवक्षासे यहाँ उपचारसे वाक् शब्दका प्रयोग किया गया है कि वाक् मनमें लय होती है ।

* अथापरासु विद्यासु फलप्राप्तये देवयानं पन्थानमवतारयिष्यन्प्रथमं तावद्यथाशास्त्रमुत्क्रान्तिक्रममन्वाचष्टे । समाना हि विद्वदविदुषोरुत्क्रान्तिरिति वक्ष्यति । अस्ति प्रायणविषया श्रुतिः 'अस्य सोम्य पुरुषस्य प्रयतो वाङ्मनसि संपद्यते मनः प्राणे प्राणस्तेजसि तेजः परस्यां देवतायाम्' (छा० ६।८।६ ) इति । किमिह वाच एव वृत्तिमत्त्या मनसि संपत्तिरुच्यते, उत वाग्वृत्तेरिति विशयः । तत्र वागेव तावन्मनसि संपद्यत इति प्राप्तम् । तथा हि—श्रुतिर-

---

कर्मान्तर देहपात होनेपर अन्य उपभोगको आरम्भ करता है । वह मिथ्याज्ञान सम्यग्ज्ञानसे दग्ध हो गया, अतः अन्य-आरब्ध कार्यका क्षय होनेपर विद्वान्को अवश्य कैवल्य होता है, यह ठीक है ॥१९॥

स्वामी सत्यानन्द सरस्वती कृत शाङ्करभाष्य-भाषानुवादके चतुर्थाध्यायका प्रथम पाद समाप्त ॥१॥

निर्गुण विद्याके फल कथनानन्तर सगुण विद्याओंमें फल प्राप्तिके लिए देवयान मार्गका अवतरण करते हुए सूत्रकार प्रथम शास्त्रानुसार उत्क्रान्तिका क्रम कहते हैं । उपासक और अनुपासककी उत्क्रान्ति तुल्य ही है, ऐसा आगे कहेंगे । 'अस्य सोम्य पुरुषस्य०' ( हे सोम्य ! इस म्रियमाण पुरुषकी वाक् मनमें लीन हो जाती है, तथा मन प्राणमें, प्राण तेजमें और तेज परदेवतामें लीन हो जाता है ) ऐसी प्रायण विषयक श्रुति है । क्या यहाँ वृत्तिवाली वाणीकी ही मनमें सम्पत्ति ( लय ) कही जाती है अथवा वाणीकी वृत्तिकी । इसप्रकार संशय होता है । पूर्वपक्षी—उसमें वाणी ही मनमें लीन होती है, ऐसा प्राप्त होता है । क्योंकि ऐसा माननेपर श्रुति अनुगृहीत होती है, अन्यथा लक्षणा

सत्यानन्दी–दीपिका

होता है कि विद्वान्की देहपातके अनन्तर अवश्य कैवल्य मुक्ति होती है । पूर्वपक्षमें कैवल्य-विदेह मुक्ति असिद्ध है, सिद्धान्तमें विदेह-कैवल्यमुक्ति सिद्ध है । इस पादमें साधन अनुष्ठानका क्रम और निर्गुण ब्रह्मविद्याका फल कहा गया है ॥१९॥

स्वामी सत्यानन्द सरस्वती कृत 'सत्यानन्दी-दीपिका'के चतुर्थाध्यायका प्रथम पाद समाप्त ॥१॥

* गत पादमें ब्रह्मविद्याके जीवनमुक्ति और विदेहमुक्तिरूपी फल कहे गये हैं । अब इस पादमें फलविचारके प्रकरणमें सगुणविद्याका ब्रह्मलोक प्राप्तिरूप फल अर्चिरादि मार्ग द्वारा ही हो सकता है, वह उत्क्रान्तिके विना संभव नहीं है, इसलिए उसकी सिद्धिके लिए शास्त्रानुसार प्रथम

नुगृहीता भवति। इतरथा लक्षणा स्यात्। श्रुतिलक्षणाविशये च श्रुतिर्न्याय्या न लक्षणा। तस्माद्वाच एवायं मनसि प्रलय इति।* एवं प्राप्ते ब्रूमः–वाग्वृत्तिर्मनसि संपद्यत इति। कथं वाग्वृत्तिरिति व्याख्यायते? यावता वाङ्मनसीत्येवाचार्यः पठति। सत्यमेतत्, पठिष्यति तु परस्तात् 'अविभागो वचनात्' (ब्र० सू० ४।२।१६) इति। तस्मादत्र वृत्त्युपशममात्रं विवक्षितमिति गम्यते। तत्त्वप्रलयविवक्षायां तु सर्वत्रैवाविभागसाम्यात्किं परत्रैव विशिंष्यादविभाग इति। तस्मादत्र वृत्त्युपसंहारविवक्षा। वाग्वृत्तिः पूर्वमुपसंह्रियते मनोवृत्ताववस्थितायामित्यर्थः। कस्मात्? दर्शनात्। दृश्यते हि वाग्वृत्तेः पूर्वोपसंहारो मनोवृत्तौ विद्यमानायाम्, नतु वाच एव वृत्तिमत्त्या मनस्युपसंहारः केनचिदपि द्रष्टुं शक्यते। ननु श्रुतिसामर्थ्याद्वाच एवायं मनस्यप्ययो युक्त इत्युक्तम्–नेत्याह, अतत्प्रकृतित्वात्। यस्य हि यत उत्पत्तिस्तस्य तत्र प्रलयो न्याय्यो मृदीव शरावस्य। नच मनसो वागुत्पद्यत इति किंचन प्रमाणमस्ति। वृत्त्युद्भवाभिभवौ त्वप्रकृतिसमाश्रयावपि दृश्येते। पार्थिवेभ्यो हीन्धनेभ्यस्तैजसस्याग्नेर्वृत्तिरुद्भवत्यप्सु चोपशाम्यति। कथं तर्ह्यस्मिन्पक्षे शब्दो 'वाङ्मनसि संपद्यते' इति? अत आह–

---

होगी। श्रुति और लक्षणामें सन्देह होनेपर श्रुति ही न्याय है लक्षणा नहीं। इसलिए वाणीका ही मनमें प्रलय है। सिद्धान्ती—ऐसा प्राप्त होनेपर हम कहते हैं—वाणीकी वृत्ति मनमें लय होती है। परन्तु जब कि आचार्य 'वाङ्मनसि' ( वाणी मनमें ) ऐसा पढ़ते हैं तब 'वाणीकी वृत्ति' यह व्याख्यान कैसे किया जाता है? यह ठीक है। परन्तु 'अविभागो वचनात्' इसप्रकार आगे कहेंगे। इसलिए यहाँ वृत्ति उपशम मात्र विवक्षित है, ऐसा ज्ञात होता है। परन्तु तत्त्वोंके प्रलयकी विवक्षा होनेपर तो सर्वत्र ही अविभागके साम्य होनेसे 'परत्र ही' आगे [ 'अविभागो वचनात्' यहाँ ही ] 'अविभाग' ऐसा विशेषण क्यों देते? इसलिए यहाँ वृत्ति उपसंहारकी विवक्षा है, मनकी वृत्तिकी अवस्थिति होनेके पूर्व वाग्वृत्तिका उपसंहार होता है, ऐसा अर्थ है। किससे? इससे कि ऐसा दर्शन होता है। मनोवृत्तिके विद्यमान होनेपर पूर्व वाग्वृत्तिका उपसंहार देखा जाता है। किन्तु वृत्तिवाली वाणीका ही मनमें उपसंहार तो किसीसे भी नहीं देखा जा सकता है। परन्तु यह जो कहा गया है कि श्रुतिको सामर्थ्यसे वाणीका यह मनमें प्रलय युक्त है। नहीं, ऐसा कहते हैं, क्योंकि अतत्प्रकृति है—वह वाणीकी प्रकृति नहीं है, जिसकी जिससे उत्पत्ति होती है उसका उसमें प्रलय युक्त है, जैसे सिकोराका मृत्तिकामें। वाणी मनसे उत्पन्न होती है, इसमें कोई प्रमाण नहीं है। वृत्तिके उद्भव और अभिभव तो अप्रकृति-अनुपादन आश्रय भी देखे जाते हैं। जैसे पार्थिव इन्धनसे तैजस अग्निकी वृत्ति उत्पन्न होती है और जलमें उपशान्त होती है। तब इस पक्षमें 'वाङ्मनसि सम्पद्यते' यह श्रुति किसप्रकार संगत होगी?

## सत्यानन्दी-दीपिका

उत्क्रान्तिका विचार किया जाता है। अतः इस फलाध्यायके दूसरे पादमें उपासनाकी फलसिद्धिके लिए 'वाङ्मनसि' यह विचार संगत है। यहाँ उत्क्रान्तिके विषयमें 'वाणी मनमें लीन होती है' ऐसा कहा गया है। क्या यहाँ वाणीका स्वरूपसे मनमें लय है कि वाणीकी वृत्तिका? संशय होनेका कारण यह है कि 'उच्यतेऽनेन' ( जिससे कहा जाय ) यह करणव्युत्पत्ति और 'उक्ति इति वाक्' ( जो कही जाय ) यह भावव्युत्पत्ति दोनों विद्यमान हैं। पूर्वपक्षमें 'वाङ्मनसि' और 'वाङ्मनसि सम्पद्यते' इसप्रकार सूत्र और श्रुतिके आधारपर वाणीका स्वरूपसे ही मनमें लय होता है। इसप्रकार करणमात्रका स्वरूपसे लय होनेपर यावत् म्रियमाणकी मुक्ति सिद्ध है, सिद्धान्तमें करणोंकी वृत्तिका लय होता है, अतः म्रियमाण मुक्त नहीं होता।

* सिद्धान्ती—वाणीकी वृत्तिका ही मनमें लय होता है। यद्यपि सूत्रकारने 'वाङ्मनसि' ऐसा कहा है, तो भी यहाँ वृत्तिका ग्रहण युक्त है, क्योंकि स्वयं सूत्रकार धर्मी प्रलयकी विवक्षामें 'अविभागो-

शब्दाच्चेति । शब्दोऽप्यस्मिन्पक्षेऽवकल्पते, वृत्तिवृत्तिमतोरभेदोपचारादित्यर्थः ॥१॥

## अत एव च सर्वाण्यनु ॥ २ ॥

पदच्छेद—अतः, एव, च, सर्वाणि, अनु ।

सूत्रार्थ—( अत एव ) उक्त दर्शन आदि हेतुओंसे ही वाणीके समान ( सर्वाण्यनु ) समस्त चक्षु आदि इन्द्रियोंकी वृत्ति ( च ) भी वृत्तिविशिष्ट मनमें लय होती है ।

'तस्मादुपशान्ततेजाः । पुनर्भवमिन्द्रियैर्मनसि संपद्यमानैः' ( प्रश्न० ३।९ ) इत्यत्राविशेषेण सर्वेषामेवेन्द्रियाणां मनसि संपत्तिः श्रूयते । तत्राप्यत एव वाच इव चक्षुरादीनामपि सवृत्तिके मनस्यवस्थिते वृत्तिलोपदर्शनात्तत्त्वप्रलयासंभवाच्छब्दोपपत्तेश्च वृत्तिद्वारेणैव सर्वाणीन्द्रियाणि मनोऽनुवर्तन्ते । सर्वेषां करणानां मनस्युपसंहाराविशेषे सति वाचः पृथग्ग्रहणं वाङ्मनसि संपद्यत इत्युदाहरणानुरोधेन ॥२॥

( २ मनोऽधिकरणम् । सू० ३ )

## तन्मनः प्राण उत्तरात् ॥ ३ ॥

पदच्छेद—तत्, मनः, प्राणे, उत्तरात् ।

सूत्रार्थ—( तत् ) सम्पूर्ण इन्द्रियोंकी वृत्तिके लयका आधारभूत (मनः) वह मन भी (प्राणे) वृत्तिद्वारा प्राणमें लीन होता है, (उत्तरात्) क्योंकि 'मनः प्राणे' इस उत्तरवाक्यसे अवगत होता है ।

*समधिगतमेतत्—'वाङ्मनसि संपद्यते' ( छा० ६।८।६ ) इत्यत्र वृत्तिसंपत्तिविवक्षेति । अथ यदुत्तरवाक्यम्—'मनः प्राणे' (छा० ६।८।६) इति, किमत्रापि वृत्तिसंपत्तिरेव विवक्ष्यत उत वृत्तिमत्संपत्तिरिति विचिकित्सायां वृत्तिमत्संपत्तिरेवात्रेति प्राप्तम्, श्रुत्यनुग्रहात्तत्प्रकृतिकत्वोपपत्तेश्च । तथा हि—'अन्नमयं हि सोम्य मन आपोमयः प्राणः ( छा० ६।५।४ )

---

इसपर कहते हैं—'शब्दाच' शब्द-श्रुति भी इस पक्षमें संभव है, क्योंकि वृत्ति और वृत्तिमान्‌में अभेदका उपचार है, ऐसा अर्थ है ॥ १ ॥

'तस्मादुपशान्ततेजाः०' ( अतः जिसका तेज (शारीरक ऊष्मा) शान्त हो जाता है वह मनमें लीन हुई इन्द्रियोंके सहित पुनर्जन्मको प्राप्त हो जाता है ) इसमें सब इन्द्रियोंका समानरूपसे मनमें लय सुना जाता है । उसमें भी इसीसे—वाणीके समान चक्षु आदिका भी सवृत्तिक मनके अवस्थित होनेपर वृत्तिलयका दर्शन होता है, अतः तत्त्व (स्वरूप) प्रलयका असंभव होनेसे और शब्दोपपत्ति होनेसे सब इन्द्रियाँ वृत्तिद्वारा ही मनका अनुवर्तन करती हैं । सब इन्द्रियोंका समानरूपसे मनमें उपसंहार होनेपर 'वाङ्मनसि सम्पद्यते' इस प्रकार वाणीका पृथक् ग्रहण उदाहरणके अनुरोधसे है ॥ २ ॥

'वाङ्मनसि सम्पद्यते' इस श्रुतिमें वृत्तिलयकी विवक्षा है यह निश्चित किया गया है । अब जो आगेका वाक्य है 'मनः प्राणे' ( मन प्राणमें लय होता है ) क्या यहाँ भी वृत्तिलय ही विवक्षित है अथवा वृत्तिवान्‌का लय विवक्षित है । इस प्रकार संशय होनेपर पूर्वपक्षी—यहाँ वृत्तिवाले मनका ही लय है, ऐसा प्राप्त होता है । कारण कि श्रुतिके अनुग्रहसे प्राण मनकी प्रकृति उपपन्न होता है । जैसे

### सत्यानन्दी-दीपिका

वचनात्' यह सूत्र आगे कहेंगे । यदि स्वरूपसे वाणीका लय माने तो 'अविभागो वचनात्' इस सूत्रकी पृथक् रचना व्यर्थ होगी और तत्त्वज्ञ और अज्ञमें कोई भेद नहीं रहेगा । इसलिए म्रियमाणकी वाणीकी वृत्ति ही मनमें लय होती है ॥ १ ॥

* कार्य अपने उपादानमें लय होता है अनुपादानमें नहीं, इस न्यायसे मनका प्राणमें लय नहीं किन्तु उसकी वृत्तिका लय होना चाहिए, इससे 'मनः प्राणे' इस श्रुति और न्यायका विरोध उपस्थित

इत्यन्नयोनि मन आमनन्त्यब्योनिं च प्राणम् । 'आपश्चान्नमसृजन्त' इति श्रुतिः। अतश्च यन्मनः प्राणे प्रलीयतेऽन्नमेव तदप्सु प्रलीयतेऽन्नं हि मन आपश्च प्राणः प्रकृतिविकाराभेदादिति । ❀ एवं प्राप्ते ब्रूमः—तदप्यागृहीतबाह्येन्द्रियवृत्ति मनो वृत्तिद्वारेणैव प्राणे प्रलीयते इत्युत्तराद्वाक्यादवगन्तव्यम् । तथा हि—सुषुप्सोर्मुमूर्षोश्च प्राणवृत्तौ परिस्पन्दात्मिकायामवस्थितायां मनोवृत्तीनामुपशमो दृश्यते। नच मनसः स्वरूपाप्ययः प्राणे संभवति, अतत्प्रकृतित्वात् । ननु दर्शितं मनसः प्राणप्रकृतित्वम्—नैतत्सारम् , न हीदृशेन प्राणाडिकेन तत्प्रकृतित्वेन मनः प्राणे संपत्तुमर्हति । एवमपि ह्यन्ने मनः संपद्येताप्सु चान्नमप्स्वेव च प्राणः । न ह्येतस्मिन्नपि पक्षे प्राणभावपरिणताभ्योऽद्भ्यो मनो जायत इति किंचन प्रमाणमस्ति, तस्मान्न मनसः प्राणे स्वरूपाप्ययः। वृत्त्यप्ययेऽपि तु शब्दोऽवकल्पते, वृत्तिवृत्तिमतोरभेदोपचारादिति दर्शितम् ॥ ३ ॥

( ३ अध्यक्षाधिकरणम् । सू० ४-६ )

## सोऽध्यक्षे तदुपगमादिभ्यः ॥ ४ ॥

---

कि 'अन्नमयं हि सोम्य०' (हे सोम्य ! मन अन्नमय है और प्राण जलमय है) इस प्रकार अन्न कारणक मन और जल कारणक प्राण है ऐसा श्रुति कहती है । और 'आपश्चान्नमसृजन्त' ( जलने अन्न उत्पन्न किया ) ऐसी श्रुति है । इस कारण मनका जो प्राणमें विलय होता है वह अन्नका ही जलमें लय होता है, मन ही अन्न है और प्राण ही जल है, क्योंकि प्रकृति और विकारका अभेद है ।

सिद्धान्ती—ऐसा प्राप्त होनेपर हम कहते हैं—तो भी बाह्य इन्द्रियोंकी वृत्तिको ग्रहण करनेवाला मन वृत्तिद्वारा ही प्राणमें लय होता है, ऐसा उत्तर वाक्य ( मनः प्राणे ) से जानना चाहिए, क्योंकि सुषुप्सु और मुमूर्षु पुरुषकी चलनात्मक प्राणवृत्तिके अवस्थित होनेपर मनकी वृत्तियोंका उपशम देखा जाता है । इसलिए मनका प्राणमें स्वरूप लय नहीं हो सकता, क्योंकि अतत्प्रकृति है—प्राण मनकी प्रकृति नहीं है । परन्तु ऐसा दिखलाया गया है कि प्राण मनकी प्रकृति है ? उसमें कोई सार नहीं है, क्योंकि इस प्रकारकी परम्परा प्रणालीसे प्राण मनकी प्रकृति होनेसे मनका प्राणमें लय होना युक्त नहीं है । परन्तु ऐसी परम्परा प्रणाली होनेपर भी मन अन्नमें लय हो, और अन्न जलमें और प्राण जलमें लय होना चाहिए । इस पक्षमें भी प्राणरूपसे परिणत जलसे मन उत्पन्न होता है, इसमें कोई प्रमाण नहीं हैं । इसलिए मनका प्राणमें स्वरूप लय नहीं है । वृत्तिका लय होनेपर भी तो [मनः प्राणे] यह श्रुति उपपन्न होती है, क्योंकि वृत्ति और वृत्तिमान्‌का अभेदोपचार है, ऐसा दिखलाया गया है ॥३॥

### सत्यानन्दी-दीपिका

होनेपर संशय होता है । पूर्वपक्षी—मनका स्वरूपसे ही प्राणमें लय होना चाहिए, क्योंकि ऐसा होनेसे श्रुति और न्याय दोनोंकी उपपत्ति होती है । जैसे कि अन्न मनकी प्रकृति है और जल अन्नकी प्रकृति है । प्राण जलका विकार है और मन अन्नका है । इस प्रकार प्रकृति और विकारका अभेद होनेसे मन अन्नात्मक है और प्राण जलात्मक है । जैसे जल अन्नात्मक मनकी परम्परा प्रकृति है, वैसे जलात्मक प्राण भी मनकी प्रकृति है । इसप्रकार श्रुति और न्यायका अविरोध होनेसे मनका प्राणमें लय युक्त है ।

सिद्धान्ती— आपोऽन्नमसृजन्त' इससे जल और अन्नका केवल कार्य-कारणभाव सिद्ध होता है न कि उनके विकार प्राण और मनका भी । यदि इस कारणप्रणालीसे जल और अन्नके विकार प्राण और मनका भी प्रकृति-विकृतिभाव माना जाय तो जल और पृथिवीके विकार हिम और घटका भी प्रकृति-विकारभाव होनेसे अतिप्रसङ्ग होगा । जिस विकारका जो साक्षात् उपादान होता है वह उसमें लय होता है अन्यमें नहीं, इसलिए इस न्यायसे श्रुत्यर्थका बाधकर मन पदसे लक्षणा द्वारा मनकी वृत्तिका ग्रहण करना चाहिए ॥ ३ ॥

पदच्छेद—सः, अध्यक्षे, तदुपगमादिभ्यः ।

सूत्रार्थ—( सः ) वह प्राण वृत्तिरहित होकर ( अध्यक्षे ) जीवात्मामें अवस्थित होता है, ( तदुपगमादिभ्यः ) क्योंकि जीवमें प्राणके उपगम, अनुगम और अवस्थान श्रुत हैं ।

* स्थितमेतत्–यस्य यतो नोत्पत्तिस्तस्य तस्मिन्वृत्तिप्रलयो न स्वरूपप्रलय इति । इदमिदानीं प्राणस्तेजसीत्यत्र चिन्त्यते—किं यथाश्रुति प्राणस्य तेजस्येव वृत्त्युपसंहारः, किं वा देहेन्द्रियपञ्जराध्यक्षे जीवे इति । तत्र श्रुतेरनतिशङ्क्यत्वात्प्राणस्य तेजस्येव संपत्तिः स्यात्, अश्रुतकल्पनाया अन्याय्यत्वादिति । एवं प्राप्ते प्रतिपाद्यते—सोऽध्यक्ष इति । स प्रकृतः प्राणोऽध्यक्षेऽविद्याकर्मपूर्वप्रज्ञोपाधिके विज्ञानात्मन्यवतिष्ठते । तत्प्रधाना प्राणवृत्तिर्भवतीत्यर्थः । कुतः ? तदुपगमादिभ्यः । 'एवमेवेममात्मानमन्तकाले सर्वे प्राणा अभिसमायन्ति यत्रैतदूर्ध्वोच्छ्वासी भवति' इति हि श्रुत्यन्तरमध्यक्षोपगामिनः सर्वान्प्राणानविशेषेण दर्शयति । विशेषेण च 'तमुत्क्रामन्तं प्राणोऽनूत्क्रामति' (बृह० ४।४।२) इति पञ्चवृत्तेः प्राणस्याध्यक्षानुगामितां दर्शयति, तदनुवृत्तितां चेतरेषाम् 'प्राणमनूत्क्रामन्तं सर्वे प्राणा अनूत्क्रामन्ति' ( बृह० ४।४।२ ) इति । 'सविज्ञानो भवति' इति चाध्यक्षस्यान्तर्विज्ञानवत्त्वप्रदर्शनेन तस्मिन्नपीतकरणग्रामस्य प्राणस्यावस्थानं गमयति । ननु 'प्राणस्तेजसि' इति श्रूयते, कथं प्राणोऽध्यक्षे इत्यधिकावप क्रियते ? नैष दोषः, अध्यक्षप्रधानत्वादुत्क्रमणादिव्यवहारस्य, श्रुत्यन्तरगतस्यापि च विशेषस्यापेक्षणीयत्वात् ॥४॥

---

यह सिद्ध हुआ कि जिसकी जिससे उत्पत्ति नहीं होती उसका उसमें वृत्तिलय होता है स्वरूप लय नहीं । अत्र 'प्राणस्तेजसि' ( प्राण तेजमें लीन होता है ) इस श्रुति वाक्यपर यह विचार किया जाता है कि क्या श्रुतिके अनुसार प्राणका तेजमें ही वृत्तिलय होता है अथवा देह, इन्द्रियरूप पञ्जरके अध्यक्ष जीवमें वृत्तिलय होता है ? पूर्वपक्षी—उसमें श्रुतिके विषयमें अतिशङ्का युक्त न होनेसे प्राणका तेजमें ही लय होना चाहिए, क्योंकि अश्रुतकी कल्पना अन्याय है । सिद्धान्ती—ऐसा प्राप्त होनेपर प्रतिपादन करते हैं—'सोऽध्यक्षे' वह प्रकृत प्राण अविद्या, कर्म और पूर्वप्रज्ञारूप उपाधिवाले विज्ञानस्वरूप अध्यक्षमें अवस्थित होता है । वह अध्यक्ष प्रधान प्राणवृत्ति होती है, ऐसा अर्थ है । किससे ? इससे कि उसके उपगमादि हैं । 'एवमेवेममात्मानमन्तकाले०' ( इसीप्रकार अन्तकालमें जब वह ऊर्ध्वोच्छ्वासी होता है तब सब वाक् आदि प्राण इस आत्माके अभिमुख जाते हैं ) यह दूसरी श्रुति अविशेषसे सब प्राणोंको अध्यक्षोपगामी दिखलाती है । और 'तमुत्क्रामन्तं०' ( उसके उत्क्रमण करनेपर उसके पीछे ही प्राण उत्क्रमण करता है ) यह श्रुति वाक्य विशेषरूपसे पाँच वृत्तिवाले प्राणमें अध्यक्षको अनुगामिता दिखलाता है । और 'प्राणमनूत्क्रामन्तं०' (जीवके पीछे प्राणके उत्क्रमण करनेपर उसके पीछे सब वागादि प्राण उत्क्रमण करते हैं) इसप्रकार अन्य प्राणोंमें उस प्राणकी अनुवृत्तिता दिखलाता है । 'सविज्ञानो भवति' ( तब यह विज्ञानवाला होता है ) इसप्रकार अध्यक्षमें अन्तर्विज्ञानवत्त्व प्रदर्शनसे उसमें विलय करण समुदायवाले प्राणका अवस्थान बोधन करती है । परन्तु 'प्राणस्तेजसि' ऐसी श्रुति है तब 'प्राण अध्यक्षमें लीन होता है' यह अधिक ग्रहण क्यों किया जाता है ? यह दोष नहीं है, क्योंकि उत्क्रमण आदि व्यवहार अध्यक्ष प्रधान है और अन्य श्रुतिगत विशेषकी भी अपेक्षा होनी चाहिए ॥४॥

### सत्यानन्दी दीपिका

* अब उक्त न्यायसे प्राणवृत्तिलयके विषयमें विचार किया जाता है—'प्राणस्तेजसि' यह श्रुति प्राणका तेजमें और 'एवमेवेममात्मानमन्तकाले' इत्यादि श्रुतियाँ उपगमन आदि हेतुओंसे जीवमें लय कहती हैं । इन दोनों प्रकारकी श्रुतियोंके विद्यमान होनेपर संशय होता है । पूर्वपक्षी—'प्राणस्तेजसि' आदिसे कहते हैं । सिद्धान्ती—इस प्रकृत प्राणकी वृत्ति जीवात्मामें ही लय होती है,

